# ABBREVIATIONS USED IN THE WORK.

## THE NAMES OF WORKS CONSULTED.

Ait. Br... Aitareya-bráhmana.
Amar... Amarakośa.
Am. Śa... Amaruś'ataka.
An. R... Anarghvarâghava.
Asv. Su... A'svalâyanasútras.
Ath. V.-Atharva-Veda.
Bâl. R... Bâla-Râmâyaṇa.
Bra. V. P.-Brahmavaivarta Purana.
Bhag... Bhagavadgîtâ.
Bh. P... Bhâgvatapurâna.
Bhânu... Bhânuchandra, the commentator on the Purvabhâga.
Bhâs. P... Bhâsâparichchheda.
Bk... Bhaṭṭi-kâvya.
Bh... Bhartṛhari.
Br. Sam... Bṛhatsamhitâ.
Br. Sú.-Brahmasutras of Bâdarâyaṇa.
Chân... Chânakya-Śataka.
Chh. Up... Chhândogyopanishad.
Dk... Daśakumâracharita.
Das. Rú.... Daśa-rūpaka.
H... Hitopadeśa.
Hv... Hari-vamsa.
Har. Ch... Harshacharita.
Kâda... Kâdambarî.
Kâm. or K.n.-Kámandaka.nîtisâra
Kâs.... Kâsikâ of Vâmana.
Kâs. K... Kas'ikhanda.
Kat. S... Kathâsaritsâgara.
Kât... Kâtyâyana.
Kâv... Kávyâdars'a.
K. P.... Kāvya-Prakâśa.
Kav. Pr... Kavyapradîpa.
Kir... Kirâtârjunîya.
Mb. or Mah. Bhâs Mahábháshya of Patanjali.
Mah. Bhâr... Maha'bhârata.
Mv... Mahâvîracharita.
Malli... Mallinâtha.
Manu... Manusmṛti.
Mark. P... Mârkandeyapurâna.
Mṛch... Mṛchchhakatika.
Mud... Mudrârâkshasa.
Naish... Naishadhiyacharita.
Nâg... Nâgânanda.
Nal. C... Nalachampu.
Nir... Nirukta.
Pt... Pañchatantra.
Rag... Raghuvamśa.
Râm... Râmâyaṇa.
Rat... Ratnâvalî.
Ras... Rasagangâdhara.
Ṛg... Ṛigveda.
Śâ... Śâkuntala.
San. K... Sânkhyakârikâ.
Sar. D... Sarvadarśanasangraha.
Śat. Br... Śatapathabráhmana.
Ś. B. or Śankar. Bh. - Śarirakabhâshya of Śankarâchârya
Sah. D Sâhitya-darpaṇa.
Sid. Kau... Siddhānta-kaumudî.
Sidh . Sidhachandra, the commentator on the Uttarabhâga.
Śis'.... Śis'upâlavadha.
Tark... Tarksangraha.
Utt... Uttararâmacharita.
Ved. Su't... Vedantasutras of Bâdarâyana (sometimes referred to under this name).
Vik... Vikramorvas'îya.
Vikra... Vikramankadevacharita.
V. or Vish. P... Vishṇupurâṇa.
Vop .. Vopadeva.
Yaj... Yâjnyavalkya.
Yog. Su. . Yogasútras of Patanjali.

# ABBREVIATIONS USED IN THE COMMENTARY.

———: o :———

अ. सं...अग्निसंहिता.
क. उ...कठोपनिषद्.
का. खं...काशीखण्डम्.
का. द...काव्यादर्शः.
का. प्र...काव्यप्रकाशः.
का. प्रदी...काव्यप्रदीपः.
किरा...किरातार्जुनीयम्.
कु. सं...कुमारसंभवम्.
गो. सू...गोतमसूत्राणि.
छा. उ...छान्दोग्योपनिषद्.
द. रू...दशरूपकम्.
बा. सू...बादरायणसूत्राणि.
बृ. सं...बृहत्संहिता.
भवि. पु...भविष्योत्तरपुराणम्.
भाग...भागवतम्.
भ. गी...भगवद्गीता.
म. पु...मत्स्यपुराण.
म. च...महावीरचरितम्.
म. भा...महाभारतम्.
मा. पु...मार्कण्डेयपुराणम्.
मु...मुद्राराक्षसम्.
र. वं...रघुवंशः.
रामा...रामायणम्.
लीला...लीलावती.
व. पु...वह्निपुराणम्.
वर...वराहमिहिरः.
वि. उ...विक्रमोर्वशीयम्.
वि. दे...विक्रमाङ्कदेवचरितम्.
वि. ध...विष्णुधर्मोत्तरम्.
शा...शाकुन्तलम्.
शा. भा...शारीरभाष्यम
शि...शिशुपालवधम्.
सा. द...साहित्यदर्पणम्.
सि. शि...सिद्धान्तशिरोमणि.
ह. व...हरिवंशः.

लक्षणोपेतश्चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनो हर इव जितमन्मथो गुह इवाप्रतिहतशक्तिः कमलयोनिरिव विमानीकृतराजहंसमण्डलो जलधिरिव लक्ष्मीप्रसूतिर्गङ्गाप्रवाह इव भगीरथपथप्रवृत्तो रविरिव प्रतिदिवसोपजायमानोदयो मेरुरिव सकलभुवनोपजीव्यमानपादच्छायो दिग्गज

तदुक्तं सामुद्रके—'अतिरक्तः करो यस्य प्रथिताङ्गुलिको मृदुः चापाङ्कुशाङ्कितः सोपि चक्रवर्ती भवेद्ध्रुवम् ॥ इति । **चक्रधरः**—धरतीति धरः चक्रस्य धरश्चक्रधरो विष्णुः । **करेति**—करकमले लक्ष्यमाणं शङ्खचक्रयोर्लाञ्छनं रेखारूपं चिह्नं यस्य । पक्षे करकमलयोर्लक्ष्यमाणं शंखचक्रे एव लाञ्छनं विशिष्टं लिङ्गं यस्य । **जितमन्मथः**—जितो मन्मथः कामविकारो येन । पक्षे मन्मथः कामः । **गुह इति**—गुहः कार्तिकेयः । अस्य व्युत्पत्तिर्भारते यथा—'स्कन्दत्वात्स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत् ।' इति अप्रतिहता अकुण्ठिताः शक्तयः प्रभावोत्साहमन्त्रजा यस्य स तथा । तत्र प्रभुशक्तिः कोषदण्डजं तेजः उत्साहशक्तिर्विक्रमादिनोन्नतिः । मन्त्रशक्तिः । सन्धिविग्रहादीनां मन्त्रेण यथावत्स्थापनम् । पक्षे शक्तिरस्त्रविशेषः । 'षाण्मातुरः शक्तिधरः ।' इत्यमरः । **विमानीकृतेति**—विगतो मानो यस्य तद्विमानं तथा कृतं । राजानो हंसा इव राजहंसाः श्रेष्ठनृपास्तेषां मण्डल समूहो येन स तथोक्तः । ताजित्वेति शेषः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरात्सिंहादिशब्दा यत्परास्तस्यैव श्रेष्ठत्वं द्योतयन्ति । आदिशब्दात्सोमहंसादयः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । राजञ्छब्दस्य उपमेयत्वेन विशेष्यत्वात्पूर्वनिपातश्च । विमलत्वादिसाधर्म्यस्यानुपात्तत्वाल्लुप्तोपमालंकारः । पक्षे विमानीकृतं देवयानतां नीतं । वाहनीकृतमित्यर्थः । 'विमानं देवतायाने सप्तभूमे च वेश्मनि ।' इति शाश्वतः । राजहंसानां पक्षिविशेषाणां मण्डलं येन तादृशः । तस्य हंसवाहनत्वात् । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।' इत्यमरः । **लक्ष्मीति**—लक्ष्म्या धनस्य प्रसूतिरुत्पत्तिस्थानम् । पक्षे लक्ष्म्या रमाया जनकः । समुद्रमथनात्तस्या उत्पत्तेः । **गङ्गेति**—भगीरथपथप्रवृत्तो भगीरथस्य पन्था मार्गस्तत्र प्रवृत्तः तदनुसारी । 'ऋक्पूरब्धूः पथामानक्षे' इति पाणिनीयसूत्रेण समासान्तोऽप्रत्ययः । भगीरथवत्प्रतिपन्नकार्यनिर्वाहक्षम इत्यर्थः । पक्षे कृतभगीरथमार्गानुसरणः । भगीरथो नाम मर्त्यलोके गङ्गाप्रवर्तकः सूर्यवंशीयो राजा । स किल सगरपुत्रस्यासमञ्जस्य प्रपौत्रः । तथा च रामायणे—'सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् । दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः' । पुरा किल कपिलशापदग्धान्सगरस्य पुत्रानुद्धर्तुकामो भगीरथस्तीव्रतपसा ब्रह्माणं शिवं चाराध्य भुवि गङ्गावतरणं कारयित्वा सगरसुतकृतखातेन तां रसातलं नीत्वा तज्जलेन पूर्वपुरुषानुद्धारयांचकार । तदुक्तम्—'भगीरथो हि राजर्षिर्दिव्यं स्यन्दनमास्थितः । प्रायादग्रे महाराज स्तंगङ्गा पृष्ठतोन्वगात्' इति । विस्तरस्तु बालकाण्डे ३६–४४ अध्यायेषु द्रष्टव्यः । **रविरिति**—प्रतिदिवसं दिनेदिने उपजायमान उदय उत्कर्षो यस्य स तथोक्तः । 'उदयः पर्वतोन्नत्योः' इति हैमः । पक्षे उदय उद्गमः । **सकलेति**—सकलेन भुवनेनोपजीव्यमाना पादयोश्छाया । तत्कृतरक्षणमित्यर्थः । यस्य स तथा । पक्षे सकलैर्भुवनैरुपजीव्यमाना पादानां प्रत्यन्तपर्वतानां छाया

१ सकलो०. सकलभुवनतलो० । बृहस्पतिरिव सकलशास्त्रार्थतत्त्वज्ञः । इत्य० प० पु०

इवानवरतप्रवृत्तदानार्द्रीकृतकरः कर्ता महाश्चर्याणामाहर्ता क्रतूनामादर्शः सर्वशास्त्राणामुत्पत्तिः कलानां कुलभुवनं गुणानामागमः काव्यामृतरसानामुदयशैलो मित्रमण्डलस्योत्पातकेतुरहितजनस्य प्रवर्तयिता गोष्ठीबन्धानामाश्रयो रसिकानां प्रत्यादेशो धनुष्मतां धौरेयः साहसिकानामग्रणीर्विदग्धानां वैनतेय इव विनातानन्दजननो वैन्य इव चापकोटिसमुत्सारितसकलारातिकुलाचलो राजा शूद्रको नाम

---

लक्षणया आश्रयणं यस्य तादृक् । मेरोर्भुवनाधिष्ठातृत्वमुक्तं कल्किपुराणे–'मेरुर्मध्ये भुवनानां च भर्ता' इति । मत्स्यपुराणेपि ' मेरुस्तु शुशुभे दिव्यो राजवत्समधिष्ठितः । योजनानां सहस्राणि चतुरशीतिसमुच्छ्रितः । प्रविष्टः षोडशाधस्तादष्टाविंशतिविंशतिः । विस्तारात्त्रिगुणस्तस्य परिणाहः समन्ततः ।...स तु मेरुः परिवृतो भुवनैर्भूतभावनैः' ॥ इति । **अनवरतेति**–अनवरतं निरन्तरं प्रवृत्तं यद्दानं जलयुक्तदेयद्रव्यं तेनार्द्रीकृतः करो हस्तो यस्य स तथा । पक्षे अनवरतं प्रवृत्तं यद्दानं मदवारि तेनार्द्रीकृतः करः शुण्डा यस्य स तथोक्तः । आश्चर्याणां विस्मयावहकर्मणाम् । क्रतूनां यज्ञानाम् । 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः । **आदर्श इति**–सर्वशास्त्राणामादर्शो मुकुरः । अधीतसकलवाङ्मयत्वात्तस्मिंस्तेषां प्रतिबिम्बितत्वान्मुकुरसाम्यम् । कुलभवनं परम्परानिवासस्थानम् । **आगम इति**–आगमः प्रभव आश्रयस्थानं वा । **उदयेति**–मित्रमण्डलस्य सुहृत्समूहस्योदयशैलोऽभ्युदयस्थानम् । पक्षे मित्रमण्डलस्य सूर्यबिम्बस्योदयशैल उदयपर्वतः । उत्पातकेतुरशुभसूचको धूमकेतुः । अहितजनस्य शत्रुसमुदायस्य । तस्योदये ( प्रादुर्भावे ) तेषां ध्रुवं विनाशादिति भावः । **प्रवर्तयितेति**–गोष्ठीनां सभानां बन्धाः स्थापनानि तेषां प्रवर्तयिता प्रवर्तकः । विद्वत्सेवीत्यर्थः । यद्वा गोष्ठीनां मधुरकथानां बध्यन्ते एषु इति बन्धाः प्रबन्धास्तेषाम् । 'गोष्ठी सभासंलापयोः स्त्रियाम्' इति मेदिनी । रसोऽस्त्यस्य रसिकः सहृदयो जनः । प्रत्यादेशो निराकर्ता । 'प्रत्यादेशो निराकृतिः' इत्यमरः धनुष्मतां धानुष्काणाम् । असामान्यधनुर्धर इत्यर्थः । विदग्धः पण्डितः । **वैनतेय इति** विनताया अपत्यं पुमान् वैनतेयस्तार्क्ष्यः । 'स्त्रीभ्यो ढक्' इति ढक् । तस्य च 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इत्येयादेशः । 'गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।' इत्यमरः । विनतानन्दजननो विनतानां विशेषेण नम्राणामानन्दं जनयतीत्यानन्दजननः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इति कर्तरि ल्युः । गरुडपक्षे विनतायाः स्वमातुरानन्दजननः । **वैन्य इति**–वैन्यो वेनस्य पुत्रः पृथुराजः । चापकोट्या धनुरग्रेण समुत्सारिता निराकृताः सकला अरातयः शत्रव एव कुलाचलाः । अचला इव तस्य दिग्विजयपरिपन्थीभूता इत्यर्थः । येन । यद्वा निराकृता अरातिकुलान्येवाचला येन स तथोक्तः । पक्षे चापकोटिसमुत्सारिताः सकला अरातयोऽरातिभूताश्च ते कुलाचलाः कुलपर्वताश्च येन । अरातयश्च कुलाचलाश्चेति द्वंद्वो वा । 'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इति कुलपर्वताः । पुरा किल

---

१ पृथुः । २ समुत्सारितराति॰

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनारसिंहरूपाडम्बरमेकविक्रमाक्रान्तसकलभुवनतलो वि[illegible]त्रयायासितं च जहासेव वासुदेवम् । अति चिरकालरूढमतिक्रान्तकुनृपतिसहस्रसंपर्ककलङ्कमिव क्षालयन्ती यस्य विमले कृपाणधाराजले चिरमुवास राजलक्ष्मीः । यश्च मनसि धर्मेण कोपे यमेन प्रसादे धनदेन प्रतापे वह्निना भुजे भुवा दृशि श्रिया वाचि सरस्वत्या मुखे शशिना बले मरुता प्रज्ञायां सुरगुरुणा रूपे मनसिजेन तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य ।

पृथुना पर्वताकीर्णा धान्यादिप्रसवविमुखी भूमिः पर्वतानुत्सार्य समीकृता । विस्तरस्तु विशेषदर्शनलालसैर्विष्णुपुराणे [१-१३] द्रष्टव्यः । अत्र सर्वत्र श्लेषालंकारः स्फुट एव । **नाम्नेति**—विरचितं नरश्चासौ सिंहश्च तस्येदं नारसिंहं यद्रूपं तस्याडम्बर आटोपो येन तं तथाभूतम् । एकेन विक्रमेण पराक्रमेणाक्रान्तानि सकलानां भुवनानां तलानि येन स तथोक्तः पक्षे विक्रमाः पादविन्यासास्तेषां तेषांत्रयेणायासितं जातखेदम् । ० सितभुवनत्रयमिति पाठे त्रयेणायासितं व्याप्तमिति यावत् भुवनत्रयं येन तम् । राज्ञो नाममात्रश्रवणेन शत्रूणां हृदयानि भयाद्भिन्नानि भवन्ति । वासुदेवेन शत्रुहृदयविदारणं कर्तुं नरसिंहरूपधारणाडम्बरः कृतः । राज्ञा चैकेन विक्रमेण चतुर्दशभुवनानि व्याप्तानि । वासुदेवेन तु विक्रमत्रयं कृत्वापि त्रीण्येव भुवनानि व्याप्तानि । इति हास्ये हेतुः । **अतीति**—अतिक्रान्ता अतीता ये कुत्सिता नृपतयस्तेषां सहस्रं तेन संपर्कः सम्बन्धस्तेन यः कलङ्कस्तम् । अत्र कुशब्दः श्लिष्टः कुनृपतयः पार्थिवनृपास्तत्संपर्कमलं क्षालयन्ती । अनेनास्य दिव्यत्वं ध्वनितम् । कृपां नुदतीति कृपाणः खड्गः । येन स्वखड्गवशाच्चिराय लक्ष्मीः स्वायत्तीकृतेत्यर्थः । **यश्चेति**—यः शूद्रकः सर्वदेवमयत्वेन विश्वात्मकतया च भगवतो नारायणस्यानुकरोति । 'कृञः प्रतियत्ने' इत्यनेन कृञः कर्मणि षष्ठी । तदेवोपपादयति **मनसीत्यादिना**—'वसता' इति धर्मेणेत्यादिना सहान्वयि । मनसि वसता धर्मेणानेन सदैवधर्मचिन्तनात्तत्परत्वं सूचितम् । कोपे यमेनानेन दण्डोग्र्यं सूचितम् । प्रसादे वसता धनदेनानेन प्रसन्नास्यार्थिकामादधिकप्रदत्वं सूचितम् । प्रतापे वसता वह्निनेत्यनेन समग्रशत्रुदाहः सूचितः । भुजे वसन्त्या भुवा भूम्यधिष्ठात्र्या देवतया । अनेन राज्यभारवहनसामर्थ्यमुक्तम् । एवमग्रेपि यथायथमूह्यम् । सर्वदेवमयस्येत्यत्र 'प्राचुर्यविकारप्राधान्यादिषु' इतिसूत्रे आदिशब्दात्स्वरूपार्थे मयड्ग्रहः । प्रकटिता विश्वरूपाकृतिर्येन प्रकटिता विश्वरूपा देवगन्धर्वमानुषाद्या आकृतयो येनेति वा तस्य । 'इदं सर्वमसृजत यदिदं किंचिद्' इति श्रुतेः । **यस्येति**—अरीणां मदेन कला उद्धतां ये करिणस्तेषां कुम्भपीठानि विशालशिरःपिण्डास्तेषां पाटनं विदारणमाचरतो यस्य समीपे लग्नस्थूलमुक्ताफलेन हस्ति[illegible]नि स्थूलानि मुक्ताफलानि मौक्तिकानि यस्य तेन । तदुक्तं—'करीन्द्रजीमूतवराहशंखमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि

१ ०यासितभुवनत्रयं. ०यासितात्मानं ।

यस्य च मदकलकरिकुम्भपीठपाटनमाचरतो लग्नस्थूलमुक्ताफलेन दृढमुष्टिनिपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकपाटविघटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटतटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम राजलक्ष्मी । यस्य च हृदयस्थितानपि पतीन्दिधक्षुरिव प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो दिवानिशं जज्वाल । यस्मिंश्च राजनि जितजगति परिपालयति महीं चित्रकर्मसु वर्णसंकारा रतेषु केशग्रहाः काव्येषु दृढबन्धाः शास्त्रेषु चिन्ता स्वप्नेषु विप्रलम्भाश्छत्रेषु कनकदण्डा ध्वजेषु प्रकम्पा गीतेषु

---

लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥' अत एव दृढेन मुष्टिना यद्वा दृढं यन्मुष्ट्या निपीडनं तस्मान्निष्ठ्यूता निसृता इव ये धाराजलबिन्दव इति रूपकं तैर्दन्तुरेणोदग्रदशनेन । उन्नतानतेनेति यावत् । इव कृपाणेनाकृष्यमाणा । परेषां ये सुभटास्तेषामुरांसि कपाटानीव विशालवक्षःस्थलानि तेभ्यो विघटितानि यानि कवचसहस्राणि तान्येव नीलिमासादृश्यादन्धकारस्तन्मध्यवर्तिनी । राजलक्ष्मीस्तत्तद्वैरिनृपश्रीः । करिकरटेभ्यो हस्तिकपोलेभ्यो गलितं यन्मदजलं तस्यासारेण धारावृष्ट्या दुर्दिनं मेघजं तमो यासु । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले ।' इति विश्वलोचनः । 'दुर्दिनं जलदध्वान्तम्' इति रत्नकोषः । समरनिशासु तैस्तै राजभिर्यानि समराणि तान्येव निशास्तासु । असकृत्तत्तत्समरप्रसङ्गे । अभिसारिकेव दत्तसंकेतेवाजगाम । सापि मदनाकृष्टा कृतनीलावगुण्ठना तमिस्रासु प्रियजनवसतिं याति । अभिसारिकालक्षणं वसन्तराजीये–'मदेन मदनेनापि प्रेरिता शिथिलत्रपा । योत्सुकाभिसरेत्कान्तं सा भवेदभिसारिका ॥' इति । सकृदिति पाठस्त्वसमीचीन इव भाति 'समरनिशासु' इति बहुवचनविरोधाद् 'अभिसारिका' शब्दस्यास्वारस्यापत्तेश्च । **यस्य चेति**–यस्य प्रतापानलो वियोगिनीनामपि । पूर्वमेव भर्तृव्यापादनात् । अनेन तासां कारुण्यास्पदत्वं सूचितम् । रिपुसुन्दरीणां हृदयस्थितानपि पतीन् दिधक्षुरिवान्तर्हृदये जनितो दाहो येन तथा जज्वाल । अनेन हृदयान्तर्गतमपि रिपुगणं यत्प्रतापो न सहते इति तस्योत्कर्ष उक्तः । **यस्मिंश्चेति**–यस्मिन्राजनि महीं पालयति सति प्रजानां प्रजासु विषये एतानि वस्तूनि एतेषु स्थलेषु आसन्नान्यत्र । तान्येवाह–चित्रकर्मस्वालेख्यक्रियासु वर्णानां पीतरक्तादीनां संकरो मेलनम् । प्रजासु तु वर्णानां ब्राह्मणक्षत्रादीनां संकरोऽन्यतोन्योत्पत्तिरूपो नासीत् । रतेष्वेव केशग्रहाः । न तु कलहादिषु तेषामभावात् । काव्येषु दृढा दुःसाध्या बन्धा अक्षररचनारूपा मुरजादयः । दृढबन्धा उग्रशासनानि तु प्रजासु नैवासन्नपराध्यभावात् । शास्त्रेषु चिन्ता विषयचिन्तनम् । नान्यत्र चिन्ता मनःसंतापः । सम्पन्नतासत्त्वभावात् । स्वप्नेषु विप्रलम्भा विसंवादाः । न तु प्रजासु विप्र-

---

१ विवृषतः । २ घटित । ३ करटगलित । करतट ।

रागविलसितानि करिषु मदविकाराश्चापेषु गुणच्छेदा गवाक्षेषु जालमार्गाः शशिकृपाणकवचेषु कलङ्का रतिकलहेषु दूतसंप्रेषणानि शार्यक्षेषु शून्यगृहा प्रजानामासन्[1] । यस्य च परलोकाद्भयमन्तःपुरिकालकेषु[2] भङ्गो नूपुरेषु मुखरता विवाहेषु करग्रहणम्[3] अनवरतमखाग्निधूमेनाश्रुपातस्तुरंगेषु कशाभिघातो मकरध्वजे चापध्वनिरभूत् ।

(तस्य च राज्ञः) कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी (त्रिभुवनप्रसवभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालनजर्जरितोर्मिमालया जलावगाहनायात[4]जयकुञ्जरकुम्भसिन्दूरसंध्यायमानसलिलयोन्मदकलहंसकुलकोला-

लम्भा अङ्गीकृतासम्पादनात्परप्रतारणानि । सर्वेषां सत्यनिष्ठत्वात् । ‘ विप्रलम्भो विसंवादः ’ इत्यमरः । विप्रलम्भा वियोगा वा । प्रजानां पुरुषायुषजीवित्वात् । एवं सर्वत्र योज्यम् । कनकदण्डाः सुवर्णयष्टयः । पक्षे दण्डार्थं सुवर्णग्रहणम् । सर्वेषां स्वे स्वे कर्मण्यभिरतत्वाद्धर्मव्यतिक्रमाभावात् । रागविलसितानि रागाणां संगीतशास्त्रोक्तानां वसन्तादीनां विलसितानि मूर्च्छनादिस्फुरणानि । पक्षे रागाणां कामक्रोधादीनां विलसितानि वधादिकार्याणि । सर्वेषां जितेन्द्रियत्वात् । मदविकारो दानाविर्भावः । पक्षे मदस्याहंकारस्य विकारा औद्धत्यादयः । सुविनीतत्वात् । गुणच्छेदा गुणानां ज्यानां छेदास्त्रुटनानि । पक्षे गुणानां दाक्षिण्यादीनां विच्छेदाः । सदाचारपरत्वात् । जालमार्गा वातादिनिर्गमार्थं जालकानि । पक्षे कूटकल्पनान्वेषणानि । वञ्चकाभावात् । कलङ्काः शशिन्यङ्कः कृपाणेषु कवचेषु च कालायसमलः । पक्षे व्यभिचारादिदोषजनिता अपवादाः । ‘ कलङ्कोऽङ्कापवादे च कालायसमलेपि च ’ इति मेदिनी । दूतसंप्रेषणानि दूताश्च दूत्यश्च दूताः । रतिकथाचतुराः प्रणयकलहवियुक्तानां सङ्गमघटकास्तेषां संप्रेषणानि । न तु राजकार्यवशात्संदेशहराणां प्रेषणानि । जितजगत्यनेन प्रबलप्रतिद्वंद्विनोभावस्योक्तत्वात् । शार्यक्षेषु शारयः काष्ठादिनिर्मितद्यूतोपकरणविशेषाः [ सोंगटी इति ख्याताः ] अक्षाः पाशकाश्च तेषु । ‘ शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे । अक्षोपकरणे ’ इति मेदिनी । शून्यगृहाः शून्याश्च ते गृहाः फलकगतानि शारिनिवेशस्थानानि च । दुरोदरक्रीडापराङ्मुखत्वात् । न तु प्रजानां शून्या उद्वस्ता गृहा आसन् । **यस्य चेति**—परलोकाल्लोकान्तरात् । न तु शत्रुतः । भङ्गो वक्रता । अन्यत्र समराङ्गणे दैनिकव्यवसायेषु च भङ्गो नासीत् । मुखरताऽनुरणनरूपा शिञ्जितमित्यर्थः । न तु प्रजासु मुखरता वाचालत्वम् । करो हस्तः । पक्षे राजदेयद्रव्यम् । मखाग्निधूमेन इ० । न [illegible]णादेजन्यशोकात् । तुरङ्गेषु इ० । न तु दण्ड्येषु तेषामभावात् । मकरध्वजे कामे । चापध्वनिर्न त्वन्यत्र भयहेतोरभावात् । **कलीति**—कलिकालभयात्पुञ्जीभूतं यत्कृतयुगं तदनुकरोतीत्येवं शीला । अनेन तन्निवासिनां धर्मपरतोक्ता । **मज्जन्निति**—मज्जन्त्यः स्नान्त्यो या मालवविलासिन्यो मालवदेशकामिन्यस्तासां कुचतटानां पयोधराभोगानां यदास्फालनमाघातस्तेन जर्जरिताश्चूर्णिता

१ न प्रजानाम्. २ कुन्तलेषु । ३ पीडनम्. ४ आगत अवतारित ।

हलमुखरितकूल्या वेत्रवत्या सरिता परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

स तस्यामवजिताशेषभुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतो द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्नमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचितनीतिशास्त्रनिर्मलमनोभिरलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः समानवयोविद्यालंकारैरनेकमूर्धाभिषिक्तपार्थिवकुलोद्गतैरखिलकलाकलापालोचनकठोरमतिभिरतिप्रगल्भैः कालविद्भिः प्रभावानुरक्तहृदयैरग्राम्यपरिहासकुशलैरिङ्गिताकारवेदिभिः काव्यनाटकाख्यानकाख्यायिकालेख्यव्याख्यानादिक्रियानिपुणैरतिकठिनपीवरस्कन्धोरुबाहुभिरसकृदवदलितसमदरिपुगजघटापीठबन्धैः केसरिकिशोरकैरिव विक्रमैकरसैरपि विनयव्यवहा-

---

ऊर्मिमाला यस्याः। अत्र कुचानामतिपीवरत्वं काठिण्यं चोक्तम् । जयकुञ्जरा जययुक्ताः कुञ्जराः । सन्ध्यायमानं सन्ध्यावदाचरत् । शोणमित्यर्थः । कलहंसानां कुलानि तेषां कोलाहलोऽव्यक्तध्वनिः। वेत्रवत्या तन्नामकनद्या । परिगता परिक्षिप्ता । **स तस्यामिति**-तस्यां नगर्यां स राजाऽतिचिरं प्रथमे वयसि वर्तमानः सुखं यथा तथोवासेत्यन्वयः । अत्र प्रथमशब्दः पूर्वशब्दापरपर्यायः । पश्चिमशब्दविरुद्धार्थवचनो ज्ञेयः । **द्वीपेति**—अन्ये द्वीपा द्वीपान्तराणि तेभ्य आगता येऽनेके भूमिपालास्तेषां मौलयः किरीटानि शिरांसि वा तेषां मालास्ताभिर्लालितं संभावितं चरणयुगलं यस्य । अमरगुरुं बृहस्पतिम् । **अनेकेति**—अनेकैः कुलक्रमैरागतास्तैः । चिरकुलपरम्परयागतैर्न त्वाधुनिकैरित्यर्थः । तदुक्तं मनुना—'मौलाञ्छास्त्रविदः शूरान्' इति । **असकृदिति**—असकृद्वारंवारमालोचितं यन्नीतिशास्त्रं राजव्यवहारदर्शनशास्त्रं तेन निर्मलानि स्वच्छानि । तत्तद्व्यवहारनिर्णये संशयरहितानीत्यर्थः । मनांसि येषाम् । प्रबुद्धैः परिपक्वज्ञानैः । **अनेकेति**—अनेके ये मूर्धाभिषिक्ताः कृताभिषेकाः पार्थिवास्तेषां कुलानि तेभ्य उद्गतैः । आलोचनं विमर्शनम् । कठोरा परिणता । अति प्रगल्भै अतिधीरैः प्रतिभान्वितैर्वा । प्रगल्भः प्रतिभान्विते । इत्यमरः । कालविद्भिरवसरज्ञैः । प्रभावानुरक्तहृदयैः प्रभावे माहात्म्येऽनुरक्तानि हृदयानि येषां तैः । अग्राम्यो नागरः शिष्ट इत्यर्थः । **इङ्गितेति**—इङ्गितं चेष्टितं हृद्गतविकारो वा । आकारः शोकहर्षादिसूचको भ्रूकुटीमुखरागादिः । 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः ।' इति सज्जनः । इङ्गिताकारौ विदन्तीत्येवंशीलास्तैः । **काव्येति**—काव्यानि श्रव्यकाव्यानि महाकाव्यखण्डकाव्यादीनि । नाटकानि रूपकाणि । आख्यानकानि 'चूर्णकानि' इति भानु० । आख्यायिका वासवदत्तादिः । तल्लक्षणं साहित्यदर्पणे यथा—'आख्यायिका कथावत्स्यात्कवेर्वंशादिकीर्तनम् । अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित् ॥' इति । आलेख्यं चित्रकर्म । व्याख्यानमर्थनिर्वचनम् । इत्यादिक्रियासु

---

१ मुखरीकृत । २ एतत्क्वचिन्नास्ति । ३ विजित० । ४ कुलोद्भूतैः । प्रेमभावा० ।

रिभिरात्मनः प्रतिबिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास । तस्य चातिविजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाकलयतः प्रथमे वयसि वर्तमानस्यापि रूपवतोपि संतानार्थिभिरमात्यैरपेक्षितस्यापि सुरतसुखस्योपरि द्वेष इवासीत् । सत्यपि रूपविलासोपहसितरतिविभ्रमे लावण्यवति विनयवत्यन्वयवति हृदयहारिणि चावरोधजने स कदाचिदनवरतदोलायमानरत्नवलयो घर्घरिकास्फालनप्रकम्पझणझणायमानमणिकर्णपूरः स्वयमारब्धमृदङ्गवाद्यः संगीतकप्रसङ्गेन, कदाचिदविरलविमुक्तशरासार शून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचिच्छास्त्रालापेन, कदाचिदाख्यानकाख्यायिकेतिहासपुराणाकर्णनेन, कदाचिदालेख्यविनोदेन, कदाचिद्वीणया, कदाचिद्दर्शनागतमुनिजनचरणशुश्रूषया, कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढ-

---

निपुणैः । ०गजघटापीठबन्धा गजघटानां हस्तिसंघानां पीठबन्धा विशालगंडस्थलीपंक्तयः । अत्र पीठशब्दो लक्षणया विस्तारे द्रष्टव्यः । विक्रमैकरसैर्विक्रम एवैको मुख्योरसो येषां तैः । विनयेत्यादिना सत्यपि शौर्ये विनयाधिक्यं सूचितम् । **तस्येति** विजिगीषुतया विजेतुमिच्छया । सत्वं मनःस्थैर्यम् । 'प्रायशो महासत्वस्य सिंहवत्स्वल्प एव कामः स्यात् ।' इति भानुचन्द्रः । स्त्रैणं स्त्रीसमूहम् । **सत्यपीति**—रूपं सौन्दर्यं विलासाश्च । विलासो नाम स्त्रीणां शृङ्गारभावजो हावविशेषः । तदुक्तम् 'विलासोङ्गे विशेषो यः प्रियाप्तावासनादिषु ।' इति । इष्टजनसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मित चमत्कारमुखविक्लवनं स विलास इत्यर्थः । तै रूपविलासैरुपहसिता रतेः कामस्त्रिया विभ्रमा येन । विभ्रमः शृङ्गारभावजो हावविशेषः । तदुक्तं 'चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः ।' इति । प्रियागमनादौ मदरागहर्षादिजनितो विपर्यास इत्यर्थः । यद्यपि विलासविभ्रमशब्दौ वान्तरवाचिनौ तथापि साहित्यशास्त्रोक्तभेदमनादृत्यात्र कविना योजिताविति द्रष्टव्यम् । अन्वयवत्यभिजनवति । प्राशस्त्यार्थे मतुप् । अवरोधजनेऽन्तःपुरजने । 'अवरोधस्तिरोधाने राजदारेषु तद्गृहे ।' इति कोषः । **स कदाचिदिति**—कदाचित्कस्मिंश्चित्प्रस्तावे । घर्घरिका वाद्यविशेषस्तस्या आस्फालनमङ्गुलिचालनेन वादनं तेन यः प्रकम्पस्तेन झणझणायमानो झणझणति शब्दं कुर्वाणो मणिकर्णपूरो यस्य । संगीतप्रसङ्गेन 'गीतं वाद्यं नर्तनं च त्रयं संगीतमुच्यते' । अविरलं निरन्तरं विमुक्तो यः शरासारः शरवर्षस्तेन शून्यीकृतं समग्रवनपशुव्यापादनादित्यर्थः काननं येन स तथोक्तः । विदग्धमण्डलं पण्डितसमूहः । काव्यप्रबन्धरचनेन तत्परीक्षणार्थमिति भावः । अनेन राज्ञो विद्वज्जनानुरागित्वं प्रेक्षावत्वं च सूचितम् । **आख्यानकेति**—आख्यानकाख्यायिके व्याख्यातपूर्वे । इतिहासः पुरावृत्तम् । तल्लक्षणं यथा—'धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तं कथायुक्तमितिहासं प्रचक्षते ।' पुराणं पञ्चलक्षणं यथा—'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् भूम्यादेश्चैव संस्थानं इ. पा. ॥' **अक्षरेति**—यत्रा ऽक्षरमात्रादीनां इ. पा.

चतुर्थपादप्रहेलिकाप्रदानादिभिर्वनितासंभोगसुखपराङ्मुखः सुहृत्परिवृतो दिवसमनयत् । यथैव च दिवसमेवमारब्धविविधक्रीडापरिहासचतुरैः सुहृद्भिरुपेतो निशामनैषीत् ।

एकदा तु नातिदूरोदिते नवनलिनदलसंपुटाभिदि किंचिदुन्मुक्तपाटलिम्नि भगवति सहस्रमरीचिमालिनि राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना कौक्षेयकेण संनिहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, अविरलचन्दनानुलेपनधवलितस्तनतटोन्मज्जदैरावतकुम्भमण्डलेव

च्युतकेषु कृतेष्वन्योऽर्थो लभ्यते तान्यक्षरच्युतकादीनि चित्रबन्धाः । तत्राक्षरच्युतकं यथा—महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् । विरलः कुपरीवारो नदीनः केन सेव्यते ॥ अत्र 'नदीन' शब्दान्नकारलोपेऽन्यार्थोपलब्धिः । मात्राच्यूतकं यथा—माहाशयमतिस्वच्छं नीरं सन्तापशान्तये । खलवासादतिश्रान्ताः समाश्रयत हे जनाः ॥ अत्र 'नीर' शब्दस्येकारस्थानेऽकारे कृतेऽन्योऽर्थः प्रकटीभवति ॥ बिन्दुमती नाम पद्यवर्णसंख्यया बिन्दुमात्राणां निवेशनं यथा—ि००० ि ी००० ि ०००००० । ० ी ० ०० ० ि ००० ० ि ० ० ॥ एतत्पद्यं यथा—विपक्षमाखिलीकृत्य प्रतिष्ठा खलु दुर्लभा । अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ यत्र पूर्वेषु पादेषु चतुर्थपादो गुप्तोऽस्ति—चतुर्थपादस्य वर्णा प्रथमद्वितीयतृतीयपादेषु गोपिताः सन्ति—तद्गूढचतुर्थपादं चित्रं यथा—न मज्जति कचिद्दोषे प्रीणाति जगतो मनः य एकः सपरं श्रीमान् 'चिरं जयति सज्जनः ॥' प्रहेलिकालक्षणं विदग्धमुखमण्डने—'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥' इति । सा द्विधा शाब्दी आर्थी च । आद्या यथा सदारिमध्यापि न वैरियुक्ता नितान्तरक्ताप्यसितैव नित्यम् । यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥ [ अत्र 'सारिका' उत्तरत्वेनाभिमता ] द्वितीया यथा—नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता । अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ [ अस्योत्तरं छोटिका ]। वनिता रूपमत्यवण्यवती जातरागा स्त्री । 'वनिता जनितात्यर्थानुरागायां च योषिति' इत्यमरः । एकदेति—एकदा प्रतीहारी द्वारदेशे नियुक्ता स्त्री राजानं समुपसृत्य क्षितितले निहिते जानुनी अष्ठीवन्तौ करकमले च यथा तादृशी सविनयमब्रवीदित्यन्वयः । ॰दलसंपुटभिदि मुकुलोन्मेषकारिणि । पाटलिमा श्वेतरक्तत्वम् । सहस्रमरीचीनां मालाऽस्यास्तीति सहस्रमरीचिमाली सूर्यः । आस्थानमण्डपः सभामण्डपः । अङ्गनाजनविरुद्धेन स्त्रीवर्गानुचितेन । कौक्षेयकेण खड्गेन । कुक्षौ भवः कौक्षेयकः । 'कुलकुक्षिग्रीवाभ्यः—' इति ढकञ् । भीषणेति—यथा स्वभावतो रमणीयस्यापि चन्दनवृक्षस्य संनिहितभुजङ्गत्वेन भीषणत्वं तथैतस्या निसर्गतो रमणीयत्वेऽपि खड्गधारितया भीषणत्वमिति भावः । अविरलेति·

१ चतुरैः । २ मलयज ।

मन्दाकिनी, चूडामणिप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत् "देव द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुंकारनिपातिता राजलक्ष्मीर्दक्षिणापथादागता चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं विज्ञापयति 'सकलभुवनतलसर्वरत्नानामुदधिरिवैकभाजनं देवो विहंगमश्चायमाश्चर्यभूतो निखिलभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताहमिच्छामि देवदर्शनसुखमनुभवितुम्' इति । एतदाकर्ण्य देवः प्रमाणम्" इत्युक्त्वा विरराम । उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि को दोषः प्रवेश्यतामित्यादिदेश ।

---

अविरलं घनं यन्मलयजस्य चन्दनस्यानुलेपनं तेन धवलितं स्तनतटं कुचप्रान्तो यस्याः सा । अत एवैरावतकुम्भमण्डलेन साम्यं तस्य धवलत्वात् । कलहंस इव धवलमम्बरं वस्त्रं यस्याः सा । पक्षे कलहंसैः कलहंसवद्वा धवलमम्बरमाकाशं यस्यां सा । **जामदग्न्येति**—जामदग्न्यः परशुरामः । वशीकृतं स्वसौन्दर्येण मोहितं सकलराजमण्डलमास्थानस्थितं यया । पक्षे स्वायत्तीकृतं निजक्रौर्येण सकलं राजमण्डलं यया । क्षत्रियाणां निबर्हणादित्यर्थः । वेत्रलता द्वाररक्षकोचिता वेत्रलतानिर्मिता यष्टिः । पक्षे वेत्रलता वेतसवृक्षाः । विग्रहिणी शरीरधारिणी । **देवेति**—**त्रिशङ्कोः**—त्रिशङ्कुर्नामेक्ष्वाकुवंशसम्भवो राजा हरिश्चन्द्रपिता । एकदा परमधार्मिकस्य तस्य 'यजनेनाहं सशरीरः स्वर्गं गमिष्यामि' इतीच्छाऽभवत् । स तदर्थं वसिष्ठं प्रार्थितवान् । 'अशक्यमिदम्' इति वसिष्ठोक्तं श्रुत्वा स तप्यमानान्वसिष्ठपुत्रान्मां याजयतेति प्रार्थयामास । पितुरवमाननात्क्रुद्धास्ते 'त्वं चण्डालत्वं गमिष्यसि' इति राजानं शेपुः । पश्चात्तादृगवस्थेन तेन प्रार्थितो विश्वामित्रस्तदर्थं यज्ञमतनोत् । तन्मध्ये मुख्यदैवतानामनागमनात्क्रुद्धः स स्रुवमुद्यम्य 'त्रिशङ्को, एष त्वां सशरीरं स्वर्गं नयामि' इत्युक्त्वा स्वबलेन तं स्वर्गमप्रापयत् । किन्तु चण्डालत्वादयाज्योऽयं स्वर्गे वासं नार्हतीति कुपितेनेन्द्रेणावाक्शिराः सोऽधः पातितः । अधःपतन्तं 'त्राहि' इति विक्रोशमानं तं रुषा 'तिष्ठ तिष्ठ' इत्युक्त्वा विश्वामित्रोऽन्तराल एव स्थिरीचकार । इति रामायणकथात्रानुसन्धेया । अस्याश्चाण्डालत्वाच्चण्डालतां गतस्य त्रिशङ्को राजलक्ष्म्या साम्यम् । **सकलेति**—उदधिरुदकानि धीयन्तेऽस्मिन् । आश्चर्यं भूतः आश्चर्यभूतः । भुवनतलरत्नम् भुवनतलेषूत्कृष्टः । तदुक्तम्—'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' । **देवः प्रमाणम्**—परस्तात्कर्तव्य-

---

१ चूडामणिसंक्रान्त०. २ निपतिता. ३ काचित् इत्य०. ४ एवमप्र०.

(अथ प्रतीहारी नरपतिवचनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्।) प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुञ्जितकुलशैलमध्यगतमिव कनकशिखरिणम्, (अनेकरत्नाभरणकिरणजालकान्तरितावयवमिन्द्रायुधसहस्रसंछादिताष्टदिग्भागमिव जलधरसमयदिवसम्,) अवलम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खलानियमितमणिदण्डिकाचतुष्टयस्य गगनसिन्धुफेनपटलपाण्डुरस्य नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्तमणिपर्यङ्किकानिषण्णम्, उद्धूयमानकनकदण्डचामरकलापम्, (उन्मयूखमुखकान्तिविजयपराभवप्रणते शशिनीव स्फटिकपादपीठे विन्यस्तवामपादम्,) (इन्द्रनीलमणिकुट्टिमप्रभासंपर्कश्यामायमानैः) प्रणतरिपुनिश्वासमलिनीकृतैरिव (चरणनखमयूखजालैरुपशोभमानम्,) (आसनोल्लसितपद्मरागकिरणपाटलीकृतेनाचिरमृदितम-

---

निदर्शने इत्यर्थः। **प्रविश्येति**—प्रविश्य च सा [ चाण्डालकुमारी ] राजानमद्राक्षीत्। इत्यन्वयः। राजानं विशेषयन्नाह। **नरपतीति**—अशनिभय०—अशनिः पक्षच्छेत्तुरिन्द्रस्य वज्रं तस्माद्भयं तेन इ.। अत्र रामायणम्—'पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन्। तेपि जग्मुर्दिशः सर्वा गरुडा इव वेगिनः॥ ततस्तेषु प्रयातेषु देवसंघा महर्षिभिः। भूतानि च भयं जग्मुस्तेषां पतनशङ्कया। ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः। पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः'॥ इति। कनकशिखरिणं मेरुम्। **अनेकेति**—अनेकानि। यानि रत्नाभरणानि गारुत्मतपद्मरागादिमणिखचितभूषणानि तेषां किरणजालैरन्तरिता अवयवा यस्य तम्। अत एवेन्द्रायुधविशिष्टप्रावृड्दिनसाम्यम्। इन्द्रधनुः शक्रायुधम्। स्निग्धमेघप्रतिफलिता रविरश्मयः चित्रवर्णेन धनुषाकारेण भान्ति ता इन्द्रधनुरित्युच्यन्ते। **अवलम्बितेति**—अवलम्बिताः स्थूलानां मुक्तानां मौक्तिकानां कलापा हारा गुच्छका वा यस्मात्तस्य। नियमिता निबद्धाः। मणिदण्डिका रत्नखचितयष्टयः। गगनसिन्धुः स्वर्णदी। 'मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका।' इत्यमरः। दुकूलं क्षौमं तस्य वितानमुल्लोचः। पर्यङ्किका मञ्चिका। **उद्धूयेति**—उद्धूयमानः कनकस्य दण्डा येषां तादृशानां चामराणां कलापो यस्य। **उन्मयूखेति**—उद्गता मयूखा यस्य तादृग्यन्मुखं तस्य कान्त्या यो विजयस्तेन यः पराभवोऽवमानना तेन प्रणते नम्रीभूते। **इन्द्रनीलेति**—इन्द्रनीलमणीनां रत्नविशेषाणां यत्कुट्टिमं निबद्धा भूः। 'कुट्टिमं बद्धभूमिः स्यात्' इति हलायुधः। तस्य प्रभा तया यः संपर्को मिश्रीभावः। तेन श्यामायमानैः नीलीभवद्भिः। **आसनेति**—आसनादुल्लसिता ऊर्ध्वं स्फुरिता ये पद्मरागाणामासनगतलोहितमणीनां किरणास्तैः पाटलीकृतेन रक्तीकृतेन। 'पाटलं तु कुम-

---

१ कथना०. २ सुवर्ण०. ३ उन्मयूखकान्तिविजय०, ०विजिते. ४ स्फाटिके०. ५ जालकैः०.

धुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेनधवले गोरोचना-
लिखितहंसमिथुनसनाथपर्यन्ते[1] चारुचामरपवनप्रनर्तितदशे दुकूले वसानम्, अति-
सुरभिचन्दनानुलेपनधवलितोरःस्थलमुपरिविन्यस्तकुंकुमस्थासकमन्तरान्तरानिपति-
तबालातपच्छेदमिव कैलासशिखरिणम्, अपरशशिशङ्कया नक्षत्रमालयेव हार-
लतया कृतमुखपरिवेषमतिचपलराजलक्ष्मी[2]बन्धनिगडकटकशङ्कामुपजनयतेन्द्रनीलि[3]-
केयूरयुगलेन मलयजरसगन्धलुब्धेन[4] भुजंगद्वयेनेव वेष्टितबाहुशिखरमीषदालम्बि-
कर्णोत्पलमुन्नतघोणमुत्फुल्लपुण्डरीकलोचनम्, अमलकलधौतपट्टा[5]यतमष्टमीचन्द्रशक-

---

ङ्कुमश्वेतरक्तयोः' इति हैमः। मधुकैटभौ दैत्यविशेषौ। **अमृतेति**—अमृतं सुधा तस्य फेन-वद्धवले। अनेन तयोरच्छत्वं लघुत्वं चोक्तम्। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इति मेदिनी। **गोरोचनेति**—गोरोचना गोपित्तं तया आलिखितानि चित्रितानि हंसमिथुनानि तैः सनाथो युक्तः पर्यन्तः प्रान्तभागो ययोः। अतिसुरभि अतिघ्राणतर्पणं। 'सुरभिर्घ्राणतर्पणः' इत्यमरः। **उपरीति**—उपरि अनुलेपनस्येत्यर्थः विन्यस्तास्तत्तत्स्थानकृताः कुङ्कुमस्य काश्मीरज-न्मनः स्थासकाश्चर्चा यस्य। 'स्नानं, चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः। अत एव मध्ये मध्ये निपतितारुणप्रभाखण्डेन कैलासपर्वतेन साम्यम्। हारलतया हारयष्ट्या सप्तविंशतिमौक्ति-कघटितेन नक्षत्रमालाख्येन हारभेदेन। 'यष्टिर्लता सरः सरिः' इत्यनेकार्थमाधवी। कृतमुखप-रिवेषं कृतो मुखस्य परिवेषः परिधिर्यस्य। अनेन हारलतामुक्तानां स्थूलत्वं छायातरलत्वं चन्द्र-साम्यसूचनान्मुखस्याह्लादकत्वं चोक्तम्। 'परिवेषः स्यात्परिधौ परिवेषणे' इति रुद्रः। **अति-चपलेति**—अतिचपला या राजलक्ष्मीस्तस्या बन्धो नियमनं तस्य। तादर्थ्ये षष्ठी। निगडः शृङ्खला तस्याः कटकं तच्छङ्काम्। 'अथ शृङ्खला। अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः। साकाङ्क्षपदानामेकार्थीभावसामर्थ्याभावेऽपि व्यपेक्षासामर्थ्ये एव समासो भवति। तदुक्तं संबंधि-शब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते॥ न च समास एकार्थिभाव एव इति नियमो न कर्तव्य इति वाच्यम्। बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महद्गौरवं तस्मादेकार्थी भाव आश्रितः। इति तस्मात्सहृदयविरसतापादकादस्माद् व्याकर-णविषयाद्विरमणमेव श्रेयः। केयूरयुगलमङ्गदद्वयं 'केयूरमङ्गदं तुल्ये' इत्यमरः। **मलयजेति** मलयजं चन्दनं तस्य रसो द्रवस्तस्य गन्धे लुब्धेनासक्तेन। ईषत्किंचिदालम्ब्यवलम्बमानं कर्णो-त्पलं श्रवणोपरि निहितं कमलं यस्य। अत्र कर्णशब्देन कर्णस्थितत्वं लक्ष्यते। तदुक्तं मम्मट-भट्टेन 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितः। सन्निधानार्थबोधार्थं स्थितेष्वेतत्समर्थनम्॥' इति। उन्नतघोणम्—उन्नता घोणा नासिका यस्य। 'घोणा नासा च नासिका' इत्य-मरः। अमलं श्यामिकादिदोषरहितं यत्कलधौतं सुवर्णं तस्य पटः पट्टिका तद्वदायतम्। 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्।' इति 'कलधौतं सुवर्णे स्याद्रजते तु नपुं-

---

१ अन्तर्देशे, अन्तर्देशे०. २ राज्यलक्ष्मीबन्धननिगडशङ्काम्. ३ इन्द्रनीलमणि. ४ लुब्धेन. ५ पट्टा-यित, पट्टायमानम्।

आकारमशेषभुवराज्याभिषेकसलिलपूतमूर्णासनाथं ललाटदेशमुद्वहन्तम्,) आमोदिमालतीकुसुमशेखरमुषसि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाचलम्, (आभरणप्रभापिशङ्गिताङ्गतया लग्नहरहुताशमिव मकरध्वजमासन्नवर्तिनीभिः) सर्वतः सेवार्थमागताभिरिव दिग्वधूभिर्वारविलासिनीभिः परिवृतममलमणिकुट्टिमसंक्रान्तसकलदेहप्रतिबिम्बतया पतिप्रेम्णा वसुंधरया हृदयेनेवोह्यमानमशेषजनभोग्यतामुपनीतयाप्यसाधारणया राजलक्ष्म्या समालिङ्गितदेहमपरिमितपरिवारजनमप्यद्वितीयमनन्तगजतुरगसाधनमपि खड्गमात्रसहायमेकदेशस्थितमपि

---

सकम् ।' इति च मेदिनी । कलो मलो धौतोऽस्येति कलधौतम् । **अशेषेति**—अशेषं सकलं यद्भुवनं इ० । ऊर्णा भ्रुवोर्मध्यगत आवर्तः ( वक्रा लोमराजिः ) । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ ।' इत्यमरः । "सा च चक्रवर्तिप्रभृतीनामेव नान्यजनस्य । तदुक्तम्—' भ्रूद्वयमध्ये मृणालतन्तुसूक्ष्मं शुभ्रायतमेकं प्रशस्तावर्तं महापुरुषलक्षणम् ' ।' इति भानुचन्द्रः । ललाटदेशं विशालं ललाटम् । **आमोदीति**—आमोदीन्यतिसुगन्धीनि यानि मालतीकुसुमानि जातिपुष्पाणि तेषां शेखरः शिरोभूषणहारो यस्य । 'आमोदः सोऽतिनिर्हारी' इति 'सुमना मालती जातिः' इति चामरः । अत्रोपमाचातुर्यं सुव्यक्तम् । ०पिशङ्गिताङ्गतया पिङ्गलीकृतशरीरतया । **लग्नेति**—लग्नो हरसम्बन्धी हुताशनः तृतीयनेत्राग्निर्यस्य । अत्र राजमकरध्वजयोरुपमानोपमेयभावाद्राज्ञो रूपस्य मदनरूपप्रतिनिधित्वं सूचितम् । **दिग्वधूभिः**—दिश एव वध्वः स्त्रियस्ताभिः । राज्ञो लोकपालांशनिर्मितत्वाद्दिग्वधूसेवायोग्यत्वमुत्प्रेक्षाबीजम् । तदुक्तं मनुना—' अष्टानां लोकपालानां वपुर्धारयते नृपः'। इति । वारविलासिनीभिर्गणिकाभिः वारस्य वृन्दस्य विलासिनी वारविलासिनी । **अशेषेति**—अशेषाश्च ते जनास्तेषां भोग्यतां भोगयोग्यतामुपनीतया प्रापितया सर्वसाधारणयापीत्यर्थः । असाधारणया अनन्यसामान्यया । अत्रैकत्र राजलक्ष्म्यां साधारणत्वासाधारणत्वधर्मयोरयोगाद्विरोधाभासोलंकारः । तल्लक्षणं तु काव्यप्रकाशे—'विरोधः सोऽविरोधेपि विरुद्धत्वेन यद्वचः' । इति । परिहारस्तु ' असाधारणया राजलक्ष्म्याऽनन्यनृपसामान्येन राजतेजसेत्यर्थात् । एवमग्रेपि । **अपरिमितेति**—जनमप्यद्वितीयं नास्ति द्वितीयो यस्येति विरोधः । परिहारपक्षे अद्वितीयमप्रतिमम् । **अनन्तेति**—अनन्तं गजाश्च तुरगाश्च गजतुरगं यस्मिंस्तादृशं साधनं सेना उपकरणं वा यस्य । 'साधनं मृतसंस्कारे सैन्ये सिद्धौषधे गतौ' । इति मेदिनी । 'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः । बहुसाधनसहायत्वेपि खड्गमात्रसहायमिति विरोधः । परिहारपक्षे समरभूमौ संकटे वा तदन्यसहायानपेक्षम् । अनुरूपभावो विक्रमाङ्कदेवचरिते 'विधाय सैन्यं युधि साक्षिमात्रम्'

---

१ सेवासंगताभिः । २ संक्रान्तप्रतिबिम्बतया.

व्याप्तभुवनमण्डलमासनेगतमपि धनुषि निषण्णमुत्सादिताशेषद्विषदिन्धनमपिज्वलत्प्रतापानलमायतलोचनमपि सूक्ष्मदर्शनं महादोषमपि सकलगुणाधिष्ठानं कुपतिमपि कलत्रवल्लभमनवरतप्रवृत्तदानमप्यमदमतिशुद्धस्वभावमपि कृष्णचरितमकरमपि हस्तस्थितसकलभुवनतलं राजानमद्राक्षीत् ।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयदलकोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रबोधनार्थं सकृत्सभाकुट्टिममाजघान । येन सकलमेव तद्राजकमेकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत् ।

---

इत्यादि [ स. १ श्लो० ७३ ] **एकेति**-परिहारपक्षे व्याप्तं स्वतेजसा भुवनमण्डलं येन । तदुक्तम्-वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । एकमेकत्र पतति पतत्यन्यत्समन्ततः ' ॥ इति । **आसन इति**-धनुषि विजयाशंसिनम् । अनुरूपः श्लोको रघुवंशे-' सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् । शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता' ॥ इति । **उत्सादितेति**-इन्धनाभावे ज्वलत्प्रतापानलमिति विरोधः । परिहारस्तु ज्वलदित्यस्य दीप्यदित्यर्थात् । **आयतेति**-विस्तृतलोचनमपि सूक्ष्ममविस्तृतं दर्शनं लोचनं यस्येति विरोधः । परिहारस्तु सूक्ष्मं तीक्ष्णं दर्शनं ज्ञानं यस्येति । सूक्ष्ममध्यात्मविषयं ज्ञानमस्येति वा । सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' । इति ' दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ' । इति च विश्वः । **महेति**-परिहारपक्षे महान्तौ दोषौ भुजौ यस्य महत्यौ दोषे यस्येति वा । दोर्दोषा च भुजो बाहुः ' इति धनंजयः । **कुपतिमिति**-कुत्सितश्चासौ पतिश्चैवंविधमपि कलत्रवल्लभं स्त्रीजनप्रियमिति विरोधः । परिहारस्तु कुः पृथ्वी तस्याः पतिरित्यर्थात् । **अनवरतेति**-अनवरतं प्रवृत्तं दानं मदवारि यस्यैवंभूतमप्यमदममदक्षीबमिति वेति विरोधः । परिहारस्तु-अनवरतं प्रवृत्तं दानमर्थिभ्यो द्रव्यादिवितरणं यस्यैवंविधमप्यमदं गर्वरहितम् । **कृष्णेति**-परिहारपक्षे कृष्णस्य केशवस्यार्जुनस्येव वा चरितं यस्य । ' कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने ' इति मेदिनी । **अकरमिति**-परिहारपक्षे नास्ति करो बलिः [ राजग्राह्यभागः ] यस्य । ' भागधेयः करो बलिः ' इत्यमरः । दूरस्थिता चाण्डालभावादित्यर्थः । **रक्तकुवलयेति**-' अनेन लक्षणोपेतत्वं हस्तस्य सूचितम् ' इति भानु० । **जर्जरितेति**-जर्जरितोऽनवरतताडनाद् विशीर्णो मुखभागो यस्यास्ताम् । वेणुलतां वंशयष्टिम् । प्रबोधनार्थं संमुखीकरणार्थम् । राजकं राज्ञां समूहः । तालशब्देन तालो वाद्यविशेषस्तूणराजो

---

१ आसने स्थितमपि. २ प्रतिबोधनार्थम्. ३ असकृत्.

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्या निर्दिश्यमानां तां वयःपरिणामपाण्डुरशिरसा रक्तराजीवेक्षणापाङ्गेनानवरतकृतव्यायामतया यौवनापगमेऽप्यशिथिलशरीरसंधिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिनानुगृहीतार्यवेषेण धवलवाससा पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुलकाकपक्षधारिणा कनकशलाकानिर्मितमप्यन्तर्गतशुकप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानाम्, असुरगृहीतामृतापहरणकृतकपटपटुविलासिनीवेषस्य श्यामतया भगवतो हरेरिवानुकुर्वतीं संचारिणीमिवेन्द्रनीलमणिपुत्रिकाम्, आगुल्फावलम्बिना नीलकञ्चुकेनावच्छन्नशरीरामुपरि रक्तांशुकृतावगुण्ठनां नीलोत्पलस्थलीमिव निपातितसंध्यातपाम्, एककर्णावसक्तदन्तपत्रप्रभाधवलितकपोलमण्डलामुद्यदिन्दुकिरणच्छुरितमुखीमिव

---

वा तस्य शब्देन। आवलितं परावर्तितं वदनं येन तत्। **अवनीति**—अवनिपतिस्तु अनिमेषलोचनः सन् दूरात् [ नृपतिं ] 'आलोकय' इति [ तस्यै ] अभिधाय प्रतीहार्या [ इयं सा चण्डालकन्यकोपस्थितेति ] निर्दिश्यमानां तां—ददर्शेति दूरेणान्वयः। चाण्डालकन्यकामेव विशेषयन्नाह—वयः परिणामेन वार्धक्येन पाण्डुरं पलितं शिरो यस्य। **रक्तेति**—रक्तराजीवं रक्तकमलं तद्वदीक्षणापाङ्गौ नयनप्रान्तौ यस्य तेन। मातङ्गत्वे चाण्डालत्वे। नृशंसा क्रूरा। अनुगृहीतः स्वीकृत आर्यस्य सभ्यस्य वेषो येन। **आकुलेति**—आकुलाकुलोऽत्यन्तपर्यस्तः काकपक्षो बालकोचितशिखा तां धारयत्येवंशीलेन। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः'। इति हलायुधः। मरकतमयं मरकतं गारुत्मकं तस्य विकारो मरकतमयं तन्निर्मितमित्यर्थः। **असुरेति**—असुरैर्दैत्यैर्गृहीतं यदमृतं तस्यापहरणं प्रत्यानयनं तत्र कृतः कपटेन पटुश्चतुरः। मनोज्ञ इत्यर्थः। विलासिन्या मोहिन्या वेषो येन स तथा तस्य। अत्र भागवतम्—'विषण्णमनसो देवा हरिं शरणमाययुः। इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत्। मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया॥...एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः। योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम्॥' इत्यादि। विस्तरस्तु अष्टमस्कन्धेऽष्टमाध्याये द्रष्टव्यः। श्यामतया श्यामवर्णत्वात्। यद्वा 'शामात्वात् श्यामा यौवन' मध्यस्था इति शिशुपालवधे मल्लिनाथः। ०पुत्रिका पञ्चालिका 'पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः। **आगुल्फेति**—आगुल्फं घुटिकां मर्यादीकृत्यागुल्फमवलम्बत इत्येवंशीलेन। 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः। ० अवगुण्ठनां रक्तांशुकस्य लोहितवाससो रचितं कृतमवगुण्ठनं मुखाच्छादनं यया सा तथा ताम्। अत एव **नीलोत्पलेति**। **एकेति**—एककर्णे अवसक्तं लग्नं दन्तपत्रं कर्णभूषणं इ० विच्छुरितं चित्रितं। दन्तपत्रप्रभाधवलितश्याममुखत्वाच्चन्द्रकिरणविच्छुरितया विभावर्या साम्यम्। एवं हर्षचरितेऽपि—हरशिखण्डेन्दुद्वितीयखण्डेनेव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण विभ्राजमानाम् इति। **आकपिलेति**—आकपिला ईषत्पिशङ्गवर्णा या गोरो

---

१ ०वेषश्यामलतया

विभावरीम्, आकपिलगोरोचनारचिततिलककृतीयलोचनामीशानरचितानुरचितकिरातवेषामिव भवानीम्, उरःस्थलनिवाससंक्रान्तनारायणदेहप्रभाश्यामलितामिव श्रियम्, कुपितहरहुताशनदह्यमानमदनधूममलिनीकृतामिव रतिम्, उन्मदहलिहलापकर्षणभयप्रपलायितामिव यमुनाम्, अतिबहलपिण्डालक्तकरसरागपल्लवितपादपङ्कजामचिरमृदितमहिषासुररुधिररक्तचरणामिव कात्यायनीम्, आलोहिताङ्गुलिप्रभापाटलितनखमयूखामतिकठिनमणिकुट्टिमस्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव निधाय संचरन्तीम्, आपिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन रञ्जितशरीरतया पावकेनेव भगवता रूप एव पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहामनङ्गवारणशिरोनक्षत्रमालायमानेन रोमराजिलतालवालकेन मेखला-

---

चना तया रचितास्तिलको विशेषक एव तृतीयलोचनो यस्यास्तां तथोक्ताम् । अतएवेशानेन शिवेन रचितस्तमनुरचितः किरातस्य वेषो यया तां भवानीमनुकुर्वतीम् । **उरःस्थलेति**— श्यामलितां श्यामतां प्राप्तां नारायणदेहप्रभायाः श्यामत्वादितिभावः । **उन्मदेति**—उन्मद उत्कटमदः [ क्षीबः ] यो हली बलभद्रस्तस्य हलेन यदाकर्षणमाकृष्टिस्तस्माद्यद्भयं तेन पलायिताम् । कलिन्दस्य तदाख्यपर्वतस्येयं कालिन्दी यमुना । 'स आजुहाव यमुनां जलक्रीडार्थमीश्वरः । निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ॥ अनागतां हलाग्रेण कुपितो विचकर्ष ह । पापे त्वं मामवज्ञाय यन्नायासि मयाहुता ॥ नेष्ये त्वां लांगलाग्रेण शतधा कामचारिणीम् ॥ एवं निर्भर्त्सिता भीता यमुना यदुनंदनम् । उवाच चकिता वाचं पतिता पादयोर्नृप । इति कथा भागवते दशमस्कंधोत्तरार्धे ६५ अध्याये द्रष्टव्या ॥ **अतिबहलेति**—अतिबहलोतिपृथुर्यः पिण्डालक्तकरसः पिण्डीकृतयावकपङ्कस्तस्य रागो रक्तिमा तेन पल्लवितं सञ्जातपल्लवं [ अलक्तकरसानामितपल्लवयुक्तं ] पादपङ्कजं यस्यास्ताम् । अत एव **अचिरेति**—मृदितः पादैर्मर्दितः । महिषासुरो दैत्यविशेषः । कात्यायनी गौरी । **आलोहितेति**—आलोहितेषद्रक्ता या अङ्गुलिप्रभा तया पाटलिता श्वेतरक्तीकृता नखमयूखा पुनर्भवकिरणा यस्यास्ताम् । नखमयूखानेवोत्प्रेक्षते । **अतिकठिनेति**—पादयोरेकान्तमृदुत्वादतिकठिणकुट्टिमस्पर्शमसहमानामत एव नखमयूखमिषेण भूमौ मृदुपल्लवच्छेदानिव निधाय । तदुपरि पादन्यासार्थमिति भावः । संचरन्तीम् । आपिञ्जरेण ईषत्पीतरक्तेन । 'पीतरक्तस्तु पिञ्जरः' इत्यभिधानचिन्तामणिः । उत्सर्पिणोपरि प्रसरता । **रूप इति** पक्षे पातोस्यास्तीति पक्षपाती रूप एव पक्षपातिना केवलं तद्रूपाकृष्टेनेत्यर्थः । प्रजापतिमप्रमाणीकुर्वता प्रजापतिना चाण्डालयोनौ सृष्टा । अत एवास्पृश्यायास्तस्या आलिङ्गनादिति भावः । संशोधनं शुद्धिः । अशुद्धं हि अग्निना संस्क्रियते । **अनङ्गेति**—अनङ्गो मदन एव वारणो गजस्तस्य शिरसि या भूषणार्थं नक्षत्रमाला तद्वदाचरति तेन । 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेण क्यङ् 'सनाद्यन्ता

---

१ ०रचितसमुचित. २ कालिन्दीम्. ३ जालकेनानुरञ्जित. ४ रूपैकपक्षपातिना, रूपपक्षपातिना.

दाम्ना परिगतजघनस्थलामतिस्थूलमुक्ताफलघटितेन शुचिना हारेण गङ्गास्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहां शरदमिव विकासितपुण्डरीकलोचनां प्रावृषमिव घनकेशजालां मलयमेखलामिव चन्दनपल्लवावतंसां नक्षत्रमालामिव चित्रश्रवणाभरणभूषितां श्रियमिव हस्तस्थितकमलशोभां मूर्छामिव मनोहारिणीमरण्यभूमिमिवाक्षतरूपसंपन्नां दिव्ययोषितमिवाकुलीनां निद्रामिव लोचनग्राहिणीमरण्यकमलिनीमिव मातङ्गकुलदूषिता-

---

धातवः इति सूत्रेण धातुत्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदित्वात् 'लटः शतृशानचावप्रथमासानाधिकरण्ये' इति शानच् प्रत्ययः । तस्य 'आनेमुक्' इत्यनेन सूत्रेण मुगागमश्च बोध्यः । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । रोमराजिरेव लता तस्या आलवालेनावापेनेव स्थितेनेत्युत्प्रेक्षा । रोमराजिर्हि सौन्दर्यलक्षणम् । तथा च कुमारसम्भवे–'तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः' । इति । शिशुपालवधेपि–'तनुरोमराजिपथवेपथवे' इति । मेखला रसना सैव दाम बन्धनरज्जुस्तेन । जघनस्थलं कटिपुरोभागः । हारेण–मुक्तानां चतुःषष्ट्या लताभिर्घटितो हारः । 'चतुःषष्टिलतो हारः' इत्यमरः । कालिन्दीशङ्कया चाण्डालकन्याया श्यामत्वात् । **विकसितेति**–विकसिते उन्निद्रे पुण्डरीके इव लोचने यस्यास्ताम् । पक्षे विकसितानि पुण्डरीकाण्येव लोचनानि यस्यास्तां शरदि सर्वत्रैव विकसितकमलसंभवात् । तदुक्तं रघौ–शरत्पङ्कजलक्षणा इति । **गतेति**–घनानि केशजालानि यस्यास्ताम् । पक्षे घना मेघा एव केशजालानि यस्यास्तां तथोक्ताम् । **मलयेति**–मेखला कटकम् । चन्दनपल्लवानामवतंसः शेखरो यस्यास्ताम् । पक्षे चन्दनपल्लवा एव अवतंसा यस्यास्ताम् । **चित्रेति**–चित्राणि नानाप्रकाराणि यानि श्रवणाभरणानि तैर्भूषितां मण्डिताम् । पक्षे चित्रा-श्रवणा-भरणैः नक्षत्रविशेषैः शोभितां चित्राश्रवणे एवाभरणे ताभ्यां भूषितामिति वा । श्लेषे ह्रस्वदीर्घादि न गण्यते इति न्यायेनाद्यस्याकारस्थानेऽकारः । **हस्तेति**—हस्तयोः स्थिता कमलस्य शोभा यस्यास्ताम् । पक्षे हस्ते स्थितं यत्कमलं तेन शोभा यस्यास्ताम् । **मन इति**–विलोभनीयाकृत्या चेतोहराम् । पक्षे चेतनाहराम् । **अक्षतेति**–अक्षतमदोषदुष्टं यद्रूपं सौन्दर्यं तेन सम्पन्नाम् पक्षे अक्षाख्यतरुभिरुपसम्पन्नाम् । 'रूपसम्पन्नाम्' इति पाठे रूपेण सौन्दर्येण सम्पन्नाम् । पक्षे रूपैः पशुभिः युक्ताम् । 'रूपं तु श्लोकशब्दयोः । पशावाकारे सौन्दर्ये नाणके नाटकादिके ॥ ग्रन्थावृत्तौ स्वभावे च' । इति हैमः । **अकुलीनाम्**–नास्ति कुलं यस्यास्तामनभिजातां चाण्डालकुलोत्पन्नत्वाम् । पक्षे कौ पृथिव्यां लीना न भवतीति तां दिव्यत्वात् । एवं नलचम्प्वाम्–'निश्चितं स सुरः कोपि न कुलीनः समेमतिः' । इति । **लोचनेति**–अत्यद्भुतरूपवशात्कामिजननेत्राकर्षिणीम् । पक्षे नेत्रपुटसंमेलनकारिणीम् । **मातङ्गेति**–मातङ्गकुलं चाण्डालवंशः । पक्षे

---

१ रसना. २ मनोहराम्. ३ रूपसम्पन्नाम्.

ममूर्तामिव स्पर्शवर्जितामालेख्यगतामिव दर्शनमात्रफलां मधुमासकुसुमसमृद्धि- मिव विजातिमनङ्गकुसुमचापलेखामिव मुष्टिग्राह्यमध्यां यक्षाधिपलक्ष्मीमिवालकोद्भा- सिनीमचिरोपरूढयौवनामतिशयरूपाकृतिमनिमेषलोचनो ददर्श ।

संमुपजातविस्मयस्य चाभून्मनसि महीपतेः । अहो विधातुरस्थाने रूपनि- ष्पादनप्रयत्नः । तथाहि । यदि नामेयमात्मरूपोपहसिताशेषरूपसंपदुत्पादिता किमर्थमपगतस्पर्शसंभोगसुखे कृतं कुले जन्म । मन्ये च मातङ्गजातिस्पर्शदोष- भयादस्पृशतेयमुत्पादिता प्रजापतिना । अन्यथा कथमियमक्लिष्टता लावण्यस्य । न हि करतलस्पर्शक्लेशितानामवयवानामीदृशी भवति कान्तिः । सर्वथा धिग्विधा- तारमसदृशसंयोगकारिणमतिमनोहराकृतिरपि क्रूरजातितया येनेयमसुरश्रीरिव सततनिन्दितसुरता रमणीयाप्युद्वेजयति । इत्येवमादि चिन्तयन्तमेव राजानमी- षदवगलितकर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम । कृतप्रणामायां च

मातङ्गकुलेन हस्तियूथेन दूषितां मर्दिताम् । अमूर्तां परिच्छिन्नाकाररहिताम् । **स्पर्शवर्जि- ताम्**–शिष्टानां स्पर्शः संपर्कस्तेन वर्जिताम् । पक्षे स्पर्शगुणवर्जिताम् । आलेख्यगतां चित्रन्य- स्ताम् । दर्शनमेव दर्शनमात्रं तदेव फलं यस्याः । एकत्र चाण्डालत्वाद्भोगफलराहित्यमन्यत्र चेतनाभावादिति बोध्यम् । मधुमासश्चैत्रमासः । **विजातिं** विगता उत्तमा जातिः यस्यास्तां ब्राह्मणादिचतुर्वर्णेष्वनन्तर्भावात् । पक्षे विगता जातयो जातिपुष्पाणि मालतीपुष्पाणि यस्यां तां वसन्ते जातीपुष्पाणामविकासात् 'वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने । न वर्णनीयम्' इति कविसमयोपि । तदुक्तम्–न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणामित्याद्युन्ने- यमेतत्कविसमयगतं सत्कवीनां प्रबन्धे ॥ **मुष्टिग्राह्येति**—मुष्टिग्राह्योऽतितनुर्मध्यः कटिप्रदेशो यस्यास्ताम् । मुष्टिना ग्रहीतुं योग्यः मध्यो लग्नको यस्यास्ताम् । यक्षाधिपः कुबेरः । **अल- केति**—अलकैः कुन्तलैरुद्भासत इत्येवंशीलाम् । पक्षे अलकायां यक्षाधिपपुर्यामुद्भासत इत्ये- वंशीलाम् । **अतिशयेति**—अतिशयं रूपं यस्यास्तादृश्याकृतिर्यस्यास्ताम् । अस्थाने अपात्रे । **आत्मरूपेति**—आत्मरूपेणोपहसिता तिरस्कृता अशेषरूपसम्पत्समग्रसौन्दर्यसमृद्धिर्यया तादृशी । **अन्यथेति**—अन्यथा उक्तार्थविपर्यये । अक्लिष्टताऽदुष्टता पूर्णतेत्यर्थः । उक्तमेव स्पष्टयति—क्लेशितानां दूषितानाम् । करस्पर्शे हि लावण्यक्षतिकरः क्वचिन्निम्नतादिदोषः स्यादिति भावः । **सर्वथेति**—असदृशयोः मातङ्गजात्यद्भुतसौन्दर्ययोः संयोगं करोतीति तम् । येन असदृशसंयोगेन । **सततेति**—सततं सदैव निन्दितं गर्हितं सुरतं संभोगो यस्यां सा । पक्षे सततं निरन्तरं निन्दिता सुरता सुरजातिः यया । उद्वेजयति निर्वेदमुत्पादयति । **ईषदिति**— ईषत्किंचिदवगलित आवर्जितः कर्णपल्लवः कर्णेस्थितः पल्लवावतंसो यस्याः सा । एवमादिषु कर्णा-

१ उपारूढ. २ दृष्ट्वा च तां समुपजात. ३ सौन्दर्यं रूपनिधानयत्नः. ४ मनसा.

तस्यां मणिकुट्टिमोपविष्टायां स पुरुषस्तं विहंगमादाय पञ्जरगतमेव किंचिदुपसृत्य राज्ञे न्यवेदयदवोचच्च । देव विदितसकलशास्त्रार्थो राजनीतिप्रयोगकुशलः पुराणेतिहासकथालापनिपुणो वेदिता गीतश्रुतीनां काव्यनाटकाख्यायिकाख्यानेकप्रभृतीनामपरिमितानां सुभाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलो वीणावेणुमुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता नृत्तप्रयोगदर्शननिपुणश्चित्रकर्मणि प्रवीणो द्यूतव्यापारे प्रगल्भः प्रणयकलहकुपितकामिनीप्रसादनोपायचतुरो गजतुरगपुरुषस्त्रीलक्षणाभिज्ञः सकलभूतलरत्नभूतोयं वैशम्पायनो नाम शुकः सर्वरत्नानां चोदधिरिव देवो भाजनमितिकृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता । तदयमात्मीयः क्रियताम् । इत्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार ।

प्र उपसृते च तस्मिन्स विहंगराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यायामिमां पपाठ ।

---

दिपदं सान्निध्यबोधीत्युक्तं प्राक् । **राजेति**—राजनीतिर्दण्डनीतिस्तस्याः प्रयोगो यथावद्योजनं तत्र कुशलः । **गीतेति**—गीतं गानशास्त्रम् । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम्-'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥' श्रुतयश्च द्वाविंशतिः । तदुक्तम्—'सप्त स्वरास्त्रयो ग्रामा मूर्च्छाश्चैकोनविंशतिः । ताना एकोनपञ्चाशद् द्व्यधिका विंशतिः श्रुतिः ॥' इति । तासां वेदिता ज्ञाता । सुभाषितानां शृङ्गारनीतिवैराग्यादिप्रतिपादकानां काव्यविशेषाणाम् । **वीणेति**—अत्र वीणादिशब्दा उपलक्षणाः । तेन वीणाशब्देन ततम् । वेणुशब्देन सुषिरम्, मुरजशब्देन आनद्धम् । प्रभृतिशब्दात्कांस्यतालादि घनं ग्राह्यम् । अत्र भरतः—ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् । घनं तालस्तु विज्ञेयः सुषिरो वंश एव च ॥ इति । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥' इत्यमरश्च । असमोऽप्रतिमः । श्रोता वादकगुणावगुणज्ञ इत्यर्थः । **नृत्तेति**—'अन्यद्भावाश्रयं नृत्यं नृत्तं ताललयाश्रयम् ।' इति दशरूपकम् । 'तालः कालक्रियामानं लयः साम्यम्' इत्यमरः । तालश्चंचत्पुटादिः, लयो द्रुतादिः, तन्मात्रापेक्षोऽङ्गविक्षेपोऽभिनयशून्यो नृत्तमिति दशरूपकटीकाकृत् । द्यूतव्यापारे दुरोदरव्यतिकरे । प्रगल्भःप्रतिभान्वितः 'प्रगल्भः प्रतिभान्विते' इत्यमरः । **प्रणयेति**-प्रणयकलहः प्रीतिकलहः । प्रसादनं सान्त्वनम् । **गजेति**-अनेन पालकाप्यं ( भद्रजातीयादिगजलक्षणशास्त्रं ) शालिहोत्रं ( देवमणिप्रभृतिवाजिलक्षणशास्त्रं ) सामुद्रिकम् (स्त्रीपुरुषलक्षणशास्त्रं) इत्येतेषां ज्ञानमुक्तम् । **सामुन्नमय्येति**-'शुकादीनां शब्दोच्चारणे तादृशोयं जातिस्वभावः' । इति भानु० । **अतिस्पष्टेति**-अतिस्पष्टा अतिव्यक्ता वर्णा

---

१ नृत्य. २ कामिनीजन. ३ आत्मायत्तः.

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥

राजा तु तां श्रुत्वा संजातविस्मयः सहर्षमासन्नवर्तिनमतिमहार्हहेमासनोपविष्टममरगुरुमिवाशेषनीतिशास्त्रपारगतमतिवयसमग्रजन्मानमखिलमन्त्रिमण्डले प्रधानममात्यं कुमारपालितनामानमब्रवीत् । श्रुता भवद्भिरस्य विहंगमस्य स्पष्टता वर्णोच्चारणे स्वरे च मधुरता । प्रथमं तावदिदमेव महदाश्चर्यमसंकीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वारसंस्कारयोगां विशेषसंयुक्तां यदयमतिपरिस्फुटाक्षरां गिरमुदीरयति । तत्र पुनरपरमभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कारवतो बुद्धिपूर्वा प्रवृत्तिः । तथा हि । अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य जयशब्दमियमार्या मामुद्दिश्यातिस्फुटाक्षरं गीता । प्रायेण हि पक्षिणः पशवश्च भयाहारमैथुननिद्रासंज्ञामात्रवेदिनो भवन्ति । इदं तु महच्चित्रम् । इत्युक्तवति भूभुजि

अक्षराणि स्वर उदात्तादिः संस्कारो व्याकरणजन्याशुद्धिश्च यस्यां तादृश्या गिरा । जयशब्दः जयजीवेत्याद्यर्थवाचकशब्दः । **स्तनयुगमिति**–भवतस्तव रिपुस्त्रीणां स्तनयुगमश्रुभिर्नयनसलिलैः स्नातं कृतस्नानं हृदये यः शोकस्तासां पतिहननाज्जातं दुःखं स एवाग्निस्तस्य समीपतरवर्ति अत्यन्तनिकटवर्ति विमुक्ताहारं विगतो मुक्ताहारो मौक्तिकहारो यस्य विमुक्तो हारो येनेति वा । तादृशं सद्व्रतं चरतीवेत्युत्प्रेक्षा । अन्योऽपि व्रतचारी कृतस्नानोऽग्निसमीपस्थायी त्यक्ताहारश्च स्यात् । **अतिमहार्हेति**–अतिमहानर्हो मूल्यं यस्य तादृशे हेमासने उपविष्टं निषण्णम् । अग्रजन्मानं ब्राह्मणम् । वर्णेषु मध्येऽग्रजातत्वात्, अग्रात्प्रधानाङ्गान्मुखाज्जातत्वाद्ब्राह्मणोऽग्रजन्मा । तथा च ऋक्श्रुतिः–'ब्राह्मणोऽस्य मुखमासीत्' इति । 'तस्मात्त्रिवृत्स्तोमानां मुखं...अग्निर्देवानां ब्राह्मणो मनुष्याणां तस्माद्ब्राह्मणो मुखेन वीर्यं करोति मुखतो हि सृष्टः । इति ताण्ड्यश्रुतिश्च । स्वरे–ध्वनौ । **असंकीर्णेति**–असंकीर्णः परस्परविभागत्वेन प्रतीयमानो वर्णानां प्रविभागो यस्याम् । **अभीति**–अभिव्यक्ताः प्रकटा मात्रा एकारादयः, अनुस्वाराः, संस्कारः शब्दशुद्धिश्चैतेषां योग एकत्र मिलनं यस्याम् । विशेषयुक्तां श्लेषाद्यलंकारयुताम् । **संस्कारवतः**–तत्तद्विषयानुभवजन्यवासनावतः । बुद्धिपूर्वा संकल्पपुरःसरा । **भयेति**–संज्ञा आगमनानिर्गमनादिसूचकाः । **अन्येति**–अन्यस्मिञ्जन्मनि उपात्तो गृहीतो यः संस्कार उक्तलक्षणस्तस्यानुबन्धोऽनुच्छित्तिस्तेन । संस्कारातिशयः–अतिशय उत्कर्षः । दार्ढ्यमित्यर्थः । **अतीति**–अतिपरिस्फुटमति-

---

१ अतिमहार्घम् महार्हासनोप०. २ अतिपरिणतवयसम् ३ महत्तरम्, महाश्चर्यम्. ४ अनुस्वारस्वरसंयोगविशेष०. ५ अतिपरिस्फुटाक्ष०. ६ संस्कारवती. ७ वाक्प्रवृत्तिः. ८ परिस्फुटाक्षर .

कुमारपालितः किंचित्स्मितवदनो नृपमवादीत् । देव किमत्र चित्रम् । एते हि शुकसारिकाप्रभृतयो विहंगमविशेषा यथाश्रुतां वाचमुच्चारयन्तीत्यधिगतमेव देवेन । तत्राप्यन्यजन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायत इति नातिचित्रम् । अन्यदेतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाभिधाना वागासीत् । अग्निशापात्त्वपरिस्फुटालापता शुकानामुपजाता करिणां च जिह्वापरिवृत्तिः । इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढमावेदयन्नाडिकाच्छेदप्रहतपटुपटहनादानुसारी मध्याह्नशङ्खध्वनिरुदतिष्ठत् । तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ ।

अथ चलति महीपतावन्योन्यमतिरभससंचलनचालिताङ्गदपत्रभङ्गमकरकोटिपाटितांशुकपटानामाक्षेपदोलायमानकण्ठदाम्नामंसस्थलोल्लसितकुङ्कुमपटवास-

---

व्यक्तमभिधानमुच्चारणे यस्यां सा । **अग्निशापादिति**—अपरिस्फुटालापता—'अत्रायं प्रवादः छद्मना गृहीतरूपस्य वह्नेर्यादृशं संवादं श्रुतवाञ्छुकस्तथैवोक्तवानिति तं प्रति क्रुद्धेन वह्निना शप्तः'। इति भानु० जिह्वापरिवृत्तिः रसनाविपर्ययः । 'अग्निशापात्करिणामुपकण्ठं जिह्वाग्रम्' इति पुराणप्रसिद्धेः । अत्रेदमैतिह्यम्—पुरा किल चतुराननलब्धवरेण तारकेण विप्रकृता देवा ब्रह्माणं शरणं जग्मुः।तान्संकटादुद्दिधीर्षुः परमेष्ठ्युवाच—भो देवाः, अग्नेः सकाशात्कार्तिकेयो नाम पुत्रो भविता स च तारकासुरं हनिष्यति अतस्त्वरितमग्निरेवान्विष्यतामिति । देवास्तु तद्वचनमुपश्रुत्य क्वापि निलीनमग्निमन्वेषयन्तस्तमलभमाना महान्तं गजमेकं पप्रच्छुः, अग्निः कुत्रास्तीति । स देवान्प्रत्याह अश्वत्थेऽग्निरस्तीति । ततः शशाप ज्वलनः सर्वान् द्विरदान् क्रोधमूर्च्छितः । ' प्रतीपा भवतां जिह्वा भवित्रीति मृगाद्वह ॥ इति । शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि । इति । ततः शुकेन कथितः स विशेषस्तु महाभारते अनुशासनपर्वणि पञ्चाशीतितमेऽध्याये द्रष्टव्यः । अशिशिरकिरणः सूर्यः । **नाडिकेति**—नाडिका घटिका तस्याश्छेदोऽवसानं तत्र प्रहतस्ताडितो यः पटुः परुषः पटहस्तस्य नादमनुसरतीत्येवंशीलः । **अथेति**—अथ महीपतौ चलति महीपतीनां महान्संभ्रम आसीदित्यन्वयः । **अन्योन्येति**—अन्योन्यं परस्परमतिरभसेनातिवेगेन यत्संचलनं तेन चालितानि स्वस्थानात्क्षिप्तानि अङ्गदानि केयूराणि तेषामुपरि ये पत्रभङ्गा आकृतिविशेषास्तेषु ये मकरा मकराकारकृतयस्तेषां कोटिभिरग्रैः पाटितानि अंशुकानि सूक्ष्मतन्तुनिर्मितानि पटानि येषां ते तथा तेषाम् आक्षेपो झटित्युत्थानादाक्षिप्तिः । **अंसेति**—अंसस्थलेभ्यः स्कन्धदेशेभ्यः उल्लसितं ऊर्ध्वं प्रसृतं कुङ्कुमं घुसृणं पटवासः पिष्टातश्च तयोः धूल्या पिञ्जरिताः पिशङ्गी-

---

१ यथाश्रुतम्. २ अन्यच्च. ३ सारिकाणाम्. ४ चासन्न. ५ पाटित.नेत्रपटानाम्, पाटितांशुकानाम्. ६ मालतीकण्ठदाम्नाम्. ७ उल्लासित. ०धूलिपटलपिञ्जरीकृत.

धूलिपिञ्जरितदिशामालोलमालतीकुसुमशेखरोत्पतदलिकदम्बकानामर्धावलम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानां गमनप्रणामलालसानामहमहमिकया वक्षःस्थलप्रेङ्खोलितहारलतानामुत्तिष्ठतामासीदतिमहान्संभ्रमो महीपतीनाम् । इतश्चेतश्च निष्पतन्तीनां स्कन्धदेशावसक्तचामराणां चामरग्राहिणीनां कमलमधुपानमत्तजरत्कलहंसनादजर्जरेण पदे पदे रणितमणीनां मणिनूपुराणां निनादेन वारविलासिनीजनस्य संचरतो जघनस्थलास्फालनरसितरत्नमालिकानां मेखलानां मनोहारिणा झंकारेण, नूपुरवाकृष्टानां च धवलितास्थानमण्डपसोपानफलकानां भवनदीर्घिकाकलहंसकानां कोलाहलेन, रसनारसितोत्सुकितानां च तारतरविराविणामुल्लिख्यमानकांस्यक्रेंकारदीर्घेण गृहसारसानां कूजितेन, सरभसप्रचलितसामन्तशतचरणतलाभिहतस्य चास्थानमण्डपस्य निर्घातनिर्घोषगम्भीरेण कम्पयतेव वसुमतीं ध्वनिना, प्रतीहारिणां च पुरः ससंभ्रमं समुत्सारितजनानां दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति तारतरदीर्घेण भवनप्रासाद

---

कृता दिशो यैस्तेषाम् । **आलोलेति**–ससंभ्रमोत्थानादालोलाश्चंचला ये मालतीकुसुमशेखरा जातीपुष्प[illegible]डाः । , शिखास्वापीडशेखरौ ' इत्यमरः । तेभ्य उत्पतन्तः सौरभ्यलुब्धा अलिकदम्बा भ्रमरसमूहा येषाम् । अर्धावलम्बिभिरर्धमधश्च्युतैः । **गमनेति**–अहमहमिकया परस्परसंघर्षेण । गमनकाले यः प्रणामस्तत्र लालसानामत्युत्कटस्पृहाणाम् । ' अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः । ' इत्यमरः । ' लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः ' इति विश्वमेदिन्यौ । प्रेङ्खोलिता आन्दोलिताः । इतश्चेतश्च समन्ततः । **कमलेति**–कमलमधुपानेन मत्ताः क्षीबा ये जरत्कलहंसा वृद्धकादम्बास्तेषां नादस्तेन जर्जरितेन संभिन्नेन तद्वज्जर्जरेणेति वा । **जघनेति**–जघनस्थले यदास्फालनं ताडनं तेन रसिताः शब्दायमाना रत्नमाला यासां तादृशीनां संचरतो वारविलासिनीजनस्य मेखलानां झंकारेण । सोपानमारोहणम् ' आरोहणं स्यात्सोपानम् ' इत्यमरः । भवनदीर्घिका गृहवाप्यः । **रसनेति**–रसनानां कटिमेखलानां रसितेन रणितेनोत्सुकितानां प्रणुन्नानाम् । तारतरमतिदीर्घम् । उल्लिख्यमानं संघृष्यमाणं यत्कांस्यं कांस्यनिर्मितो वाद्यविशेषस्तस्य क्रेंकारस्तीक्ष्णशब्दस्तद्वद्दीर्घेणायतेन । **निर्घातेति**–निर्घातो गगनोत्थित औत्पातिकः शब्दविशेषः । तदुक्तं नारदीयसंहितायाम्–' वायुनाभिहतो वायुर्गगनात्पतितः क्षितौ । यदा दीप्तः खगस्तः स निर्घातोतिदोषकृत् ' ॥ तस्य निर्घोषो महाशब्दस्तद्वद्गम्भीरो [illegible]ः । यद्वा निर्घातो वज्रनिर्घातस्तस्य निर्घोषः स्तनितमित्यर्थस्तद्वद्गम्भीरस्तेन । **प्रतीहारिणामिति**–पुरः अर्थाद् राज्ञः दण्डिनां दण्डधारिणामिति प्रतीहारि-

---

१ जर्जरितेन. २ उत्सुकानाम्. ३ जानपद्मानाम्. ४ आलोकयन्निवाति.

कुञ्जेषूच्चरितप्रतिशब्दतया दीर्घतरतामुपगतेनालोकशब्देन, राज्ञां च ससंभ्रमावर्जितसमौलिलोलचूडामणीनां प्रणमताममलमणिशलाकादन्तुराभिः किरीटकोटिभिरुल्लिख्यमानस्य मणिकुट्टिमस्य स्वनेन, प्रणामपर्यस्तानामतिकठिनमणिकुट्टिमनिपतितरणरणायितानां च मणिकर्णपूराणां निनादेन मङ्गलपाठकानां च पुरोयायिनां जय जीवेति मधुरवचनैनानुयातेन पठतां दिगन्तव्यापिना कलकलेन प्रचलितजनचरणशतसंक्षोभभयादपहाय कुसुमप्रकरमुत्पततां च मधुलिहां हुंकृतेन, संक्षोभादतित्वरितपदप्रवृत्तैरवनिपतिभिः केयूरकोटिताडितानां क्वणितमुखररत्नदाम्नां च मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत् ।

अथ विसर्जितराजलोको विश्रम्यतामिति स्वयमेवाभिधाय तां चाण्डालकन्यकां, वैशम्पायनः प्रवेश्यतामभ्यन्तरमिति ताम्बूलकरङ्कवाहिनीमादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत् । अपनीताशेषभूषणश्च दिवसकर इव विगलितकिरणजालश्चन्द्रतारकासमूहशून्य इव गगनाभोगः

---

विशेषणम् । समारब्धाहेला यस्मिन्कर्मणि तद्यथा तथोच्चारयताम् । भवनानां सामान्यगृहाणां प्रासादानां देवनृपसद्मनां च कुञ्जेषु लतादिपिहितकक्षासु । 'प्रासादो देवभूभुजाम्' इति । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इति चामरः । उच्चरित उदित प्रतिशब्दो यस्य तस्य भावस्तत्ता तया । आलोकशब्देन—आलोकस्य दर्शनस्य शब्दो वाचकः 'आलोकयत' इति शब्द इत्यर्थः । **राज्ञामिति**—प्रणमतामत एव ससंभ्रमं सरभसमावर्जिता नमिता ये मौलयः शिरांसि तैर्लोलाश्चंचलाश्चूडामणयो येषां तेषां राज्ञाम् । अमला निर्मला या मणीनां रत्नानां शलाका इषिकास्ताभिः यद्वा अमलमणीनां शलाका अङ्कुरास्तैः । दन्तुराभिर्विषमाभिः । किरीटकोटिभिः । भूमिं यावच्छिरोनयनात् । उल्लिख्यमानस्य घृष्यमाणस्य । प्रणामपर्यस्तानां प्रणामे प्रणामकर्मणि पर्यस्तानां क्षिप्तानाम् । रणरणायितानां संजातरणरणेतिशब्दानाम् । **मङ्गलेति**—पठतां प्रस्तावसदृशवचनानीत्यर्थः । मङ्गलपाठकानां मङ्गलं शुभं जय जीवेत्यादिवचनं तस्य पाठका बन्दिनस्तेषाम् । **मधुरेति**-मधुरवचनमनुयातेनानूत्थितेन । **प्रचलितेति**-प्रचलिता ये जनास्तेषां चरणशतानि तेषां संक्षोभः संरम्भस्तस्माद्भयं तस्मात् । संक्षोभात्सम्भ्रमात् । क्वणितान्यतएव मुखराणि रत्नदामानि येषाम् । **अथेति**—अभ्यन्तरं प्रासादकक्षाम् । करङ्क स्थगी । आप्ता- विश्वासपात्रत्वाद्धिताः सम्बन्धिनो वा । अभ्यन्तरमर्थात्प्रासादस्य । गगनाभोगः नभोविस्तारः **समाहूतेति**—समाहृतानि

---

१ दीर्घताम्. २ निपतन. ३ मङ्गलमधुरवचनानुपातेन. ४ पवन. ५ अशनादिना चोपचर्यतामिति, अन्नपानाशनादिना च सुखितमेनं कारयेति. ६ करण्ड.

समुपाहृतसमुचितव्यायामोपकरणां व्यायामभूमि[illegible] । स तस्यां च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मिषन्तीभिः कपोलयोरीषदवदलितसिन्दुवारकुसुममञ्जरीविभ्रमाभिरुरसि निर्दयश्रमच्छिन्नहारविगलितमुक्ताफलप्रकरानुकारिणीभिर्ललाटपट्टकेऽष्टमीचन्द्रशकलतलोल्लसदमृतबिन्दुविडम्बिनीभिः स्वेदजलकणिकासंततिभिरलंक्रियमाणमूर्तिः, इतस्ततः स्नानोपकरणसंपादनसत्वरेण पुरः प्रधावता परिजनेन तत्कालं विरलजनेपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिर्दण्डिभिरुपदिश्यमानमार्गो विततसितवितानामनेकचारणगणावबध्यमानमण्डलां गन्धोदकपूर्णकनकमयजलद्रोणीसनाथमध्यामुपस्थापितस्फाटिकस्नानपीठामेकान्तनिहितैरतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्टमधुकरकुलान्धकारितमुखैरातपभया[illegible]वगुण्ठितमुखैरिव स्नानकलशैरुपशोभितां स्नानभूमिमगच्छत् । अवतीर्णस्य जलद्रोणीं वारविलासिनीकरमृदितसुगन्धामलकोपलिप्तशिरसो

---

एकत्र संगृहीतानि व्यायामस्य श्रमस्योपकरणानि साधनानि मुद्गरलोहदण्डादीनि यस्याम् । **कृतेति**—कृतो मधुरः सुखावहः नातिशरीरपीडाकर इत्यर्थः । व्यायामः येन । **श्रमेति**—श्रमवशादुन्मिषन्तीभिराविर्भवन्तीभिः स्वेदजलस्य घर्माम्भसः कणिकाः सूक्ष्मबिन्दवस्तासां संततिभिरलंक्रियमाणमूर्तिः । ता एव विशिनष्टि—**ईषदिति**—ईषदवदलितानि किंचिदुद्भिन्नानि यानि सिन्दुवारस्य कुसुमानि तेषां मञ्जरी वल्लरिस्तस्या इव विभ्रमः शोभा भ्रान्तिर्वा यासां ताभिः । 'अथ विभ्रमः । शोभायां संशये हावे' इति हैमः । **उरसीति**—उरसि वक्षस्थले । निर्दयः कठिनश्चासौ श्रमो व्यायामो निर्दयश्रमः । अत्र शरीरस्येच्छावशादाकुञ्चनप्रसारणवलनादिकरणादिकरणान्निर्दयत्वं बोध्यं न तु श्रमातिरेकात् 'कृतमधुरव्यायामः' इत्यनेन विरोधापत्तेः । तेनच्छिन्न इव यो हारस्तस्माद्विगलितानां मुक्ताफलानां यः प्रकरः समूहस्तमनुकुर्वन्तीति ताभिः । **ललाटेति**—॰विडम्बिनीभिरनुकुर्वाणाभिः । अष्टमीचन्द्रशकलग्रहणं ललाटपट्टस्य तदाकारत्वेन प्राङ्निर्देशात् । पुनरपि राजानमेव विशेषयति । **स्नानेति**—॰संपादने सत्वरेण त्वरान्वितेन परिजनेन दण्डिभिश्चोपदिश्यमानमार्ग इति योजना । समुत्सारणे जनसंमर्दनिवारणे योधिकारस्तम् । उचितं कर्तव्यप्राप्तम् । **उपदिश्येति**—मार्गोपदेशनमग्रेगमनम् । **विततेति**—सितं धवलम् । अनेके च ते चारणाः कुशीलवाः । 'चारणास्तु कुशीलवाः' इत्यमरः । तेषां गणस्तेनावबध्यमानं मण्डलं यस्याम् । गन्धयुक्तमुदकं गन्धोदकं । कनकमयी सुवर्णनिर्मिता । विकारार्थे मयट् । एकान्ते एकस्मिन् प्रान्ते । 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः' । इति हेमचन्द्रः । अन्धकारितमुखास्तिरस्कृत[illegible]रित्यर्थः । अत एव नीलकर्पटैः नीलवस्त्रखण्डैरवगुण्ठितानि संवृतानि मुखानि येरित्युत्प्रेक्षा । **वारेति** [illegible]ः करेण मृदिताचूर्णिता

---

१ रतिभ्रम, रतिविभ्रम. २ विरलतरेपि.

राज्ञः समन्तात्समुपतस्थुरंशुकनिबिडनिबद्धस्तनपरिकरा दूरसमुत्सारितवलयबाहुलताः समुत्क्षिप्तकर्णाभरणाः कर्णोत्सङ्गोत्सारितालका गृहीतजलशाः स्नानार्थमभिषेकदेवता इव वारयोषितः। ताभिश्च समुन्नतकुचकुम्भमण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं राजा रराज। जलद्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिकधवलं वरुण इव राजहंसमारुरोह। ततस्ताः काश्चिन्मरकतकलशप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः, काश्चिद्रजतकलशहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित्कलशोत्क्षेपश्रमस्वेदार्द्रशरीरा जलदेवता इव स्फाटिकैः कलशैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिविवरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव काश्चिज्जाड्यमपनेतुमाक्षिप्तबालातपेनेव दिवसश्रिय इव कनककलशहस्ता कुङ्कुमजलेन, वाराङ्गनाः क्रमेण राजानमभिषिषिचुः। अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानु-

---

ये सुगन्धयुक्ता आमलका धात्रीफलानि तैरुपलिप्तं शिरो यस्य तथा तस्य। **अंशुकेति**— अंशुकैर्निबिडं दृढं निबद्धौ स्तनौ परिकरश्च याभिस्तास्तथा। **दूरेति**—दूरं समुत्सारितानि वलयानि यासां तादृश्यो बाहुलता यासां तास्तथोक्ताः। **कर्णेति**—कर्णयोरुत्सङ्गात्प्रान्तदेशादुत्सारिता दूरीकृता अलकाः केशा याभिस्तास्तथा। **समुन्नतेति**—समुन्नते कुचौ कुम्भौ हस्तिशिरःपिण्डाविव तयोर्मण्डले यासां ताभिः। अत एव करिणीसाम्यम्। वरुण इव राजहंसम्— वरुणो हि राजहंसवाहनः तथा वर्ण्यश्च। तदुक्तं वराहमिहिरेण—दण्डी यमो महिषगो हंसारूढश्च पाशभृद्वरुणः। इति। **तत इति**—ततः ता वाराङ्गना क्रमेण राजानमभिषिषिचुरित्यन्वयः। तत्प्रकारमेव वर्णयति काश्चिदित्यादिना। पत्रपुटैः पर्णसंपुटैर्न तु कलशैरित्युत्प्रेक्षा। एवमग्रेपि। ०स्वेदार्द्रशरीरा एव अत जलमय जलदेवतासाम्यम्। मलयसरितो मलयपर्वतोद्भवा नद्यः। ता अपि चन्दनरसमिश्राः स्युः। **उत्क्षिप्तेति**—उत्क्षिप्ता ये कलशास्तेषां पार्श्वयोर्विन्यस्ता हस्तपल्लवा याभिस्तादृश्यः। **प्रत्यङ्गुलीति**—प्रत्यङ्गुलि प्रतिकररुहं यद् विवरं तस्माद्विनिर्गता जलधारा यासां ताः। कलशमुखं हस्ततलेन पिधायाङ्गुलिविवरेभ्यो जलं पातयन्त्य इत्यर्थः। अत एव सलिलयन्त्रदेवतासाम्यम्। जाड्यं शीतम्। उदपादि—उत्पन्नः 'पद गतौ' इत्यस्य लुङि रूपम्। स्फोटयन् विदारयन्। **अनेकेति**—अनेकैः प्रहताः पटवस्तीक्ष्णं शब्दं कुर्वन्तः पटहा दुन्दुभयो झल्लर्यो वाद्यविशेषाः। 'झल्लरी झिल्लरी च द्वे हुडुके बालचक्रके'। इति मेदिनी। मृदंगा वेणवो वीणाश्च। ताश्च गीतानि च तेषां निनादेन ध्वनि-

---

१ परितः. २ कर्णाभरणाः. ३ यथायथम्.

गम्यमानो बन्दिवृन्दकोलाहलाकुलो भुवन[1]विवरव्यापी स्नानशङ्खानामापूर्यमाणाना-मतिमुखरो ध्वनिः ।

एवं च क्रमेण निर्वर्तिता[2]भिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौतवाससी शरदम्बरैकदेश इव जलक्षालन[3]विमलतनुरतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः संपादितपितृ-जलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत् । उपरचित-पशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ झंकारिभिरलिक-दम्बकैरनुबध्यमानपरिमलेन मृगमदकर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदिमालतीकुसुमशेखरः कृताम्बर[4]परिवर्तो रत्नकर्णपूरमात्राभरणः समु-चितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्तयामास ।

परिपीतधूप[5]वर्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणिकुट्टिमात्प्रदेशा-दुत्थाय नातिदूरवर्तिन्या ससंभ्रमप्रधावितया प्रतीहार्या प्रसारित[6]मवलम्ब्यानवर-

नानुगम्यमानः । ०आकुलः संमिश्रः । आपूर्यमाणानामर्थान्मुखमारुतेन । अत्यन्तमुखरस्तारतरः । **निर्वर्तिताभिषेकः**—कृतस्नानः । **विषेति**—विषधरो नागस्तस्य निर्मोकः कञ्चुकः । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । तद्वत्परिलघुनी अगुरुत्वात्सुखवाह्ये । मनोज्ञे वा । 'लघुर-गुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् ।' इति मेदिनी । **दुकूलेति**—दुकूलपटपल्लवेन क्षौमपटप्रान्तेन । तुहिनगिरिर्हिमाचलः । **सम्पादितेति**—सम्पादिता पितृणां जलक्रिया जलतर्पणविधिर्येन । तदुक्तं मनुना—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥ इति । तोयाञ्जलिना अञ्जलिमर्पयित्वेत्यर्थः । पशुपतिः शिवः । पशूनां जीवानां प्रमथादिगणानां वा पतिः । कृताग्निकार्यो हुताग्निः । अत्र मनुः—'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।' इति । 'वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् । आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्' ॥ इति च । अलिकदम्बकैर्भ्रमरसमूहैः । मृगमदः कस्तूरिका । 'मृगनाभिर्मृगमदः कस्तूरी च' इत्यमरः । कर्पूरो घनसारः, कुङ्कुमं केसरं, एतेषां वासेन सुरभिणा । **कृतेति**—कृतोऽम्बरयोः परिवर्तः येन । अन्ये वाससी परि-धायेत्यर्थः । समुचितं योग्यं भोजनं येषां तैः । **परिपीतेति**—परि साकल्येन पीता सेविता धूपवर्तिः सु[illegible] निर्मिता सुगन्धिद्रव्यवर्तिर्येन । उपस्पृश्याचम्य । यदाह मनुः-उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः । भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥ इति । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । भुक्तेऽऽस्थानमण्डपमयासीदित्यन्वयः । **प्रमृष्टेति**—प्रमृष्टं भोजनपात्राणामपनयनेन भूमिलेपनेन च संस्कृतं मणीनां कुट्टिमं यस्मिंस्तस्मात् । प्रतीहार्या—सन्धिविग्रहसम्बद्धनानाकार्यसमुत्थितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ताः स्मृताः' ॥

१ भवन. २ निवर्तित. ३ जलाक्षालननिर्मल. ४ कृतवस्त्र०. ५ धूम, धूपधूम. ६ रितबाहुम०.

तवेत्रलताग्रहणप्रसङ्गातिजरठकिसलयानुकारिकरतलं करेणाभ्यन्तरसंचारसमुचितेन परिजनेनानुगम्यमानो धवलांशुकजवनिकापरिगतपर्यन्ततया स्फटिकमणिमयभित्तिबद्धमिवोपलक्ष्यमाणमतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा सिक्तशिशिरमणिभूमिमविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितमुत्कीर्णशालभञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौतमयेन स्तम्भसंचयेन विराजमानमतिबहलागुरुधूपपरिमलमखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोदवासितप्रच्छदपटेन पट्टोपधानाध्यासितशिरोधाम्ना मणिमयप्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनशिलातलसदृशशयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत्। तत्र च शयनतलनिषण्णः क्षितितलोपविष्टया शनै शनैरुत्सङ्गनिहितासिलतया खड्गवाहिन्या नवनलिनदलकोमलेन करसंपुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन्मुहूर्तमि-

---

इति भरतः। 'पुंवत्प्रगल्भा या नारी वक्तुं या च विचक्षणा। सा प्रतीहारी'। इति भानु०। रघुवंशषष्ठसर्गेपि-'पुंवत्प्रगल्भा प्रतिहाररक्षी' इत्यादि। **अनवरतेति**—अनवरतं निरन्तरं यद्वेत्रलताग्रहणं तस्य प्रसङ्गेन अतिकठिनं च तत्किसलयं चातिकठिनकिसलयं तदनुकरोतीत्येवंशीलं तद्वत्कठिनं करतलं यस्य तादृशः करो यस्य स तथोक्तस्तेन। **धवलेति**—इत आस्थानमण्डपविशेषणानि। धवलांशुकस्य श्वेतवस्त्रस्य या जवनिकास्तिरस्करिण्यस्ताभिः परिगताः पर्यन्ता यस्य तस्य भावस्तत्ता तया। **मृगेति**—मृगनाभिः कस्तूरी तया परिगतेन युक्तेन। **सिक्तेति**--सिक्ता अत एव शिशिरा शीतला मणिभूमिर्यस्य तम्। शिशिरकरमणीतिपाठे सिक्ता शिशिरकरमणीनां चन्द्रकान्तमणीनां भूमिर्यस्य तम्। विमलमणीनां यत्कुट्टिमं तदेव गगनतलं तत्र तारागणेनेव स्थितेन। कुसुमोपहारेण पुष्पप्रकरेण निरन्तरं सर्वदा निचितं व्याप्तम्। **उत्कीर्णेति**--उत्कीर्णा उत्कीर्य व्यक्तीकृतस्वरूपाः शालभञ्जिकाः पुत्रिकास्तासां निवहो यस्मिन्स तथा तेन। संनिहिता गृहदेवता गृहाधिष्ठात्र्यो देवता यस्मिंस्तादृशेन। **अतीति**—अतिबहलोऽतिप्रचुरः कृष्णागुरुधूपस्य परिमलो यस्मिन्। **अखिलेति**—अखिलो विगलितो यो जलनिवहो जलसमूहस्तेन धवलो यो जलधरस्तस्य शकलानुकारिणा। प्रच्छदपट उत्तरच्छदः। **पट्टेति**—उपधीयतेऽस्मिञ्शिर इत्युपधानं 'उशी' इति भाषायां ख्यातम्। पट्टनिर्मितं दुकूलनिर्मितं उपधानं तेनाध्यासितं अधिष्ठितं शिरोधाम शिरःस्थापनस्थानं यस्मिन् तेन। प्रतिपादुका आधारपीठानि। पादपीठं पादनिवेशनार्थमासनविशेषः। तुहिनशिला हिमशिला। **तत्र चेति** उत्सङ्गोऽङ्कः। शनैः शनैः संवाह्यमानचरणः। तत्कालोचिताः शयनकालयोग्याः। तास्ता विविधाः।

---

१ प्रसङ्गानति, ०ङ्गाद्गनति. २ अतिसुरभिमृग०. ३ शिशिरकरमणि. ४ परिगलित. ५ शिरोभागेन रत्नमयपीठेन. ७ तुहिनगिरि.

वासांचक्रे । ततो नातिदूरवर्तिनीमन्तःपुराद्वैशम्पायनमादायागच्छेति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश । सा क्षितितलनिहितजानुकरतला यथाज्ञापयति देव इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् ।

अथ मुहूर्तादिवै[1] वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किंचिदवनतपूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसंचारिणा विहंगजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम । क्षितितलनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्[3] । देव देव्यो विज्ञापयन्ति । देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः । इत्यभिधाय गते च तस्मिन् राजा वैशम्पायनमपृच्छत् । कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किंचिदशनजातमिति । स प्रत्युवाच । देव किं वा नास्वादितम् । आमत्त[2]कोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः । हरिनखर[4]भिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि । नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च दलितानि[5] स्वेच्छया प्राचीनामलकीफलानि । किं वा प्रलपितेन बहुना । सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते । इत्येवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत् । आस्तां तावत्सर्वमेवेदम् । अपनयतु नः

---

समुपजातं तद्वृत्तान्तप्रश्ने कुतूहलं यस्य स तथा । **अथेति–कनकेति**—कनकस्य वेत्रलता कनकवेत्रलता सुवर्णपत्रखचिता वेतसयष्टिरित्यर्थः । तामवलम्बतेऽसौ तेन । सितकञ्चुकः धवलचोलकः । जरत्कलहंसो वृद्धराजहंसः । तस्य धवलत्वात्तत्साम्यम् । **कञ्चुकिना**–सौविदल्लेन । ' सौविदल्लाः कञ्चुकिनः ' इत्यमरः । तल्लक्षणं यथा-' अन्तःपुरचरो राज्ञां वृद्धो विप्रो गुणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ ' इति ' ये नित्यं सत्त्वसम्पन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ इति मातृगुप्ताचार्या अप्याहुः । कच्चिदितीष्टप्रश्नार्थमव्ययम् । ' कच्चित्कामप्रवेदने ' इत्यमरः । अशनजातं भक्ष्यसमूहः । ' जातं जात्योघजनिषु इति हैमः । **आमत्तेति**–आमत्तो मधुपानमत्तो यः कोकिलः तस्य लोचनस्येव छविः कान्तिर्यस्य स तथा । कषायस्तुवरश्चासौ मधुरश्च । प्रकाममातृप्ति । **हरीति**—हरेः सिंहस्य नखैर्नखैर्भिन्नाः ये मत्तमातङ्गानां कुम्भाः कपोलपिण्डास्तेभ्यो मुक्तानि यानि रक्तार्द्राणि मुक्ताफलानि तेषामिव त्विट् कान्तिर्येषां तानि । प्राचीनामलकीति साभिप्रायं प्राचीनानामेवामलकीफलानां माधुर्योपादनं नवीनानि तु कषायबहुलानि । अमृतायते अमृतवदाचरति । आक्षिप्य

---

१ मुहूर्तादेव. २ आमत्त. ३ व्यजिज्ञापयत्. ४ करखरनखर. ५ चूर्णितानि.

तवेत्रलताग्रहणप्रसङ्गातिजरठकिसलयानुकारिकरतलं करेणाभ्यन्तरसंचारसमुचितेन परिजनेनानुगम्यमानो धवलांशुकजवनिकापरिगतपर्यन्ततया स्फटिकमणिमयभित्तिबद्धमिवोपलक्ष्यमाणमतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा सिक्तशिशिरमणिभूमिमविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितमुत्कीर्णशालभञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौतमयेन स्तम्भसंचयेन विराजमानमतिबहलागुरुधूपपरिमलमखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोदवासितप्रच्छदपटेन पट्टोपधानाध्यासितशिरोधाम्ना मणिमयप्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनशिलातलसदृशशयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत्। तत्र च शयनतलनिषण्णः क्षितितलोपविष्टया शनै शनैरुत्सङ्गनिहितासिलतया खड्गवाहिन्या नवनलिनदलकोमलेन करसंपुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन्मुहूर्तमि-

इति भरतः। 'पुंवत्प्रगल्भा या नारी वक्तुं या च विचक्षणा। सा प्रतीहारी'। इति भानु०। रघुवंशषष्ठसर्गेऽपि—'पुंवत्प्रगल्भा प्रतिहाररक्षी' इत्यादि। **अनवरतेति**—अनवरतं निरन्तरं यद्वेत्रलताग्रहणं तस्य प्रसङ्गेन अतिकठिनं च तत्किसलयं चातिकठिनकिसलयं तदनुकरोतीत्येवंशीलं तद्वत्कठिनं करतलं यस्य तादृशः करो यस्य स तथोक्तस्तेन। **धवलेति**—इत आस्थानमण्डपविशेषणानि। धवलांशुकस्य श्वेतवस्त्रस्य या जवनिकास्तिरस्करिण्यस्ताभिः परिगताः पर्यन्ता यस्य तस्य भावस्तत्ता तया। **मृगेति**—मृगनाभिः कस्तूरी तया परिगतेन युक्तेन। **सिक्तेति**—सिक्ता अत एव शिशिरा शीतला मणिभूमिर्यस्य तम्। शिशिरकरमणीतिपाठे सिक्ता शिशिरकरमणीनां चन्द्रकान्तमणीनां भूमिर्यस्य तम्। विमलमणीनां यत्कुट्टिमं तदेव गगनतलं तत्र तारागणेनेव स्थितेन। कुसुमोपहारेण पुष्पप्रकरेण निरन्तरं सर्वदा निचितं व्याप्तम्। **उत्कीर्णेति**—उत्कीर्णा उत्कीर्य व्यक्तीकृतस्वरूपाः शालभञ्जिकाः पुत्रिकास्तासां निवहो यस्मिन्स तथा तेन। संनिहिता गृहदेवता गृहाधिष्ठात्र्यो देवता यस्मिंस्तादृशेन। **अतीति**—अतिबहलोऽतिप्रचुरः कृष्णागुरुधूपस्य परिमलो यस्मिन्। **अखिलेति**—अखिलो विगलितो यो जलनिवहो जलसमूहस्तेन धवलो यो जलधरस्तस्य शकलानुकारिणा। प्रच्छदपट उत्तरच्छदः। **पट्टेति**—उपधीयतेऽस्मिञ्शिर इत्युपधानं 'उशी' इति भाषायां ख्यातम्। पट्टनिर्मितं दुकूलनिर्मितं उपधानं तेनाध्यासितं अधिष्ठितं शिरोधाम शिरःस्थापनस्थानं यस्मिन् तेन। प्रतिपादुका आधारपीठानि। पादपीठं पादनिवेशनार्थमासनविशेषः। तुहिनशिला हिमशिला। **तत्र चेति** उत्सङ्गोऽङ्कः। शनैः शनैः संवाह्यमानचरणः। तत्कालोचिताः शयनकालयोग्याः। तास्ता विविधाः।

१ प्रसङ्गानति, ०ङ्गाद्नति. २ अतिसुरभिमृग०. ३ शिशिरकरमणि. ४ परिगलित. ५ शिरोभागेन रत्नमयपीठेन. ७ तुहिनगिरि.

वासांचक्रे । ततो नातिदूरवर्तिनीमन्तःपुराद्वैशम्पायनमादायागच्छेति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश । सा क्षितितलनिहितजानुकरतला यथाज्ञापयति देव इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् । /

अथ मुहूर्तादिव[1] वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किंचिदवनत[2]पूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसंचारिणा विहंगजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम । क्षितितलनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्[3] । देव देव्यो विज्ञापयन्ति । देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः । इत्यभिधाय गते च तस्मिन् राजा वैशम्पायनमपृच्छत् । कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किंचिदशनजातमिति । स प्रत्युवाच । देव किं वा नास्वादितम् । आमत्तकोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः । हरिनखर[4]भिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि । नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च दलितानि[5] स्वेच्छया प्राचीनामलकीफलानि । किं वा प्रलपितेन बहुना । सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते । इत्येवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत् । आस्तां तावत्सर्वमेवेदम् । अपनयतु नः

---

समुपजातं तद्वृत्तान्तप्रश्ने कुतूहलं यस्य स तथा । **अथेति-कनकेति**—कनकस्य वेत्रलता कनकवेत्रलता सुवर्णपत्रखचिता वेतसयष्टिरित्यर्थः । तामवलम्बतेऽसौ तेन । सितकञ्चुकः धवलचोलकः । जरत्कलहंसो वृद्धराजहंसः । तस्य धवलत्वात्तत्साम्यम् । **कञ्चुकिना**—सौविदल्लेन । ‘ सौविदल्लाः कञ्चुकिनः ’ इत्यमरः । तल्लक्षणं यथा-‘ अन्तःपुरचरो राज्ञां वृद्धो विप्रो गुणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ ’ इति ‘ ये नित्यं सत्त्वसम्पन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ इति मातृगुप्ताचार्या अप्याहुः । कच्चिदितीष्टप्रश्नार्थमव्ययम् । ‘ कच्चित्कामप्रवेदने ’ इत्यमरः । अशनजातं भक्ष्यसमूहः । ‘ जातं जात्योघजनिषु इति हैमः । **आमत्तेति**—आमत्तो मधुपानमत्तो यः कोकिलः तस्य लोचनस्येव छविः कान्तिर्यस्य स तथा । कषायस्तुवरश्चासौ मधुरश्च । प्रकाममातृप्ति । **हरीति**—हरेः सिंहस्य नखैरनेखैर्भिन्नाः ये मत्तमातङ्गानां कुम्भाः कपोलपिण्डास्तेभ्यो मुक्तानि यानि रक्तार्द्राणि मुक्ताफलानि तेषामिव त्विट् कान्तिर्येषां तानि । प्राचीनामलकीति साभिप्रायं प्राचीनानामेवामलकीफलानां माधुर्योपादनं नवीनानि तु कषायबहुलानि । अमृतायते अमृतवदाचरति । आक्षिप्य

---

१ मुहूर्तादेव. २ आनत. ३ व्यजिज्ञापयत्. ४ करखरनखर. ५ चूर्णितानि.

कुतूहलम् । आवेदयतु भवानादितः प्रभृति कार्त्स्न्येनात्मनो जन्म कस्मिन्देशे । भवान्कथं जातः । केन वा नाम कृतम् । का माता । कस्ते पिता । कथं वेदानामागमः । कथं शास्त्राणां परिचयः । कुतः कलाः समासादिताः । किं जन्मान्तरानुस्मरणमुत वरप्रदानम् । अथ वा विहंगवेषधारी कश्चिच्छन्नं निवससि । क्व वा पूर्वमुषितम् । कियद्वा वयः । कथं पञ्जरबन्धः । कथं चाण्डालहस्तगमनम् । इह वा कथमागमनमिति । वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत् । देव महतीयं कथा । यदि कौतुकमाकर्ण्यताम् ।

अस्ति पूर्वापरजलनिधिवेलावनलग्ना मध्यदेशालंकारभूता मेखलेव भुवः, वनकरिकुलमदजलसेकसंवर्धितैरतिविकचधवलकुसुमनिकरमत्युच्चतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभिता, मदकलकुररकुलदश्यमानमरिचपल्लवा, करिकलभकरमृदिततमालकिसलयामोदिनी, मधुमदोपरक्तकेरलीकपोलकोमलच्छ-

---

न्तरा प्रतिबध्य । कार्त्स्न्येन साकल्येन । आगम उपलब्धिः । परिचयोऽगवतिरित्यर्थः । **जन्मान्तरेति**—पूर्वजन्मोपात्तविद्यासंस्कारात्तासामुपलब्धिरस्मिञ्जन्मन्युताहो केनापि दत्तवरस्येति भावः । छन्नं गूढं स्वरूपगोपनपूर्वमित्यर्थः ।

**अस्तीति**—इतः शुककथारम्भः । अस्ति विन्ध्याटवी नाम इति विप्रकृष्टेनान्वयः । **पूर्वापरेति**—पूर्वापरजलनिध्योर्वेलावने तटकानने लग्ना । तावत्पर्यन्तं विस्तीर्णा । अनुरूपं वर्णनं कुमारसंभवे—'पूर्वापरौ तोयनिधी वगाह्य' इति । **मध्येति**—अत्र मनुः—'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' ॥ मध्यदेशस्यालंकारभूता भूषणमिव स्थिता । अत एव **मेखलेति** । **वनकरीति**—वनकरिणां कुलं वनकरिकुलं तस्य मदजलेन सेकः तेन संवर्धितैः : अनेन गजानामुत्कटमदत्वमटव्याश्च गजाकरत्वमुक्तम् । तदुक्तं गजायुर्वेदे—'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः ।' इति । धवलानां श्वेतानाम् । अतिविकचानां प्रफुल्लानां । **मदेति**—मदेन कला मत्ता अव्यक्तशब्दायमाना वा ये कुरराः पक्षिविशेषाः तेषां कुलानि तैर्दश्यमाना मरिचपल्लवाः कोलककिसलयानि यस्यां सा । 'अथ वेल्लजम् । मरिचं कोलकं कृष्णम्' इत्यमरः । वस्तुतस्तु हारीतपक्षिण एव मरिचपल्लवान्दशन्तीति कवयो वर्णयन्ति । तथा च रघुवंशे—'मरिचोद्भ्रान्तहारीता मलयाद्रेरुपत्यका ।' इति । अग्रे कविनापि—'पल्लविके भोजय मरिचाग्रपल्लवदलानि भवनहारीतान्' इति वर्णितम् । **करीति**-करिकलभैर्हस्तिपोतैः करैः शुण्डादण्डैर्मृदितानां चूर्णितानां तमालकिसलयानामामोदोऽस्या अस्तीति ०किसलयामोदिनी । मधु मद्यं तस्य मदेन उपरक्ताः केरलीकपोलास्तानिव कोमला छविर्यस्य तेन

---

१ किंहेतुकं. २ छन्नः. ३ कौतुहलम्. ४ ०वलग्ना. ५ कपोलच्छविना.

विना संचरद्वनदेवताचरणालक्तकरसरञ्जितेनेव पल्लवप्रचयेन संछादिता, शुककुल-दलितदाडिमीफलद्रवार्द्रीकृततलैरतिचपलकपिकम्पितकक्कोलच्युतपल्लवफलशबलै-रनवरतनिपतितकुसुमरेणुपांसुलैः पथिकजनरचितलवङ्गपल्लवस्रस्तरैरतिकठोरनालि-केरकेतकीकरीरकेसरपरिगतप्रान्तैस्ताम्बूलीलतावनद्धपूगखण्डमण्डितैर्वनलक्ष्मीवास-भवनैरिव विराजिता लतामण्डपैः, उन्मदमातङ्गकपोलस्थलगलितमदसलिलसिक्तेनेव निरन्तरमेलालतावनेन मदगन्धिनान्धकारिता, नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभिहन्यमानकेसरिशता, प्रेताधिपनगरीव सदासंनिहितमृत्यु-भीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा

केरल्यः केरलदेशोद्भवाः स्त्रियः । ता हि हि स्वभावतः पाटलवर्णा कोमलाङ्ग्यश्चेति कविवर्णना-दृम्यते । अत्र तु मधुमदात्कपोलस्य विशेषरक्तत्वं ज्ञेयम् । अलक्तकरसो यावकद्रवः । **अतीति** । अतिचपला ये कपयस्तैः कम्पिता ये कक्कोलाः वृक्षविशेषाः तेभ्यश्च्युतैः पल्लवफलैः शबलानि कर्बुराणि तैः । अनवरतं निपतितैः कुसुमानां रेणुभिः परागधूलिभिः पांसुलाः सरजस्कास्तैः । पांसव एषां सन्ति पांसून्लान्तीति वा पांसुलाः । स्रस्तराः शय्याः । करीरः पत्रविहीनो सकण्टको वनस्पतिविशेषः । 'पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किम्' । इति भर्तृहरिः । केसरा बकुलवृक्षाः पुन्नागवृक्षा वा । केसरैः परिगतः प्रान्तो येषां तैः । **ताम्बूलीति**—ताम्बुलीलता नागवल्ली तयावनद्धं वेष्टितं पूगखण्डं क्रमुकवनं तेन मण्डितैः । एवं रघुवंशे—'ताम्बूलवल्लीपरिण-द्धपूगासु' इति । एलाः पृथ्वीकाः । **मदेति**—मदस्य दानस्य गन्ध इव गन्धो यस्य तेन । एलानां मदगन्धवत्त्वं प्रसिद्धमेव । **नखमुखेति**—नखमुखे नखाग्रे लग्नानि इभकुम्भमुक्ता-फलानि तेषु लुब्धैः सस्पृहैः । अत्र शबराणां सिंहघातित्वं हस्तिनां च मुक्ताकरत्वं सूचितम् । प्रेतानां परासूनामधिपः प्रेताधिपो यमस्तस्य नगरीव । उभयोः साम्यमाह **सदेति**—सदा संनिहितो निकटवर्ती यो मृत्युरजगरस्तेन यद्वा कारणे कार्योपचाराद्व्याघ्रादयस्तैर्भीषणा । महिषै-र्गवलैरधिष्ठिता व्याप्ता च । पक्षे मृत्युर्यमस्तेन भयावहा । महिषो यमस्य वाहनं तेनाधिष्ठिता च । **समरेति**—समरे संग्रामे उद्यताः पताकाः सन्त्यस्यामिति पताकिनी सेना सेव । **बाणेति**—बाणेषु आसनेषु च तत्तदाख्यवृक्षेषु आरोपिताः शिलीमुखा भ्रमरा यया सा । विमुक्ताः सिंहैर्नादा गर्जना यस्यां तथा च । पक्षे बाणासनेषु धनुःषु आरोपिताः शिलीमुखा बाणा लोहखण्डा वा यस्यां सा तथा । विमुक्तोर्थाद्वीरैः सिंहनादः क्ष्वेडा यस्यां सा । बाणसमारोपितेति पाठे बाणाः पूर्वोक्ताः । पक्षे बाणेषु धनुष्काण्डेषु समारोपिता सम्यगारोपिता इ० । 'बाणः स्याद्रोस्तने दैत्यभेदे केवलकाण्डयोः ।' इति मेदिनी । क्ष्वेडा तु सिंहनादः स्यात्' इत्यमरः । कात्यायनी

१ कपिकुल. २ कक्कोल. ३ संस्तरैः, ४ अनवरतम्. ५ सेना ६ बाणसमारो०.

विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालंकृता च, कर्णीसुतकथेव संनिहितविपुलाचला शशोपगता च, कल्पान्तप्रदोषसंध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणीपरिगता च, प्रावृडिव घनश्यामलानेकशतह्रदालंकृता च, चन्द्रमूर्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृगबालव्यजनोपशोभिता समदगजघटापरिपालिता च, गिरितनयेव स्थाणुसंगता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरि-

गौरी सेव। उभयोस्तुल्यतामाह—प्रचलिता इतस्ततो भ्रमन्तो ये खड्गा गण्डकास्तैर्भीषणा। रक्तचन्दनैर्लोहितचन्दनवृक्षैरलंकृता च। पक्षे प्रचलितो खड्गः करवालस्तेन भयावहा। रक्तचन्दनचर्चया यद्वा रक्तं शोणितमेव चन्दनं तेन भूषिता च। चर्चिताङ्गीत्यर्थः। कर्णीसुतः कश्चित्क्षत्रियविशेषः चौर्यशास्त्रप्रवर्तयिता। **संनिहितेति**—संनिहिता निकटवर्तिनो विपुला विशाला अचला पर्वता यस्याः सा। शशैः शशकैर्लोध्रवृक्षैर्वोपेता च। 'शशो लोध्रे नृभेदे च पशौ' इत्यनेकार्थः। पक्षे संनिहितौ विपुलाचलसंज्ञकौ कर्णीसुतसुहृदौ यस्यां सा। शशेन तन्मन्त्रिणा युक्ता च। तदुक्तं बृहत्कथायाम्। 'कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्तकः। ख्यातौ तस्य सखायौ द्वौ विपुलाचलसंज्ञकौ॥ शशो मन्त्रिवरस्तस्य' इति भानु०। **प्रनृत्तेति**—प्रनृत्ता नीलकण्ठा शिखण्डिनो यस्यां सा। पल्लवैः किसलयैररुणा च। पक्षे प्रनृत्तो नीलकण्ठः शिवो यस्याम्। पल्लववदरुणा च। **अमृतेति**—अमृतार्थं यन्मथनमर्थात्क्षीरोदधेस्तस्य वेला अवसर इव। यद्वा अमृतं मथ्यतेऽस्मादित्यमृतमथनः क्षीरोदधिस्तस्य वेला कूलमिव। उभयोः सादृश्यमाह—श्रीद्रुमैरश्वत्थवृक्षैः बिल्ववृक्षैर्वा शोभिता। वरुणानां वृक्षविशेषाणामियं वारुणी वरुणराजिस्तया वारुणी दूर्वा तया वा परिगता परिक्षिप्ता। पक्षे श्रीः लक्ष्मीः द्रुमः पारिजातस्ताभ्यां शोभिता। वारुणी सुरा तया परिगता सहिता। मथ्यमानसागरोत्पन्नत्वात्। **घनेति**—घनवत् घनमत्यन्तं वा श्यामला कृष्णा। घनाः श्यामला अश्वत्थवृक्षा यस्यामिति वा। अनेकशतानि ये ह्रदास्तैरलंकृता च। पक्षे घनैर्मेघैः श्यामला। अनेकाभिः शतह्रदाभिः विद्युत्स्फुरणैः शोभिता च। **सततेति**—सततं निरन्तरं ऋक्षसार्थैर्भल्लूकसमूहैरनुगता हरिणा सिंहेन हरिणैर्वाध्यासिता च। पक्षे ऋक्षसार्थेन नक्षत्रसार्थेनानुयाता हरिणा मृगेणाध्यासिता च। 'ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान्। कृतवेधनेन्यालिङ्गं नक्षत्रे च नपुंसकम्॥' इति मेदिनी। राज्यस्थिती राज्यमर्यादा। उभयोः साम्यमाह—चमरमृगाणां बालाः पुच्छान्येव व्यजनानि तैरुपशोभिता। समदगजानां घटाभिर्यूथैः परिपालिता च। अनुरूपभावः कुमारसम्भवे 'यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः' इति। समदेत्युभयत्र समानार्थम्। **गिरीति**-स्थाणवः वृक्षकाण्डाः संगता यया। मृगपतिभिः सिंहैः सेविताश्रिता च। पक्षे स्थाणुना शिवेन संगता। मृगपतिना मूर्तिमता सिंहेन सेविता सिंहवाहनत्वात्। **प्रसू-**

१ प्रनृत्यद्. २ वारुण. ३ पति.

गृहीता च, कामिनीव चन्दनमृगमदपरिमलवाहिनी रुचिरा[1]गुरुतिलकभूषिता च, सोत्कण्ठेव[2] विविधपल्लवानिलवीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च, पानभूमिरिव प्रकटितमधुकोषकशता प्रकीर्णविविधकुसुमा च, क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला क्वचिद्दशमुखनगरीव चटुलवानरवृन्दभज्यमान[3]तुङ्गशालाकुला क्वचिदचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता क्वचिदुद्वृत्तमृगपतिनादभीतेव कण्टकिता क्वचिन्मत्तेव कोकिलकुल[4]प्रलापिनी क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा क्वचिद्विधवेवोन्मुक्तता-

तेति-प्रसूतानां प्रसूनानां पुष्पाणां कुशानां च लवाः खण्डाः यस्याम् । निशाचरैरुलूकादिभिः परिगृहीताश्रिता च । पक्षे प्रसूतौ कुशलवौ पुत्रौ यया । निशाचरेण रावणेन गृहीता च । कामिनी शृंगारनायिका । चन्दनेति-चन्दनवृक्षाणां मृगनाभेर्मृगमदस्य च परिमलं वहतीति । रुचिरा ये अगुरुवृक्षास्तिलकवृक्षाश्च तैर्भूषिता च । पक्षे चन्दनस्य मृगनाभेः कस्तूर्याश्च परिमलं वहतीति । रुचिरेणागुरोस्तिलकेन विशेषकेण शोभिता च । सोत्कण्ठा विरहपीडया सन्तप्यमाना । विविधेति-विविधानां पल्लवानामनिलेन वीजितेत्युभयत्र समानम् । समदना मदनवृक्षैः सह वर्ततेऽसौ । पक्षे सकामपीडा च । व्याघ्रेति-व्याघ्राणां नखपंक्त्या मण्डिता । गण्डका खड्गाख्यपशुविशेषाः एवाभरणं यस्यां सा । पक्षे व्याघ्रनखपङ्क्त्या व्याघ्रनखयुक्तेनाभरणविशेषेण मण्डिता । रक्षार्थं व्याघ्रनखाः शिशुग्रीवायां बध्यन्ते इति प्रसिद्धम् । तथा च हर्षचरिते विकटव्याघ्रनखपंक्तिमण्डितग्रीवके हर्षे इति । गण्डक आभरणविशेषः स आभरणं यस्याः सा च । पानभूमिर्मद्यपानस्थानम् । प्रकटितेति-प्रकटितानि मधुनो माक्षिकस्य कोषा एव कोषकाः पेश्यस्तेषां शतानि यस्याम् । पक्षे प्रकटितं मधुकोषकाणां मद्यपानपात्राणां शतं यस्यां तादृशी । प्रकीर्णेत्युभयत्र समम् । महेति—महावराहाणां दंष्ट्राभिः समुत्खातं धरणिमण्डलं भूप्रदेशो यस्याम् । पक्षे महावराहस्य तृतीयावतारे वराहरूपधारिणो विष्णोर्दंष्ट्रया समुत्खातमुद्धृतं धरणिमण्डलं यस्याम् । दशमुखनगरी लङ्का । चटुलेति-चटुलेन चपलेन वानरवृन्देन शाखामृगसमूहेन भज्यमानास्तुङ्गशाला उच्चशाखास्ताभिराकुला । पक्षे चटुलैर्वानरैः सुग्रीवानुचरैर्भज्यमानो यस्तुङ्गः शालः प्राकारस्तेनाकुला व्यग्रा । तुङ्गाः शाला गृहाणि वा । 'प्राकारो वरणः सालः' इत्यमरः । यद्यप्यमेरयं दन्त्यादिः पठ्यते तथापि तालव्यादिरप्ययमुपलभ्यते । तदुक्तम्—'तालव्यो वृक्षझषयोः शालो वृक्षे वृतौ द्रुभेदे च । तालव्यदन्त्य उक्तस्तथा स्त्रियां वृक्षशाखायाम् ॥' इति । यद्वा भज्यमाना यास्तुङ्गशालाः प्रासादोर्ध्वकक्षाः ताभिः आकुला । उद्वृत्तेति-उद्वृत्त उत्कटमदः क्षुभितो वा यो मृगपतिः सिंहस्तस्य नादेन भीतेव कण्टकिता सञ्जातरोमाञ्चा । द्वितीयपक्षे कंटकवृता । मत्तेव क्षीबेव । कोकिलकुलैः [ कलं ] प्रलापिनी । कोकिलकुलस्य [ कलाः ]

१ कृष्णागुरु. २ सोत्कण्ठवनितेव. ३ नोतुङ्ग. ४ ०कुलकल.

ल्पत्रा क्वचित्समरभूमिरिव शरशतनिचिता क्वचिदमरपतितनुरिव नेत्रसहस्रसंकुला क्वचिन्नारायणमूर्तिरिव तमालनीला क्वचित्पार्थरथपताकेव वानराक्रान्ता क्वचिदवनिपतिद्वारभूमिरिव वेत्रलताशतदुष्प्रवेशा क्वचिद्विराटनगरीव कीचकशतावृता क्वचिदम्बरश्रीरिव व्याधानुगम्यमानतरलतारकमृगा क्वचिद्गृहीतव्रतेव दर्भचीरजटावल्कलधारिणी, अपरिमितबहुलपत्रसंचयापि सप्तपर्णभूषिता क्रूरसत्त्वापि मुनिजनसेविता पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम ।

---

प्रलापाः सन्त्यस्यामिति वा । अन्यस्मिन्पक्षे कोकिलकुलवत् [ कलानव्यक्तमधुरान् ] प्रलापाननर्थकवचांसि व्याहरन्ती । 'प्रलापोनर्थकं वचः' इत्यमरः । उन्मत्ता उन्मादवायुपीडिता । **वायुवेगेति**–वायुवेगेन पवनरंहसा कृतस्तालैस्तालवृक्षैः शब्दो यस्याम् । पक्षे वायुवेगेन उन्मादवशात्कृतस्तालशब्द उच्चैः शब्दो यया । **उन्मुक्तेति**–उन्मुक्तानि तालपत्राणि तालदलानि यस्याम् । पक्षे तालपत्राणि कर्णाभरणविशेषाः । **शरेति**–शरा बाणतृणानि । 'शरो बाणे बाणतृणे' इति शब्दार्णवः । मुञ्जादण्डा वा । तेषां शतैर्निचिता । पक्षे शरा बाणाः । **नेत्रेति**–नेत्राणां वृक्षविशेषाणां वृक्षमूलानां वा सहस्रं तेन संकुला । 'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च ।' इति मेदिनी । नेत्राणां चक्षुषां सहस्रं तेन व्याप्ता । तमालैर्नीला पक्षे तमालवन्नीला । पार्थोऽर्जुनः । वानरैर्गोलाङ्गूलैराक्रान्ताऽधिष्ठिता । पक्षे वानरेण हनूमताश्रिता । **वेत्रेति**–वेत्राणां लतानां च वेत्रलतानां वा शतानि तैः दुष्प्रवेशा । पक्षे वेत्रलताः प्रतिहारीगृहीता वेत्रयष्टयः । **कीचकेति**–कीचका वेणुविशेषाः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।' इत्यमरः । तेषां शतैरावृता । पक्षे कीचका विराटस्यालास्तैरावृता । **व्याधेति**–व्याधैर्मृगयुभिरनुगम्यमाना अत एव तरला भयचञ्चलास्तारकमृगाः सारङ्गा यस्याम् । व्याधानुगम्यमाना अत एव तरला तारका अक्षिकनीनिका येषां तादृशा मृगा यस्यामिति वा । 'तारकाक्ष्णः कनीनिका' इत्यमरः । पक्षे व्याधेन नक्षत्रविशेषेणानुगम्यमानं तरलाः सकम्पप्रभास्तारका यस्य तादृशं मृगनक्षत्रं यस्याम् । **दर्भेति**-दर्भाः कुशाः, चीरं तृणविशेषः, जटा शिफा । वल्कलानि त्वचः, एतानि धर्तुं शीलमस्याः सा तथा । पक्षे दर्भाः पूर्वोक्ताः । चीरं जीर्णवस्त्रखण्डम् । जटाः संहताः केशाः । वल्कलानि च तानि धारयतीत्येवंशीला । **अपरिमितेति**-अपरिमितानि संख्यातीतानि बहुलानि विविधप्रकाराणि निबिडानि वा पर्णानि तेषां संचयो यस्याम् । एवंविधापि सप्तपर्णभूषिता परिमितपर्णशोभितेति विरोधः । परिहारस्तु सप्तपर्णैस्तदाख्यवृक्षैः शोभितेत्यर्थात् । **क्रूरेति**—क्रूरं सत्त्वं मनो यस्याः । 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः ।' इत्यनेकार्थः । एवंविधापि शमप्रधानेन मुनिजनेन सेवितेति विरोधः । परिहारपक्षे क्रूरा हिंस्राः सत्त्वाः प्राणिनो यस्याम् । 'सत्वमस्त्री तु जन्तुषु' इत्यमरः । अनेन यस्यां मुनिप्रभावाद् दुष्टसत्त्वा अपि विनीता आसन्निति ध्वनितम् । पु-

---

१ कप्याक्रान्ता. २ आकुला. ३ सप्तपर्णोपशोभिता.

तस्यां च दण्डकारण्यान्तःपाति सकल[1]भुवनविख्यातमुत्पत्तिक्षेत्रमिव भगवतो धर्मस्य सुरपतिप्रार्थनापीतसकलसागरसलिलस्य मेरु[2]मत्सराद्[3]गगनतलप्रसारितविकटशिरःसहस्रेण दिवसकररथग[4]मनपथमपनेतुमभ्युद्यतेनावगणितसकलसुरसमूहवचसा विन्ध्यगिरिणाप्यनुल्लङ्घिताज्ञस्य जठरानलजीर्णवातापिदानवस्य सुरासुरमुकुटमकरपत्रकोटिचुम्बितचरणरजसो दक्षिणा[5]शामुखविशेषकस्य सुरलोकादेकहुंकारनिपातितनहुषप्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वय-

---

ष्पवती रजस्वलापि पवित्रेति विरोधः । परिहारस्तु पुष्पवती कुसुमयुक्ता । 'पुष्पं विकासिकुसुमस्त्रीरजःसु नपुंसकम् ।' इति मेदिनी । **तस्यामिति**—तस्यां विन्ध्याटव्यां महामुनेरगस्त्यस्याश्रमपदमासीदित्यन्वयः । **दण्डकेति**—दण्डकारण्यान्तर्वर्ति । **सुरपतीति**—पुरा कृतयुगे कालेया इति विश्रुता दानवा दिवा सागरे प्रच्छन्ना भूत्वा रात्रौ बहिश्चरन्तो महीं स्वर्गलोकं च भृशं पीडयांचक्रुः । तेषां स्वाश्रयस्थानान्निष्कासनार्थमिन्द्रप्रार्थितो भगवानगस्त्य उदधिं चुलुकीचकारेति भारतीया वनपर्वोक्ता कथात्रानुसन्धेया । **मेरुमत्सरादिति**—विकटानि विशालानि । 'विशङ्कटं विशालं स्यात्करालं विकटं तथा ।' इति वैजयन्ती । **विन्ध्यगिरिणेति**—पुरा किल मेरुस्पर्धया तपनमार्गनिरोधाय वर्धमानं विन्ध्याद्रिं भगवानगस्त्यः स्वामवस्थां प्रापयत् । तथा च रामायणम्—'मार्गं निरोद्धुं सततं भास्करस्याचलोत्तमः । सन्देशं पालयन्यस्य विन्ध्यशैलो न वर्द्धते' ॥ एवं रघुवंशेपि वर्णनम्—'विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः' । इति । **जठरेति**—पुरा वातापील्वलनामानौ दैत्यविशेषावास्ताम् । तयोरिल्वलो ब्राह्मणरूपधारी मेषरूपधारिणं वातापिं संस्कृत्य तदन्नं ब्राह्मणान्भोजयामास । पश्चाद्भ्रात्राहूतो वातापिर्ब्राह्मणशरीराणि भित्त्वा बहिर्निश्चक्राम । एवं ताभ्यां ब्राह्मणानां सहस्राणि विनाशितानि । तदा दैवैः प्रार्थितेन महर्षिणागस्त्येन स महासुरः श्राद्धेन्नरूपधारी भक्षितो जठरे जीर्णश्च । विस्तरस्तूक्तो रामायणे अरण्यका. ११ अ. ५५–६० श्लोकेषु । **दक्षिणाशेति**—दक्षिणाशा दक्षिणा दिक् तस्याः विशेषकस्य तिलकभूतस्य । तस्य दक्षिणाशामाश्रित्य स्थितत्वात् । 'अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः' ॥ **एकेति**—एकेन हुंकारेण निपातितो यो नहुषस्तेन प्रकटो व्यक्तः प्रभावो यस्य । 'भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार' । इति रघुवंशे कालिदासोप्याह । नहुषो नाम सोमवंशीयो राजा ययातिपिता आयुषः पुत्रः । अत्रेदमैतिह्यम्—वृत्रादिवधानन्तरं ब्रह्महत्यापापनिवृत्त्यर्थं तपश्चरति महेन्द्रे सुरलोकमराजकं दृष्ट्वा ऋषयो देवाश्च समेत्य नहुषं स्वतेजोभिरभिवर्ध्य सुरराज्येऽभ्यषिञ्चन् । पश्चात् शचीदेवीं कामयमानः स बिसतन्तुप्रविष्टस्य गूढाकारस्य भर्तुरुपदेशात्तयोक्तः—राजन् ऋषयश्चेत्त्वां शिबिकया वहन्ति तदाहं त्वां भजामीति । तदा काममोहितः स महर्षीञ्शिबिकावहने नियोज्य शचीमन्दिरं प्रति चलितः । मार्गे महर्षिभिर्विवदमानः

---

१ भुवनविख्यातम्. २ मेरुशिखर. ३ अम्बरतल. ४ गति. ५ ०आशावधू.

मुपरचितालवालकैः करपुटसलिलसेकसंवर्धितैः सुतनिर्विशेषैरुपशोभितं पादपैस्तत्पुत्रेण च गृहीतव्रतेनाषाढिना पवित्रभस्मविरचितत्रिपुण्ड्रकाभरणेन कुशचीवरवाससा मुञ्जमेखलाकलितमध्येन गृहीतहरितपर्णपुटेन प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतम्, अतिप्रभूतेध्माहरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार, दिशि दिशि शुकहरितैश्च कदलीवनैः श्यामलीकृतपरिसरं सरिता च कलशयोनिपरिपीतसागरमार्गानुगतयेव बद्धवेणिकया गोदावर्या परिगतमाश्रमपदमासीत् ।

यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदनलक्ष्मीविभ्रमविरामो रामो महामुनिमगस्त्यमनुचरन्सह सीतया लक्ष्मणोपरचितरुचिरपर्णशालः

---

सोगस्त्यं पादेन मूर्ध्न्यताडयत् । कुपितश्च महर्षिस्तं शशाप—' यस्मात्पूर्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितम् । अदुष्टं दूषयसि वै यन्मे मूर्ध्न्यस्पृशः पदा ॥ यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् । वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥ ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतले । दशवर्षसहस्राणि सर्परूपधरो महान् । विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि ॥ ' इति । विशेषस्तु म. भा. उद्यो. १०, १६. अ. द्रष्टव्यः । आसमन्ताज्जललवानालाति गृह्णातीत्यालवालम् । **सुतेति**—सुतेभ्यो निर्गतो विशेषो येषां तैः । एवं रघुवंशेपि ' संवर्धितानां सुतनिर्विशेषम् ' इति । **आषाढिना**—आषाढः प्रयोजनमस्यास्तीत्याषाढः पालाशदण्डः । ' विशाखाषाढादण् मन्थदण्डयोः ' इत्यण् । सोस्यास्तीति तेन । अत्र मनुः ' ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ । पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ' ॥ इति । त्रिपुंड्रकं त्रयाणां पुंड्काणां समाहारः तिलकविशेषः । **कुशेति**—कुशानां चीवरं कुशचीवरं कुशनिर्मितचीरं वासोऽस्य तेन । **मुञ्जेति**—मुञ्जस्य तृणविशेषस्य मेखला कटिदाम तया कलितः परिगतो मध्यो यस्य तेन । तदुक्तं मनुना—' मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ' । इति । गृहीतं हरितं पर्णपुटं भिक्षापात्रत्वेन येन । प्रत्युटजं प्रतिपर्णशालम् । **अटता भिक्षां**—भिक्षार्थं पर्यटता । ' अकथितं च ' इत्यनेन ' **भिक्षाम्** ' **इति द्वितीया** । **अतीति**—अति प्रभूतानि यानीध्मानि एधांसि तेषामाहरणाद्यस्य पिता **इध्मवाह** इति द्वितीयं नाम चकार तेन दृढदस्युनाम्नेति पूर्वेण सम्बन्धः । शुकहरितैः शुकवद्धरितैः । कलशयोनिरगस्त्यः । कलशः कुम्भो योनिः प्रभवो यस्य । मित्रावरुणयोः कुम्भनिपतितवीर्योद्भवत्वात्कुंभयोनित्वम् । ' तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् । रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे । तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ । अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ' ॥ इति ऋग्वेदभाष्ये सायनाचार्याः । **बद्धेति**—बद्धा वेण्येव वेणिका यया सा । भर्तुः सागरस्य विनाशात्संस्कारार्थममुक्तवेणिकयेत्यर्थः । अत्र हारीतः—' न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत् ' । इति । **दशेति**—

---

१ वल्कलेन. २ शुककुल.

पञ्चवट्यां कंचित्कालं सुखमुवास । चिरशून्येऽद्यापि यत्र शाखानिलीननिभृतपाण्डुकपोतपङ्क्त्यो लग्नतापसाग्निहोत्रधूमराजय इव लक्ष्यन्ते तरवः । बलिकर्मकुसुमान्युद्धरन्त्याः सीतायाः करतलादिव संक्रान्तो यत्र रागः स्फुरति लताकिसलयेषु । यत्र च पीतोद्गीर्णं जलनिधिजलमिव मुनिना निखिलमाश्रमोपान्तवर्तिषु विभक्तं महाह्रदेषु । यत्र दशरथसुतनिशितशरनिकरनिपातहतरजनिचरबलबहुलरुधिरसिक्तमूलमद्यापि तद्रगाविद्धनिर्गतपलाशमिवाभाति नवकिसलयमरण्यम् । अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमजस्रमश्रुजललुलितदीनदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरितविषाणकोटयो जानकीसंवर्धिता जीर्णमृगाः । यस्मिन्ननवरतमृगयानिहतशेषवनहरिणप्रोत्साहित इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार । यत्र च मैथिलीवियोगदुःखदुःखितौ दशवदनविनाशपिशुनौ चन्द्रसूर्याविव कबन्धग्रस्तौ समं रामलक्ष्मणौ त्रिभुवनभयं महच्चक्रतुः । अत्यायतश्च यस्मिन्दशरथसुतशरनिपातितो

---

दशवदनलक्ष्म्या रावणराज्यश्रियो विभ्रमास्तेषां विरामोऽवसानम् । **शाखेति**—शाखासु निलीनाश्च ते निभृताः स्तब्धा निःशब्दा वा ये पाण्डुकपोतास्तेषां पंक्तयो येषु ते तथा । **बलीति**—बलिकर्म पूजाविधिस्तदर्थं कुसुमान्युद्धरन्त्याः पुष्पावचयं कुर्वत्याः । रागो रक्तिमा । स्फुरति स्फूर्तिमान्भवति । **यत्रेति**—पीतोद्गीर्णमादौ पीतं पश्चादुद्गीर्णं वान्तम् । यत्रागाधजलमहाह्रदा आसन्निति व्यङ्ग्यम् । **दशरथेति**—दशरथसुतयो रामलक्ष्मणयोर्ये निशितास्तीक्ष्णाः शरास्तेषां निकराः समूहास्तेषां निपातेन निहतं यद्रजनिचरबलं तस्य यद्बहुलं रुधिरं तेन सिक्तानि मूलानि यस्य । अत एव तद्रागेण रजनिचररुधिरलौहित्येन आविद्धानि युक्तानि तथा निर्गतानि पलाशानि यस्मिन्नेवंभूतमिव । **अभिनवेति**—नूतनमेघपङ्क्तिस्तनितम् । **त्रिभुवनेति**—त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य विवराणि व्याप्नोतीत्येवंशीलस्य चापघोषस्य धनुष्टंकारस्य । स्मरन्तः 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । यत्र जीर्णमृगा वृद्धहरिणा दश दिशः शून्या रामलक्ष्मणसीतारहिताः वीक्ष्याजस्रं निरन्तरमश्रुजलेन लुलिता व्याकुला दीनाश्च दृष्टयो येषां तथाभूताः शष्पकवलं बालतृणग्रासं न गृह्णन्तीति योजना । **यस्मिन्निति**—अनवरतं प्रतिदिनं या मृगयाखेटस्तस्यां निहतास्तेभ्यः शेषा अवशिष्टा ये मृगास्तैः प्रत्यपकारकरणेच्छया प्रोत्साहितः प्रेरित इव । विप्रलम्भो प्रतारणं वियोगो वा । कनकमृगोऽत्र छद्मवेषधारी मारीचाख्यो राक्षसः । पिशुनौ सूचकौ । 'पिशुनौ खलसूचकौ' इत्यमरः । कबन्धः इन्द्रशापाद्रक्षोयोनिं प्राप्तो गन्धर्वविशेषः । तत्कथा रामायणे अरण्यकाण्डे

---

१ अमललग्न. २ द्गीर्णजल०. ३ रक्त. ४ गम्भीररवम्. ५ प्रोत्सारित. ६ रावण०,—सूचकौ.

योजनबाहोर्बाहुरगस्त्यप्रसादनागतनहुषाजगरकायशङ्कामकरोद्दषिजनस्य[1]। जनक-तनया च भर्त्रा विरहविनोदनार्थमुटजाभ्यन्तरलिखिता यत्र रामनिवासदर्शनोत्सुका पुनरिव धरणितलादुल्लसन्ती वनचरैरद्याप्यालोक्यते।

तस्य चैवंविधस्य संप्रत्यपि प्रकटोपलक्ष्यमाणपूर्ववृत्तान्तस्यागस्त्याश्रमस्य नातिदूरे जलनिधिपानप्रकुपितवरुणोत्साहितेन अगस्त्यमत्सरात्तदाश्रमसमीपवर्ती अपर इव वेधसा महाजलनिधिरुत्पादितः, प्रलयकालविघटिता[2]ष्टदिग्भागसंधिबन्धं[3] गगनतलमिव भुवि निपतितम्, आदिवराहसमुद्धृतधरामण्डलस्थानमिव सलिल-पूरितम्, अनवरतमज्जदुन्मदशबरकामिनीकुचकलशलुलितजलम्, उत्फुल्लकु-मुदकुवलयकह्लारम्, उन्निद्रारविन्दमधुबिन्दुनिस्यन्दबद्धचन्द्रकम्[4], अलिकु-लपटलान्धकारितसौगन्धिकम्, आरोसितसमदसारसम्[5], अम्बुरुहमधुपा-

६९—७२ अध्यायेषु द्रष्टव्या। पक्षे कबन्धो राहुः। 'कबन्धो राहुरक्षसोः' इति हैमः। योजनबाहोः कबन्धस्य। 'स एवमुक्तः शक्रो मे बाहू योजनमायतौ॥ तदा चास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत्।' इति रामायणवचनात्। **विरहेति**—विरहः तज्जन्यः सन्ताप इति यावत्। तस्य विनोदनार्थमपनयनार्थम्। पुनरिव—यथा पूर्वं धरणितलादुत्थिता तथा। **प्रकटेति**—प्रकटोपलक्ष्यमाणः स्फुटं ज्ञायमानो वर्णितप्रकारेण पूर्ववृत्तान्तो यस्य। प्रकुपितेति वरुणस्य जलस्वामित्वात्। तथाहि श्रुतिः–'यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्य-ञ्जनानाम्।' इति। 'वरुणो यादसामहम्' इति भगवद्गीतावचनाच्च। **प्रलयेति**—प्रलयकाले कल्पान्ते विघटिता विशीर्णा अष्टदिग्भागानां सन्धिबन्धाः संयोगघटना यस्मिन्नेवंभूतम्। **आदि-स्थान**मिति। यस्मादवकाशाद्धरामण्डलमुद्धृतं सोवकाशः। **अनवरतेति**—अनवरतं मज्जन्त्यः स्नान्त्यो या उन्मदा उत्कटमदाः शबराणां भिल्लानां कामिन्यस्तासां कुचौ कलशाविव ताभ्यां लुलितमालोडितं जलं यस्य। **उत्फुल्लेति**—कौ मोदते इति कुमुदं सिताम्भोजम्। 'सिते कुमुदकैरवे' इत्यमरः। कुवलयं कोर्वलयमिव शोभाकरत्वात् नीलकमलम्। 'कुवलयमिन्दीवरं च नीलाब्जम्।' इति नाममाला। उभे अपि चन्द्रविकासिनी। कह्लारं सौगन्धिकं निशामुखवि-कासि। उत्फुल्लान्युक्तकमलानि यस्मिन्। **उन्निद्रेति**—अराकाराणि पत्राणि विन्दतीत्यरविन्दं पद्मं सूर्यविकासि। तदुक्तं कुमारसंभवे–'सूर्यांशुभिर्भिन्नमिवारविन्दम्' इति। 'महोत्पलं प्रत्युषसीव पद्मिनी' इति विक्रमोर्वशीयेपि। उद्गता निद्रा येषां तान्युन्निद्राणि प्रफुल्लानि यान्यर-विन्दानि तेषां मधुबिन्दूनां निस्यन्देन श्चोतनेन बद्धाश्चन्द्रका मयूरपिच्छचन्द्रकाकारा यस्मि-स्तत्। **अलिकुलेति**-अलिकुलपटलेन भ्रमरसमूहेन अन्धकारितानि छन्नानीत्यर्थः सौगन्धिकानि कह्लाराणि यस्मिंस्तत्तथा। 'सौगन्धिकं तु कह्लारम्' इत्यमरः। यद्वा सौगन्धिकं सुगन्धितृणविशेषः

१ गणस्य. २ विघट्टित. ३ बन्धनम्. ४ द्रवबद्ध, ५ सारसित (भा०).

नमत्तकलहंसकामिनीकृतकोलाहलम्, अनेकजलचरपतंगशतसंचलनचञ्चलितवाचालवीचिमालम्, अनिलोल्लासितकल्लोलशिखरसीकरारब्धदुर्दिनम्, अशङ्किताववतीर्णाभिरम्भःक्रीडारागिणीभिः स्नानसमये वनदेवताभिः केशपाशकुसुमैः सुरभीकृतम्, एकदेशावतीर्णमुनिजनापूर्यमाणकमण्डलुकलजलध्वनिमनोहरम्, उन्मिषदुत्पलवनमध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्बकदम्बकैरासेवितम्, अभिषेकावतीर्णपुलिन्दराजसुन्दरीकुचचन्दनधूलिधवलिततरङ्गम्, उपान्तजातकेतकीरजःपटलबद्धकूलपुलिनम्, आसन्नाश्रमागततापसक्षालितार्द्रवल्कलकषायपाटलतटजलम्, उपतटविटपिपल्लवानिलवीजितम्, अविरलतमालवीथिकान्धकारिताभिर्वालिनिर्वासितेन संचरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणाव[illegible]लघुलताभिरुदवासितापसानां देवतार्चनोपयुक्तकुसुमाभिरुत्पतज्जलचरपतंगपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभिर्लतामण्डपतलशि[illegible]ताण्डवाभिरनेककुसुमपरि[illegible]लवाहिनीभिर्वनदेवताभिः श्वासवासिताभिरिव वनराजिभि-

---

कह्लारस्य वर्णितत्वात् । सारसाः सरसि भवाः पक्षिविशेषाः । **अनेकेति**-अनेके ये जलचराः पतङ्गाः पक्षिणस्तेषां संचलनेन चञ्चलिताः क्षुभिता वाचाला मुखरा वीचिमाला यस्मिन् । **अनिलेति**—अनिलेन वायुनोल्लासिता उल्लासं प्रापिता ये कल्लोला बृहत्तरंगास्तेषां शिखराणि तेषां शीकरा अम्बुकणास्तैरारब्धं दुर्दिनं मेघजं तमो यस्मिन् । अशङ्कितं शङ्कारहितं यथा स्यात्तथावतीर्णाभिः विजनत्वादिति भावः । केशपाशः केशकलापः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।' इत्यमरः । **एकेति**—आपूर्यमाणानां कमण्डलूनां यः कलो मधुरो जलध्वनिस्तेन मनोहरम् । **कादम्बेति**—कलहंससमूहैः आ समन्तात्सेवितम् । **अभिषेकेति**-अभिषेकार्थे स्नानार्थमवतीर्णानां पुलिन्दानां म्लेच्छविशेषाणां राजा तस्य । 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ।' इत्यमरः । किरातस्वामिनः सुन्दर्यस्तासां कुचचन्दनधूल्या धवलितास्तरङ्गा यस्य । रजःपटलं परागसंततिः । पुलिनं सैकतम् । **आसन्नेति**-समीपवर्त्याश्रमागततापसैः क्षालितैरार्द्रवल्कलैः कषायं तुवरं पाटलं श्वेतरक्तं च तटजलं यस्य । तमालवीथिकास्तमालप[illegible]यः । वालिनिर्वासितेन...वालिना निर्वासितेन स्थानाद्भ्रंशितेन । वालिसुग्रीवकथा रामायणे किष्किन्धाकाण्डे ९. १०. अध्याययोर्द्रष्टव्या । ऋष्यमूकः पर्वतविशेषः । 'ऋष्यमूकस्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः ' । इति रामायणे । उदवासीति—उदके वस्तुं शीलं येषां ते उदवासिनस्ते च ते तापसाश्च तेषाम् । 'पेषंवासवाहनधिषु च ' इत्युदादेशः । अत्र मनुः—अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः ' । इति । **उत्पतदिति**—उत्पतन्तश्च ते जलचराः पतङ्गाः पक्षिणश्च तेषां पक्षपुटेभ्यो विगलिता ये जलबिन्दवस्तेषां सेकेन सुकुमाराणि किसलयानि यासां ताभिः । **लतेति**-शिखण्डिमण्डलेन मयूरसमूहेन आरब्धं ताण्डवाख्यं नृत्यं यासु ताभिः । **अनेकेति** अनेकानि नानाजातीनि पुष्पाणि तेषां परिमलमामोदं वहन्तीतिः ताभिः । अत एव वनदेवता-

---

१ पताभि. २ उन्मिषित. ३ कादम्बैः. ४ शबरी. ५ धवलिततरम्. ६ तलस्थित. ७ देवतास्वनिश्वास.

रुपरुद्धतीरम्, अपरसागराशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहलपङ्क-मलिनैर्वनकरिभिरनवरतमापीयमानसलिलम्, अगाधमनन्तमप्रतिममपां निधानं पम्पाभिधानं पद्मसरः। यत्र च विकचकुवलयप्रभाश्यामायमानपक्षपुटान्यद्यापि मूर्तिमद्रामशापप्रस्तानीव मध्यचारिणामालोक्यन्ते चक्रनाम्नां मिथुनानि।

तस्यैवंविधस्य पद्मसरसः पश्चिमे तीरे राघवशरप्रहारजर्जरितैर्जीर्णतालत-रुखण्डस्य च समीपे दिग्गजकरदण्डानुकारिणा जरदजगरेण सततमावेष्टित-मूलतया बद्धमहालवाल इव, तुङ्गस्कन्धावलम्बिभिरनिलवेल्लितैराहिनिर्मोकैर्धृ-तोत्तरीय इव, दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुजसहस्रमुडुपतिशकलशेखरमिव विड-म्बयितुमुद्यतः, पुराणतया पतनभयादिव गगनस्कधलग्नः निखिलशरीरव्या-पिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, जरातिलकाबि-

---

भिररण्याधिष्ठात्रीभिः श्वासेन मुखमारुतेन वासिताभिः सुरभीकृताभिरिव। अगाधम्—अप्राप्य-तलम्। अनन्तम्—अपरिमितपारम्। अपां निधानं शेवधिभूतम्। **विकचेति**-विकचानि प्रफुल्लानि यानि कुवलयानि तेषां प्रभया अश्यामानि श्यामानि भवन्ति श्यामायमानानि। 'लोहितादिडाज्भ्यः क्यष्' इति क्यष् प्रत्ययः। 'वा क्यषः' इत्यात्मनेपदे शानच्। **रामेति**—सीतावियोगे दुःखार्ते रामे रुदति चक्रवाका जहसुः। ततः क्रुद्धो रामो ममैव युष्मा-कमपि प्रियाविरहजं दुःखं भविष्यतीति ताञ्छशाप। इति पद्मपुराणोक्तकथानुरोधात्कविनेदं लिखितम्। **मध्येति**-भानुचन्द्रस्तु मध्यचारिणेति पठित्वा 'वनान्तभ्रमणकारिणा' इति व्याचष्टे। **राघवेति**—तरुखण्डं वृक्षसमूहः। अनिलवेल्लितैः वायुना धुतैः। धृतोत्तरीयः धृत-मुत्तरीयं संव्यानं येन स तथा। 'संव्यानमुत्तरीयं च' इत्यमरः। **दिगिति**—दिशां चक्र-वालं मण्डलं तस्य परिमाणं विशालतामानम्। अनुरूपं वर्णनं कुमारसम्भवे–'स्थितः पृथिव्या इव मानदण्डः' इति। ताण्डवं शिवस्य नृत्यम्। अस्य वर्णनं मुद्राराक्षसे 'संकोचे-नैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्।' इत्यादि। **उडुपतीति**—उडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य शकलं शेखरे यस्य। अतिविस्तीर्णशाखावत्त्वाच्चन्द्रस्यापि तच्छि-रोवर्तित्वाच्छिवविडम्बनम्। **गगनेति**—अत्युच्चत्वादाकाशस्कन्धे लग्न इव। भानु-चन्द्रस्तु 'वायुस्कन्धलग्नः' इति पठित्वा 'वायुः स्कन्धे लग्नो यस्य एवं भूत इव। अनेन शाखासु महावायुप्रवेगेण प्रकम्पः सूचितः।' इति व्याख्याति। **अतिदूरेति**—अतिदूरं विप्रकृष्टमुन्नता ऊर्ध्वं प्रसृताः। यद्वातिदूरा दूरंगता उन्नता उत्तुङ्गाश्च ताभिः

---

१ वनम०. २ चक्रवाकनाम्नाम्. ३ रितपालतरु. ४ उडुपतिशेखरम्. ५ वायु, पवन.

न्दुभिरिव कण्टकैराचिततनुः, इतस्ततः परीपीतसागरसलिलैर्गगनागतैः पत्ररथैरिव शाखान्तरेषु निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशिखरदेशः, तुङ्गतया नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः, समीपवर्तिनामुपरि संचरतां गगनतलगमनखेदायासितानां रविरथतुरंगमाणां सृक्कपरिस्रुतैः फेनपटलैः संदेहिततूलराशिभिर्धवलीकृतशिखरशाखः, वनगजकपोलकण्डूयनलग्नमदनिलीनमत्तमधुकरमालेन लोहशृङ्खलाबन्धनिश्चलेनेव कल्पस्थायिना मूलेन समुपेतः, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलैः, दुर्योधन इवोपलक्षितशकुनिपक्षपातो नलिननाभ इव वनमालोपगूढो नवजलधरव्यूह इव नभसि दर्शितोन्नतिरखिलभुवनतलावलोकनप्रासाद इव वनदेवतानामधिपतिरिव दण्डकारण्यस्य नायक इव सर्ववनस्पतीनां सखेव विन्ध्यस्य शाखाबाहुभिरुपगृह्येव विन्ध्याटवीमवस्थितो महाजीर्णः शाल्मलीवृक्षः ।

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसंधिषु जीर्णवल्कलविवरेषु महावकाशतया विश्रब्धविरचितकुलायसहस्राणि दुरारोहतया विगलितविनाश-

व्रततिभिः लताभिः । **जरेति**—अतिवार्धक्ये शरीरं कृष्णवर्णैर्बिन्दुभिस्तिलकितं भवतीति सुप्रसिद्धम् । आचिततनुर्व्याप्तशरीरः । इतस्ततः इति गगनागतैरित्यनेन सम्बन्धि । पत्ररथैः पक्षिभिः । नन्दनवनमिन्द्रोद्यानम् । **सृक्केति**—सृक्कणी ओष्ठप्रान्ते ताभ्यां परिस्रुतैः पतितैः । फेनपटलैः लालाकफसमूहैः । **संदेहितेति**—संदेहिताः संदेहं प्रापितास्तूलराशयो यैः । **वनेति**—वनगजैर्यत्कपोलयोः कण्डूयनं खर्जनं तेन लग्नो यो मदो दानं तत्र निलीनाः मत्तानां मधुकराणां माला यस्य । **कल्पेति**—कल्पं यावत्तिष्ठतीत्येवंशीलेन । कोटरो वृक्षरन्ध्रम् । **उपलक्षितेति**—उपलक्षितः शकुनीनां विहंगमानां पक्षैः पातोऽवतरणं पक्षाणां पातो गलनं वा यस्मिन् । अन्यत्र उपलक्षितः शकुनौ स्वमातुले पक्षपातो यस्य । **नलिनेति**—नलिनं कमलं नाभौ यस्य स नलिननाभो विष्णुः । गड्वादित्वात्सप्तम्याः परनिपातः । 'अच्प्रत्यन्वव--' इत्यत्र 'अच्' इति योगविभागादच् । केचित्तु नाभ्यन्तस्य सर्वत्रैवाच् समासान्त इति न नियम इत्याहुः । तेन 'प्रजा इवाङ्गादरविन्दनाभेः' इति माघोपि संगच्छते । **वनेति**—वनमालयारण्यराज्योपगूढः परिक्षिप्तः । पक्षे 'आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिता' ॥ इत्युक्तलक्षणया वनमालयालिङ्गितदेहः । व्यूहो निवहः । **दर्शितेति**--दर्शितोन्नतिर्येनेत्युभयोरर्थसाम्यादभङ्गश्लेषः । **तत्रेति**--पल्लवान्तरेषु किसलयमध्यभागेषु । अवकाशः अन्तर्विस्तरः । **विश्रब्धेति**—विश्रब्धं यथा तथा विरचितानि कुलायानां नीडानां सहस्राणि यैः । दुःखेनारोहो यस्य स दुरा-

१ शाखान्तदेशेषु. २ उत्तुङ्गतया. ३ आलोकयितुम्. ४ अम्बर. ५ मदसलिल. ६ पद्मनाभ. ७ कृत. ८ विन्ध्याचलस्य. ९ अवगुह्य, उपगुह्य. १० विगतभयानि, विगतविनाशभयानि.

मयानि नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म । यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः । ते च तस्मिन्वनस्पतावतिवाह्यातिवाह्य रजनीमात्मनीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकलहलधरहलमुखोत्क्षेपविकीर्णबहुस्रोतसमम्बरतले कलिन्दकन्यामिव दर्शयन्तः सुरगजोन्मूलितविगलदाकाशगङ्गाकमलिनीशङ्कामुपजनयन्तो दिवसकररथतुरगप्रभानुलिप्तमिव गगनतलमुपपादयन्तः संचारिणीमिव मरकतस्थलीं विडम्बयन्तः शैवलपल्लवावलीमिवाम्बरसरसि प्रसारयन्तो गगनविततैः पक्षपुटैः कदलीदलैरिव दिनकरखरकरनिकरपरिखेदिताशामुखानि वीजयन्तो वियति विसारिणीं शष्पवीथीमिवारचयन्तः सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुकशकुनयः । कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान्फलरसान्कलममञ्जरीविकारांश्च प्रहतहरिणरुधिरानुरक्तशार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा दत्त्वाधरीकृतसर्वस्नेहेनासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म ।

---

रोहस्तस्यभावस्तत्ता तया । **यैरिति**—यैर्निलीनैः परिणामेन वार्धक्येन विरलाल्पा दलसंहतिः पर्णसमुदायो यस्य तादृशोपि अविरलः यः दलनिचयस्तेन श्यामलः । ते च शुकशकुनयः इति सम्बन्धः । अतिवाह्यातिवाह्य क्षपयित्वा क्षपयित्वा । वीप्सया चिरवासो द्योत्यते । **मदेति**—मदकलो मदोद्धतो यो हलधरः बलरामस्तस्य हलस्य मुखं तेन य उत्क्षेप उपरिक्षेपणं तेन विकीर्णानि बहूनि स्रोतांसि यस्यास्तामिव । हलधरकथा प्राक् २३ पृष्ठे द्रष्टव्या । सुरगजेन ऐरावतेन उन्मूलिता अत एव विगलन्ती या आकाशगङ्गायाः कमलिनी पद्मषण्डं तस्याः शङ्काम् । **दिवसेति**-दिवसकररथः सूर्यरथस्तस्य तुरगाः तेषां प्रभा । अर्थाद्धरिता तेषां हरितत्वात् । तदुक्तं शाकुन्तले—अतीत्य हरितो हरींश्च वर्तन्ते वाजिन इति । ऋग्वेदे च 'भद्रा अश्वा हरितः सूर्यस्य' इति । तयानुलिप्तमक्तमिव । शैवलं जलनीली । तस्याः पल्लवावलीं पल्लवपंक्तिम् । **दिनेति**—दिनकरस्य ये खराः तीक्ष्णाः करास्तेषां निकरेण समूहेन परिखेदितानि सर्वतः क्रान्तानि आशामुखानि दिङ्मुखानि । शष्पवीथीं बालतृणशाद्वलम् । इन्द्रायुधं शक्रधनुः । **कलमेति**—कलमः शालिविशेषस्तस्य मञ्जर्यो वल्र्यस्तासां [sic] विकाराञ्छेदान् तद्गतकणान्वा । **प्रहतेति**—प्रहतहरिणानां रुधिरेणानुरक्ता लोहिताः शार्दूलस्य व्याघ्रस्य नखानां कोटयोग्राणि तद्वत्पाटलेन कुङ्कुमवर्णेन । **अधरीति**—अधरीकृतस्तिरस्कृतो न्यूनत्वमापादितो वा सर्वोन्यवस्तुस्नेहो येन तेनापत्यप्रेम्णा दत्त्वा दत्त्वेत्यन्वयः । **क्रोडेति**—क्रोडं भुजान्तरमत्र पक्षान्तरं तत्र निहिताः स्थापितास्तनयाः यैः ।

---

१ निशाम्. २ बलभद्र. ३ मुखाक्षेप. ४ प्रदर्शयन्त. ५ नाववतैः [sic]. ६ विस्तारिणीम्.

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमेवैको विधिवशात्सूनुरभवम् । अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्[1] । अभिमतजायाविनाशशोकदुःखितोपि खलु तातः सुतस्नेहादन्तर्निगृह्य[2] पटुप्रसरमपि शोकमेकाकी[3] मत्संवर्धनपर एवाभवत् । अतिपरिणतवयाश्च कुशचीरानुकारिणीमल्पावशिष्टजीर्णपिच्छजालजर्जरामवस्रस्तांसदेशशिथिलामपगतोत्पतनसंस्कारां पक्षसंततिमुद्वहन्नुपारूढकम्पतया च संतापकारिणीमङ्गलग्नां जरामिव विधुन्वन्नकठोरशेफालिकाकुसुमनालपिञ्जरेण कलममञ्जरीदलनमसृणितक्षीणोपान्तलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन परनीडनिपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादायादाय तरुमूल[4]निपतितानि शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात्[5] । प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम् ।

एकदा तु प्रभातसंध्यारागलोहिते गगनतलकमलिनीमधुरक्तपक्षसंपुटे[6] वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि, परिणतरङ्कु-

---

**एकस्मिन्निति**-पश्चिमे वयसि उत्तरवयसि वार्धक्ये इत्यर्थः । विधिवशाद्विधिनियोगात् । **अभिमतेति**-अभिमता चासौ जाया च तस्या विनाशेन शोकः तेन दुःखितः संजातदुःखः । निगृह्य निरुध्य । पटुप्रसरं पटुर्महांस्तीव्रो वा प्रसरो यस्य तम् । **कुशेति**-कुशचीरं कुशनिर्मितं चीरं तदनुकरोतीति ताम् । **अल्पेति**-अल्पानि विरलान्यवशिष्टानि यानि जीर्णपिच्छानि तेषां जालेन जर्जरां विशीर्णाम् । **अवस्रस्तेति**-अवस्रस्तो गलितः अंशदेशस्तेन शिथिलां श्लथास्थिबन्धामित्यर्थः । अपगत उत्पतनस्य संस्कारः अभ्यासजं सामर्थ्यं यस्यास्ताम् । पक्षसंततिं पक्षसमूहम् । विधुन्वन् विधूननेनापास्यन्नित्यर्थः । **अकठोरेति**-अकठोरं कोमलं यच्छेफालिका निर्गुण्डी । 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा' । इत्यमरः । तस्याः कुसुमं तस्य नालं दण्डस्तद्वत्पिञ्जरेण । **कलमेति**-कलममञ्जरीणां दलनेन विदारणेन मसृणिता स्निग्धा क्षीणा घर्षणावसन्ना चोपान्तलेखा यस्य तेन । अवदलितानि खण्डितानि । आत्मना स्वयम् । **एकदेति**-एकदा तु मृगयाकोलाहलध्वनिरुदचरत् इत्यन्वयः । लोहितः रक्तः । **गगनेति**-गगनतलमेव कमलिनी सरसी तस्या मधु तेन रक्तं पक्षसंपुटं यस्य । अनुरूपवर्णनं विक्रमाङ्कदेवचरिते ' अयं च कुसुमायुधप्रियसुहृल्लक्षणैः पञ्चशैर्भविष्यति पयोनिधेः पुलिनराजहंसः शशी ' ॥ इति । अपरजलनिधिः पश्चिमसमुद्रः । **परिणतेति**-परिणतो जरठो यो रङ्कुर्मृगविशेषस्तस्य रोमवत्पाण्डुनि पीतधवले । ' पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः ' । इति शब्दार्णवः ।

---

१ परलोकम्. २ अभ्यन्तरे. ३ शोकवेगम्. ४ वृक्ष. ५ मह्यमाहारम्. ६ गगनतले, गगनकमलिनी, मध्वनुरक्त.

रोमपाण्डुनि व्रजात विशालतामाशाचक्रवाले, गजरुधिररक्तहरिसटालोमलोहिनीभिरातप्तलाक्षिकतन्तुपाटलाभिरायामिनीभिराशिशिरकिरणदीधितिभिः पद्मरागरत्नशलाकासंमार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, संध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीरमिवावतरति सप्तर्षिमण्डले, तटगताविघटितशुक्तिसंपुटविप्रकीर्णमरुणकरप्रेरणाधोगलितमुडुगणमिव मुक्ताफलनिकरमुद्वहति चलितपुलिनतटमुदन्वति पूर्वेतरे, तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेसरिणि करिणीकदम्बकप्रबोध्यमानसमदकरिणि क्षपाजलजडकेसरं कुसुमनिकरमुदयगिरिशिखरस्थितं सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, रासभरोमधूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायसीकारिणि लुलि-

---

आशाचक्रवाले दिक्चक्रे । **गजेति**—गजरुधिरेण रक्ता या हरिसटा सिंहकेसरः । 'सटा जटाकेसरयोः' इति मेदिनी । तस्या लोमवल्लोहिनीभिः रक्ताभिः । **आतप्तेति**—आतप्ता ये लाक्षा जतु तस्या इमे लाक्षिकास्तन्तवस्तद्वत्पाटलाभी रक्ताभिः । आयामिनीभिरायामो दैर्घ्यं स आसां विद्यते ताभिः । दीधितिभिर्मयूखैः । **पद्मेति**—पद्मरागरत्नानां याः शलाकास्तासां संमार्जनीभिः शोधनीभिः । **मानसेति**—मानसं नाम ब्रह्मणा मनसा निर्मितं सरः । तदुक्तं रामायणे 'कैलासपर्वते राम मनसा निर्मितं परम् । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः' ॥ इति । सप्तर्षिमण्डले—मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चैते सप्तर्षयस्तेषां मण्डलं तारकासमूहविशेषः । सन्ध्यामुपासितुमिव प्रातस्नानादिविध्यनुष्ठानार्थमिव । अत्र याज्ञवल्क्यः—अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ इति । **तटेति**—तटगतानि यानि विघटितानि शुक्तिसंपुटानि तेभ्यो विप्रकीर्णमितस्ततो विक्षिप्तम् । समानं वर्णनं रघुवंशे—'एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः' इत्यादि । विक्रमाङ्कदेवचरिते च 'तटत्रुटन्मौक्तिकशुक्तिभङ्ग्या' इत्यादि । प्रेरणा पुरोनोदनम् । उडुगणं नक्षत्रपुञ्जम् । उदन्वति सागरे । **पूर्वेतरे**—पूर्व इतरो यस्मात्तस्मिन् । बहुव्रीहित्वान्न सर्वादित्वम् । **तुषारेति**—तुषारबिन्दून् हिमजलपृषतान् वर्षतीति तस्मिन् । विबुद्धं प्रबुद्धं शिखिकुलं मयूरसमूहो यस्मिन् । **क्षपेति**—क्षपाजलेन रात्रिसम्बन्धितुषारजलेन जडानि केसराणि किञ्जल्कानि यस्मिंस्तादृशं कुसुमनिकरं सवितारमुद्दिश्येव कानने समुत्सृजति सति । **रासभेति**—रासभस्य बालेयस्य रोमवत्तनूरुहवद्धूसरासु धूम्रवर्णासु । वनदेवताप्रासादानां तरूणां शिखरेषु पारावतानां कपोतानां माला तद्वदाचरन्तीषु । क्यङन्तत्वाच्छानच् । **अवश्यायेति**—इतो मातरिश्वनीत्यस्य विशेषणानि । अवश्यायो हिमं तस्य सीकराः कणा यस्मिन् । लुलितं कम्पितं वेल्लितं वा कमल-

---

१ आगामिनीभिः. २ इवाम्बरात्. ३ विघट्टित. ४ ०धूमरासु.

सकमलवने रतिखिन्न[1]शबरसीमन्तिनीस्वेदजलकणिकापहारिणि वनमहिषरोमन्थफेनबिन्दुवाहिनि चलितपल्लवलतालास्योपदेशव्यसनिनि विघटमानकमलखण्डमधुसीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजडिम्नि मन्दमन्दसंचारिणि प्रवाति प्राभातिके मातरिश्वनि, कमलवनप्रबोधमङ्गलपाठकानामिभगण्डडिण्डिमानां मधुलिहां कुमुदोदरेषु घनघटमानदलपुटनि[2]बद्धपक्षसंहतीनामुच्चरत्सु हुंका[3]रेषु, प्रभातशिशिरमारुताहतमुत्तप्तजतुरसाश्लिष्टपक्ष्ममा[4]लमिव सशेषनिद्राजिह्म[5]तारं चक्षुरुन्मीलयत्सु शनैः शनैरूषरशय्याधूसरक्रोडरोमराजिषु वनमृगेषु, इतस्ततः संचरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरःकलहं[6]सकोलाहले, समुल्लसति नर्तितशिखण्डिमण्डले मनोहरे वनगजकर्णतालशब्दे, क्रमेण च गगनतलमार्गमवतरतो दिवसकरवारणस्या[7]वचूलचामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, शनैः शनैरुदिते भगवति सवितरि, पम्पासरःपर्यन्ततरुशिखरसंचारिण्यध्यासितगिरिशिखरे दिवसकरजन्मनि हततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्यूषसि,

वनं येन तस्मिन् । रोमन्थश्चर्वितचर्वणम् । **चलितेति**—चलिताः कम्पिताः पल्लवा यासां तादृश्यो या लतास्तासां लास्यं नृत्यं तस्योपदेशे व्यसनमासक्तिरस्त्यस्येति तस्मिन् । विघटमानं विकासं प्राप्यमाणं यत्कमलखण्डं पद्मसंघातस्तस्य यन्मधु तस्यासारः संपातवर्षस्तं वर्षतीति तस्मिन् । कुसुमामोदेन तर्पितं प्रीणितमलिजालं भ्रमरसमूहो येन । निशावसानेन जातो जडिमा यस्य तस्मिन् । मातरिश्वनि—मातरि आकाशे श्वयति संचरतीति मातरिश्वा वायुः । **कमलवनेति**—अत्र कमलवनस्य प्रभुत्वं भ्रमराणां च बन्दित्वं व्यङ्ग्यम् । मधुरगानेन हि प्रभुर्निद्रातो बोध्यते । उक्तं च भोजेन—'श्रुतौ वा मधुरैर्गानैर्निद्रातो बोधयेत्प्रभुम्' । इति । **इभेति** इभगण्डे हस्तिगण्डे डिण्डिमानां डिण्डिमः पटहः स इव शब्दं कुर्वताम् । **घनेति**—घनं यथा तथा घटमानं संकोचं प्राप्यमाणं दलपुटं तस्मिन्निबद्धा पक्षसंहतिर्येषाम् । जतु लाक्षा । पक्ष्ममालाक्षिलोमानि । सशेषा निद्रा तया जिह्मा वक्रा तारा यस्य तत् । 'जिह्मस्तु कुटिले मन्दे' इति हैमः । **ऊषरेति**—'स्यादूषः क्षारमृत्तिका' इत्यमरः । तद्वती भूमिरूषरः । 'ऊषशुषिमुष्कमधुभ्यो रः' इति रप्रत्ययः । स एव तस्मिन् वा शय्या तया धूसरा धूम्रवर्णा क्रोडरोमराजिर्हृदयलोमपंक्तिर्येषां तेषु । **वनेति**—वनगजानां कर्णा एव ताला वाद्यप्रभेदास्तेषां शब्दे । यद्वा ताला नियतकालान्तरेण कर्णताडनानि । 'तालः कालक्रियामानम्' इत्यमरः । **अवचूलेति**—अवनता चूडाऽग्रं यस्य स डलयोरभेदादवचूलोऽधोमुखश्चामराणां कलापः स इव । मञ्जिष्ठौषधिविशेषः । **अध्यासितेति**—बालातपे कपीश्वरे च । **दिवसेति**—दिवसकरात्सूर्याज्जन्म यस्य तस्मिन्बालातपे सुग्रीवे च । हततारे हतास्ते-

१ खिन्न. २ निरुद्ध. ३ झङ्कारेषु, टङ्कारेषु. ४ पक्ष्मजालम्. ५ जिह्मित, जिह्मिततारकम्. ६ कलहंसकुल. ७ वारणस्याव०, अवधूत.

नचिरादिव दिवसाष्टमभागभाजि स्पष्टभासि भास्वति भूते, प्रयातेषु यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशावकसनाथेपि निःशब्दतया शून्य इव तस्मिन्वनस्पतौ, स्वनीडावस्थित एव ताते, मयि च शैशवादसंजातबलसमुद्भिद्यमानपक्षपुटे[1] तातस्य समीपवर्तिनि कोटरगते, सहसैव तस्मिन्महावने संत्रासितसकलवनचरः सरभसमुत्पतत्पतत्रिपक्षपुटशब्दसंततो भीतकरिपोतचीत्कारपीवरः प्रचलितलताकुलितमत्तालिकुलक्वणितमांसलः परिभ्रमदुद्घोणवनवराहरवघर्घरो[2] गिरिगुहासुप्तप्रबुद्धसिंहनादोपबृंहितः कम्पयन्निव तरून्भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत् । आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुध्द्या जराशिथिलपक्षपुटान्तरमविशम् ।

अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपरिमलः, इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोदः, इतः करिकलभभज्यमानसल्लकीकषायगन्धः, इतो निपतितशुष्कपत्रमर्मरध्वनिः, इतो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिः, इतो मृगकदम्बकम्, इतो वनगजकुलम्, इतो वनवराहयूथम्, इतो

जोभावादपमृष्टास्तारा येन । पक्षे हृता तारा वालिपत्नी येन । **कुलायेति**—कुलायेषु निलीना निभृता निश्चलाश्च ये शुकशावकास्तैः सनाथे । **असंजातेति**—असञ्जातं बलमुत्पतनसामर्थ्यं यस्य तादृक् समुत्पद्यमानं पक्षपुटं यस्य । कोटरगते मयि तातस्य समीपवर्तिनि सति । सरभसं ससंभ्रमम् । पतत्रिणः पक्षिणः । संततो विस्तृतः । च्चीत्कारेण पीवरः पुष्टः । मांसलः पृथुः । उद्गता घोणा नासिका येषां ते उद्घोणाः । रवेण घर्घरः कर्कशः । **गिरिगुहेति**—गिरिगुहासु आदौ सुप्ताः पश्चादुत्थिता ये सिंहास्तेषां नादेनोपबृंहित उपचितः । वेपथुः कम्पः । जर्जरितं स्फोटितम् । प्रतीकारबुद्धया पक्षपुटान्तरप्रवेशो भयत्राणहेतुः स्यादिति धिया । लुलिता मृदिता । क्रोडकुलं वराहसमुदायः । तेन दश्यमानाः भद्रमुस्तास्तासां रसस्यामोदः । भद्रमुस्ता–' क्रोडा हि मुस्ताप्रियाः '—तथाहि शाकुन्तले—' विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले ' इति । रघुवंशे च ' मुस्ताप्ररोहकवलावयवानुकीर्णम् । जग्राह स द्रुतवराहकुलस्य मार्गम् ' इति । सल्लकी हस्तिप्रियो वृक्षभेदः । ' गजभक्ष्या...सल्लकी ह्लादिनीति च ' । इत्यमरः । तथाहि विक्रमोर्वशीये–'अयं ( नागाधिराजः ) अभिलेढु तावदासवसुरभिरसं सल्लकीभङ्गम् । ' इति । साहि कषायगन्धा–' शिशिरकटुकषायस्त्यायते सल्लकीनामिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः । ' इति मालतीमाधवे । ' अथ मर्मरः । स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् । ' इत्यमरः । **वनेति**—वनमहिषाणां विषाणकोटयः शृङ्गाग्राण्येव कुलिशानि वज्राणि । अनेन तेषामभेद्यत्वमुक्तम् । तैर्भिद्यमानानां वल्मीकानां धूलिः ।

१ असंजातबले. २ घर्घरकठोरः.

वनमाहिषवृन्दम्, इतः शिखण्डिमण्डलविरुतम्, इतः कपिञ्जलकुलकलकूजितम्, इतः कुररकुलक्वणितम्, इतो मृगपतिनखभिद्यमानकुम्भकुञ्जररसितम्, इयमार्द्रपङ्कमलिना वराहपद्धतिः, इयमभिनवशष्पकवलरसश्यामला हरिणरोमन्थफेनसंहतिः, इयमुन्मदगन्धगजगण्डकण्डूयनपरिमलालीनमुखरमधुकरविरुतिः, एषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्रपाटला रुरुपदवी, एतद् द्विरदचरणमृदितविटपपल्लवपटलम्, एतत्खड्गिकुलक्रीडितम्, एष नखकोटिविलिखितविकटपत्रलेखो रुधिरपाटलः करिमौक्तिकदलदन्तुरो मृगपतिमार्गः, एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिः, इयमटवीवेणिकानुकारिणी पक्षचरस्य यूथपतेर्मदजलमलिना संचारवीथी, चमरीपङ्क्तिरियमनुगम्यताम्, उच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्, आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वानः—इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमशृणवम् ।

अथ नातिचिरादेवानुलेपनार्द्रमृदङ्गध्वनिधीरेण गिरिविवरविजृम्भितप्रतिनादगम्भीरेण शबरशरताडितानां केसरिणां निनादेन, संत्रस्तयूथमुक्तानामेकाकिनां

---

कपिञ्जलानां गौरतित्तिराणां चातकानां वा कुलं वृन्दम् । कुररा मत्स्यनाशनाः । कुञ्जरो हस्ती । अतिशयितः कुञ्जो हनुरस्य । 'खमुखकुञ्जेभ्योरः' इतिः रः । पादाभ्यां हन्यते इति पद्धतिः मार्गः । **उन्मदेति**—गन्धगजो गन्धप्रधानो गज इति शाकपार्थिवादिसमासः । तल्लक्षणमुक्तं पालकाप्ये 'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम्' ॥ इति । उन्मदा गन्धगजास्तेषां गण्डास्तेषां कण्डूयनं तेन यः परिमलस्तस्मिन् आ समन्ताल्लीना ये मुखरा मधुकरास्तेषां विरुतिर्गुंजारवः । रुरुपदवी रुरवो मृगभेदास्तेषां गमनमार्गः । **खड्गीति**—खड्गिकुलस्य गण्डकसमुदायस्य क्रीडितं क्रीडनस्थलम् । अत्र 'क्तोधिकरणे ध्रौव्यगतिप्रत्यवसानेभ्यः' इति सूत्रेणाधिकरणेः क्तः प्रत्ययः । **नखेति**—नखकोटिभिर्विलिखिता विकटाः करालाः पत्रलेखा नखाङ्का इत्यर्थः यस्मिन् । करिणां गण्डस्थलमौक्तिकानां दलैः शकलैर्दन्तुरो विषमः । **अटवीति**—अटव्या वेण्येव वेणिका सैव स्थितेत्यर्थः । पक्षचरस्य—पक्षात्स्वयूथाच्चरतीति तस्य । पक्षचरो यूथचारी वा । इयं चमरीणां मृगीविशेषाणां पंक्तिः पदपरम्परा । **उच्छुष्केति**—उच्छुष्कं वानं यन्मृगकरीषं मृगच्छगणं तेन पांसुला सरजस्का वनस्थली अध्यास्यतामाश्रीयताम् । अवहितैः सावधानैः । श्वानः कितवः । **अथेति**—अथ नातिचिराद्देव सर्वतः प्रचलितं कम्पितमिव तदरण्यमभवदित्यन्वयः ।

---

१ वराहकुल. २ शिखण्डिकुल. ३ मौक्तिकदन्तुरः. ४ एकचरस्य. ५ प्रसक्तस्य. ६ इव. ७ श्वान

च संचरतामनवरतकरास्फोटमिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, सरभससारमेयविलुप्यमानावयवानामालोलकातरतरलतारकाणामेणकानां च करुणकूजितेन, निहतयूथपतीनां वियोगिनीनामनुगतकलभानां च स्थित्वा स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन, कतिपयदिवसप्रसूतानां च खड्गिधेनुकानां त्रासपरिभ्रष्टपोतान्वेषिणीनामुन्मुक्तकण्ठमतिकरुणमारसन्तीनामाक्रन्दितेन, तरुशिखरसमुत्पातितानामाकुलाकुलचारिणां च पत्ररथानां कोलाहलेन, रूपानुसारप्रधावितानां च मृगयूणां युगपदतिरभसपादपाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन, कर्णान्ताकृष्टज्यानां च मदकलकुररकामिनीकण्ठकूजितकलेन शरनिकरवर्षिणां धनुषां निनादेन, पवनाहतिक्वणितधाराणामसीनां च कठिनमहिषस्कन्धपीठपातिनां रणितेन, शुनां च सरभसविमुक्तघर्घरध्वनीनां वनान्तरव्यापिना ध्वानेन, सर्वतः प्रचलितमिव तदरण्यमभवत् ।

अचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले निर्वृष्टमूकजलधरवृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपागते कानने मन्दीभूतभयोहमुपजातकुतूहलः पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य संत्रासतरलतारकः शैशवात्किमिति समुपजातदिदृक्ष-

---

तत्र हेतूनाह केसरिणां निनादेनेत्यादीन् । अनुलेपनेन पिष्टादिलेपेनार्द्रो यो मृदङ्गस्तस्य ध्वनिवद्धीरेण । करास्फोटः शुण्डाघातः । सरभसा वेगोदग्राः । आलोलाः क्षुब्धाः कातरा भीता अतएव तरलाश्चञ्चलाः तारकाः येषाम् । एणकानां मृगाणाम् । **निहतेति**—निहता यूथपतयो यासाम् । अनुगताः कलभा यासाम् । स्थित्वा स्थित्वा अन्तरान्तरा । खड्गिधेनुका गण्डकस्त्रियः । **त्रासेति**-त्रासेन भयेन परिभ्रष्टा नष्टा ये पोताः स्तनन्धयास्तदन्वेषिणीनाम् । **आकुलेति**—आकुलाकुलं भयाकुलं यथा तथा चारिणाम् । **रूपेति**—रूपाणां पशूनामनुसारेण धावितानां मृगयूणां व्याधानाम् । युगपदेकदैवातिरभसवेगवत्तरं यः पादानां पातस्तेनाभिहतायाः । **मदेति**—मदेन कलाः मदकलाः कुररकामिन्यस्तासां कण्ठकूजितवत्कलेन मनोज्ञेन । **कठिनेति**—कठिनाः कठोरा ये महिषाणां लुलायानां स्कन्धास्त एव पीठानि स्थलानि तत्र पतनशीलानाम् । **निर्वृष्टेति**-निर्वृष्टा वान्तजला अत एव मूका ये जलधरास्तेषां वृन्दं तदनुकरोतीति तस्मिन् । मथनस्यावसाने उपशान्तं वारि यस्य तस्मिन् । स्तिमितता निश्चलता । शिरोधरां ग्रीवाम् । समुपजाता दिदृक्षा द्रष्टुमिच्छा

---

१ आलोलतरल, तरलतर. २ निनादेन. ३ मृगयूथानाम्. ४ ०कलशबलितेन, कलकलेन इव, कलकलशबलेन. ५ तदा. ६ ०साध्वसः. ७ तरलतर. ८ समुपजातविस्मयो दिदृक्षुः.

स्तामेव दिशं चक्षुः प्राहिणवम् । अभिमुखमापतच्च तस्माद्वनान्तरादर्जुनभुजदण्डसहस्रविप्रकीर्णामिव नर्मदाप्रवाहम्, अनिलवशाच्चालितमिव तमालकाननम्, एकीभूतमिव कालरात्रीणां यामसंघातम्, अञ्जनशिलास्तम्भसंभारमिव क्षितिकम्पविघूर्णितम्, अन्धकारपुञ्जमिव रविकिरणाकुलितम्, अन्तकपरिवारमिव परिभ्रमन्तम्, अवदारितरसातलोद्भूतमिव दानवलोकम्, अशुभकर्मसमूहमिवैकत्र समागतम्, अशेषदण्डकारण्यवासिमुनिजनशापसार्थमिव संचरन्तम्, अनवरतशरनिकरवर्षिरामनिहतखरदूषणबलनिवहमिव तदपध्यानात्पिशाचतामुपगतं, कलिकालबन्धुवर्गमिवैकत्र संगतम्, अवगाहप्रस्थितमिव वनमाहिषयूथम्, अचलशिखरस्थितकेसरिकराकृष्टिपतनविशीर्णमिव कालमेघपटलम्, अखिलरूपविनाशाय धूमकेतुजालमिव समुद्गतम्, अन्धकारितकाननम्, अनेकसहस्रसंख्यम्, अतिभयजननमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम् ।

मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्तमानम्, अतिकर्कशत्वादायसमयमिव निर्मितम्, एकलव्यमिव जन्मान्तरागतम्, उद्भिद्यमानश्मश्रुराजितया प्रथममदलेखामण्ड्यमानगण्डभित्तिमिव गजयूथपतिकुमारकम्, असितकुवलयश्यामेन देहप्रभाप्रवाहेण कालिन्दीजलेनेव पूरितारण्यम्, आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तलभारेण केसारिणमिव गजमदमलिनीकृतेन

---

यस्य । **अर्जुनेति**—अर्जुनः सहस्रार्जुनः कार्तवीर्यापरनामा । **अञ्जनेति**—अञ्जनशिलानां कज्जलशिलानां स्तम्भास्तेषां संभारं समूहमिव । विघूर्णितं चालितम् । आकुलितं क्षोभितम् । अन्तको यमः । रसातलं पृथ्वीतलं । **अनवरतेति**—अनवरतशरनिकरवर्षी निरन्तरबाणसमुदायवर्षणशीलो यो रामस्तेन निहतौ यौ खरदूषणौ तयोर्बलनिवहमिव । तदपध्यानात् तस्य रामस्यापध्यानाद्दुश्चिन्तनाद्भक्त्यभावाद्वा । **अचलेति**—पर्वतशृङ्गस्थितेन केसरिणा सिंहेन या कराकृष्टिस्तया यत्पतनं तेन विशीर्णम् । **अखिलेति**—अखिलरूपाणां आरण्यकपशूनां विनाशाय । पक्षे अखिलं यद्रूपं सौन्दर्यं तस्य विनाशाय । अन्धकारितमन्धकारग्रस्तं काननं येन । अनेकानि सहस्राणि संख्या यस्य । **उत्पातेति**—उत्पातोऽशुभं तत्सूचकं । पिशाचविशेषसंघातमिव । **मध्ये चेति**—तस्य महतः शबरसैन्यस्य मध्ये मातङ्गकनामकं शबरसेनापतिमपश्यामित्यन्वयः । कर्कशत्वादतिकठिनत्वात् । आयसमयं लोहनिर्मितम् । अयसो विकारः आयसमयः । **एकलव्येति**—एकलव्यो नाम निषादाधिपतेः हिरण्यधनुषः पुत्रः द्रोणाचार्यशिष्यो द्रोणाचार्यप्रतिकृतेर्लब्धधनुर्विद्यः । श्मश्रुराजिर्मुखलोमपंक्तिः । श्म मुखं श्रयतीति श्मश्रु । गण्डभित्तिः कपोलफलकः । असितं कृष्णम् । कुन्तलभारेण केशसमूहेन ।

---

१ पुरम्. २ उद्गतम्. ३ अवगाहोत्थितम्. ४ कालाभ्र. ५ आयसम्. ६ पूरयन्तमरण्यम्.

केसरकलापेनोपेतम्, आयतललाटम्, अतितुङ्गघोरघोणम्, एककर्णाभरणतामुपनीतस्य भुजंगफणमणेरापाटलैरंशुभिरालोहितीकृतेन पर्णशयनाभ्यासाल्लग्नपल्लवरागेणेव वामपार्श्वेन विराजमानम्, अचिरप्रहतगजकपोलगृहीतेन सप्तच्छदपरिमलवाहिना कृष्णागुरुपङ्केनेव सुरभिणा मदेन कृताङ्गरागम्, उपरि तत्परिमलान्धेन भ्रमता मायूरातपत्रानुकारिणा मधुकरकुलेन तमालपल्लवेनेव निवारितातपम्, आलोलकर्णपल्लवव्याजेन भुजबलनिर्जितया भयप्रयुक्तसेवया विन्ध्याटव्येवं करतलेनापमृज्यमानगण्डस्थलस्वेदलेखम्, आपाटलया हरिणकुलक्षयरात्रिसंध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमाशाविभागान्, आजानुलम्बेन कुञ्जरकरप्रमाणमिव गृहीत्वा निर्मितेन चण्डिकारुधिरबलिप्रदानार्थमसकृन्निशितशस्त्रोल्लेखविषमितशिखरेण भुजयुगलेनोपशोभितम्, अन्तरान्तरालग्नाश्यानहरिणरुधिरबिन्दुना स्वेदजलकणिकाचितेन गुञ्जाफलविमिश्रैः करिकुम्भमुक्ताफलैरिव रचिताभरणेन विन्ध्यशिलातलविशालेन वक्षःस्थलेनोद्भासमानम्, अविरतश्रमाभ्यासादुल्लिखितोदरम्, इभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुदण्डद्वयेन, लाक्षालोहितकौशेयपरिधानम्, अकारणेपि क्रूरतया बद्ध-

---

केसरकलापेन सटाभारेण। आयतं दैर्घ्यवल्ललाटं यस्य तम्। **पर्णेति**-पर्णेषु यच्छयनं तस्याभ्यासादविरतक्रमात्। कृताङ्गरागं कृतविलेपनम्। परिमलान्धेन सौगन्ध्यजडेन। तत्र बद्धैकवृत्तिनेत्यर्थः। अनेनात्यन्तासक्तिर्द्योतिता। **मायूरेति**—मयूरसम्बन्धि तत्पिच्छनिर्मितं यदातपत्रं तदनुकारिणा। **आलोलेति**-ईषच्चञ्चलपल्लवमिषेण। **अपेति**—अपमृज्यमाना प्रमृज्यमाना गण्डस्थलस्वेदलेखा कपोलस्थलस्वेदजलराजिर्यस्य। आपाटलया आसमन्तात्पाटलया रक्तया। अतएव हरिणकुलक्षयरात्रेः सन्ध्येवाचरन्त्या। तस्याः पाते तेषां विनाशादिति भावः। आशाविभागान्दिग्विभागान्। **कुञ्जरकरेति**-तद्वत्स्थूलेन। **असकृदिति**—असकृदनेकवारं निशितानि तेजितानि यानि शस्त्राणि तेषामुल्लेखाश्छेदास्तैः विषमितं स्थपुटं शिखरं यस्य। **अन्तरेति**—अन्तरान्तरा मध्ये मध्ये लग्ना आश्यानस्येषद्घनीभूतस्य हरिणरुधिरस्य बिन्दवो यस्मिंस्तेन। **गुञ्जेति**—हरिणरुधिरबिन्दुस्थानीयानि गुञ्जाफलानि, स्वेदजलबिन्दुस्थानीयानि करिमुक्ताफलानि। तेन तत्साम्यमुत्प्रेक्षाबीजम्। **उल्लिखितेति**—उल्लिखितं चिह्नितं यद्वा तनूकृतमुदरं यस्य। आलानस्तम्भः गजबन्धनस्तम्भः। अनेनोर्वोर्विपुलत्वमुक्तम्। **लाक्षेति**-लाक्षया जतुना लोहितं रक्तीकृतं कौशेयं कृमिकोशोत्थं वस्त्रं परिधानमधोंशुकं यस्य। **बद्धेति**—बद्धा त्रिपताका त्रिवलिर्यया। वक्रयेत्यर्थः। एवं भूतया भ्रुकुट्या कराले भीषणे। 'करालं दन्तुरे तुङ्गे

---

१ ललाटभासिनम्. २ फणा. ३ उपरिपतत्परिमल. ४ मायूरपिच्छा०, मयूरपिच्छच्छत्रा. ५ मृग. ६ रञ्जयन्तमिव. ७ दिक्कुञ्जर. ८ कालिका. ९ क्रूरजातितया.

त्रिपताकोग्रभ्रुकुटिकराले ललाटफलके प्रबलभक्त्याराधितया मत्परिग्रहोयमिति कात्यायन्या त्रिशूलेनेवाङ्कितम्, उपजातपरिचयैरनुगच्छद्भिः श्रमवशाद् दूरविनिर्गताभिः स्वभावपाटलतया शुष्काभिरपि हरिणशोणितमिव क्षरन्तीभिर्जिह्वाभिरावेद्यमानखेदैर्विवृतमुखतया स्पष्टदृष्टदन्तांशून्दंष्ट्रान्तराललग्नकेसरिसटानिव सृक्कभागानुद्वहद्भिः स्थूलवराटकमालिकापरिगतकण्ठैर्महावराहदंष्ट्राप्रहारजर्जरैरल्पकायैरपि महाशक्तित्वादनुपजातकेसरैरिव केसरिकिशोरकैर्मृगवधूवैधव्यदीक्षादानदक्षैरनेकवर्णैः श्वभिरतिप्रमाणाभिश्च केसरिणामभयप्रदानयाचनार्थमागताभिः सिंहीभिरिव कौलेयककुटुम्बिनीभिरनुगम्यमानं, कैश्चिद्गृहीतचमरबालगजदन्तभारैः कैश्चिदच्छिद्रपर्णबद्धमधुपुटैः कैश्चिन्मृगपतिभिरिव गजकुम्भमुक्ताफलनिकरसनाथपाणिभिः कैश्चिद्यातुधानैरिव गृहीतपिशितभारैः कैश्चित्प्रमथैरिव केसरिकृत्तिधारिभिः कैश्चित्क्षपणकैरिव मयूरपिच्छवाहिभिः कैश्चिच्छिशुभिरिव काकपक्षधरैः कैश्चित्कृष्णचरितमिव दर्शयद्भिः समुत्खातविधृतगजदन्तैः कैश्चिज्जलदागमादिव-

---

भीषणे चाभिधेयवत्' इति मेदिनी। यद्वा बद्धा या त्रिपताका त्रिरेखारूपं विशिष्टं चिह्नं तयोग्राभ्यां भ्रुकुटिभ्यां च कराले। मत्परिग्रहः स्वीकृतः परिजनः। 'परिग्रहः कलत्रे च मूलस्वीकारयोरपि। शपथे परिवारे च' इत्यजयः। ललाटफलके विशालालिके अङ्कितं चिह्नितम्। **उपजातेति।** उपजातपरिचयैः श्वभिः कौलेयककुटुम्बिनीभिश्च अनुगम्यमानम्। **श्रमवशेति**—एतादृशीभिर्जिह्वाभिरावेद्यमानो बोध्यमानः खेदः श्रमो येषां तैः। **स्पष्टेति**—स्पष्टं दृष्टा दंतांशवो दशनकिरणा येभ्यः। अत एव दंष्ट्रान्तरालेषु लग्नाः केसरिसटा येषां तानिव। सटानां पिङ्गत्वाद्दन्तकिरणसाम्यम्। सृक्कभागानोष्ठप्रान्तदेशान्। वराटकमाला कपर्दकमाला। अनेकवर्णैः अनेक वर्णा येषां तैः। श्वभिर्विश्वकद्रुभिः। अतिप्रमाणाभिः प्रचण्डाभिः। कौलेयककुटुम्बिनीभिः शुनीभिः। **कैश्चिदिति**—शबरवृन्दैः परिरक्षितम्। शबरवृन्दान्येव विशेषयति। गृहीताः चमराणां चमरमृगाणां बाला बालधयस्तेषां गजदन्तानां च भारा यैः। **अच्छिद्रेति**-अच्छिद्रैः पर्णैः अच्छिद्रेषु वा पर्णेषु बद्धानि मधुनो माक्षिकस्य पुटानि यैः। यातुधानैः राक्षसैः। पिशितं मांसम्। प्रमथैः शिवगणैः। 'प्रमथाः स्युः पारिषदाः' इत्यमरः। कृत्तिश्चर्म। क्षपणकैर्दिगम्बरैः। गजकुम्भेत्यारभ्य मयूरपिच्छधारिभिरिति यावदभङ्गश्लेषः। काकपक्षधरैः काकानां पक्षाणां धरन्तीति धरास्तैः। पक्षे काकपक्षः शिखण्डकः। शिखण्डधारिभित्युभयत्र वार्थः। **समुत्खातेति**—आदौ समुत्खाताः पश्चाद्विधृता गजदन्ता यैः। अत एव कृष्णचरितमिव दर्शयद्भिः। कंसवधसमये कृष्णेनापि गजदन्त उत्पाट्य गृहीत आसीदिति तत्साम्यम्। **जलध-**

---

१ पट्टे. २ वर. ३ दंष्ट्रांशून्दन्तान्तराल. ४ विभिन्नगजकुम्भ. ५ पिशिताहारैः. ६ धारिभिः.

सैरिव जलधरच्छायामलिनाम्बरैरनेकवृत्तान्तैः शबरवृन्दैः परिवृतम्, अरण्यमिव सखड्गधेनुकम्, अभिनवजलधरमिव मयूरपिच्छचित्रचापधारिणं, बकराक्षसमिव गृहीतैकचक्रम्, अरुणानुजमिवोद्धृतानेकमहानागदशनं, भीष्ममिव शिखण्डिशत्रुं, निदाघदिवसमिव सततािवर्भूतमृगतृष्णं, विद्याधरमिव मानसवेगं, पराशरमिव योजनगन्धानुसारिणं, घटोत्कचमिव भीमरूपधारिणम्, अचलराजकन्यकाकेशपाशमिव नीलकण्ठचन्द्रकाभरणं, हिरण्याक्षदानवमिव महावराहदंष्ट्राविभिन्नवक्षःस्थलम्, अतिरागिणमिव कृतबहुबन्दीपरिग्रहं, पिशिताशनमिव

**रेति**—जलधरच्छायेव मलिनानि अम्बराणि वस्त्राणि येषाम्। पक्षे जलधरच्छायया मलिनमम्बरं व्योम येषु। **सखड्गेति**—खड्गधेनुका कृपाणिका तया सहितम्। पक्षे खड्गा गण्डका धेनुका वशा यद्वा खड्गधेनुका गण्डकस्त्रियस्ताभिः सहितम्। **मयूरेति**—मयूरपिच्छैश्चित्रं चापं धरतीत्येवंशीलम्। पक्षे मयूरपिच्छवच्चित्रं चापं शक्रधनुस्तद्धारिणम्। **गृहीतेति**—गृहीतमेकं चक्रं येन। पक्षे गृहीता एकचक्राभिधाना पुरी येन। अरुणानुजमिव गरुडमिव। **उद्धृतेति**—उद्धृता अनेकमहानागानां बृहद्धस्तिनां दशना दन्ता येन। पक्षे उद्धृता ये अनेके महानागा महासर्पास्तान्दशतीति तम्। **शिखण्डीति**—शिखण्डिनो मयूराः। पक्षे शिखण्डी द्रुपदपुत्रः स शत्रुर्यस्य। ०मृगतृष्णं—मृगाणां तृष्णा हननेच्छा। पक्षे मृगतृष्णा मरीचिका। मानसवेगं मानेनाहंकारेण सवेगं यद्वा मनोवेगम्। पक्षे मानसे तन्नामके सरसि सवेगम्। पराशरो व्यासपिता। योजनं गन्धो यस्मिन्निति योजनगन्धः कस्तूरीमृगः। अर्शआदित्वादच्प्रत्ययः। तमनुसरतीति तम्। पक्षे योजनगन्धा सत्यवती व्यासमाता। सापि पराशरप्रसादाद्योजनगन्धि शरीरं लेभे। तदुक्तं महाभारते—तस्यास्तु योजनाद्गन्धमाजिघ्रन्त नरा भुवि। तस्या योजनगन्धेति ततो नामापरं स्मृतम्॥ **भीमेति**—भीमं भीषणं। पक्षे भीमस्य द्वितीयपाण्डवस्य रूपधारिणं तत्पुत्रत्वात्। **नीलेति**—नीलकण्ठो मयूरः तस्य चन्द्रका मेचकास्त एवाभरणान्यलंकारा यस्य तेषामा समन्ताद्भरणं यस्मिन्निति वा तथा। पक्षे नीलकण्ठस्य शिवस्य यश्चन्द्र एव चन्द्रकः स आभरणं यस्य स तथा तम्। हिरण्याक्षः हिरण्यकशिपोर्भ्राता। **महेति**—महावराहा बृहत्कायाः सूकरास्तेषां दंष्ट्राभिर्विभिन्नं कृतक्षतं वक्षस्थलं यस्य। पक्षे महावराहो वराहरूपधारी भगवान्विष्णुस्तेन धरोद्धरणसमये विभिन्नं विदारितं वक्षस्थलं यस्य। एषा कथा हरिवंशे द्रष्टव्या। इह विस्तरभिया नोच्यते। अतिरागिणम्—अतिविषयाभिलाषिणम्। **कृतेति**—कृता बन्द्यो बन्दीकृताः स्त्रियः परिग्रहो येनेत्यभङ्गश्लेषः। यद्वातिराग्यतिशयेन यशसोभिलाषुकः। अस्मिन्नर्थे कृतो बहूनां बन्दिनां स्तुतिपाठकानां परिग्रहः स्वीकारो येनेत्यर्थः। 'श्लेषे स्वरो न गण्यते' इति न्यायेन ह्रस्वदीर्घार्थः श्लेषः।

१ मलिनैः. २ ण्याख्य०. ३ बन्दि.

रैक्तलुब्धकं, गीतकलाविन्यासमिव निषादानुगतम्, अम्बिकात्रिशूलमिव महिषरुधिरार्द्रकायम्, अभिनवयौवनमपि क्षपितैबहुवयसं, कृतसारमेय-संग्रहमपि फलमूलाशनं, कृष्णमप्यसुदर्शनं, स्वच्छन्दप्रचारमपि दुर्गैकशरणं, क्षितिभृत्पादानुवर्तिनमपि राजसेवानभिज्ञम्, अपत्यमिव विन्ध्यस्य, अंशावतार-मिव कृतान्तस्य, सहोदरमिव पापस्य, सारैमिव कलिकालस्य, भीषणमपि महा-सत्त्वतया गम्भीरमिवोपलक्ष्यमाणम्, अनभिभवनीयाकृतिं मातङ्गकनामानं शबर-सेनापतिमपश्यम् । अभिधानं तु पश्चात्तस्याहमश्रौषम् ।

आसीच्च मे मनसि । अहो मोहप्रायमेतेषां जीवितं साधुजनविगर्हितं च चरितम् । तथा हि । पुरुषपिशितोपहारे धर्मबुद्धिः । आहारः साधुजनैनि-न्दितो मधुमांसादिः । श्रमो मृगया । शास्त्रं शिवारुतम् । समुपदेष्टारः

पिशिताशनो मांसभक्षकः । **रक्तेति**–रक्ता अनुरक्ता लुब्धका व्याधा यस्मिन्स तथा । पक्षे रक्ते क्षतजे लुब्ध एव लुब्धकः सतृष्णः । विन्यासो रचना । **निषादेति**—निषादा भिल्लाः पक्षे निषादस्तन्त्रीकण्ठोत्थितः स्वरविशेषः । 'निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे' । इति मेदिनी । **महिषेति**–महिषो लुलायः । पक्षे महिषासुरः । शेषमुभयत्र समानम् । **अभिनवेति**–इतो विरोधाभासाः । **क्षपितेति**–क्षपितानि बहूनि वयांसि बाल्ययौवनादीनि येनेति विरोधः । परिहारपक्षे क्षपितानि बहूनि वयांसि पक्षिणो येन । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' । इति मेदिनी । **कृतेति**–कृतः सारस्य धनस्य मेयस्य मातुं योग्यस्य धान्यादेः संग्रहो येन तादृशमपि फलमूलमश्नातीति फलमूलाशनमिति विरोधः । कृतः सारमे-याणां विश्वकद्रूणां संग्रहो येनेति परिहारः । कृष्णं विष्णुमपि नास्ति सुदर्शनः तन्नामकचक्रं यस्येति विरोधः । परिहारपक्षे कृष्णं श्यामवर्णं, अशोभनं भीममिति यावत् दर्शनं यस्यैवंभूतं च । **दुर्गेति**–दुर्गमेवैकं शरणं निवासस्थानं यस्येति विरोधः । दुर्गा भवान्येका शरणं रक्षित्री यस्येति परिहारः । **क्षितिभृदिति**–क्षितिभृन्नृपः । तस्य पादावनुवर्तते इति । परिहारपक्षे क्षितिभृतः पर्वतास्तेषां पादाः प्रत्यन्तपर्वताः । अपत्यमिवेत्यनेन विशालत्वमुक्तम् । सारं सर्वस्वम् । **अनभीति**–अनभिभवनीया अधृष्या अतिरस्करणीया वा आकृतिर्यस्य । **आसीदिति**–इमे विचारा मम चेतसि प्रादुरासन्नित्यर्थः । मोहप्रायमज्ञानप्रचुरम् । **पुरुषेति**–अम्बिकायै नरमां-सार्पणमेव धर्मानुष्ठानमित्येषां मतमित्यर्थः । मधु मद्यम् । **श्रम इति**–हिंसापापकारीत्यर्थः । **शास्त्रमिति**–शास्त्रं कर्तव्यस्य निदर्शकम् । 'शास्त्रमुच्चस्वरवेदपाठः । प्रबोधजनकत्वात्तदुप-मानम्' इति भानु० । कौशिका घूकाः । उपदेष्टारः-तेषां विशिष्टघूत्कारश्रवणेन कर्तव्याकर्तव्यनिर्ण-

१ बहुरक्त. २ ०वयस्कम्. ३ सारथिम्. ४ घोरमोह, मोहमाज्य. ५ निबर्हितम्. ६ गर्हितः.

सदसतां कौशिकाः । प्रज्ञा शकुनिज्ञानम् । परिचिताः श्वानः । राज्यं शून्या-स्वटवीषु । आपानकमुत्सवः । मित्राणि क्रूरकर्मसाधनानि धनूंषि । सहाया विषदिग्धमुखा भुजंगा इव सायकाः । गीतमुत्सादकारि मुग्धमृगाणाम् । कलत्राणि बन्दीगृहीताः परयोषितः । क्रूरात्मभिः शार्दूलैः सह संवासः । पशुरुधिरेण देवतार्चनम् । मांसेन बलिकर्म । चौर्येण जीवनम् । भूषणानि भुजंगमणयः । वनगजमदैरङ्गरागः । यस्मिन्नेव कानने निवसन्ति तदेवोत्खातमूलमशेषतः कुर्वते । इति चिन्तयत्येव मयि स शबरसेनापतिरटवीभ्रमणसमुद्भवं श्रममपनिनीषुरागत्य तस्यैव शाल्मलीतरोरधश्छायायामवतारितकोदण्डस्त्वरितपरिजनोपनीतपल्लवासने समुपाविशत् । अन्यतमस्तु शबरयुवा ससंभ्रममवतीर्य तस्मात्करयुगलपरिक्षोभिताम्भसः सरसो वैदूर्यद्रवानुकारि प्रलयदिवसकरकिरणोपतापादम्बरैकदेशमिव विलीनमिन्दुमण्डलादिव प्रस्यन्दितं द्रुतमिव मुक्ताफलनिकरमत्यच्छतया स्पर्शानुमेयं हिमजडमरविन्दकोशरजःकषायमम्भः कमलिनीपत्रपुटेन प्रत्यग्रोद्धृताश्च धौतपङ्कनिर्मलमृणालिकाः समुपाहरत् । आपीतसलिलश्च सेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत् । अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैःशनैरभिमतं दिगन्तरमयासीत् ।

एकतमस्तु जरच्छबरस्तस्मात्पुलिन्दवृन्दादनासादितहरिणपिशितः पिशि-

---

यात् । आपानकं—सर्वैः मिलित्वा मधुपानम् । उत्सादकारि विनाशविधायि । गीतेनाकृष्टत्वात्स्तब्धतां याता हि ते सौलभ्येन शरव्यतां यान्तीति प्रसिद्धम् । 'मुग्ध' इत्यनेन कारुण्यास्पदत्वं, उत्सादकारि एतद्गीतमित्यजानत्तां मौढ्यं च सूचितम् । अङ्गरागः विलेपनम् । **उत्खातेति**-अनेनाकृतज्ञता दर्शिता । अपनिनीषुः दूरीकर्तुमिच्छुः । **अवतारितेति**—अवतारितमवरोपितं स्वस्कन्धादिति शेषः कोदण्डं धनुर्येन स तथा । अवतारितमनाधिज्यं कृतम्, इति भानु० । शबरयुवा शबरश्चासौ युवा चेति कर्मधारयः । **करेति**—करयुगलेन परिक्षोभितं विलोडितं । शैवलाद्यपसारणार्थमिति भावः । अम्भो यस्य । **वैदूर्येति**—विदूरात्प्रभवन्तीति वैदूर्याणि बालवायजानि मणयः । 'वैदूर्यं बालवायजम्' इति विश्वः । 'विदूराञ्ज्यः' इति ञ्यप्रत्ययः । तेषां द्रवो द्रुतिः । **प्रलयेति**—प्रलयसमये यो दिवसकरः सूर्यस्तस्य किरणोपतापादुष्णात् । हिमजडं तुहिनशीतलम् । प्रत्यग्रोद्धृतास्तत्कालमुद्धृताः । **धौतेति**—धौतः पङ्को यासामत एव निर्मलाः । सैंहिकेयो राहुः । **एकतम इति**—जरच्छबरो वृद्धभिल्लः । पिशिताशनो व्याघ्रादिः राक्षसो वा

---

१ उत्साह. २ रुधिरेणैव. ३ फणामणयः. ४ जलशिशिरम्. ५ शबरसेनापतिः.

ताशन इवातिविकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत। अन्तरिते च शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूलतापरिवेषभीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि श्येन इव विहगामिषास्वादलालसः सुचिरमारुरुक्षुस्तं[1] वनस्पतिमामूलादपश्यत्। उत्क्रान्तमिव तस्मिन्क्षणे तदालोकन[2]भीतानां शुककुलानामसुभिः। किमिव हि दुष्करमकरुणानाम्। यतः स तमनेकतालतुङ्गमभ्रंकषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्य[3]ताननुपजातोत्पतनशक्तीन् कांश्चिदल्पदिवसजातान्गर्भच्छविपाटलाञ्छाल्मलीकुसुमशङ्कामुपजनयतः कांश्चिदुद्भिद्यमानपक्षतया नलिनसंवर्तिका[4]नुकारिणः कांश्चिदर्कफलसदृशान्कांश्चिल्लोहितायमानचञ्चुकोटीनीषद्विघटितदलपुटपाटलमुखानां कमलमुकुलानां श्रियमुद्वहतः कांश्चिदनवरतशिरःकम्पव्याजेन निवारयत इव प्रतीकारासमर्थानेकैकतया फलानीव तस्य वनस्पतेः शाखान्तरेभ्यः[5] कोटरेभ्यश्च शुकशावकानग्रहीत्। अपगतासूंश्च कृत्वा क्षितावपातयत्।

तातस्तु तं महान्त[6]मकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमालोक्य[7] द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारकां[8] विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्नुच्छुष्कतालुरात्मप्रतीकाराक्षमस्त्रासस्रस्तसंधिशिथिलेन पक्षसंपुटेनाच्छाद्य मां तत्कालोचित[9]प्रतीकारं मन्यमानः स्नेहपरवशो मद्रक्षणाकुलः[10] किंकर्तव्यताविमूढः[11] क्रोडविभागेन मामवष्टभ्य तस्थौ। असावपि पापः क्रमेण

---

तद्वदतिभीषणं दर्शनमाकृतिर्यस्य। **कपिलेति**-कपिला पिङ्गला या भ्रूलता तस्याः परिवेषः परिधिस्तेन भीषणया। उत्क्रान्तमिवासुभिः प्राणाः शरीरान्निर्गता इव। **अनेकेति**-अनेके तालास्तुङ्गः। छविः कान्तिः। **नलिनेति**-नलिनानां कमलानां संवर्तिका नवदलम्। 'संवर्तिका नवदलम्' इत्यमरः। तस्या अनुकारिणः सत्सदृशान्। 'अर्को मन्दारः' इ. भानु.। ईषद् विघटितं विकासितं यद्दलपुटं तेन पाटलं मुखं येषाम्। **तातस्त्विति**-अकाण्डे अकाले। उपप्लवमुपद्रवम्। वेपथुः कम्पः। उद्भ्रान्ता त्रस्ता उद्घूर्णिता वा अतएव तरला तारका यस्यास्ताम्। विषादेन शून्यां हतप्रभाम्। उच्छुष्कं तालु यस्य। त्रासाद्भयात्स्रस्ताः शिथिला ये सन्धिबन्धास्तैः श्लथेन। स्नेहपरवशः प्रीत्याधीनः। मद्रक्षणाकुलो मद्रक्षणव्यग्रः। किंकर्तव्यताविमूढः किमिदानीं कर्तव्यमित्यस्य भावः किंकर्तव्यता तत्र विमूढः। तत्कालोचितकर्तव्यपरिच्छे-

---

१ सुरुचिरम्. २ तदालोक. ३ आधिरुह्य. ४ नलिनी. ५ शाखासन्धिभ्यः. ६ अतिमहान्तम्, ७ अवलोक्य. ८ तरलतर, तरलतारकः. ९ ०लोचितम्. १० अवक्षाकुलः. ११ तामूढः.

शाखान्तरैः संचरमाणः कोटरद्वारमागत्य जीर्णासितभुजंगभोगभीषणं प्रसार्य विविधवनवराहवसाविस्रगन्धिकरतलं कोदण्डगुणाकर्षणव्रणाङ्कितप्रकोष्ठमन्तकदण्डानुकारिणं वामबाहुमतिनृशंसो मुहुर्मुहुर्दत्तचञ्चुप्रहारमुत्कूजन्तमाकृष्य तातमपगतासुमकरोत्। मां तु स्वल्पत्वाद्भयसंपिण्डिताङ्गत्वात्सावशेषत्वादायुषः कथमपि पक्षसंपुटान्तरगतं नालक्षयत्। उपरतं च तमवनितले शिथिलशिरोधरमधोमुखममुञ्चत्। अहमपि तच्चरणान्तराले प्रवेशिताशिरोधरो निभृतमङ्कनिलीनस्तेनैव सहापतम्। अवशिष्टपुण्यतया तु पवनवशसंपुञ्जितस्य महतः शुष्कपल्लवराशेरुपरि पतितमात्मानमपश्यम्। अङ्गानि येन मे नाशीर्यन्त। यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहमवशीर्णपर्णसवर्णत्वादस्फुटोपलक्ष्यमाणमूर्तिः पितरमुपरतमुत्सृज्य नृशंस इव प्राणपरित्यागयोग्येऽपि काले बालतया कालान्तरभुवः स्नेहरसस्यानभिज्ञो जन्मसहभुवा भयेनैव केवलमभिभूयमानः किंचिदुपजाताभ्यां पक्षाभ्यामीषत्कृतावष्टम्भो लुठन्नितस्ततः कृतान्तमुखकुहरादिव विनिर्गतमात्मानं मन्यमानो नातिदूरवर्तिनः शबरसुन्दरीकर्णपूररचनोपयुक्तपल्लवस्य संकर्षणपटनीलच्छाययोपहसत इव गदाधरदेहच्छविमच्छैः

---

दाक्षमः। **जीर्णेति**–जीर्णो जरठो योऽसितभुजंगस्य कृष्णसर्पस्य भोगः शरीरं तद्वद्भीषणम्। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः'। इत्यमरः। वसा मेदस्तया विस्रो गन्धो यस्य तद्विस्रगन्धि आमगन्धि। 'उपमानाच्च' इति गन्धस्य इदादेशः। प्रकोष्ठः मणिबन्धः। 'प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च'। इति मेदिनी। उत्कूजन्तमुत्प्राबल्येन कूजन्तमाक्रन्दमानम्। **भयेति**–भयात्त्रासात्संपिण्डितं संकुचितं गात्रं शरीरं यस्य तम्। शिरोधरा ग्रीवा। अशीर्यन्त चूर्णितानि। कालान्तरभुवः कालान्तरे प्रबुद्धवयसि। अयं मम पिता अहमस्य पुत्र इति सम्बन्धज्ञानक्षमकाले इत्यर्थः। भवतीति तस्य। कृतावष्टम्भः आत्मानं किंचिदवष्टभ्येत्यर्थः। मुखकुहरान्मुखविवरात्। कर्णपूर०–कर्णपूराणि कर्णाभरणानि तेषां रचनायां निर्मितौ उपयुक्ताः पल्लवा यस्य। संकर्षणो बलभद्रः तस्य पटस्तद्वन्नीला छाया कान्तिस्तया। बलभद्रो हि नीलाम्बरः। 'नीलाम्बरो रौहिणेयः' इत्यमरः। गदाधरो विष्णुः। **कालिन्दीति**–तस्या नीलजलत्वादुभयोः साम्यम्। छदानि पत्राणि। विटपः शाखाविस्तारोऽस्यास्तीति विटपी वृक्षः।

---

१ विमिश्र. २ अनवरतकोदण्ड. ३ स्वल्पशरीरत्वात्. ४ तत्पक्षपुटान्तर०. ५ तातम. ६ ०न्तरे० ७ अङ्कदेश, अङ्कविलीन. ८ आयुषोऽवशिष्टतया. ९ पवनवश्येन पु० पवनवशात्पुं०. १० नावाशीर्यन्त ११ कृतात्मनावष्टम्भः. १२ नीलदलच्छायया, ०लया छायया.

कालिन्दीजलच्छेदैरिव शिशिरितकन्दरं वनकरिमदसलिलैरिवोपसिक्तकिसलयस्य विन्ध्याटवीकेशपाशश्रियमुद्वहतो दिवाप्यन्धकारितशाखान्तरस्याप्रविष्टसूर्यकिरणमतिगहनमपरस्येव पितुरुत्सङ्गमतिमहतस्तमालविटपिनो मूलदेशमाविशम् ।

अवतीर्य च स तेन समयेन क्षितितलविप्रकीर्णान्संहृत्य ताञ्छुकशिशूननेकलतापाशसंयतानाबध्य पर्णपुटेतित्वरितगमनः सेनापतिगतेनैव वर्त्मना तामव दिशमगच्छत् । मां तु लब्धजीविताशं प्रत्यग्रपितृमरणशोकशुष्कहृदयमतिदूरपातादायासितशरीरं संत्रासजाता सर्वाङ्गोपतापिनी बलवती पिपासा परवशमकरोत् । अनया च कालकलया सुदूरमतिक्रान्तः स पापकृदिति किंचिदुन्नमितकंधरो भयचकितया दृशा दिशोवलोक्य तृणेपि चलति पुनः प्रतिनिवृत्त इति तमेव पदे पदे पापकारिणमुत्प्रेक्षमाणो निष्क्रम्य तस्मात्तमालतरुमूलात्सलिलसमीपमुपसर्तुं प्रयत्नमकरवम् ।

अजातपक्षतया च नातिस्थिरचरणसंचारस्य मुहुर्मुहुर्मुखेन पततो मुहुस्तिर्यङ्निपतन्तमात्मानमेकया पक्षपाल्या संधारयतः क्षितितलसंसर्पणश्रमातुरस्यानभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मुखस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम समभून्मनसि । अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति सर्वप्राणिनां प्रवृत्तयः । नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम् । एवमुपरतेपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि । धिङ् मामकरुणमतिनिष्ठुरमकृतज्ञम् । अहो सोढपितृमरणशोकदारुणं

**प्रत्यग्रेति**–प्रत्यग्रो नूतनो यः पितृमरणशोकस्तेन शुष्कं तप्तं हृदयं यस्य । आयासितं पीडितम् । पिपासा तृष्णा । कालकलया वेलयेत्यर्थः । **भयेति**–भयेन चकितया त्रस्तया । उत्प्रेक्षमाणः उत्पश्यमानः । **नातिस्थिरेति**–नातिस्थिरोतिदृढश्चरणयोः संचारो न्यसनप्रकारो यस्य । चरणाववष्टभ्य गन्तुमक्षमस्येत्यर्थः । मुखेन पूर्वकायेनेत्यर्थः । तिर्यक् पार्श्वयोरित्यर्थः । पक्षपाल्या छदसंहत्या । **क्षितीति**–क्षितितले यत्संसर्पणं तेन यो श्रमो भ्रान्तिस्तेनातुरस्य पीडितस्य । उन्मुखस्य श्रमवशादुन्नमितमुखस्य । अतिकष्टास्वतिकठिनासु । **अविकलेति**–न विकलानि अविकलानि स्वविषयग्रहणसमर्थानीन्द्रियाणि यस्य । **सोढेति**–सोढो यः पितृमरणशोकस्तेन दारुणं पीडाकरं यथा तथा । यद्वा सोढं पितृमरणशोकस्य दारुणं यस्मिन्कर्मणि

१ मदोपसिक्त. २ आबध्य. ३ अन्वगच्छत्. ४ जातवेपथुम्; जातसर्वाङ्ग. ५ विलोक्य. ६ तरुतल. ७ अनुपजात. ८ अधोमुखेनाप०. ९ श्रमा. १० स्वजीवित. ११ प्राणिनाम्. १२ ०मरणम्.

येन मया जीव्यते । उपकृतमपि नापेक्ष्यते । खलं हि खलु मे हृदयम् । मया हि लोकान्तरगतायामम्बायां नियम्य शोकवेगमाप्रसवदिवसात्परिणतवयसापि सता तैस्तैरुपायैर्मत्संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्राणाः । यदुपकारिणमपि तातमद्यापि क्वापि गच्छन्तं नानुगच्छन्ति । सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा । यदीदृगवस्थमपि मामयमायासयति जलाभिलाषः । मन्ये चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः । अद्यापि दूर एव सरस्तीरम् । तथा हि । जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत् । अस्फुटानि श्रूयन्ते सारसरसितानि । अयं च विप्रकर्षादाशामुखविसर्पणविरलः संचरति नलिनीखण्डपरिमलः । दिवसस्य चेयमतिकष्टा दशा वर्तते । तथा हि । रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकिरति करैः । अधिकामुपजनयति तृषामातपस्पर्शसंतप्तपांसुपटलदुर्गमा भूमिः । अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि । अप्रभुरस्म्यात्मनः । सीदति मे हृदयम् । अन्धकारतामुपयाति चक्षुः । अपि नाम खलो विधिरनिच्छतोपि मे मरणमद्योपपादयेत् ।

इत्येवं चिन्तयत्येव मयि—तस्मात्सरसो नातिदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म—तत्तनयश्च हारीतनामा तापसकु-

---

तद्यथा तथा । **मयेति**—हि लोकान्तरगतायामम्बायां शोकवेगं दुःखप्रसरं नियम्य अतिमहान्तमपि संवर्धनक्लेशं स्नेहवशादगणयता परिणतवयसापि सता तातेन आप्रसवदिवसात्तैस्तैरुपायैरहं परिपालित इति यत्तत्सर्वं मया एकपदे विस्मृतमित्यन्वयः । अतिकृपणाः अत्यन्तमनुदारा नीचा इति यावत् । न कंचिन्न सर्वमेव । द्वौ नञौ प्रकृतार्थं गमयतः । ईदृगवस्था यस्य तम् । विप्रकर्षात् दूरात् । **आशेति**—आशामुखेषु दिङ्मुखेषु यद्विसर्पणं प्रसरणं तेन विरलः स्वल्पः । अतिकष्टा दशा अतिसंतापकारिणी मध्याह्नावस्था । प्रखरो मध्याह्नसमय इत्यर्थः । अनलधूलिनिकरं वह्निकणसमूहम् । करैः किरणैर्हस्तैश्च । **आतपेति**—आतपस्पर्शात् संतप्तं यत्पांसुपटलं धूलिसमूहस्तेन दुर्गमा दुःखेन गन्तुं शक्या । अवसन्नानि क्लान्तानि । [illegible]लं न समर्थानि । **अप्रभुरिति**—हस्तपादादि चालयितुमक्षम इत्यर्थः । अपि नाम—मरणमुपपादयेच्चेद्वरमित्यर्थः । **इत्येवमिति**—मयीत्येवं चिन्तयति हारीतनामा तापसकुमारस्तदेव सरः सिस्नासुरुपागमदित्यन्वयः । सनत्कुमारः ऋषिप्रवरो ब्रह्मणः

---

१ ०पेक्षते. २ मे, मम प्राणाः. ३ अद्यातिगच्छन्तम्, तातमद्य क्वापि यान्तम्. ४ ईदृशावस्थम्. ५ अभिलाषयति. ६ दूरतः. ७ सरः. ८ एतानि चास्फुटानि. ९ अलमप्रभुः. १० अदूर.

मारकः सनत्कुमार इव सर्वविद्यावदातचेताः सवयोभिरपरैस्तपोधनकुमारकैरनुग- म्यमानस्तेनैव पथा द्वितीय इव भगवान्विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्तिः उद्यतो दिवसकरमण्डलादिवोत्कीर्णस्तडिद्भिरिव रचितावयवस्तप्तकनकद्रवेणेव गहि- रुपलिप्तमूर्तिः, आपिशङ्गावदातया देहप्रभया स्फुरन्त्या सबालातपमिव दिवसं सदावानलमिव वनमुपदर्शयन्, उत्तप्तलोहलोहिनीनामनेकतीर्थाभिषेकपूतानामंस- स्थलावलम्बिनीनां जटानां निकरेणोपेतः, स्तम्भितशिखाकलापः, खाण्डववनदि- धक्षया कृतकपटवटुवेष इव भगवान्पावकः, तपोवनदेवतानूपुरानुकारिणा धर्मशा- सनकटकेनेव स्फाटिकेनाक्षवलयेन दक्षिणश्रवणावलम्बिना विराजमानः, सकल- विषयोपभोगनिवृत्त्यर्थमुपपादितेन ललाटपट्टके त्रिसत्येनेव भस्मत्रिपुण्ड्रकेणालं- कृतः, गगनगमनोन्मुखबलाकानुकारिणा स्वर्गमार्गमिव दर्शयता सततमुद्ग्रीवेण स्फटिकमणिकमण्डलुनाध्यासितवामकरतलः, स्कन्धदेशावलम्बिना कृष्णाजिनेन नीलपाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निष्पतता धूमपटलेनेव परीतमूर्तिः, अभिनवबिससूत्रनिर्मितेनेव परिलघुतया पवनलोलेन निर्मांसविरलपार्श्वकप- ञ्जरमिव गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानः, देवतार्चना-

---

पुत्रः । अयं भगवते नारदायापि ब्रह्मविद्योपदेशं कृतवानिति छान्दोग्योपनिषदो ज्ञायते । उत्कीर्णः टङ्कव्यक्तीकृतावयवः । आ ईषत्पिङ्गला चासाववदाता निर्मला च तया । लोहिनीनां रक्तानाम् । स्तम्भितो बद्धः । **खाण्डवेति**—पुरा किल श्वेतकिनाम्नो राज्ञो द्वादशवार्षिके सत्रेऽनवरताज्यभक्षणादग्नेरुदरपीडा सञ्जाता । ततः स ब्रह्मोपदेशाद्ब्राह्मणरूपधारी कृष्णार्जुनयोः साहाय्यात्खाण्डववनं ददाहेति भारती कथात्रानुसन्धेया । दिधक्षा दग्धुमिच्छा । **धर्मेति**— धर्मशासनानि विधिनिषेधादिरूपा वेदाज्ञास्तासां कटकेन । उपपादितेन विहितेन । त्रिसत्येन— मनोवाक्कायलक्षणेन । त्रिपुण्ड्रकशब्दो व्याख्यातचरः । **गगनेति**—गगनगमने उन्मुखा या बलाका बिसकंठिका तस्या अनुकारिणा । **स्कन्धेति**—स्कन्धदेशे अवलम्बत इत्येवंशीलं तेन । नीला पाण्डुश्च भा यस्य । तपस्तृष्णा तपो मे प्रकृष्टं स्यादितीच्छा तया । **अन्तरिति**— अन्तः शरीराभ्यन्तराद्बहिर्निष्पतता निष्कामता । परीता व्याप्ता मूर्तिर्यस्य । **अभिनवेति**— अभिनवैर्नूतनैः बिससूत्रैः कमलनालतन्तुभिः निर्मितेन । **निर्मांसेति**—निर्गतं मांसं यस्य स तादृशोऽत एव विरलोऽसलग्नो यः पार्श्वकपञ्जरः पार्श्वास्थिसंचयस्तम् । पवनलोलतयास्थ्यन्तरेषु निचितत्वादिति भावः । **वामेति**—तथा च गोभिलसूत्रम्—'दक्षिणं बाहुमुद्धृत्य शिरोवधाय सव्येंसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवतीत्येवं यज्ञोपवीती भवति ।' इति ।

---

१ समानव. २ जटावलीनाम्. ३ पटु. ४ वि-अनु-लम्बिना. ५ उत्पादितेन. ६ स्फाटिकं. ७ अन्तरपगच्छता. ८ पार्श्वास्थि—पर्शुका—पञ्जरम्.

र्थमागृहीतवनलताकुसुमपरिपूर्णपर्णपटसनाथशिखरेणाषाढदण्डेन व्यापृतसव्येतर-पाणिः, विषाणाशिखरावलम्बिन्या उद्वहता स्नानमृदमुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन कुशकुसुमलतायास्यमानलोलदृष्टिना तपोवनमृगेणानुयातः, विटप इव कोमलवल्कलावृतशरीरो गिरिरिव समेखलो राहुरिवासकृदास्वादितसोमः पद्मनिकर इव दिवसकरमरीचिपो नदीतटतरुरिव सततजलक्षालनविमलजटः करिकलभ इव विकचकुमुददलशकलसितदशनो द्रौणिरिव कृपानुगतो नक्षत्रराशिरिव चित्रमृगकृत्तिकाश्लेषोपशोभितो घर्मकालदिवस इव क्षपितबहुदोषो जलधरसमय इव प्रशमितरजःप्रसरो वरुण इव कृतोदवासो हरिरिवापनीतनरकभयः प्रदोषारम्भ इव संध्यापिङ्गलतारकः प्रभातकाल इव बालातपकपिलो रविरथ इव दृढनियमिताक्षचक्रः सुराजेव

यज्ञस्य यज्ञार्थे वोपवीतं यज्ञोपवीतम् । आसमन्ताद् गृहीतानि आगृहीतानि—। सव्येतरो दक्षिणः । स्नानमृदं स्नानार्थं मृत्तिकाम् । **नीवारेति**—ऋषीणां शरीरस्थितिसाधनानां नीवाराणां मुष्टिदानं परमं प्रेम गमयति । **कुशेति**—कुशैः कुसुमलताभिश्चायास्यमाना आकृष्यमाणा अत एव लोला दृष्टिर्यस्य । विटपः स्तम्बः शाखा वा । 'विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' । इति विश्वः । वल्कलं त्वङ्निर्मिताच्छादनं त्वक् च । समेखलः—मेखला कटिसूत्रम् । पक्षे अद्रिनितम्बः । सोमः—सोमरसः । पक्षे चन्द्रमाः । **दिवसेति**—दिवसकरः सूर्यस्तस्य मरीचीन् पिबतीति स तथा । अत्र पञ्चाग्नितपो ध्वनितम् । 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।' इति स्मरणात् । सविताप्यग्निरेव—'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात् । 'दिवसकरस्य सूर्यस्यातपमयान्मरीचीन्पाति रक्षतीति स तथा' इति भानुचन्द्रस्तु चिन्त्यः । पक्षे सूर्यविकासित्वान्मरीचिपानम् । ०जटा तरुपक्षे शिफा । **विकचेति**—प्रफुल्लकुमुददलच्छेदवत्सिता धवला दशना दन्ता यस्य । पक्षे ०सितौ दशनौ यस्य । अभङ्गश्लेषः । द्रौणिः द्रोणाचार्यपुत्रोऽश्वत्थामा । **कृपेति**—कृपयानुगतः । पक्षे कृपः कृपाचार्योऽश्वत्थाम्नो मातुलः । **चित्रेति**—चित्रमृगस्य या कृत्तिका चर्म तस्या आश्लेषस्तेनोपशोभितः । पक्षे तत्तन्नामकनक्षत्रविशेषैरुपशोभितः । **क्षपितेति**—क्षपिता निरस्ता बहवो दोषा रागादयो येन । पक्षे क्षपिता ह्रासं प्रापिता बह्वी दोषा रात्रिर्येन । ०रजःप्रसरः—रजोगुणस्य प्रसरो व्यापारः । पक्षे रजःप्रसरो धूलिप्रसरणम् । उदवासः व्रतविशेषः । पक्षे उदके वासः । ०नरकभयः—हरिपक्षे अपनीतं दूरीकृतं नरकभयं तन्नामकदैत्यात् नरकस्य च भयं येन । **सन्ध्येति**—सन्ध्या दिनरात्रिसन्धिसमयस्तद्वत्पिङ्गला तारैव तारका यस्य । इदं महापुरुषलक्षणम् । तदुक्तम्—'क्षुद्रोऽपि चक्रवर्ती स्यात्पीततारकचक्षुषि ।' इति । पक्षे सन्ध्यया पिङ्गलाः तारका यस्मिन् । **दृढेति**—दृढं नियमितमक्षचक्रं येन अश्नुते व्याप्नोति विषयान्स्वसत्त्या संयोगेन वा इत्यक्षं इन्द्रियम् । अक्षाणां चक्रं समूहः । पक्षे अक्षो ध्रुवः । चक्रं प्रसिद्धम् ।

१ अनुगम्यमानः. २ दिनकर. ३ क्षपितदोषः. ४ पिशङ्ग.

निगूढमन्त्रसाधनक्षपितविग्रहो[1] जलनिधिरिव करालशङ्खमण्डलावर्तगर्तो[2] भगीरथ इवासकृद्दृष्टगङ्गावतारो[3] मधुकर इवासकृदनुभूतपुष्करवनवासो वनचरोपि कृत-महालयप्रवेशोऽसंयतोपि मोक्षार्थी सामप्रयोगपरोपि सततावलम्बितदण्डः सुप्तोपि प्रबुद्धः संनिहितनेत्रद्वयोपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत्।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि[4] च सदा खलु भवन्ति सतां चेतांसि। यतः स मां तदवस्थमालोक्य समुपजातदयः समीपवर्तिनमृषिकुमारकमन्यतमम-[5]ब्रवीत्। अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परि-

सुराजा—स्वकार्यदक्षो नृपः। **निगूढेति**—निगूढं रहसि यन्मन्त्रसाधनं तत्तन्मन्त्राधिष्ठात्रीणां देवतानामाराधनं तेन क्षपितो विग्रहः शरीरं येन स तथोक्तः। पक्षे निगूढो सुगुप्तो मन्त्रः साधनं सेना च ताभ्यां क्षपितो विग्रहो युद्धं येन। **करालेति**—करालो तुङ्गो यः शंखः भालश्रवोन्तरं तस्य मण्डलं तत्रावर्तः तस्य गर्तो यस्य। यद्वा करालं शंखमण्डलं आवर्तः गर्तश्च यस्य स तथा। तादृशावर्तश्च महातपस्विलक्षणम्। पक्षे करालानि दन्तुराणि शङ्खमण्डलानि आवर्ता अम्भसां भ्रमाश्च गर्ताश्च यस्मिन्स तथा। **असकृदिति**—असकृद्वारंवारं दृष्टो गङ्गाया अवतारो घट्टो येन। 'घट्टस्तीर्थावतारे' इति कोषः। पक्षे गङ्गाया अवतारः। तत्कथा तूक्ता। **पुष्करेति**—पुष्करं जलं तेन सहितं वनम्। पुष्करं तीर्थविशेषो वा। तदुक्तं महा-भारते—यथा सुराणां सर्वेषामादिस्तु मधुसूदनः। तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते॥ इति पक्षे पुष्करवनं कमलखण्डम्। **वनेति**—वनचरोपि कृतो महालयेषु पृथुप्रासादेषु प्रवेशो येनेति विरोधो वने तादृशां प्रासादानामसत्त्वात्। परिहारपक्षे कृतो महालये ब्रह्मसमाधौ प्रवेशो येन। तदुक्तम्–'अधोमुख्या कुण्डकिन्योर्ध्वे मुखे कृते सति ब्रह्मरन्ध्रपर्यन्तं नीतायां तस्यामेकान्तेना-वस्थानं ब्रह्मणि लयः'। इति। **असंयत इति**—संयमः [ध्यानं धारणा समाधिरिति] 'त्रयमेकत्र संयमः' इति पातञ्जलोक्तो मोक्षसाधकः। असंयमवानपि मोक्षार्थीति विरोधः। परिहारस्तु असंयतः संसारपाशैरबद्धः। **सामेति**—सामदण्डावुपायभेदौ परस्परविरुद्धौ। तत्र प्रियवचनादिना क्रोधोपशमनं साम। परिहारपक्षे सामानि सामवेदसूक्तानि दण्डः पाला-शादिः। **सुप्त इति**—सुप्तोपि प्रबुद्धो जाग्रदिति विरोधः। परिहारपक्षे प्रबुद्धः सञ्जातप्रकृष्ट-ज्ञानः। केचित् शोभना प्ता जटा यस्य स सुप्तः इति परिहारमाहुः। 'प्ता जटायां च राक्षस्याम्' इति क्वचित्पुस्तकेषु हैमः। **परित्यक्तेति**—परिहारपक्षे परित्यक्ता वामनलोचनाः कामिन्यः परित्यक्तं वामासु सुन्दरस्त्रीषु लोचनं कटाक्षपातनं येनेति वा। **अकारणेति**—अकारणेन हेतुव्यतिरेकेण मित्राणि प्रियकारीणि। कथमपि केनापि कारणेन।

१ क्षयित. २ नाभिगर्तः. ३ इव दृष्ट. ४ करुणः. ५ समीपतर.

च्युतः । श्येनमुखपरिभ्रष्टेन वानेन[1] भवितव्यम् । तथा हि । अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति[2] मुहुर्मुहुरत्युल्बणं श्वसिति मुहुर्मुहुश्चञ्चुपुटं विवृणोति । न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवायमसुभिर्न वियुज्यते[3] तावदेव गृहाणेममवतारय सलिलसमीपम् । इत्यभिधाय तेन मां सरस्तीरमनाययत् । उपसृत्य च जलसमीपमेकदेशनिहितदण्डकमण्डलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानित[4]मुखमङ्गुल्या कतिचित्सलिलबिन्दूनपाययत् । अम्भःक्षोदकृतसेकं च समुपजातनवीनप्राणमुपतटप्ररूढस्य नलिनीपलाशस्य[5] जलशिशिरायां छायायां निधाय समुचितमकरोत्स्नानविधिम् । अभिषेकावसाने चानेकप्राणायामैः पूतो[6] जपन्पवित्राण्यघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्रपुटेन भगवते सवित्रे दत्त्वार्घमुदतिष्ठत् । आगृहीतधौतधवलवल्कलश्च सहज्योत्स्न[7] इव संध्यातपः करतलनिर्धूनन[8]विशदजटः कमण्डलुमापूर्य शुचिना[9] सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन सकलेन तेन मुनिकुमारककदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत् ।

अनतिदूरमिव गत्वा दिशि दिशि सदासंनिहितकुसुमैः फलै[10]स्तालतिलकतमालहिन्तालबकुलबहुलैः एलालताकुलितनालिकेरीकलापैः लोलै[11]र्लोध्रलवलीलवङ्ग--

---

**अतीति**—अतिशयेनातिदूरोऽतिदवीयांस्तस्य भावस्तत्ता तया । अत्युल्बणं प्रव्यक्तम् । मुक्तप्रयत्नम्—मुक्तः प्रयत्न इष्टवस्त्वनुकूलशरीरव्यापाररूपो येन । उत्तानितमूर्ध्वीकृतं मुखं यस्य तादृशं माम् । **अम्भ इति**—अम्भःक्षोदैर्जलकणिकाभिः कृतः सेकः यस्य । समुपजाता नवीनाः प्राणा यस्मिन् । समुचितमाह्निकप्राप्तम् । प्राणायामः प्राणानामन्तर्निरोधः । अघमर्षणानि [ अघं पाप मृष्यते उत्पन्नत्वेपि नाशनेन कर्माक्षमत्वात्सह्यते एभिः ] अब्देवतास्तुतिरूपा ऋचः । उक्तं च—यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥ इति । 'सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ।' इत्यमरश्च । उन्मुखः सूर्योन्मुखः सन्नित्यर्थः । आगृहीतं परिहितं धौतं क्षालितं वल्कलं येन । संध्यातपोऽर्थात्सायंतनः । निर्धूननमाच्छोटनम् । ०कदम्बकेन समूहेन । **अनतीति**—अनतिदूरमिव गत्वाश्रममपश्यमिति दूरेणान्वयः । **सदेति**—संनिहितानि विद्यमानानि । 'हस्तग्राह्याणि' इति भानु० । **तालेति**—हिन्तालस्तृणद्रुमविशेषः । एते बहुला येषु तानि तैः । एलालताभिः आकुलिता व्याप्ताः । **लोलेति**—लोलाः—इत्येतेषां पल्लवा येषु तैः ।

---

१ अनेन प्रायः. २ वमति. ३ विमुच्यते. ४ उन्नमित. ५ नवनलिनदलस्य. ६ पूतोऽपि, पूजितः, ७ सज्योत्स्नः. ८ निर्धूनविशद. ९ कमलकिञ्जल्कसुरभिणा शुचिना. १० पटलैः. ११ आलोल.

पल्लवैरुल्लसितचूतरेणुपटलैरलिकुलझंकारमुखरसहकारैरुन्मदकोकिलकुलकलापकोलाहलिभिरुत्फुल्लकेतकीरजःपुञ्जपिञ्जरैः पूगीलतादोलाधिरूढवनदेवतैस्तारकावर्षमिवाधर्मविनाशपिशुनं कुसुमनिकरमनिलचलितमनवरतमतिधवलमुत्सृजद्भिः संसक्तपादपैः काननैरुपगूढम्, अचकितप्रचलितकृष्णसारशतशबलाभिरुत्फुल्लकमलिनीलोहिनीभिर्मारीचमायामृगावलूनवीरुल्लताभिर्दाशरथिचापकोटिक्षतकन्दगर्तविषमिततलाभिर्दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम्, आगृहीतसमित्कुशकुसुममृद्भिरध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनीभिरशून्योपकण्ठम्, उत्कण्ठितशिखण्डिमण्डलश्रूयमाणजलकलशपूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममरलोकं निनीषुभिरुद्धूयमानधूमलेखाछलेनाबध्यमानस्वर्गमार्गगमनसोपानसेतुमिवोपलक्ष्यमाणम्, आसन्नवर्तिनीभिस्तपोधनसंपर्कादिवापगतकालुष्याभिस्तरंगपरंपरासंक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिरिवातिविकचकुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमितशिखराभिः प्रणम्य-

---

उल्लसितानि परितः प्रसृतानि **चूतरेणु** पटलानि येषु तैः । सहकारा अतिसौरभाश्चूतेभ्यो भिन्ना अतो न पौनरुक्त्यम् । 'सहकारोतिसौरभः' इत्यमरः । कुलानां कलापः समूहः । कोलाहल एषां विद्यते इति तैः । पूगीलताः क्रमुकवृक्षा एव दोलास्ता अधिरूढा वनदेवता येषु तैः । तारकावर्षमुल्कापातम् । तारकापातो ह्यनिष्टसूचक इति प्रसिद्धम् । तदुक्तं बृहत्संहितायां—अम्बरमध्याद्बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय । इति । संसक्ताः संहता । उपगूढं परितो व्याप्तम् । **अचकितेति**—अचकितं अत्रस्तं यथा तथा अचकिता वा प्रसृताः इ० । शबलाः कर्बुराः । मारीच एव मायामृगश्छद्मवेषधारी मृगस्तेनादाववलीढानि पश्चाद्रूढानि वीरुधां वल्लीना दलानि यासु ताभिः । मारीचकथा रामा. अर. का. ४२–४४ सर्गेषु द्रष्टव्या । दाशरथी रामलक्ष्मणौ तयोर्धनुष्कोट्या क्षता ये कन्दास्तेषां ये गर्तास्तैर्विषमितमुन्नतानतं तलं यासां ताभिः । स्थलीभिः स्थली अकृत्रिमा । 'जानपद–' इति ङीष् । कृत्रिमा तु स्थला । **अशून्येति**—अशून्यं सनाथमुपकण्ठं समीपभागा यस्य तम् । **उत्कण्ठितेति** उत्कण्ठिता जलदध्वनिभ्रान्त्योन्नमिताननाः ये शिखण्डिनस्तेषां मण्डलं तेन श्रूयमाण इत्यादि । आज्यं सर्पिः । चित्रभानुभिर्वह्निभिः । उद्धूयमानधूमलेखा धूमोत्पीडास्तासां मिषेण । गमनार्थं सोपानसेतुः सोपानपरम्परा यस्मिन् ।—अपगतं दूरीभूतं कालुष्यं मालिन्यं पापं च यासां ताभिः । अच्छाच्छजलपूर्णाभिरित्यर्थः । **तरंगेति**—अत एव तापसेति—सूर्यबिम्बपरम्परायाः तापसमालया साम्यादुत्प्रेक्षा । निशासु अतिप्रफुल्लकुमुदसमूहमुद्वहन्तीभिः । कुमुदवनमेवोत्प्रेक्षते ऋषिजनमुपासितुमवतीर्णमिति ।

---

१ उल्लसत्. २ कलालाप. ३ कुसुममञ्जरीरजः, केतकमञ्जरीरजः. ४ सारसारङ्ग. ५ स्थलकमलिनी. ६ प्ररूढ. ७ प्रसरद्भिः, ८ तपोवन. ९ शिखाभि.

मानमिव वनलताभिः, अनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्धपल्लवाञ्जलिभिरुपास्यमानमिव विटपैः, उटजाजिरप्रकीर्णशुष्यच्छ्यामाकम्, उपसंगृहीतामलकलवलीकर्कन्धूकदलीलकुचपनसचूततालफलम्, अध्ययनमुखरबटुजनम्, अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्घुष्यमाणसुब्रह्मण्यम्, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्, आसन्नवापीकलहंसपोतभुज्यमाननीवारबलिम्, एणीजिह्वापल्लवोपलिह्यमानमुनिबालकम्, अग्निकार्यार्धदग्धसिमिसिमायमानसमित्कुशकुसुमम्, उपलभग्ननालिकेररसस्निग्धशिलातलम्, अचिरक्षुण्णवल्कलरसपाटलभूतलं, रक्तचन्दनोपलिप्तादित्यमण्डलकनिहितकरवीरकुसुमम्, इतस्ततोविक्षिप्तभस्मलेखाकृतमुनिजनभोजनभूमिपरिहारं, परिचितशाखामृगकराकृष्टिनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम्, इभकलभकार्धोपभुक्तपतितैः सरस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषितम्, ऋषिजनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्दमूलम्, अम्बुपूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविटपालवालकम्, ऋषिकुमारकाकृष्यमाण—

---

आबद्धाः पल्लवा एव अञ्जलयः यैः । **उटजेति**—उटेभ्यस्तृणपर्णादिभ्यो जायन्ते इति उटजाः । पर्णशालानामजिरेषु प्राङ्गणेषु प्रकीर्णाः प्रसारिताः । शुष्यन्तः शोषं प्राप्नुवन्तः श्यामाका धान्यविशेषा यस्मिन् स तथा तम् । **उपेति**—उपसंगृहीतानि आमलकं धात्री, लवली लताविशेषः, कर्कन्धूर्बदरी लकुचो वृक्षविशेषः पनसाम्रचूततालाश्च तेषां फलानि यस्मिन् । वषट्कारो देवहविर्दाने उच्चार्यमाणः शब्दः । सारिकाभिः उद्घुष्यमाणा सुब्रह्मण्या मन्त्रविशेषो यस्मिन् । वैश्वदेवो देवयज्ञतस्य बलिपिण्ड उपहारौदनः । **एणीति**—एण्यो मृग्यस्तासां जिह्वा एव पल्लवास्तैः जिह्वाग्रैरिति वा । **अग्नीति**—अग्निकार्ये होमे अर्धदग्धान्यत एव सिमसिमेति शब्दमाचरमाणानि समित्कुशकुसुमानि यस्मिन् । **रक्तेति**—रक्तचन्दनेनोपलिप्तमालिखितमादित्यमण्डलमेव मण्डलकं तस्मिन्निहितानि करवीरपुष्पाणि यैः । **इतस्तत इति**—इतस्ततो विक्षिप्तं यद्भस्म तस्य लेखया कृतो मुनिजनभोजनभूमेः परिहारः । रक्षआदीनामागमनप्रतीकार इति यावत् । यस्मिन् । यद्वा 'भस्मनो लेखया घर्षेण कृतो मुनिजनभोजनभूमेरुच्छिष्टभूमेः परिहारो मार्जनं यस्मिन् । दृश्यते हि भोजनान्ते भस्मना मार्जनं पश्चाद्गोमयेनोपलेपनम्' इति भानु० । **परिचितेति**—परिचितैः शाखाचारिणो मृगाः शाखामृगा वानरास्तेषां कराकृष्टया निष्कास्यमाना बहिर्नीयमानाः प्रवेश्यमानाश्च जरन्तोऽन्धाश्च तापसा यस्मिन् । कल्माषितं चित्रितम् । पुष्करपुटानि शुण्डाग्राणि । अत्र शाखामृगहरिणगजानामृषिजनसेवायां बुद्धिपूर्वकयथोचितकार्यप्रवृत्तिः सूचिता । तेन च मुनिजन-

---

१ पल्लवपुटाञ्ज. २ लवङ्ग. ३ मिसमिसायमान, सिमारि०. ४ अलङ्कृत. ५ ०कृष्टयष्टि, कराकृष्ट. ६ बाहुलताविभूषणैः.

वनवराहदंष्ट्रान्तराललग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपटपवन-संधुक्ष्यमाणमुनिहोमहुताशनम्, आरब्धामृतचरुचारुगन्धम्, अधपक्वपुरोडाशपुण्य-परिमलामोदितम्, अविच्छिन्नाज्यधाराहुतिहुतभुग्झंकार[1]मुखरितम्, उपचर्यमाणातिथिवर्गं, पूज्यमानपितृदैवतम्, अर्च्यमान[2]हरिहरपितामहम्, उपदिश्यमान[3][4]-श्राद्धकल्पं, व्याख्यायमानयज्ञविद्यम्, आलोच्यमान[5]धर्मशास्त्रं, वाच्यमानविविधपुस्तकं, विचार्यमाणसकलशास्त्रार्थम्, आरभ्यमाणपर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानो[6]टजाभ्यन्तरम्, आबध्यमानध्यानं, साध्यमानमन्त्रम्, अभ्यस्यमानयोगम्, उपह्रियमाणवनदेवताबलिं, निर्वर्त्यमानमौञ्जमेखलं, क्षाल्यमानवल्कलम्, उपसंगृह्यमाणसमिधम्, उपसंस्क्रियमाण[7]कृष्णाजिनं, गृह्यमाण[8]गवेधुकं, शोष्यमाणपुष्करबीजं, ग्रथ्यमानाक्षमालं, न्य[illegible]दण्डं[9] सात्क्रियमाण[10]परिव्राजकम्, आपूर्यमाणकमण्डलुम्, अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवनवन्दितम्, असुरारिमिव प्रकटितनर-

---

माहात्म्यमप्युक्तम् । शालूकान्युत्पलानां कन्दाः । 'शालूकमेषां कन्दः स्यात्' इत्यमरः । कलापिभिर्मयूरैः । संधुक्ष्यमाणः प्रज्वाल्यमानः । **आरब्धेति**—' आरब्धो विहितो योऽमृते चरुर्यज्ञ ओदनः इति भानु० । तस्य चारुर्मनोहरो गन्धो यस्मिन् । यद्वा अमृतं घृतं तद्युक्तश्चरुरमृतचरुः । अमृतरूपश्चरुरमृतश्चरुरिति वा । तदुक्तं शिशुपालवधे—अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति ' । इति । **अनवरतेति**—अनवरता अविच्छिन्ना याज्यधारा तया या आहुतिस्तया यो हुतभुग्झंकारोऽग्निशब्दस्तेन मुखरितं सजातशब्दम् । उपचर्यमाणः पर्युपास्यमानः । **अर्च्येति**—पितामहो ब्रह्मा । ' स खलु पुत्रार्थिभिरुपास्यते ' इति मान्त्रिकाः । शापादायतननिषेधेति [ व्रतादिषु ] पूजाऽनिषेधात् । श्राद्धकल्पः श्राद्धविधिः । आलोच्यमानं विचार्यमाणम् । धर्मशास्त्रं मनुयाज्ञवल्क्यादिप्रणीतम् । उपलिप्यमानानि गोमयादिना । उपमृज्यमानानि प्रमार्ज्यमानानि । **आबध्यते**ति—ध्यानं ' एकतानेन मनसा स्मरणं ध्यानमुच्यते । ' ' प्रत्ययैकतानता ध्यानम् ' इति पातञ्जलोक्तं वा । **साध्येति**—साध्यमानः जपहोमादिना सिद्धिं प्राप्यमाणः । योगः चित्तवृत्तिनिरोधरूपो यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टांगः । निर्वर्त्यमाना निष्पाद्यमानाः । उपसंस्क्रियमाणं गोमयादिना शुद्धीक्रियमाणम् । गवेधुका धान्यविशेषः । **सात्क्रियेति**—संस्क्रियमाणेति पाठे पारिव्राज्यं प्राप्यमाणाः । **अदृष्टेति**-सर्वथा पातकाभावादित्यर्थः । अनङ्गस्य मदनजन्यविकाराणामित्यर्थः । तस्य शान्तत्वात् ।

---

१ हुङ्कार, उग्रहुङ्कार. २ अभ्यर्च्यमान. ३ उद्दिश्यमान. ४ उपादिश्यमान. ५ आलोक्यमान. ६ अपमृज्यमान. ७ संस्क्रियमाण. ८ गृह्यमाणत्रिपुण्ड्रकं पूर्यमाण. ९ त्रिदण्डकम्. १० संस्क्रियमाण.

हरिवराहरूपं, साङ्ख्यमिव कपिलाधिष्ठितं, मधुरोपवनमिव बलावलीढदर्पितधेनुकम्, उदयनमिवानन्दितवत्सकुलं किंपुरुषाधिराज्यमिव मुनिजनगृहीतजलकलशाभिषिच्यमानद्रुमं, निदाघसमयावसानमिव प्रत्यासन्नजलप्रपातं, जलधरसमयमिव वनगहनमध्यसुखसुप्तहरिं, हनूमन्तमिव शिलाशकलप्रहारसंचूर्णिताक्षास्थिसंचयं, खाण्डवविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यं, सुरभिविलेपनधरमपि सततताविर्भूतहव्यधूमगन्धं, मातङ्गकुलाध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवं, परिपूर्णद्विजपतिमण्डलसनाथमपि सदासंनिहिततरुगहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् ।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, ती-

---

**प्रकटितेति**—प्रकटितानि नराणां हरीणां च वराहाणां च रूपाणि येन । यद्वा नरहरिवराहारूपाण्यन्ये पशवश्च येन । 'रूपं तु श्लोकशब्दयोः । पशावाकारे' इति हैमः । पक्षे प्रकटिते नरहरिर्नरसिंहो वराहश्च तयो रूपे येन । यद्वा प्रकटितानि नरो नराख्यमुनिः हरिर्नारायणो वराहश्च तेषां रूपाणि येन । सांख्यम्—कपिलदर्शनम् । **कपिलेति**—कपिलाभिर्गोभिरधिष्ठितम् । पक्षे कपिलः सांख्यदर्शनस्य प्रणेता । **बलेति**—बलावलीढा बलयुक्ता अत एव दर्पिता धेनुका गावः करिण्यो वा यस्मिन् । 'स्याद्धेनुका करिण्यां च धेनावपि' इति मेदिनी । पक्षे बलेन बलभद्रेणावलीढो हतो दर्पितो उद्धतो धेनुकस्तन्नामकदैत्यो यस्मिन् । उदयनः कौशाम्बीनृपो वत्सराजः । वत्सास्तर्णकास्तेषां कुलं समुदायः । पक्षे वत्सदेशनृपकुलम् । वत्सदेशस्य कुलानि वा । द्रुमा वृक्षाः । पक्षे द्रुमो नाम किंनराणां कश्चिद्राजा । जलप्रपातो निर्झरः । पक्षे जलवर्षः । **वनेति**—वनगहनेषु कान्तारमध्यदेशेषु सुखं सुप्ता हरयः केसरिणो यत्र । पक्षे वनस्य जलस्य गहनं सागरस्तन्मध्ये सुखं सुप्तो हरिर्विष्णुर्यस्मिन् । प्रावृषि हि विष्णुः सागरे शेते । **शिलेति**—शिलाशकलप्रहारैः संचूर्णितानां अक्षाणां, बिभीतकानामस्थिसंचयः ऽस्थिसमूहो यस्मिन् । पक्षे शिलाशकलप्रहारेण संचूर्णितोऽक्षनाम्नो रावणपुत्रस्यास्थिसंचयो येन । **सुरभीति** सुरभि सुगन्धि यद्विलेपनं तद्धरमपि सततेति विरोधः । सुरभेर्गोः विलिप्यतेऽनेनेति विलेपनं गोमयं यस्यामेतादृशी धरा यस्मिन्निति परिहारः । मातङ्गकुलानि चाण्डालादिकुलानि । परिहारपक्षे मातङ्गकुलानि हस्तियूथानि । धूमकेतुर्विनाशसूचको ग्रहविशेषः । परिहारपक्षे धूमः केतुर्यस्य सोऽग्निः । **परीति**-परिपूर्णेन सकलेन द्विजपतिमण्डलेन चन्द्रबिम्बेन युक्तमपि सदा संनिहितस्तरुगहनेषु द्रुमखण्डेष्वन्धकारो यस्मिन्निति विरोधः । परिहारस्तु परिपूर्णैर्हविष्प्राशनैर्द्विजमण्डलैः विप्रसमूहैः सनाथमित्यर्थात् । **यत्रेति**—मलिनता मालिन्यं कल्मषता च ।

---

१ वराहनरसिंह. २ मधुरो॰ ३ अनिलसुतम. ४ ॰सकलसंचूर्णित. ५ आविर्भूतधूम. ६ सहस्रम्.

क्षणता कुशाग्रेषु न स्वभावेषु चञ्चलता कदलीदलेषु न मनःसु चक्षूरागः कोकिलेषु न परकलत्रेषु कण्ठग्रहः कमण्डलुषु न सुरतेषु मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु स्तनस्पर्शो होमधेनुषु न कामिनीषु पक्षपातः कृकवाकुषु[2] न विद्याविवादेषु भ्रान्तिरनलप्रदक्षिणासु न शास्त्रार्थेषु[3] वसुसंकीर्तनं दिव्यकथासु न तृष्णासु गणना रुद्राक्षवलयेषु न शरीरेषु मुनिबालनाशः क्रतुदीक्षया न मृत्युना रामानुरागो रामायणेन न यौवनेन मुखभङ्गविकारो जरया न धनाभिमानेन। यत्र च महाभारते शकुनिवधः पुराणे वायुप्रलपितं वयःपरिणामे द्विजपतनमुपवनचन्दनेषु जाड्यमग्नीनां भूतिमत्त्वमेणकानां गीतश्रवणव्यसनं शिखण्डिनां नृत्यपक्षपातो भुजंगानां भोगः कपीनां श्रीफलाभिलाषो मूलानामधोगतिः ।

तस्य चैवंविधस्य मध्यभागमण्डलमलंकुर्वाणस्यालक्तकलोहितपल्लवस्य मुनिजनालम्बितकृष्णाजिनजलकरकसनाथशाखस्य तापसकुमारिकाभिर्मूलभागदत्तपीत-

मुखरागः—मुखे रक्तिमा वैरूप्यं च । चञ्चलता तरलता अस्थिरता च । मनःसु मनोवृत्तिषु । चक्षूरागो नयनयोर्लौहित्यम् । पक्षे नयनप्रीतिः । अभिलाष इति यावत् । स हि शृङ्गारस्य दशस्ववस्थासु प्रथमावस्था । तदुक्तम्–'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोथ सङ्कल्पः' । इत्यादि । दशरूपके च–दशावस्थः स तत्रादावभिलाषः ' इति । कण्ठग्रहः कण्ठे ग्रहणं कण्ठालिङ्गनम् । मेखलाबन्धो मौञ्जीबन्धनं पक्षे शृङ्खलाबन्धम् । कृकवाकुषु कुक्कुटेषु । पक्षपातः पक्षाणां पतनम् । अन्यस्य पक्षिणस्तथा युद्धे पक्षपातो नास्तीति कुक्कुटग्रहणम् ' इति भानु० । भ्रान्तिर्भ्रमणं मिथ्याज्ञानं च । वसुसंकीर्तनं वसूनामापादीनां नामग्रहणं पक्षे द्रव्यस्य कथनम् । गणना––पक्षे आदरः । निस्पृहाणां तपस्विनां शरीरेष्वादराभावात् । बालनाशः केशनाशः पक्षे शिशुनाशः । **रामेति**—रामे अनुरागो भक्तिः पक्षे रामासु रमणीष्वनुरागो विषयेच्छा । **मुखेति**––मुखे भङ्गविकारो वलीविकृतिः पक्षे क्रोधादिना विकारः । **यत्रेति**––शकुनेर्दुर्योधनमातुलस्य वधः पक्षे पक्षिनाशः । वायोर्वायुदेवतायाः प्रलपितं भाषणं पक्षे वायुजोन्मादादिनाऽसम्बद्धप्रलापः । **वय इति**––नत्वन्यत्र ब्राह्मणानां पतनं विहितस्याननुष्ठानादिना च्युतिः । जाड्यं शैत्यं पक्षे मतिमान्द्यम् । **अग्नीनामिति**—भूतिमत्वं भस्मवत्वं न तु तापसानां संपद्वत्त्वम् । पक्षपातः पक्षाणां पतनं पक्षे अभिरुचिः । भोगोऽहिकायः । न तु तपस्विनां विषयास्वादः । श्रीफलानि बिल्वफलानि पक्षे लक्ष्म्याः फलानि विलासादीनि । अधोगतिः न त्वाश्रमवासिनां नरकपातः । **मुनीति**–मुनिजनैरालम्बिता अवलम्बिताः कृष्णाजिनानि कृष्णमृगचर्माणि च

१ वनितासु. २ कुक्कुटेषु, ३ शास्त्रेषु. ४ मध्यभागम्. ५ ०लोलपल्लवस्य. ६ करङ्क.

पिष्टपञ्चाङ्गुलस्य हरिणशिशुभिरापीयमानालवालकसलिलस्य मुनिकुमारकाबद्ध-कुशचीरदाम्नो हरितगोमयोपलेपनविविक्ततलस्य तत्क्षणकृतकुसुमोपहाररमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्, अत्युग्रतपोभिः भुवनमिव सागरैः कनकगिरिमिव कुलपर्वतैः क्रतुमिव वैतानवह्निभिः कल्पान्तदिवसमिव रविभिः कालमिव कल्पैः समन्तान्महर्षिभिः परिवृतम्, उग्रशापभियेव कम्पितदेहया प्रणयिन्येव विहितकेशग्रहया क्रुद्धयेव कृतभ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटिततिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृतविग्रहम्, आयामिनीभिः पलितपाण्डुराभिस्तपसा विजित्य मुनिजनमखिलं धर्मपताकाभिरिवोच्छ्रिताभिरमरलोकमारोढुं पुण्यरज्जुभिरिवोपसंगृहीताभिरतिदूरप्रवृद्धस्य पुण्यतरोः कुसुममञ्जरीभिरिवोद्गताभिर्जटाभिरुपशोभमानम्, उपरचितभस्मात्रिपुण्ड्रकेण तिर्यक्प्रवृत्तत्रिपथगास्रोतस्त्रयेणेव हिमगिरिशिलातलेन ललाटफलकेनोपेतम्, अधोमुखचन्द्रकलाकाराभ्यामव-

---

जलकरकाः पात्रविशेषाश्च तैः सनाथाः शाखा यस्य । **मूलेति**–मूलभागेषु दत्ता पीतपिष्टस्य हरिद्राचूर्णस्य पञ्चाङ्गुल्यो विस्तारितहस्तबिम्बा इत्यर्थः । यस्य । ०लेपनेन विविक्ततलस्य विविक्तं पूतं तलं यस्य । परिमण्डलतया परितो विस्तृततयेत्यर्थः । **सागरैः** सप्तभिः ते च–क्षीरोदो लवणोदश्च दध्योदश्च घृतोदकः । स्वादूदकः सुरोदश्च तथैवेक्षुरसोदधिः ॥ इति वायुपुराणोक्ताः । कनकगिरिं मेरुम् । क्रतुं यज्ञम् । **वैतानेति**—वितानं यज्ञस्तत्सम्बन्धिभिर्वह्निभिर्गार्हपत्याहवनीयदक्षिणाग्निसंज्ञैः । तथाहि मनुः—'पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः । गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥' इति । कम्पितो देहो यया पक्षे यस्याश्च । विहितः केशग्रहो यया पलितजननात् । प्रणयिन्यपि रतिकलहे केशग्रहं करोति । प्रसाधितया अलंकृतया । 'प्रसाधितोऽलंकृतश्च' इत्यमरः । तिलका जराजर्जरितदेहे आविर्भवन्तश्चिह्नविशेषाः । पक्षे तिलकः विशेषकम् । **भस्मेति**—भस्मवद्भस्मेन च धवलया । ०विग्रहं शरीरम् । उच्छ्रिताभिरुन्नमिताभिः । **तिर्यगिति**–त्रीन् पथो गच्छतीति त्रयाणां पथां समाहारस्त्रिपथं तेन गच्छतीति वा त्रिपथगा भागीरथी । तदुक्तं भारते—'क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता' ॥ इति । 'त्रिपथगाया एकमुपर्येकं तिर्यगेकमधः स्रोतः । इदमभिनवं तिर्यक्प्रवृत्तं स्रोतस्त्रयमेव यस्मिन्नेवं भूतेन' । इति भानु० । अधोमुखी या चन्द्रकलार्धचन्द्र इत्यर्थस्तद्वदाकारो ययोस्ताभ्याम् । अवलम्बितोपरि

---

१ पिष्टातकाङ्कितक०. २ उपलिप्त. ३ रचित. ४ वैतानिक. ५ उग्रशापकम्पित०, ०भीतयेव. ६ तपोभिः. ७ उपार्जिताभिः. ८ तपस्तरोः. ९ गङ्गा. १० पट्टेन.

लम्बितवलिशिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमानदृष्टिम्, अनवरतमन्त्राक्षरैराभ्यास-विवृताधरपुटतया निपतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रियवृत्तिभिरिव करुणारसप्रवाहैरिव दशनमयूखैर्धवलितपुरोभागम्, उद्वमदमलगङ्गाप्रवाहमिव जह्नुम्, अविरतसोमोद्गारसुगन्धिनिश्वासावकृष्टैर्मूर्तिमद्भिरिव शापाक्षरैः सदा मुखभागसंनिहितैः परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतरगण्डगर्तमुन्नततरहनुघोणमाकरालतारकमवशीर्यमाणविरलनयनपक्ष्ममालमुद्गतदीर्घरोमरुद्धश्रवणविवरमानाभिलम्बकूर्चकलापमाननमादधानम्, अतिचपलानामिन्द्रियाश्वानामन्तःसंयमनरज्जुभिरिवाततताभिः कण्ठनाडीभिर्निरन्तरसंनद्धकंधरं समुन्नतविरलास्थिपञ्जरमंसावलम्बिधवलयज्ञोपवीतमनिलवशजनिततनुतरंगभङ्गमुत्प्लवमानमृणालमिव मन्दाकिनीप्रवाहमकलुषमङ्गमुद्वहन्तम्, अमलस्फटिकशकलघटितमक्षवलयमुज्ज्वलस्थूलमुक्ताफलग्रथितं सरस्वतीहारमिव चलदङ्गुलिविवरगतमावर्तयन्तम्, अनवरतभ्रमिततारकाचक्रमपरमिव ध्रुवम्, उन्नमता शिराजालकेन जरत्कल्पतरुमिव

---

लम्बमाना या वलयस्ताभिः शिथिलाभ्यां श्लथाभ्याम् । अवष्टभ्यमानावलम्ब्यमाना । अनवरतं यो मन्त्राक्षराभ्यास ऋगादीनामुच्चारणं तेन विवृतो विदीर्णो योधरपुटस्तस्य भावस्तत्ता तया । स्वच्छा निर्मलाः पापाचरणप्रवृत्तिशून्या इति यावत् । जह्नुम्–भगीरथपथेन प्रवृत्ता गङ्गा यजमानस्य जह्नोर्यज्ञवाटं प्लावयामास । तस्या अवलेपेन क्रुद्धो जह्नुस्तामपिबत् । पश्चाद्भगीरथाराधनात्तुष्टः स तां श्रोत्राभ्यामसृजत् । 'तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च' । सोमोद्गारः पीतसोमरसगन्धोद्गार इत्यर्थः । गण्डगर्तः कपोलावटः । **उन्नतेति**–उन्नततरे गण्डयोर्निम्नत्वाद्धनु चिबुकं घोणा नासिका च यस्य । आकराला ईषत्तुङ्गा । **अवशीर्येति**–अवशीर्यमाणा क्षीयमाणा अत एव विरला नयनयोः पक्ष्ममाला यस्य । कूर्चकलापः श्मश्रुरोमसमूहः । **इन्द्रियेति**–नरं विषयान् प्रति झटिति हरन्तीति इन्द्रियाण्यश्वा इत्युच्यन्ते । तथा च काठकश्रुतिः 'इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' इति । निरन्तरं निबिडं यथा तथा— । **अनिलेति**–अत्र तरङ्गभङ्गा अस्थिपञ्जरस्थानीया मृणालं च यज्ञोपवीतस्थानीयम् । एकत्र श्वेतत्वं समुन्नतत्वविरलत्वे च अन्यत्र श्वेतत्वं सूक्ष्मत्वं च साधर्म्यमिति ज्ञेयम् । सरस्वतीहारम्–अत्र स्फाटिकाक्षवलयस्यातिनैर्मल्यान्मुक्ताहारसाम्यम् । **अनवरतेति**–'अत्र स्फाटिकाक्षवलयतारकाणां शुचिवर्तुलत्वमेव साधर्म्यम् । उपविष्टस्य मुनेः स्थिरत्वाद् ध्रुवसाम्यम्' इ. भानु. ।

---

१ मन्त्राभ्यास. २ विद्यागुणैरिव. ३ अनवरत, अविरल. ४ ०संनिविष्टैः. ५ लम्बित. ६ अवनद्ध. ७ अत्युज्ज्वल, ८ उल्लसता.

परिणतलतासंचयेन निरन्तरनिचितम्, अमलेन चन्द्रांशुभिरिवामृतफेनैरिव गुणसंतानतन्तुभिरिव निर्मितेन मानससरोजलक्षालनशुचिना दुकूलवल्कलेन द्वितीयेनेव जराजालकेन संछादितम्, आसन्नवर्तिना मन्दाकिनीसलिलपूर्णेन त्रिदण्डोपविष्टेन स्फटिककमण्डलुना विकचपुण्डरीकराशिमिव राजहंसेनोपशोभमानं, स्थैर्येणाचलानां गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य संविभागमिव कुर्वाणं, वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यं, कमलासनमिवाश्रमगुरुं, जरच्चन्दनतरुमिव भुजंगनिर्मोकधवलजटाकुलं, प्रशस्तवारणमिव प्रलम्बकर्णबालं, बृहस्पतिमिवाजन्मसंवर्धितकचं, दिवसमिवोद्यदर्कबिम्बभास्वरमुखं, शरत्कालमिव क्षीणवर्षं, शंतनुमिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षवलयग्रहणनिपुणं, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गं, वडवानलमिव सततपयोभक्षं, शून्यनगरमिव दीनानाथविपन्नशरणं, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरं भगवन्तं जाबालिमपश्यम् ।

**गुणेति**-गुणानां विद्यातपश्चर्याशुचितादीनां संतानाः समूहास्त एव तन्तवो यद्वा गुणा एव सन्ताना आतानवितानवन्तस्तन्तवः । दुकूलसदृशं वल्कलं दुकूलवल्कलमित्युत्तरपदलोपी समासः । त्रिदण्डस्त्रिपादिका तत्रोपविष्टेन निहितेन । **स्थैर्येणेति**—स्थैर्येण चित्तस्य स्थिरतया अचलानां संविभागं इव कुर्वाणं अचलतुल्यस्थैर्यमित्यर्थः । एवमग्रेपि । **वैनतेयेति**—द्विजाः ब्राह्मणाः पक्षे विहंगमाः । आश्रमे स्वाश्रमे गुरुं नियामकं प्रवर्तकं वा । 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री' इत्यमरः । भुंजगनिर्मोकः सर्पकञ्चुकस्तद्वद्धवला या जटा तया व्याप्तं पक्षे ०निर्मोका एव जटास्ताभिर्व्याप्तम् । प्रशस्ता कर्णयोर्बालाः केशा यस्य । पक्षे प्रकर्षेण लम्बमानौ कर्णौ बालो बालधिश्च यस्य । कचाः केशाः पक्षे कचनामा पुत्रः । क्षीणानि वर्षाणि यस्य पक्षे क्षीणो वर्षो वृष्टिर्यस्मिन् । शंतनुर्भीष्मपिता । प्रियं सत्यमेव व्रतं यस्य । पक्षे प्रियः सत्यव्रतो भीष्मो यस्य । **रुद्राक्षेति**—रुद्राक्षाणां वलयग्रहणे निपुणम् । सर्वदा तदावर्तनाभ्यासादिति भावः । पक्षे रुद्रस्य स्वभर्तुरक्षमिन्द्रियमत्र नेत्रं तद्वलयस्य ग्रहणे पिधाने चतुरम् । कृतो विहित उत्तरासङ्गो बृहतिका येन तम् । एवं शिशुपालवधे 'कृष्णोत्तरासङ्गरुचं' इ० । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ।' इत्यमरः । पक्षे कृत उत्तरस्या दिशः आसङ्गः सङ्गो वा येन । पयः क्षीरं जलं च । दीनानां अनाथानां विपन्नानां व्याध्याद्युपहतानां च शरणं परित्राणहेतुम् । पक्षे दीनानि शोभाहीनानि अनाथानि निवासिजनशून्यानि विपन्नानि उच्छिन्नानि च गृहाणि यस्मिन् । भस्मवत्पाण्डूनि वार्धक्यात् रोमाणि तैराश्लिष्टशरीरम् । पक्षे भस्मपाण्डुरं च तदुमया-

१ अमलैः. २ क्षालित. ३ कमल. ४ अवनेः. ५ सकल. ६ वारणपतिमि. ७ ०नालम्. ८ रुद्राक्षग्र. ९ और्वालनम्.

अवलोक्य चाहमचिन्तयम् । अहो प्रभावस्तपसाम् । इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामनीव चक्षुषः प्रतिहन्ति तेजांसि । सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य । शुष्कनलकाशकुसुमनिपतितानलचटुलवृत्ति नित्यमसहिष्णु[1] तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति किमुत सकलभुवनतलवन्दितचरणानामनवरततपःक्षपितम[2]लानां करतलामलकफल[3]वदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम् । पुण्यानि हि नामग्रहणान्यपि महामुनीनां किं पुनर्दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना । पुण्यभाजः खल्वमी मुनयः यदहर्निशमेनमपरमिव नलिनासनमपगतान्यव्यापारा मुखावलोकन[4]निश्चलदृष्टयः पुण्याः कथाः शृण्वन्तः समुपासते[5] । सरस्वत्यपि धन्या यास्य सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्ये रुचिरद्विजपरिवारा मुखकमलसंपर्क[6]मनुभवन्ती निवसति हंसीव[7] मानसे । चतुर्मुखमुखकमलवासिभिश्चतुर्भिर्वेदैः[8] सुचिरादिव द्वितीयमिदमपरमुचितमासादितं स्थानम् । एनमासाद्य[9] शरत्कालमिव कलिकालजलदसमयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः । नियतमिह सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण न स्मर्यते कृतावस्थितिना धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं

---

श्लिष्टं च शरीरं 'चतुर्वेद्या भस्मना पाण्डुरा या उमा तयाश्लिष्टशरीरम् । **शान्तेति**-अवदाता भास्वरा पतिहन्ति—' आभिमुख्येन गच्छन्तीनां नयनरश्मीनां बलवद्वेगसौदामनीतेजसा प्रतिनिवृत्तिरनुभावसिद्धैवेति भावः । इदं स्वभाववर्णनम् । विरोधोपि शान्तस्योत्तप्तकनकावदाततेति ।' इति भानु. । अनुरूपभावः शाकुन्तले—' अहो दीप्तिमतोपि विश्वसनीयतास्य राज्ञो वपुषः ' इति । उदासीना मध्यस्था भयादिजननप्रयोजनहीनेत्यर्थः । शुष्काणि नलकाशकुसुमानि तेषु निपतितानलवत् चटुला त्वरिता वृत्तिर्यस्य । असहिष्णु पराभिभवस्येति शेषः । मला रागद्वेषादयः पापानि वा । कमलयोनिर्ब्रह्मा । नलिनासनो ब्रह्मा । **सरस्वतीति**—यथा मानसे सरसि हंसी निवसति तथा । ' अतिप्रसन्ने ' इत्यादिविशेषणान्युभयत्र योज्यानि । द्विजा दन्ता जलविहंगाश्च । द्वितीयमासादितं स्थानं—' कमलस्य कदाचित्संकोचसंभवात ' इ. भा० । कलिकालः जलदसमय इव पक्षे कलिकालसदृशः जलदसमयस्तेन । सर्वविद्याश्चतुर्दशविद्याः । ' अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ ' इत्युक्ताः । सरितो नद्य इव-शरदि अगस्त्योदयेऽम्भांसि प्रसन्नानि भवन्तीति सुप्रसिद्धम् । **नियतामिति**—अत्र न्यक्कृतकलिप्रभावो धर्मो निष्प्रत्यूहश्चरतीति

---

१ दुःसहम्. २ तपःसलिलक्षालित. ३ करकमलाम. ४ मुखकमलावलोकन. ५ पर्युपासते. ६ संपर्कसुखम्. ७ राजहंसीव. ८ चतुर्वेदैः. ९ आलक्ष्य, अवलोक्य.

सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम् । अहो महासत्त्वेयं जरा यास्य प्रलयर-विरश्मिनिकरदुर्निरीक्ष्ये रजनिकरकिरणपाण्डुरशिरोरुहे जटाभारे फेनपुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता । बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम् । एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिता-ञ्जलय इवात्र मन्त्रपूतानि हवींषि प्रतिगृह्णन्त्येतत्प्रीत्याशुशुक्षणयः । तरलितदु-कूलवल्कलोयं चाश्रमलताकुसुमसुरभिपरिमलो मन्दसंचारी सशङ्क इवास्य समीप-मुपसर्पति गन्धवाहः । प्रायो महाभूतानामपि दुरभिभवानि भवन्ति ते-जांसि । सर्वतेजस्विनामयं चाग्रणीः । द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कम्पेव क्षितिरेतदवष्टम्भात् । एष प्रवाहः करुणारसस्य संतरणसेतुः संसारसिन्धोराधारः क्षमाम्भसां परशुस्तृष्णालतागहनस्य सागरः संतोषामृतस्योपदेष्टा सिद्धिमार्गस्यास्तगिरिरसद्ग्रहस्य मूलमुपशम-तरोर्नाभिः प्रज्ञाचक्रस्य[11] स्थितिवंशो धर्मध्वजस्य तीर्थं सर्वविद्यावताराणां वडवानलो लोभार्णवस्य निकषोपलः शास्त्ररत्नानां दावानलो रागपल्लवस्य महामन्त्रः क्रोधभुजंगस्य दिवसकरो मोहान्धकारस्यार्गलाबन्धो नरकद्वा-राणां कुलभवनमाचाराणामायतनं मङ्गलानामभूमिर्मद[illegible]राणां दर्शकः

---

भावः । **प्रलयेति**—इदं रजनिकरेत्यादिना व्याहतमिव भाति । [illegible]त्यस्याः 'हरं गृहीत्वा पातालं विशामि' इति सावलेपं तज्जटायां पतनात् । **[illegible]भवात**—अनेनाश्रमो मालिन्यं प्रापितः । तन्मया प्रोञ्छितं चेदयं मामभिक्रुद्धयेदिति मत्वेति भाव । आशुशु-क्षणयः—आशु शीघ्रं आशुं व्रीहिं वा शु क्षणोतीत्याशुशुक्षणिरग्निः । शु इति पूजार्थमव्ययम् । सशङ्क इव—अत्र तरलितेति हेतुः । दुकूलवल्कलविधूननकृतापराध इत्यर्थः । अत एवाह **प्राय इति**—प्रायः तेजांसि तेजस्विनामितिशेषः महाभूतानामपि दुरभिभवानि भवन्ति किमुतान्येषां नरादीनाम् । अयं च तेजस्विनामग्रणीरिति किमु वक्तव्यं सर्वेषां दुरभिभवमस्य तेज इति । अवष्टम्भः आधारः । संतरणे सेतुः संतरणसेतुः । सिद्धिमार्गस्य सिद्धयोणिमाद्यास्तासां मार्गस्य साधनोपायस्य मोक्षमार्गस्येति वा । उपशमो विषयाभिलाषनिवृत्तिः । नाभिर्मध्यभागो मुख्याधार इत्यर्थः । प्रज्ञा आत्मत-त्त्वधीः सैव चक्रम् । तीर्थं सोपानपरम्परा । रागोनुरक्तिः । कुलभवनं मूलगृहम् ।

---

१ कर. २ ०पाण्डुरे जटाभारे; रजनिकरेति नास्ति क्वचित्. ३ आश्रमपदस्य. ४ भीतभीतामिव. ५ पुञ्जित०. ६ ०शिखाजटिला; एतत्प्रदत्तानि. ७ मन्दमन्दसं०, ०संचारः. ८ अवष्टम्भादेव, अवष्ट-म्भेन. ९ प्रभवः. १० कृपा०. ११ प्रासादः.

सत्पथानामुत्पत्तिः[1] साधुताया नेमिरुत्साहचक्रस्याश्रयः सत्त्वस्य प्रतिपक्षः कलिकालस्य कोशस्तपसः सखा सत्यस्य क्षेत्रमार्जवस्य प्रभवः[2] पुण्यसंचयस्यादत्तावकाशो मत्सरस्यारातिर्विपत्तेरस्थानं परिभूतेरननुकूलोभिमानस्यासंमतो दैन्यस्यानायत्तो रोषस्यावशो विषयाणामनभिमुखः सुखानाम् । अस्य भगवतः प्रसादादेवोपशान्तवैरमपगतमत्सरं तपोवनम्[3] । अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोपि[4] तपोवनवसतिसुखमनुभवन्ति । तथा हि । एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं[5] हरिणलोचनद्युतिशबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः । अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः प्रक्षरत्क्षीरधारमापिबति कुरंगशावकः सिंहीस्तनम् । एष मृणालकलापाशङ्किभिः शशिकरधवलं[6] सटाभारमामीलितलोचनो बहु मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः । इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः[7] स्नातेभ्यः फलानि । एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि जातदयाः कर्णतालैः करिणः । किं बहुना । तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः[8] फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोपि सनियमा इव लक्ष्यन्तेस्य[9] भगवतः समीपवर्तिनः । किं पुनः सचेतनाः प्राणिनः ।

एवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे[10] स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपावि-

---

आचाराणां शिष्टसम्मताचरणानाम् । अभूमिरस्थानं मदविकाराणामहंकारप्रवृत्तीनाम् । नेमिश्चक्रधारा । 'चक्रधारा प्रधिर्नेमिः' इति यादवः । आधार इत्यर्थः । ऋजोर्भाव आर्जवं सारल्यम् । **उपशान्तेति**—उपशान्तं वैरं यस्मिन् । सिंहादिर्गजादिं न बाधत इत्यर्थः । शाश्वतिकं विरोधं यथाहिनकुलयोः । उत्पतदूर्ध्वं गच्छच्चारु चन्द्रकशतं मेचकशतं यस्मिन् । शबलं कर्बुरम् । शादो बालतृणमस्मिन्निति शाद्वलो नवतृणच्छन्नभूभागः । मृणालानां कलापः समुदायः । सटाभारं केसरम् । कलभैराकृष्यमाणं सटाभारं बहु मन्यते क्रोढव्योभिनन्दतीत्यर्थः । **तापसेति** उत्सर्पन्तीभिरग्निहोत्रधूमलेखाभिरनिशमुपपादिता जनिता कृष्णाजिनस्योत्तरासङ्ग उत्तरभागे आसञ्जनं तस्य शोभा येषां तादृशाः । फलमूलभृतत्वं वल्कलित्वं च सनियमलिङ्गम् ।

---

१ आदर्शः सर्वविद्यानामुत्पत्तिः. २ प्रसवः. ३ प्रभावादेतदपि. ४ न्तरात्मानः. ५ उत्पलिनीवनानुकारिणम्. ६ शिशिरकरकर०. ७ कुमारेभ्यः. ८ शोभनाः. ९ इव समीपवर्तिनोत्र लक्ष्यन्ते. १० तस्यैव रक्ताशोक०.

शात्। आलोक्य तु मां ते सर्वे एव मुनयः कुतोयमासादितः शुकशिशुरिति तमासीनमपृच्छन्। असौ तु तानब्रीत्। अयं मया स्नातुमितोगतेन कमलिनी-सरस्तीरतरुनीडपतितः शुकशिशुरातपजनितक्लान्तिरुत्तप्तपांसुपटलमध्यगतो दूर-निपतनविह्वलतनुरल्पावशेषायुरासादितः। तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः। तद्यावदयमप्ररूढपक्षति-रक्षमोन्तरीक्षमुत्पतितुं तावदत्रैव कस्मिंश्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवारकणनिकरेण फलरसेन च संवर्ध्यमानो धारयतु जीवितम्। अनाथपरिपालनं हि धर्मोस्मद्विधानाम्। उद्भिन्नपक्षातिस्तु गगनतलसंचरणसमर्थो यास्यति यत्रास्मै रोचिष्यते। इहैव वोपजातपरिचयः स्थास्यति। इत्येवमादिकमस्मत्संबद्धमालापमाकर्ण्य किंचिदुपजातकुतूहलो भगवाञ्जाबालिरीषदावलितकंधरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्ट्या दृष्ट्वा सुचिरमुपजातप्रत्याभिज्ञान इव पुनः पुनर्विलोक्य स्वस्यैवाविनयस्य फलमनेनानुभूयत इत्यवोचत्। स हि भगवान्कालत्रयदर्शी तपःप्रभावाद्दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगदवलोकयति। वेत्ति जन्मान्तराण्यतीतानि। कथयत्यागामिनमप्यर्थम्। ईक्षणगोचरगतानां च प्राणिनामायुषः प्रमाणमावेदयति। यतः सर्वैव सा तापसपरिषच्छ्रुत्वा विदिततत्प्रभावा कीदृशोनेनाविनयः कृतः किमर्थं वा कृतः क्व वा कृतो जन्मान्तरे वा कोयमासीदिति कौतूहलिन्यभवत्। उपनार्थितवती च तं भगवन्तम्। आवेदय प्रसीद भगवन्कीदृशस्याविनयस्य फलमनेनानुभूयते। कश्चायमासीज्जन्मान्तरे। विहंगजातौ कथमस्य संभवः। किमभिधानो वायम्। अपनयतु नः कुतूहलम्। आश्चर्याणां हि सर्वेषां भगवान्प्रभवः।

इत्येवमुपयाच्यमानस्तु तपोधनपरिषदा स महामुनिः प्रत्यवदत् अतिमहदिदमाश्चर्यमाख्यातव्यम्। अल्पशेषमहः। प्रत्यासीदति च नः स्नानसमयः। भवतामप्यतिक्रामति देवार्चनविधिवेला। तदुत्तिष्ठन्तु भवन्तः सर्वे

---

निपतनेन विह्वला व्याकुला तनुर्यस्य। पक्षतिः पक्षमूलम्। आवलितकन्धर ईषत्परिवर्तितग्रीवः। सुचिरं दृष्ट्वा उपजातं प्रत्यभिज्ञानं यस्य। उपनार्थितवती याचितवती। प्रत्यासीदति उपातिष्ठति।

---

१ विविधफलरसेन. २ समुपजात. ३ कौतुहलः. ४ त्रिकाल०. ५ असकृदुपयाचितवती, उपेत्यार्थितवती. ६ भुज्यते. ७ ०जातौ च, षा.

एव तावदाचरन्तु यथोचितं दिवसव्यापारम् । अपराह्णसमये भवतां पुनः कृतमूलफलाशनानां विश्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामि । योयम् ।यच्चानेन कृतमपरस्मिञ्जन्मनि । इह[1] लोके यथास्य संभूतिः । अयं च तावदपगतक्लमः क्रियतामाहारेण । नियतमयमप्यात्मनो जन्मान्तरोदन्तं[2] स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यति । इत्यभिदधदेवोत्थाय सह मुनिभिः स्नानादिकमुचितं दिवसव्यापारमकरोत् ।

अनेन च समयेन परिणतो दिवसः । स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्[3]तमम्बरतलगतः[4] साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत् । ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरुष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपो[5] दिवसस्तनिमानमभजत् । उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः[6] पारावतचरणपाटलरागो रविरम्बरतलादलम्बत । आलोहितांशुजालं जलशयनगतस्य[7] मधुभिदो[8] विगलन्मधुधारमिव नाभिनलिनं प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत । विहाय धरणितलमु[9]न्मुच्य कमलिनीवनानि शकुनय इव दिवसावसाने तपोवनतरु[10]शिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत । आलग्नरक्ता[11]तपच्छेदा मुनिभिरालम्बितालोहितवल्कला इवाश्रमतरवः क्षणमशोभन्त[12] । अस्तमुपगते च भगवति सहस्रदीधितावपरार्णवतला[13]दुल्लसन्ती[14] विद्रुमलतेव पाटला संध्या समदृश्यत । यस्यामाबध्यमानध्यानमेकदेशादुह्यमानहोमधेनु-

---

व्यापारं दैनिकं कृत्यम् । अपराह्णसमये अतीते इति शेषः । अतीतायां सायंसन्ध्यायामित्यर्थः । संभूतिरुत्पत्तिः । अन्यज्जन्म जन्मान्तरं तस्य उदन्तं वृत्तान्तम् । **अनेनेति**–परिणतोऽवसानं प्राप्त इत्यर्थः । अर्घविधिं घृष्टरक्तचन्दनादिना पूजाविधिम् । यः अङ्गरागः । साक्षादिव—सन्ध्याकाले सूर्यबिम्बस्य रक्तत्वान्मुनिजनदत्तोऽङ्गरागः साक्षात्किमस्मिन्संक्रान्त इत्युत्प्रेक्षा । उष्ममुष्माणं वा पिबन्ति तैः । परिपीयमानस्तेजसः प्रसरो यस्य सः । अत एव विरलः आतपो यस्य तादृशः । सप्तर्षिसार्थः सप्तर्षिसमूहः तस्य स्पर्शस्तस्य परिहर्तुमिच्छा परिजिहीर्षा तया । पादः किरणश्चरणश्च । मधुभिदः विष्णोः । परितो विगलन्मधुधारम्–आलोहितांशुजालसाम्यनिर्वाहार्थमिदम् । **तपोवनेति**–अनुरूपं वर्णनं विक्रमाङ्कचरिते 'दीर्घपादपशिखासु गिरीणां... धाम चण्डकिरणस्य बभूव ।' इति । आलग्ना रक्तातपस्य छेदाः पुञ्जा इत्यर्थ येषु ते । **आलम्बितेति**—आलम्बितानि आलोहितानीषद्रक्तानि वल्कलानि येषु । **आबध्येति**—आबध्यमानं ध्यानमेकप्रत्ययसंतानो यस्मिन् । सन्ध्यावन्दनव्यापृतैर्मुनिभिरित्यर्थात् । 'तत्र प्रत्ययैकतानता ध्यानम्' इति योगसूत्रम् । 'एकतानेन मनसा स्मरणं ध्यानमुच्यते ।' इत्युक्तलक्षणं वा । एकदेशे दुह्यमाना या होमार्था होमस्य वा धेनवो होमधेनवस्तासां दुग्धधाराप्र

---

१ इह च, लोके च. २ ०वृत्तम्. ३ अधोदत्तः. ४ अस्ताचल. ५ विरलातपस्तानि. ६ प्राव. ७ शयनमध्य. ८ मधुरिपोः. ९ धरातलम्, अम्बरतलम्. १० 'तपोवन' इति नास्ति क्वचित्. ११ लोहितातप, रक्तातपगभस्ति. १२ अलक्ष्यन्त; अदृश्यन्त. १३ तटात्. १४ उपसर्पन्ती.

दुग्धधाराध्वनितमनोहरमग्निहोत्रवेदीविकीर्यमाणहरित्कुशमृषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत् । क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना सन्ध्या मुनिभिरदृश्यत । अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीता मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत् । अपरसागराम्भसि पतिते दिनकरे पतनवेगोत्थितमम्भःसीकरनिकरमिव तारागणमम्बरमधारयत् । अचिराच्च सिद्धकन्यकाविक्षिप्तसन्ध्यार्चनकुसुमशबलमिव तारकितं वियदराजत । क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः सन्ध्यारागः।

क्षयमुपागतायां सन्ध्यायां तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत् । अपहाय मुनिजनहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत् । क्रमेण च रविरस्तमुपागत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूलवल्कलधवलाम्बरः सतारान्तःपुरः पर्यन्तस्थिततनुतिमिरतमालवनलेखं

यद् ध्वनितं शब्दस्तेन मनोहरं । विक्षिप्यमाणानि दिग्देवताभ्यो बलयस्तदर्थानि सिक्थानि सिद्धार्थानि यस्मिन् । लोहिततारका रक्तनक्षत्रा । पक्षे रक्तकनीनिका । **अचिरेति** । शोकेन विधुरा शोक० । **कमलेति**—कमलमुकुलमेव कमण्डलुः तं दधातीति । एवं हंसा एव सितदुकूलं परिधानं यस्याः मृणाला एव धवलं यज्ञोपवीतं यस्या इति विग्रहः । अम्बरं तारापुञ्जमधारयदिति योजना । सिद्धा देवयोनिविशेषाः । शबलं कर्बुरम् । तारका अस्य सञ्जाता इति तारकितम् । तदस्य संजातं तारकादिभ्य इतच् इति इतच् । **अपहायेति**—उक्तं च भगवद्गीतासु 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।' इति । **जातेति**—जातं वैराग्यं विरक्तता पक्षे विशिष्टरागता यस्य स तथा । **धौतेति** धौतं दुकूलमिव वल्कलमेव धवलमम्बरं वस्त्रं यस्य । पक्षे धौतदुकूलवल्कलवद्धवलमम्बरमाकाशो यस्मिन् । **सतारेति**—सतारं सगुणब्रह्मसहितमन्तःपुरं हृत्पुण्डरीकमन्तर्वेश्म यस्य समाधिनिष्ठ इत्यर्थः । पक्षे ताराभिरश्विन्यादिभिः सह वर्तमानमन्तःपुरं यस्य । अत्र सतारान्तःपुरपर्यन्तस्थिततनुरिति एकं पदं भानुचन्द्रः पठति । तद्व्याख्या यथा -" तारा शक्तिविशेषः प्रणवो ब्रह्म च । तदुक्तमन्यत्र—इदं तारात्रयं प्रोक्तमगम्यागमनादृते' । एतद्वृत्तौ ' तारात्रयं प्रणवशतत्रयम्' इत्याह विज्ञानेश्वरः । तया सह वर्तमानं यदन्तःपुरमिति पुरस्य शरीरस्यान्तर्मध्यं कुण्डलिनी नाडीविशेषः । क्वचिद् ' अमाद्यन्तस्य परत्वम् ' इति पुरस्य परनिपातः । तस्याः पर्यन्तः सहस्रारं कमलं तत्र

१ ०ध्वनितधन्यतराति–ध्वनि–मनोहरम्. २ ०अर्चनबालि ३ तपोधनैः, मुनिभिर्मु०. ५ ०पद्मिनी. ४ अक्षमाला. ६ दिवाकरे. ७ मत्पतन०. ८ अम्बरतलम्. ९ सतारम्. १० उपगतायां च. ११ शापवृत्तमिव भयाद्दिहा०. १२ वृक्ष.

सप्तर्षिमण्डलाध्युषितमरुन्धतीसंचरणपवित्रमुपाहिताषाढमालक्ष्यमाणमूलमेकान्तास्थितचारुतारकमृगमभमरलोकाश्रममिव गगनतलममृतदीधितिरध्यतिष्ठत् । चन्द्राभरणभृतस्तारकाकपालशकलालंकृतादम्बरतलात्त्र्यम्बकोत्तमाङ्गादिव गङ्गा सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि विकचपुण्डरीकसिते चन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवादृश्यत हरिणः । तिमिरजलधरसमयापगमानन्तरमभिनवसितसिन्दुवारकुसुमपाण्डुरैरर्णवागतैरगाह्यन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः । विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत । शनैः शनैश्च दूरोदिते भगवति हिमततिस्रुति सुधाधूलिपटलेनेव धवलीकृते चन्द्रातपेन जगत्यवश्यायजलबिन्दुपतनमन्दगतिषु विघटमानकुमुदवनकषायपरिमलेषु समुपो-

योगसामर्थ्यात्स्थितं लैङ्गिकं तनुर्यस्य स तथा ” इति । अथाश्रमसाम्येन गगनतलं विशिनष्टि—**पर्यन्तेति**—पर्यन्ते स्थिता तन्वी तिमिरवच्छ्यामा ये तमालास्तेषां वनस्य लेखा यस्मिन् । पक्षे पर्यन्ते स्थितं तन्वल्पं तिमिरमेव तमालवनं तस्य लेखा यस्मिन् । सप्तर्षय ऋषिविशेषाः पक्षे सप्ततारकाः । अरुन्धती वसिष्ठपत्नी पक्षे तन्नाम्नी तारका । उपहित आषाढः पलाशदण्डो यस्मिन् । पक्षे आषाढा पूर्वाषाढानक्षत्रम् । मूलानि वृक्षमूलानि पक्षे मूलं नक्षत्रविशेषः । चारवस्तारकाः कनीनिका येषां तादृशा मृगा यस्मिन् । पक्षे चारुतारको मृगो मृगशिरा नक्षत्रविशेषः । अमृतरूपा दीधितयो यस्यामृतदीधितिश्चन्द्रमाः । **चन्द्रेति** । चन्द्र एवाभरणं बिभर्तीति चन्द्राभरणभृत् तस्मात् । पक्षे चन्द्रश्चन्द्रकला । तारका एव पक्षे तारका इव कपालशकलानि । तैः अलंकृतात् । सागरानापूरयन्ती गङ्गा ज्योत्स्ना च । हंसवत् हंसैश्च धवला । विकचं विकस्वरं यत्पुण्डरीकं तद्वत्सिते धवले । अन्यदपि सरो विकसितैः पुण्डरीकैः सितं भवति । अमृतपङ्के चन्द्रस्य सुधामयत्वात् । **तिमिरेति**—नीलत्वसाम्यात्तिमिरमेव जलधरसमयस्तस्यापगमानन्तरम् । अभिनवानि सितानि सिन्धुवारकुसुमानि तद्वत्पाण्डुरैः । अर्णवागतैः—अत्रार्णवशब्दो यद्यपि समुद्रे रूढस्तथापि योगबलाज्जलाशयसामान्ये द्रष्टव्यः । जलं प्राप्तैरित्यर्थः । अम्बरापगा स्वर्धुनी तस्यामवगाहो मज्जनं तेन धौतं सिन्दूरं यस्य । **शनैरिति** । शनैः शनैः दूरोदिते हिमस्य तुहिनस्य ततिः प्रवाहस्तस्याः स्रवतीति स्रुत्तस्मिन् । हारीतः पितरमवोचदिति सम्बन्धः । सुधा लेपनद्रव्यं तस्य धूलिस्तस्याः पटलं तेनेव । निशामुखसमीरेषु प्रवहत्सु सत्सु । तानेव विशेषयति **अवश्यायेति**—अवश्यायो हिमं । विघटमानानि विकासं प्राप्यमाणानि यानि कुमुदवनानि तेषां कषायः सुरभिर्गन्धो येषु । समुपोढा सम्यक् प्रकारेण प्राप्ता या निद्रा तस्या भरेणालसा मन्थरा तारका अक्ष्णः कनीनिका येषां तैः । अन्योन्यं ग्रथितानि पक्ष्मपुटानि

१ पूतम्. २ गगनम्. ३ समयादन०. ४ गगनागतैः. ५ अवगाह्यन्त, अपाह्यन्त. ६ हिमदीधितौ. ७ बिन्दुशीतेषु मन्द०. ८ स्वच्छ.

ढनिद्राभरालसतारकैरन्योन्यग्रथितपक्ष्मपुटैरारब्धरोमन्थमन्थरमुखैः सुखासीनैराश्र-
मृगैरभिनन्दितागमनेषु प्रवहत्सु निशामुखसमीरेष्वर्धयाममात्रावखण्डितायां
विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैः सह मुनिभिरुपसृत्य चन्द्रातपो-
द्भासिनि तपोवनैकदेशे वेत्रासनोपविष्टमनतिदूरवर्तिना जाल्पादनाम्ना शिष्येण
दर्भपवित्रधविन्त्रपाणिना मन्दमुपवीज्यमानं पितरमवोचत् । हे तात सकलेयमा-
श्चर्यश्रवणकुतूहलाकलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते ।
व्यपनीतश्रमश्च कृतोयं पतत्रिपोतः । तदावेद्यतां यदनेन कृतमपरस्मिञ्जन्मनि
कोऽयमभूद्भविष्यति च । इत्येवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य
तांश्च सर्वानेकाग्राञ्छ्रवणपरान्मुनीन्बुद्ध्वा शनैः शनैरब्रवीत् । श्रूयतां यदि कुतूहलम् ।

अस्ति सकलत्रिभुवनललामभूता, प्रसवभूमिरिव कृतयुगस्य, आत्मनि-
वासोचिता भगवता महाकालाभिधानेन भुवनत्रयसर्गस्थितिसंहारकारिणा
प्रमथनाथेनापरेव पृथिवी समुत्पादिता, द्वितीयपृथिवीशङ्कया च जलनिधि-
नेव रसातलगम्भीरेण जलपरिखावलयेन परिवृता, पशुपतिनिवासप्रीत्या
गगनपरिसरोल्लेखिशिखरमालेन कैलासगिरिणेव सुधासितेन प्राकारमण्डलेन
परिगता, प्रकटशङ्खशुक्तिमुक्ताप्रवालमरकतमणिराशिभिश्चामीकरचूर्णवालुका-
निकरनिचितैरायामिभिरगस्त्यपरिपीतसलिलैः सागरैरिव महाविपणिपथै-

---

नेत्ररोमाणि येषां तैः । आरब्धो यो रोमन्थस्तत्र तेन वा मन्थरमलसं मुखं येषां तैः । स्थित्वा स्थित्वा रोमन्थं कुर्वद्भिरित्यर्थः । **अर्धेति**—अर्धयाममात्रमवखण्डितं यस्याः । **दर्भेति**—दर्भपवित्रं च धवित्रं च यद्वा दर्भवत्पवित्रं धवित्रं मृगचर्मणा रचितं व्यजनं तत्पाणौ यस्य । ' धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा । ' इत्यमरः । आबद्धं मण्डलं यया सा । प्रतीक्षते भवन्तमिति शेषः । एकमग्रं येषां तान् एकाग्रमनस इत्यर्थः ॥

**अस्तीति**—अस्ति उज्जयिनी नाम नगरीति विप्रकृष्टेनान्वयः । ललामभूता भूषणभूता प्रधानभूता वा । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु । इत्यमरः । महाकाल उज्जयिनी-स्थशिवज्योतिर्लिङ्गम् । तदुक्तं स्कन्दपुराणे—आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम् । मर्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयात् ॥ इति । प्रमथनाथो गणानां नाथः शिवः । जलयुक्ता परिखा जलपरिखा तस्या वलयेन । **गगनेति**—गगनस्य परिसरः पर्यन्तभूस्तमुल्लिखति त्युल्ले-खिनी शिखरमाला अग्रकक्षापंक्तिः सानुश्रेणी च यस्य । सुधासितेन—सुधया सुधावत्सितेन च । प्रकटाः प्रस्फुटा मणीनां राशयो येषु तैः । चामीकरं सुवर्णम् । चामीकरचूर्णं पर्वतादौ ' चूकि ' इति प्रसिद्धमिति भानु० । आयामिभिर्दैर्घ्यवद्भिर्विस्तीर्णैरित्यर्थः । विपणिपथैः पण्यवीथिकाभिः ।

---

१ प्रवान्सु २ वेत्रासने सुखोपविष्टम्. ३ नातिदूर. ४ दर्भपवित्रपाणिना. ५ आकुलित०. ६ चेति. ७ श्रवणतत्परान् ८ कारणेन. ९ तलोल्ले. १० परिवृता. ११ सिकता.

रुपशोभिता, सुरासुरसिद्धगन्धर्वविद्याधरोरगाध्यासिताभिश्चित्रशालाभिरविरतोत्सवप्रमदावलोकनकुतूहलादम्बरतलावतीर्णाभिर्दिव्यविमानपङ्क्तिभिरिवालंकृता, मथनोद्धतदुग्धधवलितमन्दरद्युतिभिः कनकमयामलकलशशिखरैरनिलदोलायितसितध्वजैरुपरिपतदभ्रगङ्गैरिव तुषारगिरिशिखरैरमरमन्दिरैर्विराजितशृङ्गाटका, सुधावेदिकोपशोभितोदपानैरनवरतचलितजलघटीयन्त्रसिच्यमानहरितोपवनान्धकारैः केतकीधूलिधूसरैरुपशल्यकैरुपशोभिता, मदमुखरमधुकरपटलान्धकारितनिष्कुटा, स्फुरदुपवनलताकुसुमपरिमलसुरभिसमीरणा, रणितसौभाग्यघण्टैरालोहितांशुकपताकैराबद्धरक्तचामरैर्विद्रुममयैः प्रतिभवनमुच्छ्रितैर्मकराङ्कैर्मदनयष्टिकेतुभिः प्रकाशितमकरध्वजपूजा, सततप्रवृत्ताध्ययनध्वनिधौतकल्मषा, स्तिमितमुरजरवगम्भीरगर्जितेषु सलिलसीकरासारस्तबकरचितदुर्दिनेषु पर्यस्तरविकिरणरचितसुरचापचारुषु धारागृहेषु मत्तमयूरैर्मण्डलीकृतशिखण्डैस्ताण्डवव्यसनिभिराबध्यमानकेकाकोलाहला, विकचकुवलयकान्तैरुत्फुल्लकमलधवलोदरैरनिमिषदर्शनरमणीयैराखण्डललो-

**अविरतेति**–अविरतं य उत्सवस्तस्मिन् प्रकृष्टो मदो रूपसौभाग्यजो विकारविशेषो यासां ताः प्रमदास्तासां यदवलोकनं तत्र कुतूहलं तस्मात् । **कनकेति**–कनकस्य विकाराः कनकमयाश्च ते अमलाश्च ये कलशास्ते शिखरेषु येषाम् । अभ्रगङ्गाकाशगङ्गा । तस्याः श्वेतत्वात्तरङ्गवेल्लितत्वाच्चानिलपर्यस्तध्वजसाम्यम् । विराजितानि शोभमानानि शृङ्गाटकानि चतुष्पथानि यस्याम् । उदकं पिबन्त्यस्मिन्नित्युदपानं कूपः । अधिकरणे ल्युट् । अनवरतं चलितानि जलघटीयन्त्राणि तैः सिच्यमानानां हरितानामुपवनानामन्धकारः येषु तैः । उपशल्यकैः ग्रामान्तैः । 'ग्रामान्ते उपशल्यं स्यात्' इत्यमरः । **मदेति**–मदेन मुखरं शब्दायमानं मधुकरपटलं तेनान्धकारिता निष्कुटा यस्याम् । 'गृहारामास्तु निष्कुटाः' इत्यमरः । रणिताः शब्दायमानाः सौभाग्यव्यञ्जका घण्टाः सौभाग्यघण्टा येषु तैः । विद्रुमाणि प्रचुराणि येषु तैः । प्राचुर्यार्थे मयट् । मदनो वृक्षभेदस्तन्निर्मिता यष्टिः । मदनो कामस्तदर्था वा यष्टिः । अध्ययनध्वनिः वेदाभ्यासशब्दः तेन धौतं कल्मषं पापं यस्याम् । स्तिमित आर्द्रो धीरो वा यो मृदङ्गध्वनिः स एव गम्भीरं गर्जितं येषु । **सलिलेति**–सलिलसीकरा जलविप्रुषस्तेषामासारो वेगवती वृष्टिः तस्याः स्तबकाः पुञ्जास्तै रचितं दुर्दिनमन्धकार इति यावदर्थः । **पर्यस्तेति**–पर्यस्ता अर्थात्सीकरेषु ये रविकिरणास्तै रचितं यत्सुरचापमिन्द्रधनुस्तेन चारुषु । जलतुषारविमिश्रा रविकिरणा विविधवर्णान् प्रकटीकुर्वन्तीति प्रसिद्धम् । धारागृहेषु जलोद्गारयन्त्रसनाथगृहेषु । ताण्डवमुद्धतं नृत्यं तत्र व्यसनिभिरासक्तैः । **उत्फुल्लेति**–कमलैः पक्षे कमलवद् धवलमुदरं मध्यभागो येषां तैः । **अनिमिषेति**–अनिमिषा मत्स्यास्तेषां दर्शनेन रमणीयैः । पक्षे अनिमिषं पक्ष्मपातरहितं यद्दर्शनं तेन

१ अनवरत. २ उत्सवावलोकन. ३ दुग्धसिन्धु. ४ विभूषिता. ५ कुला०. ६ प्रतिगृहम्. ७ अङ्कितैः. ८ ०साररचित. ९ पर्यन्त,०दिवसकरकिरणस्तबकरचित०. १० मयूरमण्डलैः. ११ केकारव. १२ कुमुद-

त्नैरिव सहस्रसंख्यैरुद्भासिता मरीचिभिः, अविरलकदलीवनकलिताभिरमृतफेनपु-ञ्जपाण्डुराभिर्दिशि दिशि दन्तवलभिकाभिर्धवलीकृता, यौवनमदमत्तमालवीकुचकलशलुलितसलिलया भगवतो महाकालस्य शिरसि सुरसरितमालोक्य समुपजातेर्ष्ययेव सततसमावद्धतरंगभ्रुकुटिलेखया खमिव क्षालयन्त्या सिप्रया परिक्षिप्ता, सकलभुवन-ख्यातयशसा हरजटाचन्द्रेणेव कोटिसारेण मैनाकेनेवाविदितपक्षपातेन मन्दाकिनीप्रवाहेणेव प्रकटितकनकपद्मराशिना स्मृतिशास्त्रेणेव सभावसथकूपप्रपारामसुरसदनसेतुयन्त्रप्रवर्तकेन मन्दरेणेवोद्धृतसमग्रसागररत्नसारेण संगृहीतगारुडेनापि भुजंगभीरु-

रमणीयैः मनोहरैः । आविरलेति—अविरलानि कदलीवनानि तैः कलिताभिर्व्याप्ताभिः । दन्तवलभिकाभिर्हस्तिदन्तनिर्मितचन्द्रशालाभिः । 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि ।' इति रभसः । यौवनेति—मत्ता माल्व्यो मालवदेशस्त्रियस्तासां कुचा एव कलशास्तैर्लुलितमान्दोलितं सलिलं यस्यास्तया । सततं समावद्धा तरङ्गा एव भ्रुकुटिलेखा यया । अनेन तस्याः सपत्नीभावो दर्शितः । पुनश्च विलासिजनेनाधिष्ठिता । विलासी चासौ जनश्च विलासिनीनां जनश्चेति समासः । तमेव विशेषयन्नाह—सकलेति—यशः कीर्तिः शोभा च । कोटिः संख्याविशेषस्तावत्सारं द्रव्यं यस्य । पक्षे कोटी अग्रभागौ ताभ्यां सारः प्रधानः । पक्षपातः असत्पक्षाङ्गीकारः । पक्षे पक्षच्छेदः । पुरा किल हिरण्याक्षमायया सञ्जातपक्षान् लोकक्षयाय प्रवृत्तान् पर्वतान् स्वस्थानापन्नान्कर्तुमुद्यतेनेन्द्रेण मैनाकवर्जं सर्वेषां पक्षाः शातिताः । तदुक्तं हरिवंशे-कदाचित्तु सपक्षास्ते पर्वता धरणीधराः । प्रस्थिता धरणीं त्यक्त्वा नूनं तस्यैव [ हिरण्याक्षस्य ] मायया । स्थैर्यहेतोर्धरण्यास्तु ज्ञात्वा चागस्कृतान् गिरीन् । स्वेषु स्थानेषु संस्थाप्य पर्वतानां पुरन्दरः । चिच्छेद भगवान्पक्षान्वज्रेण शतपर्वणा ॥ सर्वेषामेव पक्षास्तु च्छिन्नाः शक्रेण धीमता । एकः सपक्षो मैनाकः सुरैस्तत्समयः कृतः ॥ इत्या० । उक्तं च कुमारसंभवे ' अवेदनाज्ञं कुलिशक्षतानाम् ' इति । प्रकटितेति—प्रकटिताः कनकस्य सुवर्णस्य सुवर्णनाणकानामित्यर्थः । पद्मः संख्याविशेषस्तावत्प्रमाणा राशयो येन । ' प्रकटिताः प्रकाशिताः पदैकदेशे पदसमुदायोपचारात्पद्मरागमणीनां राशयः येन' इति भानु० । पक्षे कनकपद्मानि हेमाम्भोरुहाणि । सभेति—सभा संसद्, आवसथः छात्रादीनामालयः सामान्यतो गृहं वा प्रपा पानीयशाला, आरामाः कृत्रिमाणि वनानि । ' आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । ' इत्यमरः । यन्त्रं कूपयन्त्रादि । एतत्सर्वं पूर्तमित्युच्यते धर्मशास्त्रकारैः—" वापीकूपतटाकादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते' ॥ तथा च मनुः—' श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः ' । इति । अस्य फलमुक्तं छान्दोग्योपनिषदि 'य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति इत्यादि । पक्षे पुण्यार्जनहेतुना तद्विधायकेन । उद्धृतेति—उदूर्ध्वं धृतानि समग्राणि सागराणां रत्नसाराणि उत्तमोत्तमरत्नानि येन । पक्षे उद्धृतानि बहिःकृष्टानि समस्तानि चतुर्दशेत्यर्थः । सागराद्रत्नसाराणि येन । संगृहीतेति । संगृहीतं गारुडं मरकतं विषमन्त्रो वा । एवं भूते-

१ क्षुभित. २ तेर्षयेव. ३ निखिलभुवनतल. ४ समस्त. ५ भुजङ्गसङ्क.

णाखलोपजीविनापि प्रणयिजनोपजीव्यमानविभवेन वीरेणापि विनयवता प्रियंवदेनापि सत्यवादिनाऽभिरूपेणापि स्वदारसंतुष्टेनातिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन कामार्थपरेणापि धर्मप्रधानेन महासत्त्वेनापि परलोकभीरुणा सकलविज्ञानविशेषविदा वदान्येन दक्षेण स्मितपूर्वाभिभाषिणा परिहासपेशलेनोज्ज्वलवेषेण शिक्षिताशेषदेशभाषेण वक्रोक्तिनिपुणेनाख्यायिकाख्यानपरिचयचतुरेण सर्वलिपिज्ञेन महाभारतपुराणरामायणानुरागिणा बृहत्कथाकुशलेन द्यूतादिकलाकलापपारगेण श्रुतरागिणा सुभाषितव्यसनिना प्रशान्तेन सुरभिमासमारुतेनेव सततदक्षिणेन हिमगिरिकाननेनेवान्तःसरलेन लक्ष्मणेनेव रामाराधननिपुणेन

नापि भुजंगभीरुणेति विरोधः । परिहारस्तु भुजङ्गो धूर्तो वा गणिकापतिर्वेत्यर्थात् । खलाः शठा उपजीविनो यस्य । यद्वा खलानुपजीवतीति तेनापि प्रणयिजनेन सज्जनेनोपजीव्यमानो विभवो यस्येति विरोधः । परिहारस्तु खलं धान्यकंडनस्थानं स्वकृषीयान्नेनोपजीविकां कुर्वाणेनेत्यर्थः । वीरेण शूरेणापि विनयवता नमनशीलेनेति विरोधः । प्रियं वदतीति प्रियंवदः । स हि प्रायेणासत्यवादी भवति । एवंभूतेनापि सत्यवादिनेति विरोधः । "तत्परिहारस्तु प्रियो वल्लभो वदो वक्ता यस्येत्यर्थात् । 'अनुस्वारः श्लेषभङ्गकृन्न भवति' इति प्राञ्चः । " इति भानु० । अभिमतं रूपमस्याभिरूपः रूपपक्षपाती रम्याकृतिर्वा पण्डितश्च । 'अभिरूपो बुधे रम्ये' इति मेदिनी । अतिथिजनः परजन एव । तस्य प्रार्थनपरेणापि परप्रार्थनानभिज्ञेनेति विरोधः । परिहारपक्षे परेषु शत्रुषु यत्प्रार्थनं तत्रानभिज्ञेन । परा अतिथ्यागमनादन्या चासौ प्रार्थना च तत्रानभिज्ञेनेति वा । **कामार्थेति**—कामः स्त्रीषु रागः स एवार्थः साध्यं वस्तु तत्परेण यद्वा कामः अर्थो द्रव्यं च तत्परेणापि धर्मप्रधानेनेति विरोधः । परिहारपक्षे कामोभिमतो योर्थस्तत्साधकेन । यद्वा कामार्थौ पुरुषार्थौ तत्साधकेनापि धर्मप्रधानेन धर्मोत्तरेण । यस्य अर्थकामौ धर्ममूलावास्तामित्यर्थः । तदुक्तं भारते—'त्रिवर्गोयं धर्ममूलो नरेन्द्र राज्यं चेदं धर्ममूलं वदन्ति ।' इति अनुरूपोर्थो रघुवंशे—'अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ।' इति । परलोकः शत्रुलोकः पक्षे स्वर्गलोकः । **सकलेति**—सकलं यद्विज्ञानं शिल्पशास्त्राद्यनुभवजन्य ज्ञानं तत्र यो विशेषस्तद्विदा शिल्पादिरहस्यज्ञेन । 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।' इत्यमरः । परिहासो नर्मवाक्यं तत्र पेशलेन चतुरेण । देशभाषाः प्राकृतसंज्ञाः । वक्रोक्तिनिपुणेन—'यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते । श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा' ॥ इति काव्यप्रकाशकृतः । सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते । यत्नोस्यां कविना कार्यः कोलंकारोनया विना ॥ इति भामहः । श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् । इति दण्डी च । आख्यायिकादयः शब्दा व्याख्याताः । बृहत्कथा कात्यायनेन काणभूतये श्राविता सप्तलक्षमिता । तल्लक्षणमुक्तं दण्डिना—भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ।' इति । 'वाशिष्ठादिकथा ।' इति भानु० । सुरभिमासः वसन्तः । सततं दक्षिणा त्यागो यस्य । पक्षे दक्षिणदिग्गामिना । अन्तः-

१ सकलोप०, कलो०. २ विद्यावदानेन दानशीलेनादीनेन ३ दक्षिणेन.

**शत्रुघ्नेनेवाविष्कृतभरतपरिचयेन दिवसेनेव मित्रानुवर्तिना बौद्धेनेव सर्वास्तिवादशू-रेण सांख्यागमेनेव प्रधानपुरुषोपेतेन जिनधर्मेणेव जीवानुकम्पिना विलासिजनेना-धिष्ठिता, सशैलेव प्रासादैः, सशाखानगरेव महाभवनैः, सकल्पवृक्षेव सत्पुरुषैः, दर्शितविश्वरूपेव चित्रभित्तिभिः, संध्येव पद्मरागानुरागिणी, अमराधिपमूर्ति-रिव मखशतानलधूमपूता, पशुपतिलास्यक्रीडेव सुधाधवलाट्टहासा, वृद्धेव जातरूपक्षया, गरुडमूर्तिरिवाच्युतस्थितिरमणीया, प्रभातवेलेव प्रबुद्धसर्वलोका**

---

सरलेन हृदयेऽकुटिलेन । पक्षे मध्ये सरलवृक्षा यस्य । **रामेति**–रामा रमण्यः तासामाराधनं संमानना तत्र निपुणेन । पक्षे रामो ज्येष्ठो दाशरथिः । आविष्कृतो भरते भरतप्रणीते नाट्यशास्त्रे परिचयो येन । पक्षे भरतः केकयीपुत्रः । बौद्धेन सुगतेन । **सर्वेति**–सर्वस्य वस्तुनोऽस्तीति वादोऽस्तिवादस्तत्र शूरेण । कदाचिदपि किमपि नास्तीत्यवादिनेत्यर्थः । 'सर्वास्तिवादो बौद्धानां निकायभेदः स च शूरो यस्मिन् । अतःपरं सिद्धान्ताभावात् । यद्वा सर्वेषां पदार्थानां सर्ववादिनां वा योऽस्तिवादोऽक्षणिकवादस्तत्र शूरेण तदवक्षेपकेण' । इति भानु० । सर्वस्य वस्तुनोऽस्तित्ववादे शूरेण । अत्र ब्रह्मसूत्रभाष्ये शङ्कराचार्याः–तत्र 'बौद्धसिद्धान्ते एते त्रयो वादिनो भवन्ति । केचित्सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिनः । तत्र ये सर्वास्तित्ववादिनो बाह्यमाभ्यन्तरं च वस्त्वभ्युपगच्छन्ति **भूतं भौतिकं चित्तं चैत्तं** च तांस्तावत्प्रतिब्रूमः' । इति । सांख्यागमः कापिलं दर्शनम् । **प्रधानेति**-प्रधाना मुख्याः पुरुषास्तैरुपेतेन । पक्षे प्रधानपुरुषौ सांख्यशास्त्रोक्तौ मुख्यप-दार्थौ । तत्र सत्त्वादीनां साम्यावस्था प्रधानम् । पुरुषश्चेतनारूपः 'न प्रकृतिर्न विकृतिः पुरुषः' इत्युक्तलक्षणः । जिनधर्म आर्हतं दर्शनम् । 'सप्त चैषां पदार्थाः–जीवाजीवास्रवसंवरनिर्जरब-न्धमोक्षा नाम । संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ' । इति ब्रह्मसूत्रभाष्ये । आर्हता हि अहिंसावादिनः । अत एवोक्तं **जीवेति**–जीवेष्वनुकम्पास्त्यस्येत्यभङ्गः श्लेषः । शाखानग-राण्युपपुराणि । सत्पुरुषैः–तेषां दानशौण्डतया कल्पवृक्षसाम्यम् । दर्शितं विश्वस्य रूपं विश्वानि रूपाणि वा यया । चित्रकलायाः सकलवस्तुप्रकटनसामर्थ्यात्तदुत्प्रेक्षा । **पद्मेति**–पद्मरागमणी-नामनुरागो रक्तिमा यस्याम् । अनेन रत्नवैपुल्यं ध्वनितम् । अनुरूपवर्णनं भट्टौ–'अन्तर्निविष्टो-ज्ज्वलरत्नभासः' इत्यादि । पक्षे पद्मरागस्येवानुरागो यस्याम् । **मखेति**–शतसंख्यका मखा यज्ञाः । पक्षे शतमश्वमेधाः । लास्यक्रीडा ताण्डवनृत्यम् । **सुधेति**–सुधया श्वेतचूर्णेन धवला अट्टाः सौधा एव हासो यस्याः । पक्षे सुधावद्धवलोऽट्टहास उच्चैर्हासो यस्याः । **जातेति**–जातरूपस्य सुवर्णस्य क्षयो वसतिर्यस्याम् । जातरूपस्य सुवर्णस्य क्षयाणि गृहाणि यस्यामिति केचित् । पक्षे जातो रूपस्य क्षयः क्षतिर्यस्याः । **अच्युतेति**–अच्युता सदैव स्थिरा या स्थिति-र्मर्यादापालनं तया रमणीया । पक्षे अच्युतस्य विष्णोः स्थितिरारोहणम् । प्रबुद्धा

---

१ सर्वदा नास्तित्ववादशूरेण, सर्वास्तिवादशून्येन. २ ०गुणोपेतेन. ३ सर्वभूतानु०. ४ सशाखेव.

शबरवसतिरिवावलम्बि[1]चामरनागदन्तधवलगृहा, शेषतनुरिव[2] सदासन्नवसुधाधरा, जलधिमथनवेलेव महाघोषपूरितदिगन्तरा, प्रस्तुताभिषेकभूमिरिव संनिहितकनकघटसहस्रा, गौरीव महासिंहासनोचितमूर्तिः, अदितिरिव देवकुलसहस्रसेव्या, महावराहलीलेव दर्शितहिरण्याक्षपाता, कद्रूरिवानन्दितभुजंगलोका, हरिवंशकथेवानेकबालक्रीडारमणीया, प्रकटाङ्गनोपभोगाप्यखण्डितचरित्रा, रक्तवर्णापि सुधाधवला, अवलम्बितमुक्ताकलापापि विहारभूषणा बहुप्रकृतिरपि स्थिरा विजितामरलोकद्युतिरवन्तीषूज्जयिनी नाम नगरी ।

यस्यामुत्तुङ्गसौधोत्सङ्ग[3]संगीतसङ्गिनीनामङ्गनानामतिमधुरेण गीतरवेणाकृष्य-

इद्धबोधाः पण्डिताः पक्षे सुप्तोत्थिताः । **अवलम्बितेति**—अवलम्बितानि चामराणि येषु एवंविधा नागदन्ता भारयष्टिका येष्वेवंभूतानि धवलगृहाणि यस्याम् । पक्षे अवलम्बितानि चामराणि नागदन्ता हस्तिदन्ताश्च तैर्धवलानि गृहाणि यस्याम् । **सदेति**—सदा सती नव्या च सुधा तस्या धरा यद्वा सन्तो मनोहरा आसन्नाः समीपवर्तिनो वसुधाधरा यस्याम् । पक्षे सदा सन्ना शिरःस्थिता या वसुधा तस्याः धरतीति धरा धारिणी । **महेति**—महद्भिर्घोषैर्गभीरपल्लिभिः पूरितानि खचितानि दिगन्तराणि यस्याम् । पक्षे महाघोषेण मन्थनशब्देनेत्यादि पूर्ववत् । कनकघटाः सुवर्णकाराः पक्षे सुवर्णकलशाः । **महेति**—महासिंहासनानि सुवर्णासनानि तत्रोचिता मूर्तयो यस्याम् । पक्षे महासिंहः पार्वत्या वाहनम् । अदितिः कश्यपपत्नी देवमाता च । देवकुलानि देवतायतनानि । पक्षे देवकुलैः सेव्या तन्मातृत्वात् । **हिरण्येति**—हिरण्याक्षाणां सुवर्णमयपाशानां पातो यस्याम् । पक्षे तन्नामकदैत्यस्य पातो विनाशः । तत्कथा तूक्ता कद्रूः सर्पमाता विनतायाः सपत्नी । आनन्दितो भुजङ्गलोकः गणिकापतिजनो यस्याम् । पक्षे भुजङ्गलोको नागसमूहः । **अनेकेति**—अनेका बालक्रीडाः (कृष्णस्य) ताभिः । पक्षे अनेकेषां बालानां शिशूनां क्रीडेत्या० । पक्षे अनेका बालनाम्नो नृपस्य क्रीडा इति भानु० । **प्रकटेति**—प्रकटोऽगूढोऽङ्गनानामुपभोगो यस्यामेवं भूताप्यखण्डितचरित्रेति विरोधः प्रकटोपभोगस्य गर्हितत्वात् । परिहारस्तु प्रकटोङ्गनानामुपभोगस्ताम्बूलभक्षणादिर्यस्यां, प्रकटानां विस्तृतानामङ्गनानां प्राङ्गणानामुपभोगो यस्यामित्यर्थो वा । **रक्तेति**—विरोधः स्फुटः । परिहारस्तु रक्ता अन्योन्यस्मिन्ननुरक्ता वर्णा ब्राह्मणादयो यस्यामित्यर्थात् । अवलम्बित आलम्बनीकृतो मुक्ताकलापो ययैवंभूतयापि विगतं हार एव भूषणं यस्याः । यद्वा विगतो हारः मौक्तिकमाला येभ्य एवंभूतानि भूषणानि यस्याम् । इति विरोधः । परिहारपक्षे विहारा जैनप्रासादाः क्रीडोद्यानानि वा भूषणं यस्याः । बहुप्रकृतिश्चञ्चलचित्तापि स्थिरेति विरोधः । परिहारपक्षे बह्वयः प्रकृतयः पौरजनाः स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्यांगानि प्रकृतयः पौराणां श्रेणयोपि च । इत्युक्ता वा यस्याम् । **विजितेति**—एवं भट्टिकाव्ये—'स्थितावहस्येव पुरं मघोनः' इति । **यस्यामिति** उत्तुङ्गा अत्युच्चा ये सौधाः सुधाधवलहर्म्याणि प्रासादा वा तेषामुत्सङ्गेषूपरितनप्रदेशेषु यत्संगीतं तत्र सङ्गिनीनां व्यासक्तानाम् । आकृष्यमाणा अतएवाधोमुखाः तुरंगा यस्य । पुरः पर्यस्तो

१ चारुचामर. २ आस्तीकननुरिव. ३ उत्संगीतसं०, उत्सङ्गसं०.

माणाधोमुखतुरंगः पुरःपर्यस्तरथपताकापटः कृतमहाकालप्रणाम इव प्रतिदिवसमालक्ष्यते गच्छन्भगवान्दिवसकरः। यस्यां च संध्यारागारुणा इव सिन्दूरमणिकुट्टिमेषु प्रारब्धकमलिनीपरिमलना इव मरकतवेदिकासु गगनतलप्रसृता इव वैदूर्यमणिभूमिषु तिमिरपटलविघटनोद्यता इव कृष्णागुरुधूममण्डलेष्वभिभूततारकापङ्क्तय इव मुक्ताप्रालम्बेषु विकचकमलचुम्बिन इव नितम्बिनीमुखेषु प्रभातचन्द्रिकामध्यपतिता इव स्फटिकभित्तिप्रभासु गगनसिन्धुतरंगालम्बिन इव सितपताकांशुकेषु पल्लविता इव सूर्यकान्तोपलेषु राहुमुखकुहरप्रविष्टा इवेन्द्रनीलवातायनविवरेषु विराजन्ते रविगभस्तयः। यस्यां चानुपजाततिमिरत्वादविघटितचक्रवाकमिथुना व्यर्थीकृतसुरतप्रदीपाः संजातमदनानलदिग्दाहा इव कामिनीनां भूषणप्रभाभिर्यान्ति बालातपपिञ्जरा इव रजन्यः। यां च संनिहितविषमलोचनामनवरतमतिमधुरो रतिप्रलाप इव प्रसर्पन्मुखरीकरोति मकरकेतुदाहहेतुभूतो भवनकलहंसकुलकोलाहलः। यस्यां च निशिनिशि पवनेविलोलैर्दुकूलपल्लवैरुल्लसद्भिर्मालवीमुखकमलकान्तिलज्जितस्येन्दोः कलङ्कमिवापनयन्तो दूरप्रसारितोर्ध्वध्वजभुजाः प्रासादा लक्ष्यन्ते। यस्यां च सौधशिखरशायिनीनां पश्यन्मुखानि पुरसुन्दरीणां मदनपरवश इव पतितः प्रतिमाछलेन लुठति बहलचन्दनजलसेकशिशिरेषु मणिकुट्टिमेषु मृगलाञ्छनः। यस्यां च निशावसानप्रबुद्धस्य

विक्षिप्तो रथस्य पताकापटो यस्य। यस्यां रविगभस्तयो विराजन्ते। कुत्र कीदृशा इवेत्याह **सन्ध्येति**। **प्रारब्धेति**-प्रारब्धं कमलिनीनां परिमलनं मर्दनं विलुठनमिति यावदर्थः। भानुचंद्रस्तु परिमलनमित्यत्र परिमण्डलमिति पाठं गृहीत्वा परिमण्डलं लुठनमित्येव व्याचष्टे। वैदूर्यमणीनां नीलवर्णत्वसाम्यादाह **गगनेति**। विघटने भेदने ध्वंसे वा उद्यताः कृतप्रयत्नाः। किरणसंक्रमेण मुक्ताफलानां तरलच्छायायास्तेजोविशेषाधानादाह **अभिभूतेति**। मुक्ताप्रालम्बेषु मुक्ताकलापेषु हारविशेषेषु वा। **प्रभातचन्द्रिकेति**-उदये चन्द्रिकाया रक्तत्वान्मध्ये च पाण्डुरत्वात्प्रातस्तु स्फटिकसाम्यात्प्रभातपदम्। इति भानु०। सूर्यरश्मीनां संक्रमवशादग्निस्फुरणादाह **सूर्येति**। पल्लविता अङ्कुरिताः। मुखकुहरं आननविवरम्। **अनुपजातेति**—अयं चक्रवाकमिथुनानामविघटने सुरतप्रदीपव्यर्थीभावे च हेतुः। सञ्जातो मदनानल एव दिग्दाहो यासु। **बालेति**—अनेन भूषणानां प्रकर्ष उक्तः। विषमलोचनः शिवः। **मकरेति**-मकरकेतुना मदनेन योदाहस्तस्य हेतुभूतः। पक्षे मदनस्य दाहो हेतुभूतोस्य रतिप्रलापस्य। **दुकूलपल्लवैः** ध्वजपट्टवस्त्राञ्चलैः। **दूरेति**-दूरं प्रसारिता ऊर्ध्वा ध्वजा एव भुजा येषां ते तथोक्ताः। अनेन प्रासादानां गगनचुम्बित्वं ध्वनितम्। तारतरमत्युच्चस्वरेण शुकसारिकासमूहस्य

१ रथतु०. २ नील०, परिमिलना, ०परिमल०; परिमीलना, ० परिमण्डला. ३ गगनपर्यस्ता:. ४ धूप. ५. तरङ्गसङ्गिनः. ६ प्रकटीकृत. ७ पिञ्जरत्वम्. ८ प्रतिवासरं प्रसर्पन्. ९ वशावि०. १० शिखरोत्सङ्ग.

तारतरमपि पठतः पञ्जरभाजः शुकसारिकासमूहस्याभिभूतगृहसारसविरुतेन विस्तारिणा विलासिनीभूषणरवेणाविभाव्यमाना व्यर्थीभवन्ति प्रभातमङ्गलगीतयः । यस्यां चानिवृत्तिर्मणिप्रदीपानामन्तस्तरलता हाराणामस्थितिः संगीतमुरजध्वनीनां द्वन्द्ववियोगश्चक्रनाम्नां वर्णपरीक्षा कनकानामस्थिरत्वं ध्वजानां मित्रद्वेषः कुमुदानां कोशगुप्तिरसीनाम् । किं बहुना । यस्यां सुरासुरचूडामणिमरीचिचुम्बितचरणनखमयूखो निशितशूलदारितान्धकमहासुरो गौरीनूपुरकोटिघृष्टशेखरचन्द्रशकलस्त्रिपुरभस्मरजःकृताङ्गरागो मकरध्वजध्वंसविधुरया रत्या प्रसादयन्त्या प्रसारितकरयुगलविगलितवलयनिकरार्चितचरणः प्रलयानलशिखाकलापकपिलजटाभारभ्रान्तसुरसिन्धुरन्धकारातिर्भगवानुत्सृष्टकैलासवासप्रीतिर्महाकालाभिधानः स्वयं निवसति ।

---

मङ्गलगीतयो व्यर्थीभवन्तीत्यन्वयः । **अभिभूतेति**-अभिभूतं गृहसारसानां विरुतं येन । ०सारसस्वरामृतेनेति पाठस्त्वसमीचनः सारसानां कर्कशध्वनेरमृतोपमानासङ्गतेः । अनिवृत्तिरनिर्वाणता मणिप्रदीपानां न तु अनिवृत्तिरनुपरमो लोकानाम् । अनिर्वृतिरिति पाठे न लोकानामनिर्वृतिः सुखाभावोऽस्वास्थ्यमित्यर्थः । शेषं पूर्ववत् । अन्तस्तरलो मध्यमणिर्येषां तेषां भावस्तत्ता, तरलता छायाचाञ्चल्यं वा हाराणां न तु लोकानामन्तश्चित्ते तरलता चञ्चलता । 'तरलं चञ्चले पिङ्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि' इति मेदिनी । अस्थितिः-तालल्यादिष्वनवस्थानमिति भा.नु० । विचित्रता वा । न तु लोकानामस्थितिरमर्यादापालनं दुःस्थितिर्वा । वर्णपरीक्षा-न तु ब्राह्मणादीनां सांकर्याभावात् । मित्रद्वेषः सूर्यद्वेषश्चन्द्रविकासित्वात् । न तु सुहृद्द्वेषः कस्यचित् । कोशगुप्तिः कोशः खड्गपिधानं तत्र गुप्तिर्गोपनं न तु लोकानां भाण्डारस्य गोपनं चौरादीनामभावात् । अन्धको नाम कश्यपाज्जातो दितेः पुत्रो महासुरः । तस्य सत्यप्यक्ष्णां सहस्रद्वये 'स व्रजत्यन्धवद्यस्मादनन्धोपि हि भारत । तमन्धकोयं नाम्नेति प्रोचुस्तत्र निवासिनः' ॥ इति भारतोक्तेरन्धक इति नाम । **गौरीति**-गौरी पार्वती मानवती च । तेनात्रेर्ष्याकुपिता या पार्वती तस्याः सान्त्वनावसरे तन्नूपुरकोट्या घृष्टं शेखरे स्थितं चन्द्रशकलं यस्य । पार्वत्या ईर्ष्याकोपस्तत्र तत्र वर्ण्यते कविभिः-'पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जितकातरस्य । नमोस्तु ते मातरिति प्रणामाः शिवस्य सन्ध्याविषया जयन्ति' ॥ इति विक्र. देवच० । त्रिपुरम्-त्रयाणां पुराणां समाहारस्त्रिपुरं मयासुरनिर्मितानि त्रीणि पुराणि । 'तद्धितार्थोत्तरपद-' इत्यादिना समाहारसमासः । 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गान्तत्वनिषेधः । तस्य भस्मरजसा कृताङ्गरागो येन । अत्र महाभारतम्-'असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि । आयसं राजतं चैव सौवर्णं परमं महत् ॥' इति । ०विधुरा विकला । **प्रलयेति**-प्रलयसम्बन्ध्यनलोऽग्निस्तस्य शिखाकलापो ज्वालासमूहस्तद्वत्कपिलो यो जटाभारस्तत्र भ्रान्ता भ्रान्तिं प्राप्ता सुरसिन्धुर्यस्य । प्रलयानलस्तृतीयनेत्राग्निस्तस्य शिखाकलापेन

---

१ रवेणाभिभूत. २ अभिभाव्य. ३ चक्रवाक०. ४ ०विषयवृ०. ५ त्रिशूल. ६ घृष्टचन्द्रशकलशेखरः. ७ वलयततिकरम्बित. ८ अमरसिन्धु.

तस्यां चैवंविधायां नगर्यां नैलनहुषययातिधुन्धुमारभरतभगीरथदशरथप्रतिमो भुजबलोपार्जितभूमण्डलः फलितशक्तित्रयो मतिमानुत्साहसंपन्नो नीतिशास्त्राखिन्नबुद्धिरधीतधर्मशास्त्रस्तृतीय इव तेजसा कान्त्या च सूर्याचन्द्रमसोरनेकसप्ततन्तुपूतमूर्तिरुपशमितसकलजगदुपप्लवो विहाय कमलवनान्यविगणय्य नारायणवक्षःस्थलवसतिसुखमुत्फुल्लारविन्दहस्तया शूरसमागमैव्यसनिन्या निर्व्याजमालिङ्गितो लक्ष्म्या, महामुनिजनसंसेवितस्य मधुसूदनचरण इव सुरसरित्प्रवाहस्य प्रभवः सत्यस्य, शिशिरस्यापि रिपुजनसंतापकारिणः स्थिरस्याप्यनैवरतं भ्रमतो निर्मलस्यापि मलिनीकृताराातिवनितामुखकमलद्युतेरतिधवलस्यापि सर्वजनरागकारिणः सुधासूतेरिव जैलनिधिरुद्भवो यशसः, पाताल्वदाश्रितो निजपक्षक्षैतिभीतैः क्षितिभृत्कुलैः, ग्रहगण इव बुधानुगतः, मकरध्वज इवोत्सन्नविग्रहः, दशरथ इव

कपिलो यो जटाभारस्तत्र भ्रान्ता त्रस्ता सुरसिन्धुयस्मादिति वा । प्रीतिः प्रणयः । **तस्यामिति**–तस्यां नगर्यां तारापीडो नाम राजाभूदित्यन्वयः । तमेव वर्णयति–**नलेति**–नलो नैषधः, नहुष उक्तपूर्वः; ययातिर्नहुषपुत्रो यदुपिता, धुन्धुमारो कुवलाश्वस्तत्कथा भारते–राजा हि वीर्यवांस्तात इक्ष्वाकुरपराजितः । बृहदश्व इति ख्यातो भविष्यति महीपतिः । तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः । स योगबलमास्थाय मामकं पार्थिवोत्तमः । शासनात्तस्य विप्रर्षे धुन्धुमारो भविष्यति' ॥ इत्या० । भरतो दुष्यन्तपुत्रः, भगीरथदशरथौ प्रसिद्धौ, एतेषां प्रतिमः सदृशः । प्रभुशक्तिरुत्साहशक्तिर्मन्त्रशक्तिश्चेति शक्तित्रयम् । नीतिशास्त्रे राज्यतन्त्रव्यवहारे अखिन्ना अप्रतिहता बुद्धिर्यस्य । सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते इति सप्ततन्तुर्यज्ञः । उपशमिताः सकला जगत उपप्लवा आपदो येन । निर्व्याजमकृत्रिमप्रेम्णा । **महामुनीति**–एतत् सुरसरित्प्रवाहस्य सत्यस्य च विशेषणम् । **मधुसूदनेति**–तदुक्तं विष्णुपुराणे–वामपादाम्बुजाङ्गुष्ठनखस्रोतोविनिर्गता । विष्णोर्बिभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवः ॥ इति । विरोधोक्त्या तमेव विशिनष्टि–सुधासूतेश्चन्द्रस्य जलनिधिरिव । यशस उद्भवः यशःसुधासूत्योः साम्यं वर्णयन्विशेषणान्याह—**शिशिरेति**—रिपुजनस्य वैरिजनस्य चौरादेश्च । सन्तापो दाहः । परिहारपक्षे सन्तापकारिणश्चित्तक्षोभजनकस्य । स्थिरः परिहारपक्षे आकल्पान्तस्थायित्वात्स्थिरत्वं न तु निश्चलत्वात् । निर्मलस्य मलरहितस्यापि मलिनीकृता मलयुक्ता कृता अरातिवनितामुखानि कमलानीव मुखकमलानि च तेषां द्युतिर्येनेति विरोधः । परिहारस्तु निर्मलस्य स्वच्छस्येत्यर्थात । अत्र यशःशब्दस्य नित्यनपुंसकत्वात्तद्विशेषणे द्युतिपदे न नुमागमः । रागो रक्तिमा अनुरागश्च तं करोतीति तेन । निजपक्षस्य स्वकार्यस्य स्वपक्षाणां स्वजनानां वा क्षतिर्हानिः । अन्यत्र पक्षाणां कर्तनम् । तस्या भीतैः । क्षितिभृतो राजानः पर्वताश्च । बुधैः पण्डितैरनुगतः । तदुक्तम्–

१ नृगनल. २ रथजनमजयार्जुन. ३ मकरव्यसनिन्या. ४ नित्यं, अविरतम्. ५ सागरः. ६ क्षिति. ७ क्षितिभृत्कुटिलैः, क्षितिभृतां कुलैः.

सुमित्रोपेतः, पशुपतिरिव महासेनेनानुगतः[1], भुजगराज इव क्षमाभरगुरुः नर्मदाप्रवाह इव महावंशप्रभवः, अवतार इव धर्मस्य, प्रतिनिधिरिव पुरुषोत्तमस्य, परिहृत[2]प्रजापीडो राजा तारापीडो नामाभूत् ।

यस्तमःप्रसरमलिनवपुषा पापबहुलेन कलिकालेन चालितमा मूलतो धर्मं दशाननेनेव कैलासं पशुपतिरिवावष्टभ्य पुनरपि स्थिरीचकार[3] । यं च रतिप्रलापजनित[4]दयार्द्रहृदयहरनिर्मितमपरं मकरकेतुममंस्त लोकः । यं च जलनिधितरंगधौतमेखलात् पत्रान्त[5]र्विचारितारागणद्विगुणिततटतरुकुसुमप्रकरात् उद्यदिन्दुबिम्बविगलदमृतबिन्दु[6]दुर्दिनार्द्रचन्दनाद् अशिशिरकररथतुरगखुरशिखरोल्लेखखण्डितोल्लसल्लवङ्गपल्लवाद् ऐरावतकरलून[7]सल्लकीकिसलयादा शैलादुदयनाम्नः, कपिबल[8]विलुप्तविरललवलीलताफ[9]लाद् उदधिनिर्गत[10]जलदेवतावन्द्यमान[11]राघवपादाद् अचलपातदलितशङ्खकुलशकलतारकितशिलातलात् नलकरतलाकलितशैलसहस्रसंभूताद् सेतुबन्धाद्, अच्छनिर्झरजलधौततारकासार्थाद् अमृतमथनोद्यतवै-

' व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । ' इति । पक्षे बुधग्रहः । विग्रहो युद्धं शरीरं च । सुमित्रैरुपेतः पक्षे सुमित्रया मध्यमपत्न्योपेतः । महती सेना तया पक्षे महासेनः कार्तिकेयः तेन । भुजगानां राजा भुजगराजः शेषः । **क्षमेति**—क्षमायाः शान्तेर्भरोतिशयस्तेन गुरुः श्रेष्ठः । पक्षे पृथ्वीभारेण गुरुः । महावंशो महत्कुलं महावेणुश्च । ' वंशमूलान्नर्मदाप्रवाहः प्रादुर्भूत इति लोकोक्तिः । ' इति भानु० । **य इति**—तमःप्रसरोऽज्ञानप्रसरणम् । पापं बहुलं यस्मिन् । पापेन बहुलः कृष्ण इति वा । **पत्रान्तेति**—पत्राणामन्तर्विचारी गमनशीलो यस्तारागणस्तेन द्विगुणितस्तटतरूणां कुसुमानां प्रकरः समृद्धिर्यस्मिन् तस्मात् । उद्यदुदयं प्राप्नुवद्यदिन्दुबिम्बं चन्द्रमण्डलं तस्माद्विगलन्तो ये अमृतबिन्दवस्तेषां दुर्दिनं लक्षणया वृष्टिस्तेन आर्द्राश्चन्दना यस्मिन् । **अशिशिरेति**—अशिशिरकरस्योष्णगभस्तेः सूर्यस्य ये रथतुरगास्तेषां खुराणां शिखरैः प्रान्तैर्ये उल्लेखा घर्षणानि तैः खण्डिता मृदिता उल्लसन्तो लवङ्गपल्लवा यस्मिन् । ऐरावतस्य करेण शुण्डया लूनानि खण्डितानि सल्लकीनां गजप्रियाणां किसलयानि पल्लवा यस्मिन् । उदयनाम्नः-अनेन प्राच्युक्ता । विलुप्तानि विरलानां लवलीलतानां फलानि विरलानि ०फलानि इति वा यस्मिन् । **उदधीति**—उदधेर्निर्गता या जलदेवतास्ताभिर्वन्द्यमानौ रामस्य पादौ पदचिह्ने यस्मिन् । **अचलेति**—सेतुबन्धनकाले अचलानां वानरोत्क्षिप्तानां यः पातस्तेन दलितानि चूर्णितानि यानि शङ्खकुलानि शङ्खवृन्दानि तेषां शकलैस्तारकितानि चित्रितानि शिलातलानि यस्मिन् । **नलेति**—तदुक्तं रामायणे-'नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ' । इति । सेतुबन्धादनेन दक्षिणा दिगुक्ता । **अच्छेति**—अच्छं निर्मलं यन्निर्झरजलं तेन धौतस्तारकासार्थो यस्मिन् । **अमृतेति**—अमृतार्थं यन्मथनं तत्रोद्यतो यो वैकुण्ठो विष्णुः । स हि मथनवेलायामधोयान्तं मन्दरमालिङ्ग्य स्थिरीकृतवान् ।

१ अनुयातः. २ परिहृत. ३ चक्रे. ४ उपजनित. ५ अन्तर. ६ बिन्द्वासार. ७ लूनरोधः. ८ कपलात्. ९ कुल. १० पुष्यात्. ११ विनिर्गत. १२ अभिवन्द्यमानः

कुण्ठकेयूरपत्रमकरकोटिकषणमसृणितग्रावाणः सुरासुरहेलावलयितवासुकिसमाकर्षणारम्भचलितचरणभरदलितनितम्बात्[1] अमृतसीकरसिक्तसानोः आमन्दराचलात्, नरनारायणचरणमुद्राङ्कितबदरिकाश्रमरमणीयात् कुबेरपुरसुन्दरीभूषणरवमुखरशिखरात् सप्तर्षिसंध्योपासनापूतप्रस्रवणाम्भसो वृकोदरोद्दलितसौगन्धिकखण्डसुगन्धिमण्डलादा[2] गन्धमादनात्, सेवाञ्जलिकमलमुकुलदन्तुरैः[3] शिरोभिश्चरणनखमयूखग्रथितमुकुटपत्रलताग्रन्थयो[4] भयचकिततरलतारदृशो[5] भुजबलविजिताः प्रणेमुरवनिपाः । येन चानेकरत्नांशुपल्लविते[6] व्यालम्बिमुक्ताफलजालके दिग्गजेनेव कल्पतरावाक्रान्ते सिंहासने भरेण शिलीमुखव्यतिकरकम्पिता लता इव नेमुरायामिन्यः सर्वदिशः । यस्मै च मन्ये[7]

तदुक्तं रामायणे-पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः । पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ॥ बालका० ४५ अ० । तस्य केयूरयोर्यानि मकरपत्राणि मकराकृतयस्तेषां कोटिभिरग्रैर्यत्कषणं घर्षणं तेन मसृणिताः श्लक्ष्णीकृता ग्रावाणो यस्मिन् तस्मात् । सुरासुरैर्हेलया लीलया अनायासेनेति यावत्, उत्साहेन वा यद्वलयितवासुकेः समाकर्षणं तस्यारम्भेण चलितः यः चरणभरः पादसमूहस्तेन चलितानां चरणानां भरेणेति वा दलितश्चूर्णितो नितम्बः कटको यस्य । अमृतस्य मन्थनोत्थितस्य सीकरैः कणैः सिक्तानि सानूनि यस्य तस्मात् । आ मन्दराचलादनेन प्रतीची गृहीता । नरनारायणौ नामर्षिसत्तमावत्युग्रं तपश्चरन्तौ हिमालये बदरिकाश्रमे स्थितौ । कुबेरपुरमलकापुरी गन्धमादनप्रस्थस्यातिनिकटवर्ति । सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । तेषां सन्ध्योपासनया पूतं प्रस्रवणाम्भो निर्झरवारि यस्मिन् । **वृकोदरेति**—वृकोदरेण भीमेनोद्दलितं यत्सौगन्धिकं कह्लारं कत्तृणं वा तस्य खण्डं वनं तेन सुगन्धि मण्डलं भूमिभागो यस्य । "अत्र कथा—पाण्डवा द्यूते जिता विन्ध्याटवीं प्रविष्टाः । तत्र द्रौपद्या दोहद उत्पन्नः सौगन्धिककुसुमेषु । ततो भीमसेनो गत्वा सरस्तदध्यासीनं नागराजं जित्वा तत्कन्यकां चोल्लकाख्यां परिणीय सौगन्धिककुसुमानि गृहीत्वा स्वाश्रममेवाययौ ।" इति भानु० । आगन्धमादनात्—गन्धमादनो नाम हिमवत्प्रस्थविशेषः । अनेनोत्तरदिगुक्ता । एवं पूर्वदक्षिणपश्चिमोत्तरमवधीकृत्येति पिण्डितोर्थः । **सेवेति**—सेवार्थं योञ्जलिः स एव कमलमुकुलं तेन दन्तुरैर्विषमैः । पत्रलतानां ग्रन्थयः सन्धिभागाः । **भयेति**—भयेन चकिता अत एव तरला तारा यासां एवंविधा दृशो येषां ते । सिंहासनकल्पतरुविशेषणान्याह-**अनेकेति**—अनेकानि रत्नानि तेषामंशुभिः पल्लविते किसलयिते । पक्षे अनेके रत्नांशुवद्भासुराः पल्लवा अस्य सञ्जाताः स तथा तस्मिन् । व्यालम्बीनि मुक्ताफलानां जालकानि यस्मिन् । पक्षे मुक्ताफलैस्तत्सदृशानि पुष्पाणि लक्ष्यन्ते । व्यालम्बीनि मुक्ताफलजालकानि पुष्पगुच्छा यस्य । शिलीमुखानां बाणानां व्यतिकरः सम्बन्धः पात इत्यर्थः । पक्षे शिलीमुखा भ्रमराः । आयामिन्यो विस्तारभाजो दीर्घाश्च ।

१ नितम्बकटकात्. २ मेखलात्. ३ मुकुलैः. ४ नखाग्र. ५ तारक. ६ रत्नांशुजात, रत्नांशुक. ७ मन्येऽनन्यसाधारणशक्तिसंपदे.

सुरपतिरपि स्पृहयांचकार । यस्माच्च धवलीकृतभुवनतलः सकललोकहृदयानन्दकारी क्रौञ्चादिव हंसनिवहो निर्जगाम गुणगणः । यस्य चामृतामोदसुरभिपरिमलया मन्दरोद्धतबहुलदुग्धसिन्धुफेनलेखयेव धवलीकृतसुरासुरलोकया दशसु दिक्षु मुखरितभुवनमभ्रम्यत कीर्त्या । यस्य चातिदुःसहप्रतापसंतापखिद्यमानेव क्षणमपि न मुमोचातपत्रच्छायां राजलक्ष्मीः । तथा च यस्य दिष्टिवृद्धिमिव शुश्रावोपदेशमिव जग्राह मङ्गलमिव बहु मेने मन्त्रमिव जजापागमवचनमिव न विसस्मार चरितं जनः । यस्मिंश्च राजनि गिरीणां विपक्षता प्रत्ययानां परत्वं दर्पणानामभिमुखावस्थानं शूलपाणिप्रतिमानां दुर्गाश्लेषो जलधराणां चापधारणं ध्वजानामुन्नतिर्धनुषामवनतिर्वंशानां शिलीमुखक्षतिर्देवतानां यात्रा कुसुमानां बन्धनस्थितिरिन्द्रियाणां निग्रहो वनकरिणां वारिप्रवेशस्तैक्ष्ण्यमसिधाराणां व्रतिनामग्निधारणं ग्रहाणां तुलारोहणमगस्त्योदये विषशुद्धिः केशनखानामायतिभङ्गो जलददिवसानां मलिनाम्बरत्वं रत्नोपलानां भेदो मुनीनां योगसा-

क्रौञ्चादिव हंसनिवहः मानसप्रस्थायिनो हंसा क्रौञ्चरन्ध्रेण सञ्चरन्त इत्यागमः । उक्तं च मेघदूते— 'हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।' इति । पुरा किल भगवतो धूर्जटेर्धनुर्वेदमधीयानेन भार्गवेण कुमारस्पर्धया क्रौञ्चगिरिरतिनिशितविशिखमुखेन लीलया मृत्पिण्डभेदं दारित इति श्रूयते । **अमृतेति**—कीर्त्याः सौगन्ध्यवर्णनं कविसमयेन । **मन्दरेति**—मन्दरेणोद्धतोक्षिप्ता बहुला पृथ्वी या दुग्धसिन्धोः फेनस्य लेखा तयेव । यस्य च चरितं विक्रमयशो जनो दिष्टिवृद्धिं भाग्याभ्युदयमिव शुश्राव इत्या० । आगमः सिद्धान्तवाक्यम् । विपक्षता पक्षाभावः । इन्द्रेण पर्वतपक्षच्छेदनवृत्तान्तस्तूक्तः । न तु लोकाना विपक्षता द्वेषबुद्धिः । परत्वं प्रकृत्युपरिवर्तमानत्वम् । न तु लोकानां परत्वं शत्रुत्वम् । अभिमुखावस्थानं न तु धनिकानां पुरस्तात्कस्यचिद्याच्ञाप्रसङ्गेन । **दुर्गेति**—दुर्गाया भवान्या आश्लेष उपगूहनम् । न तु लोकानां दुर्गसंश्रयणं परचक्राभावात् । चापधारणमिन्द्रचापाविष्करणम् । पक्षे स्पष्टम् । उन्नतिरूर्ध्वमुखत्वेनावस्थानम् । न तु लोकानामौद्धत्यमहंकाराभावात् । शिलीमुखैर्भ्रमरैः क्षतिश्छेदः । न तु लोकानां शरैर्हननम् । यात्रोत्सवविशेषः । न तु लोकानां यात्रा स्वभूमित्यागपूर्वमन्यत्र गमनम् । 'यात्रा स्याद्यापने गतौ' इत्यनेकार्थः । निग्रहो दमनम् । न तु लोकानां निग्रहो दण्डः । वारिर्गजबन्धनभूमिः । न तु लोकाना दिव्यार्थं जलप्रवेशः । तैक्ष्ण्यं निशितत्वं पक्षे क्रौर्यम् । अग्निधारणम्—न तु लोकानां दिव्यार्थमग्नेरग्नौ वा धारणम् । तुला राशिविशेषस्तस्यामारोहणं संक्रमः । न तु लोकाना दिव्यार्थं तुलादण्डारोहणम् । अगस्त्योदये—प्रससादोदयादम्भः कुम्भयोनेर्महौजसः । इति रघौ । विषं जलं तस्य शुद्धिः स्वच्छता । न तु दिव्यार्थं विषभक्षणेनापराधापनयनम् । अत्र याज्ञवल्क्यः—तुलाग्न्यापो विषं कोशो दिव्यानीह

१ अभ्राम्यत. २ आगममिव. ३ यस्यावां जलदिव्यं प्रतिहाराणामसिधारणं ध्वजा०. ४ मुखमुख० ५ असिधाराधारणम्. ६ जलधर.

धनं कुमारस्तुतिषु तारकोद्धरणमुष्णरश्मेर्ग्रहणशङ्का शशिनो ज्येष्ठातिक्रमो महाभारते दुःशासनापराधाकर्णनं वयःपरिणामे दण्डग्रहणमसिपरिवारेष्वकुशल-योगो वक्रता कामिनीनां कुचभङ्गेषु करिणां दानविच्छित्तिरक्षक्रीडासु शून्य-गृहदर्शनं पृथिव्यामासीत् ।

तस्य च राज्ञो निखिलशास्त्रकलावगाहगम्भीरबुद्धिरा शैशवादुपारूढ-निर्भरप्रेमरसो नीतिशास्त्रप्रयोगकुशलो भुवनराज्यभारनौकर्णधारो महत्स्वपि कार्यसंकटेष्वविषण्णधीर्धाम धैर्यस्य स्थानं स्थितेः सेतुः सत्यस्य गुरुर्गुणाना-माचार्य आचाराणां धाता धर्मस्य शेषाहिरिव महीभारधारणक्षमः सलिल-

---

विशुद्धये । इति । आयतिर्विस्तारस्तस्या भङ्गश्छेदनम् । पक्षे उत्तरः कालः । 'उत्तरः काल आयतिः' इत्यमरः । सुविहितव्यवहारतया सर्वेषामप्युत्तरः कालः सुखसम्पत्प्रवणोऽभूदित्यर्थः । मलिनाम्बरत्वं नीलाकाशत्वं मलिनवस्त्रत्वं च । भेदो वेधः वैविध्यं वा न तु लोकानां भेदो मिथो विरोधः । योगसाधनम्-योगश्चित्तवृत्तिनिरोधलक्षणस्तत्साधनम् । न तु लोकानां योगो विषादिप्रयोगः कार्मणं वा तस्य साधनं दुष्टमन्त्रादि । तारकोद्धरणम्-तारकासुरस्योद्धरणं नाशः । पक्षे दण्डार्थं तारका कनीनिका तस्या उद्धरणमुत्कर्षणम् । ज्येष्ठा नक्षत्रम् । न तु लोकानां ज्येष्ठो भ्रात्रादिस्तस्यातिक्रम आज्ञोल्लङ्घनम् । **दुःशासनेति** दुःशासनस्य दुर्योधनभ्रातुरपराधो द्रौपद्याः केशाकर्षणादिः । पक्षे दुष्टं शासनं यस्य तादृशापराधाकर्णनम् । दुःखेन शिष्यन्ते इति दुःशासनाः शठा वा तेषामि० । दण्डः-न तु लोकानां दण्डः करस्तस्य ग्रहणम् । असिपरिवारेषु खड्गपिधानेषु । नास्ति कुशलं यस्मात्सोऽकुशलः खड्गस्तेन सहयोगः । पक्षे अकुशलमनिष्टमपुण्यं वा तस्य योगः प्राप्तिः । अकुशलं 'चर्म' पक्षे 'अक्षेम जरा' तेन वा योग इति केचित् । केचित् 'असिपरिवारेषु कलङ्कयोगः' इति पठन्ति-तत्र कलङ्कः श्यामिका पक्षे दोष इत्यर्थः । कुचभङ्गेषु पयोधरपत्ररचनासु । न तु लोकानां वक्रता कुटिलता क्रूरता वा । 'वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः' । इति हैमः । दानस्य मदजलस्य विच्छित्ती रचना । न तु लोकानां दानस्य वितरणस्य विच्छेदः । अक्षक्रीडा द्यूतं । तत्र सारिकारहितगृहदर्शनं न त्वन्यत्र धनधा-न्यादिशून्यता । **निखिलेति**-निखिलानि यानि शास्त्राणि कलाश्च तासामवगाहस्तद्रहस्याक-लनं तेन गम्भीरा प्रगाढा । परिपक्वेत्यर्थः । बुद्धिर्यस्य । उपारूढ उपचितो निर्भरो गाढः प्रेमरसो यस्य । भुवनराज्यमखिलाया भूमेराधिपत्यं तस्य भारः स एव नौस्तस्याः कर्ण-धारो नाविकः । अविषण्णा अकुण्ठिता धीः प्रतिभा यस्य । सेतुराधारः सत्यमार्गस्य दर्शको वा । गुरुः शिक्षिता । आचार्य उपदेष्टा । महीभारधारणं सम्यक्शासनम् । पक्षे पृथिव्या वहनम् । महासत्त्वं साहसं यस्मिन् । पक्षे महान्ति सत्त्वानि यादांसि यस्मिन्

---

१ योगधारणम्. २ ग्रहणाशङ्का. ३ असिधारासु कोषगुप्तिः. ४ कलाकलापावगाहगंभीर. ५ भारैक. ६ सिन्धुः ७ सकलमही.

निधिरिव महासत्त्वो जरासंध इव घटितसंधिविग्रहस्त्र्यम्बक इव प्रसाधितदुर्गो युधिष्ठिर इव धर्मप्रभवः सकलवेदवेदाङ्गविदशेषराज्यमङ्गलैकसारो बृहस्पतिरिव सुनासीरस्य कविरिव वृषपर्वणो वसिष्ठ इव दशरथस्य विश्वामित्र इव रामस्य धौम्य इवाजातशत्रोर्दमनक इव भीमस्य सुमतिरिव नलस्य सर्वकार्येष्वाहितमतिरमात्यो ब्राह्मणः शुकनासो नामासीत् । यो नरकासुरशस्त्रप्रहारभीषणे भ्रमन्मन्दरनितम्बानिर्दयनिष्पेषकठिनांसपीठे नारायणवक्षःस्थलेपि स्थितामदुष्करलाभाममन्यत प्रज्ञाबलेन लक्ष्मीम् । यं च समासाद्य दर्शितानेकराज्यफला लतेव महापादपमनेकप्रतानगहना विस्तारमुपययौ प्रज्ञा । यस्य चानेकचारपुरुषसहस्रसंचारनिचिते चतुरुदधिवलयपरिक्षेपप्रमाणे धरणितले भवन इवाविदितमहरहः समुच्छ्वसितमपि राज्ञां नासीत् ।

जरासंधो बृहद्रथस्य पुत्रः । **घटितेति**—घटितौ सन्धिः साम विग्रहो युद्धं च येन । पक्षे घटितः सन्धिर्यस्य तादृशो विग्रहः शरीरं यस्य । घटितेन सन्धिना विग्रहो यस्येति वा । अत्रेयं कथा-पुरा किल बृहद्रथेन राज्ञा पुत्रार्थमाराधितेन महर्षिणा चण्डकौशिकेन तस्मै आम्रफलं प्रदत्तम् । सोऽर्धार्धं कृत्वा स्वमहिषीभ्यां दत्तवान् । तयोश्चार्धार्धशरीरं बालकद्वयं जातम् । तद्दृष्ट्वा कुपितेन राज्ञा श्मशानभूमौ त्यक्तम् । अत्रान्तरे भक्ष्यार्थं विचरन्त्या जरया पिशाच्या ते अर्धे दृष्ट्वा एकत्र योजिते । संधितमात्रयोस्तयोस्तद्बालकं सजीवमभूत् । जरया सन्धित इति तस्य जरासन्ध इति नाम जातम् । तदुक्तं सभापर्वणि—जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् । इति । **प्रसाधितेति**—प्रसाधितानि स्वायत्तीकृतानि दुर्गाणि येन । पक्षे प्रसाधिता प्रसन्नीकृता दुर्गा पार्वती येन । धर्मस्य स्वकर्मानुष्ठानरूपस्य प्रभव उत्पत्तिस्थानम् । पक्षे धर्माद्यमधर्मात्प्रभवो यस्य । **वेदेति**—शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते ॥ **अशेषेति**—अशेषं सप्ताङ्गं यद्राज्यं तस्य यन्मङ्गलं कल्याणं तस्यैकसारो रहस्यभूतः । सुष्ठु नासीरं सेनामुखं नासीरा अग्रेसरा वा अस्य सुनासीर इन्द्रः । कविः शुक्राचार्यः । वृषपर्वा दैत्येन्द्रः शर्मिष्ठापिता । आहितमतिर्निवेशितबुद्धिः । नरकासुरो दैत्यविशेषः प्राग्ज्योतिषाधिपः । तस्य कृष्णेन वधस्तु प्रसिद्धः । **भ्रमन्निति**—भ्रमन्यो मन्दरस्तस्य नितम्बः कटकं तस्य निर्दयं यो निष्पेषो घर्षणं तेन कठिनमंसपीठं यस्य । अदुष्करो लाभो यस्याः । सुलभामित्यर्थः । **दर्शितेति**—दर्शितान्यनेकानि राज्यस्य फलानि यया । दर्शितान्यनेकराज्यान्येव फलानि यया इति वा । अनेकैः प्रतानैर्विस्तारैर्गहना गाढा । तत्तद्विषयावगाहनक्षमेत्यर्थः । पक्षे अनेकैः प्रतानैः कुटिलतन्तुभिर्गहना संकुला । तस्य परराष्ट्रवृत्तान्तवेदित्वमाह—**अनेकेति**—अनेकानि यानि चारपुरुषाणां प्रणिधीनां सहस्राणि तेषां संचारेण निचिते व्याप्ते । नृपा

१ ०निवासः २ मण्डल. ३ अप्रतिहत. ४ अभवत्. ५ ०परि-विचिते. ६ ०परिधि, परिक्षेप.

स राजा बाल एव सुरकुञ्जरकरपीवरेण राज्यलक्ष्मीलीलोपधानेन सकलजगदभयप्रदानयज्ञदीक्षायूपेन स्फुरदसिलतामरीचिजालजटिलेन निखिलारातिकुलप्रलयधूमकेतुदण्डेन बाहुना विजित्य सप्तद्वीपवलयां वसुंधरां तस्मिञ्शुकनासनाम्नि मन्त्रिणि सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्तव्यशेषमपरमपश्यन्प्रशमिताशेषविपक्षतया विगताशङ्कः शिथिलितपृथिवीव्यापारः प्रायो यौवनसुखान्यनुबभूव । तथाहि । कदाचिदुल्लसत्कठोरकपोलपुलकजर्जरितकर्णपल्लवानां प्रणयिनीनां चन्दनजलच्छटाभिरिव स्मितसुधाच्छविभिरभिषिच्यमानः, कर्णोत्पलैरिव लोचनांशुभिस्ताड्यमानः, कुङ्कुमधूलिभिरिवाभरणप्रभाभिराकुलीक्रियमाणलोचनः, धवलांशुकैरिव करनखमयूखजालकैराहन्यमानः, चम्पककुसुमदलमालिकाभिरिव भुजलताभिराबध्यमानः, दष्टाधराधूतकरतलचलन्मणिवलयकलरवरमणीयम् अतिरभसदलितदन्तपत्रदलदन्तुरितशयनम् उत्क्षिप्तचरणगलदलक्तकरक्तशेखरं सरभसकचग्रहचूर्णितमणिकर्णपूरम् उल्लसितकुचकृष्णागुरुपङ्कपत्रलताङ्कितप्रच्छदपटम् अच्छश्रमजलकणिकालुलितगोरोचनातिलकपत्रभङ्गम् अनङ्गपरवशः सुरतमाततान ।

---

हि चारचक्षुषो भवन्ति । तदुक्तं नीतिवाक्यामृते—'स्वपरमण्डलकार्याकार्यविलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति । मनुरप्याह–'चारचक्षुर्महीपतिः ।' इति । **स इति**–लीलार्थमुपधानमुपबर्हो लीलोपधानम् । सकलजगतोऽभयप्रदानमेव यज्ञदीक्षा व्रतधारणं तत्र यूपेन यज्ञस्तम्भेन । स्फुरद्यदसिलतायाः खड्गस्य मरीचिजालं तेन जटिलेन । **निखिलेति**—प्रलये विनाशे धूमकेतुर्विनाशपिशुनो ग्रहविशेषस्तस्य दण्डेन पुच्छेन । **शिथिलितेति**—शिथिलितो मन्दीकृतः पृथिवीव्यापारो राज्यशासनविचारो येन । **उल्लसदिति**—उल्लसन्त उद्गच्छन्तोऽत एव कठोराः परुषा ये कपोलेषु पुलका रोमाञ्चास्तैर्जर्जरिता दृढं पीडिताः कर्णपल्लवाः कर्णप्रान्ता यासाम् । स्मितमेव सुधामृतं तस्याः छविभिः कान्तिभिः । आबध्यमानः संयम्यमान आश्लिष्यमाणश्च । **दष्टेति**—दष्टः खण्डितो योऽधरस्तेनाधूतं चालितं तस्य, आसमन्ताद्धूतं वा यत्करतलं तेन चलन्ति यानि मणिवलयानि तेषां कलरवेण मधुरशिञ्जितेन रमणीयम् । अतिरभसेनातिवेगेन । 'रभसो वेगहर्षयोः' इति विश्वः । दलितानि यानि दन्तपत्राणि कर्णाभरणानि तेषां दलैः दन्तुरितं विषमं शयनं यस्मिन् । **उल्लसिताः** संभोगावस्थायामुल्लासं प्राप्ताः स्फुरिता ये कुचास्तेषामुपरि याः कृष्णागुरुपङ्कस्य पत्रलताः पत्ररचनास्ताभिरङ्कितः प्रच्छदपट उत्तरच्छदो यस्मिन् । अच्छं निर्मलं यत्

---

१ राज्य. २ प्रदानशौण्डेन रणयज्ञ. ३ धूमकेतुना बाहुदण्डेन. ४ विगलिता. ५ शिथिलीकृतवसुन्धरा. ६ कुङ्कुमपटवास, मवास०. ७ कलकलर०. ८ रतिरभस. ९ चरणतल०. १०रोचना; ०चन.

कदाचिन्मकरकेतुकनकनाराचपरंपराभिरिव कामिनीकरपुटविनिर्गताभिः कुङ्कुमजलधाराभिः पिञ्जरीक्रियमाणकायो लाक्षाजलच्छटाप्रहारपाटलीकृतदुकूलो मृगमदजलबिन्दुशबलचन्दनस्थासकः कनकशृङ्गकोशैश्चिरं चिक्रीड। कदाचित्कुचचन्दनचूर्णधवलितोर्मिमालं चटुलतुलाकोटिवाचालचरणालक्तकसिक्तहंसमिथुनम्, अलकनिपतितकुसुमशारं प्लवमानकर्णपूरकुवलयदलम्, उन्नतनितम्बक्षोभजर्जरिततरंगम्, उद्दलितनालपर्यस्तनलिननिपतितधूलिपटलम्, अनवरतकरास्फालनस्फुरत्फेनबिन्दुचन्द्रकितं सावरोधजनो जलक्रीडया गृहदीर्घिकाणामम्भश्चकार। कदाचित्संकेतवञ्चिताभिः प्रणयिनीभिराबद्धभङ्गुरभ्रूकुटीभिरारणितमणिपारिहार्यमुखरभुजलताभिर्बकुलकुसुमावलीभिः संयतचरणो नखकिरणविमिश्रैः कुसुमदामभिः कृतापराधो दिवसमताड्यत। कदाचिद्बकुलतरुरिव कामिनीगण्डूषसीधुधारास्वादमुदितो विकासमभजत। कदाचिदशोकपादप इव युवतिचरणतलप्रहारसंक्रान्तालक्तको राग-

---

श्रमजलं तस्य कणिकाभिर्बिन्दुभिः लुलिता अपमृष्टा गोरोचनायास्तिलकाः पत्रभङ्गाश्च यस्मिन्। नाराचा बाणाः। छटा धारा। लाक्षाजलं यावकवारि। **मृगेति**—मृगमदः कस्तूरिका तन्मिश्रं जलं तस्य बिन्दुभिः शबलाः कर्बुराश्चन्दनस्थासका यस्मिन्। **कनकेति** कनकशृङ्गकोशैः कांचनमयैर्जलकेलियन्त्रैः। 'क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री' इति यादवः। अनुरूपं वर्णनं रघुवंशे–'वर्णोदकैः काञ्चनशृङ्गमुक्तैस्तमायताक्ष्यः प्रणयादासिञ्चन्'। इति। चूर्णेन धवलिता ऊर्मीणां तरङ्गाणां माला यस्य तत्। **चटुलेति**—चटुलाश्चञ्चला मनोज्ञा वा तुलाकोटयः पादाङ्गदानि। 'पादाङ्गदं तुलाकोटिः' इत्यमरः। ताभिर्वाचाला मुखरा ये चरणास्तेषामलक्तकेन सिक्तानि हंसमिथुनानि यस्मिन्। ०शारं चित्रम्। प्लवमानानि तरन्ति कर्णपूरभूतानां कुवलयानां दलानि यस्मिन्। उन्नता उच्चाः। **उद्दलितेति**—उद्दलितानि नालानि येषामेवंविधान्यत एव पर्यस्तानि यानि नलिनानि तेभ्यो निपतितं धूलिपटलं परागसमूहो यस्मिन्। ०चन्द्रका अस्य संजाता इति चन्द्रकितं मेचकितम्। **कदाचिदिति**—कदाचित् कृतापराधः स प्रणयिनीभिरताड्यतेत्यन्वयः। 'अत्र यद्यपि प्रथमतः कर्तृत्वेन निर्देशादितश्च कर्मत्वेनेति कारकप्रक्रमभङ्गस्तथापि वाक्यभेदाददोषः'। इति भानु०। **संकेतेति**—अमुकस्थलेऽहमागमिष्यामि त्वयापि तत्रागन्तव्यमिति संकेतं दत्त्वेत्यर्थः। भङ्गुरा वक्रा। पारिहार्यः परिह्रियत इति परिहार्यः परिहार्य एव पारिहार्यः कटकः कङ्कणं वा। दिवसं दिवा। **बकुलेति**—कामिनीगण्डूषादिना बकुलादीनां विकासः कविसमयवर्णनम्। तदुक्तम्–स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्पादाघातादशोकास्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम्। मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चंपको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः॥' इति।

---

१ धवलोर्मि. २ कुसुमनिकर. ३ करतला. ४ रणितपारिहार्य. ५ कामिनीनां ग०. ६ ०करसो.

मुवाह । कदाचिन्मुसलायुध इव चन्दनधवलः कण्ठावसक्तोल्लसल्लोलकुसुममालः पानमसेवत । कदाचिद्गन्धगज इव मदरक्तकपोलदोलायमानकर्णपल्लवो मदकलः काननं विकचवनलताकुसुमसुरभिपरिमलं जगाहे । कदाचित्क्वणितमणिनूपुरनिनादानन्दितमानसो हंस इव कमलवनेषु रेमे । कदाचिन्मृगपतिरिव स्कन्धावलम्बिकेसरमालः क्रीडापर्वतेषु विचचार । कदाचिन्मधुकर इव विजृम्भमाणकुसुममुकुलदन्तुरेषु लतागृहेषु बभ्राम । कदाचिन्नीलपटविरचितावगुण्ठनो बहुलनिशाप्रदोषदत्तसंकेताः सुन्दरीरभिससार । कदाचिच्च विघटितकनककपाटप्रकटवातायनेष्वनवरतदह्यमानकृष्णागुरुधूमरक्तैरिव पारावतैरध्यासितविटङ्केषु महाप्रासादकुक्षिषु कतिपयाप्तसुहृत्परिवृतो वीणावेणुमुरजमनोहरतममन्तःपुरसंगीतकं ददर्श । किं च बहुना । यद्यदतिरमणीयमभिमतमविरुद्धमायत्यां तदात्वे च तत्तदनाक्षिप्तचेताः परिसमाप्तत्वादन्येषां पृथिवीव्यापाराणां सिषेवे न तु व्यसनि-

---

रागः अनुरागः । पक्षे रक्तिमा रक्तपुष्पत्वं वा । मुसलायुधो बलभद्रः । चन्दनवद्धवलः पक्षे चन्दनेन चन्दनानुलेपनेन धवलः । पानं मद्यपानम् । गन्धगजः—गन्धप्रधानो गजः । तल्लक्षणं पालकाप्ये-यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम् ॥ इति । मदेति—मदेन रक्तयोः कपोलयोर्दोलायमानौ कर्णयोर्निहितौ पल्लवौ यस्य । पक्षे मदेन दानवारिणा रक्तयो रञ्जितयोर्मलिनीकृतयोरित्यर्थः कपोलयोर्दोलायमानौ कर्णौ पल्लवाविव कर्णपल्लवौ । विस्तृतकर्णौ इत्यर्थः । यस्य । 'पल्लवः किसले बले । विटपे विस्तरे' इति कोषः । मदेन कलः मनोहरः, मदाद्धर्षान्मधुरं व्याहरन् वा । पक्षे दानोत्कटः । क्वणितेति—क्वणितानि यानि रत्ननूपुराणि तेषां निनादेनानन्दितं मानसं मनो यस्य । पक्षे क्वणितमणिनूपुरवद्यो निनादस्तेनानन्दितं मानसं सरो येन । स्कन्धावलम्बिनी केसरमाला बकुलपुष्पस्रक् । पक्षे सटाभारः । नीलेति—कृतोचिताभिसरणवेष इत्यर्थः । बहुलनिशाः कृष्णपक्षरात्रयस्तासां प्रदोषेषु मुखेषु दत्तः संकेतो याभिर्याभ्यो वा । विघटितानि कनककपाटानि येषामत एव प्रकटानि स्पष्टानि वातायनानि गवाक्षा येषाम् । ०रक्तै रञ्जितैः । विटङ्काः कपोतपालिकाः । संगीतं नृत्यम् । 'गीतं वाद्यं नर्तनं च त्रयं संगीतमुच्यते ।' । आयत्यामिति—'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः । तदुक्तं कामन्दकीये आयत्यांच तदात्वेच यत्स्यादास्वाद पेशलम् । तदेव तस्य कुर्वीत न लोकद्विष्टमाचरेत् ॥ अनाक्षिप्तं विषयैरस्वायत्तीकृतं चेतो यस्य । सदैवात्मनः प्रजानां च श्रेयसि

---

१ -कण्ठः. २ पल्लवः कुसुमसुरभि. ३ विकस्वर. ४ लम्बित:. ५ कदाचिद्वनलताग्रथितमौलिर्नक्तमालकुसुमस्तबकरचितशेखरः शुकपक्षरागमधरयता नालिनीवलकोमलेन हरितकञ्चुकेनावच्छिन्नशरीरावयवः कोदण्डदण्डसनाथीकृतवामेतरांसदेशः पुरःप्रधावितानेकश्वगणिवागुरिकैरुपदिश्यमानवर्त्मानेकपक्षिजातिसमालम्बनव्यग्रपाणिभिः परिहासपेशलं सवयोभिरनुगम्यमानो मृगयारसविद्धचेताः सुचिरं गिरिनदिकारण्यप्रसरेषु परिबभ्राम । कदाचिन्नील. ६ बहुलपक्षप्रदोष. ७ कपाटम्. ८ अधिष्ठित. ९ मनोहरमवरोधसं०.

तया । प्रमुदितप्रजस्य हि परिसमाप्तसकलमहीप्रयोजनस्य नरपतेर्विषयोपभोग-लीला भूषणमितरस्य तु विडम्बना । प्रजानुरागहेतोश्चान्तरान्तरा दर्शनं ददौ सिंहासनं च निमित्तेष्वारुरोह ।

शुकनासोपि महान्तं तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार । यथैव राजा सर्वकार्याण्यकार्षीत्तद्वदसावपि द्विगुणीकृतप्रजानुरागश्चक्रे । तमपि चलितचूडामणिमरीचिमञ्जरीजालिभिर्मौलिभिरावर्जितकुसुमशेखरच्युतमधुसीकरसिक्त-नृपसभं दूरावनतिप्रेङ्खितमणिकुण्डलकोटिसंघट्टिताङ्गदं राजकमाननाम । तस्मिन्नपि चलिते चलितचटुलतुरगबलमुखरखुररवबधिरीकृतभुवनान्तराला बलभरप्रचलवसु-धातलदोलायमानगिरयो गलन्मदान्धगन्धगजदानधारान्धकाराः संसर्पदतिबहल-धूलिपटलधूसरितसिन्धवः प्रचलत्पदातिबलकलकलरवस्फोटितश्रवणविवराः सरभ-सोद्धुष्यमाणजयशब्दनिर्भराः प्रोद्धूयमानधवलचामरसहस्रसंछादिताः पुञ्जितनरेन्द्र-वृन्दकनकदण्डातपत्रसंघट्टनष्टदिवसा दश दिशो बभूवुः ।

एवं तस्य राज्ञो मन्त्रिविनिवेशितराज्यभारस्य यौवनसुखमनुभवतः कालो जगाम । भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ । एकं तु सुतमुखदर्शनसुखं न लेभे । तथा संभुज्यमानमपि निष्फलपुष्पदर्शनं

---

जागरूकः सन् अनासक्ततया विषयान्भेजे इति भावः । अनुरूपभाववर्णनं रघुवंशे- असक्तः सुखमन्वभूत् । इति । राज्ञो व्यसनित्वं चानर्थावहम् । तदुक्तं मनुना—कामजेषु प्रवृत्तो हि व्यसनेषु महीपतिः । वियुज्यतेर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ इति । अन्तरा अन्तरा मध्ये मध्ये । मरीचिमञ्जरीणां किरणततीनां जालमेषां विद्यत इति तैः । **आवर्जितेति**—आवर्जिता अवनता ये कुसुमशेखराः पुष्पावतंसास्तेभ्यश्च्युतैर्मधुसीकरै रसबिन्दुभिः सिक्ता नृपसभा येन । **दूरेति**—प्रणामसमये दूरं यावनतिस्तया प्रेङ्खितान्यान्दोलितानि यानि मणिकुण्डलानि तेषां कोटिभिरग्रैः संघट्टितानि समाहतानि अङ्गदानि केयूराणि यस्य । राजकं राज्ञां समूहः । **चलितेति**—चलितं यच्चटुलानां चपलानामश्वानां बलं तस्य मुखरा वाचाला ये खुरास्तेषां रवेण बधिरीकृतं भुवनान्तरालं यासु ताः । बलभरेण सैन्यभारेण प्रचलं कम्पितं वसुधातलं तेन दोलायमाना गिरयो यासु । गलन्त्यो याः...दानधारा मदस्रुतयस्ता एव ताभिर्वान्धकारो यासु । प्रचलितपदातीनां पत्तीनां बलस्य कलकलरवेण स्फोटितानि जर्जरीकृतानि कर्णविवराणि यासु । संच्छादिता आच्छा-दिताः । पुञ्जितं यन्नरेन्द्रवृन्दं तस्य यानि कनकस्य दण्डो येषां तानि कनकदण्डानि आतपत्राणि तेषां संघट्टः दृढं परस्परमिलनं तेन नष्टो दिवसो यासु । पुष्पस्य रजसो दर्शनं पक्षे कुसुमानां

---

१ महीमण्डल. २ विषयसंभोग. ३ ०रागो राजकार्याणि. ४ प्रेङ्खोलित. ५ चलति चटुल०. ६ भुवनाः. ७ प्रचलत्. ८ प्रचल; प्रबल. ९ निरन्तराः. १० संघट्टन. ११ तनय, तोक. १२ उपभुज्यमानमपि.

शरवणमिवान्तःपुरमभूत्। यथा यथा च यौवनमतिचक्राम तथा तथा विफॅल-मनोरथस्यानपत्यताजन्माविवर्धतास्य संतापः । विषयोपभोगसुखेच्छाभिश्चमनो विजॅहे। नरपतिसहस्रपरिवृतमप्यसहायमिव चक्षुष्मन्तमप्यन्धमिव भुवनालम्बन-मपि निरालम्बनमिवात्मानममन्यत।

अथ तस्य चन्द्रलेखेव हरजटाकलापस्य कौस्तुभप्रभेव कैटभारातिवक्षःस्थलस्य वनमालेव मुसलायुधस्य वेलेव सागरस्य मदलेखेव दिग्गजस्य लतेव पादपस्य कुसुमोद्गतिरिव सुरभिमासस्य चन्द्रिकेव चन्द्रमसः कमलिनीव सरसः तारकापङ्क्तिरिव नभसो हंसमालेव मानसस्य चन्दनवनराजिरिव मलयस्य फणामणिशिखेव शेषस्य भूषणमभूत् त्रिभुवनविस्मयजननी जननीव वनिताविभ्रमाणां सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम।

एकदा च स तदावासगतस्तां चिन्तास्तिमितदृष्टिना शोकमूकेन परिजनेन परिवृतामाराद्वस्थितैश्च ध्यानानिमिषलोचनैः कञ्चुकिभिरुपास्यमानाम्, अनतिदूरवर्तिनीभिश्चान्तःपुरवृद्धाभिराश्वास्यमानाम्, अविरलाश्रुबिन्दुपातार्द्रीकृतदुकूलामनलंकृतां वामकरतलविनिहितमुखकमलाम्, असंयतकुलालकां सुनिविडपर्यङ्किकोपविष्टां रुदतीं ददर्श । कृतप्रत्युत्थानां च तां तस्यामेव पर्यङ्किकायामुपवेश्य स्वयं चोपविश्याविज्ञातबाष्पकारणो भीतभीत इव करतलेन विगतबाष्पाम्भःकणौ कुर्वन्कपोलौ भूपालस्तामवादीत्।

---

दर्शनम् । शरवणं बाणाख्यतृणसमूहः । **अथेति**—अथ तस्य राज्ञस्तारापीडस्य विलासवती नाम महिषी भूषणमभूदित्यन्वयः । कस्य केवेत्याह—**चन्द्रेति** । कैटभारातिर्विष्णुः । वनमाला आपादलम्बिनी माला वनमाला विदुर्बुधाः । इत्युक्तलक्षणा माला । 'आभरणविशेषः' । इति भानु॰ सुरभिः वसन्तश्चैत्रो वा । **फणेति**। फणायां यो मणिस्तस्य शिखा ज्वाला । वनिताविभ्रमाणां हावादीनाम् । 'चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः' । मदरागहर्षजनितचित्तवृत्तिविपर्यासो विभ्रम इत्यर्थः । विशेषस्तूक्तः । आवासो भवनम् । चिन्तया किं कर्तव्यताविचारेण स्तिमिता जडा दृष्टिर्यस्य तेन । आरात्समीपे । ध्यानेन चिन्तया अनिमिषे लोचने येषां तैः । **कञ्चुकिभिः**—अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ इत्युक्तलक्षणैः । **अविरलेति**—इत्यादिना स्त्रीजनसुलभः पर्याकुलीभावातिशय उक्तः । अविरला अश्रुबिन्दवः तेषां पातेन अविरलः अश्रुबिन्दुपातः तेनेति वा । असंयता असम्बद्धा आकुलाः पर्यस्ता अलकाः केशा

---

१ निष्फल. २ महानवर्धत. ३ विजह्रे. ४ आत्मानमनपत्यम्. ५ पुष्पोद्गतिः, कुसुमोद्गतिः ६ तदावासमुपगतः. ७ दीनदृष्टिना. ८ रुदतीं देवीम्, देवीम्. ९ कृताभ्युत्थानाम्, कृतप्रत्यभ्यु॰.

देवि किमर्थमन्तर्गतगुरुशोकभारमन्थरमशब्दं रुद्यते । ग्रथ्नन्ति हि मुक्ताफल-जालकमिव बाष्पबिन्दुनिकरमेतास्तव पक्ष्मपङ्क्तयः । किमर्थं च कृशोदरि नालंकृतासि । बालातप इव रक्तारविन्दकोशयोः किमिति न पातितश्चरणयोरलक्तकरसः । कुसुमशरसरःकलहंसकौ कस्मात्पादपङ्कजस्पर्शेन नानुगृहीतौ मणिनूपुरौ । किंनिमित्तमयमपगतमेखलाकलापमूको मध्यभागः । किमिति च हरिण इव हरिणलाञ्छने न लिखितः कृष्णागुरुपत्रभङ्गः पयोधरभारे । केन कारणेन तन्वीयं हरमुकुटचन्द्रलेखेव गङ्गास्रोतसा न विभूषिता हारेण वरोरु शिरोधरा । किं वृथा वहसि विलासिनि स्रवदश्रुजललवधौतकुङ्कुमपत्रलतं कपोलयुगलम् । इदं च कोमलाङ्गुलिदलनिकरं रक्तोत्पलमिव करतलं किमिति कर्णपूरतामारोपितम् । इमां च केन हेतुना मानिनि धारयस्यनुपरचितगोरोचनाबिन्दुतिलकामसंयमितालकिनीं ललाटरेखाम् । अयं च ते बहुलपक्षप्रदोष इव चन्द्रलेखाविरहितः करोति मे दृष्टिखेदमतिबहुलतिमिरपटलान्धकारः कुसुमरहितः केशपाशः । प्रसीद निवेदय देवि दुःखनिमित्तम् । एते हि पल्लवमिव सरागं मम हृदयमाकम्पयन्ति तरलीकृतस्तनांशुकास्तवायतोः श्वासमरुतः । कैंचिन्मयापराद्ध-

---

यस्यास्ताम् । सुनिबिडा दृढा । कृतं प्रत्युत्थानमादरदर्शनार्थमुत्थानं यया । **देवीति**—मन्थरं मन्दं मन्दम् । 'अत्राशब्दमित्यनेन धीरायाः स्वभावः प्रदर्शितः । अधीरायास्तु सशब्दं रोदनं स्यादिति भावः' । इति भानु० । **बालातपेति**—'कोमलमुकुलाकारयोः साम्याच्चरणयोः कोशसाम्यम् । आरक्तत्वसाम्यादलक्तकरसेन बालातपसाम्यम् ।' इति भानु० । कलहंसकाविव अनुरणनसाम्यादिति भावः । **अपगतेति**—मेखलाकलापः काञ्चीदाम । मेखलाया एकत्वेपि किङ्किण्यपेक्षया कलाप इत्युक्तम् । 'मेखलैव कलापः प्रचलाक इति वा' इति भानु० । **हरिणेति** । अत्र गौरत्वाद्वर्तुलत्वाच्च चन्द्रपयोधरसाम्यम् । किंचिद्गौरकृष्णत्वसाम्याद्धरिणकृष्णागुर्वो साम्यम् । तन्वी कृशेयं शिरोधरा ग्रीवा । वरौ ऊरू यस्याः सा तत्संबुद्धिः । **किं वृथेति**—हे विलासिनि प्रशस्तविलासवति स्रवदश्रुजललवैर्गलन्नेत्रजलबिन्दुभिर्धौताः क्षालिताः कुङ्कुमपत्रलेखा यस्मिन्नेतादृक् कपोलयुगलं वृथा किं वहसि । प्रकृष्टविलासवत्यास्तवास्थाने रोदनमनुचितमिति भावः । कोमला अङ्गुल्य एव दलनिकरो यस्य तत् । अनुपरचितो गोरोचनाया बिन्दुभिस्तिलको यस्याम् । असंयमिता अलका विद्यन्ते यस्याः सा ताम् । **अतीति**—अतिबहुलः तिमिरपटलस्य ०लेन वान्धकारः यस्मिन् । पक्षे अतिबहुलमतिगहनं यत्तिमिरपटलं तस्येवान्धकारो यस्मिन् । अतिकृष्ण इत्यर्थः । सरागम्—रागो रक्तिमा प्रीतिश्च तेन सहितम् । स्खलितं

---

१ तवायताः. २ कृष्णागुरुपङ्क. ३ वरारोहे. ४ कन्धरा. ५ युगम्. ६ असंस्कृतालाकिनीमालिकलेखाम्. ७ दृष्टिखेदनाम्. ८ आवेदय. ९ तवाधिजाः; निश्वासमारुताः. १० कच्चित्.

मन्येन वा केनचिदस्मदुपजीविना परिजनेन। अतिनिपुणमपि चिन्तयन्न पश्यामि खलु स्खलितमल्पमप्यात्मनस्त्वद्विषये। त्वदायत्तं हि मे जीवितं च राज्यं च। कथ्यतां सुन्दरि शुचः कारणम्। इत्येवमभिधीयमानो विलासवती यदा न किंचित्प्रतिवचः प्रतिपेदे तदा विवृद्धबाष्पहेतुमस्याः परिजनमपृच्छत्।

अथ तस्यास्ताम्बूलकरङ्कवाहिनी सततप्रत्यासन्ना मकरिका नाम राजानमुवाच। देव कुतो देवादल्पमपि परिस्खलितम्। अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम्। किं तु महाग्रहग्रस्तेव विफलनरेन्द्रसमागमास्मीत्ययमस्या देव्याः संतापः। सुमहांश्च कालः संतप्यमानायाः। प्रथममपि स्वामिनी दानवश्रीरिव सततानिन्दितसुरता शयनस्नानभोजनभूषणपरिग्रहादिषु समुचितेष्वपि दिवसव्यापारेषु कथं कथमपि परिजनप्रयत्नात्प्रवर्त्यमाना सशोकेवासीत्। देवहृदयपीडापरिजिहीर्षया न दर्शितवती विकारम्। अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया तत्र महाभारते वाच्यमाने श्रुतमपुत्राणां किल न सन्ति लोकाः शुभाः पुन्नाम्नो नरकात्त्रायत इति पुत्र इति। एतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति न भूषणपरिग्रहमाचरति नोत्तरं प्रतिपद्यते केवलमविरलबाष्पबिन्दुदुर्दिनान्धकारितमुखी रोदिति। एतदाकर्ण्य देवः प्रमाणम्। इत्येभिधाय विरराम।

---

प्रमादं दोषं वा। विवृद्धस्य बाष्पस्य हेतुं परिजनमपृच्छत्। पृच्छेर्द्विकर्मकत्वात्कर्मद्वयम्। प्रत्यासन्ना समीपस्थायिनी। **महेति**–महाग्रहः दुष्टपिशाचादिः। नरेंद्रसमागमो नृपसंभोगः। पक्षे नरेन्द्रेण भूतापसारणमन्त्रज्ञेन (१०८ पृष्ठं द्रष्टव्यं) समागमः सहवासः। तस्या महाग्रहग्रस्ततया राज्ञः कस्यापि लाभस्यासंभूतेः। संतप्यमानायाः खेदं कुर्वाणायाः। दानवेति व्याख्यातपूर्वम्। परिजिहीर्षया परिहर्तुमिच्छया। शुभा लोकाः स्वर्गादयः। तदुक्तं महाभारते–'यदागमवतः पुंसस्तदपत्यं प्रजायते। तत्तारयति सन्तत्या पूर्वप्रेतान् पितामहान्॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा॥ पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पौत्रस्य पुत्रेण ब्रध्नस्याप्नोति पिष्टपम्'॥ इति। 'अप्रजस्य महाभागा न द्वारं परिचक्षते। स्वर्गे......॥ न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितम्। इति चादिपर्वणि। 'पुन्नाम्नः' इत्यादि वचनं मनुसंहितायामपि (९-१३८) विद्यते। **अविरलेति**–अविरला घना बाष्पबिन्दव एव दुर्दिनं घनोत्थं तमस्तेनान्धकारितं मुखं यस्याः।

---

१ अनुजीविना. २ ०मानापि यदा. ३ करण्डक. ४ राज. ५ शयना(श)नस्नान. ६ प्रवर्तमाना. ७ अपुत्राणां किल गतिर्नास्ति न वा. ८ बाष्पदुर्दिना. ९ इत्येतद.

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निश्वस्य निजगाद । देवि किमत्र क्रियतां दैवायत्ते वस्तुनि । अतिमात्रमलं रुदितेन[1] । न वयमनुग्राह्याः[2] प्रायो देवतानाम् । आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम् । अन्यस्मिञ्जन्मानि न कृतमवदातं कर्म । जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि । न हि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि । यावत्तु मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम् । अधिकां कुरु देवि गुरुषु[3] भक्तिम् । द्विगुणामुपपादय देवतासु पूजाम् । ऋषिजनसपर्यासु[4] दर्शितादरा भव । परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि वराणां दातारो भवन्ति । श्रूयते हि पुरा चण्डकौशिकप्रभावान्[5]मगधेषु[6] बृहद्रथो नाम राजा जनार्दनस्य जेतारमतुलभुज[7]बलमप्रतिरथं जरासन्धं नाम तनयं लेभे । दशरथश्च राजा परिणतवया[8] विभाण्डकमहामुनिसुतस्यर्ष्यशृङ्गस्य प्रसादान्नारायणभुजानिवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान् । अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतास्वादसुखभाजो बभूवुः । अमोघफला हि महा-

दैवायत्ते वस्तुनि—नियत्यधीने वस्तुतन्त्रे सति । पुत्रोत्पत्त्याद्यर्थः केवलमीश्वरेच्छामेवानुवर्तते न मानवीमिच्छामिति भावः । अनुग्रहार्हाः । एतेन निर्वेदो गमितः । अभाजनमपात्रम् । अवदातं पुण्यफलदम् । जन्मान्तरकृतमन्यस्मिञ्जन्मनि कृतम् । ‘ हि ’ अवधारणे । अन्यथाकर्तुमनिष्टफलदमिष्टफलदं कर्तुमिष्टफलदमनिष्टफलदं कर्तुं वा । अभियुक्तेन पण्डितेन अध्यवसायिना वा । किं पुनरविदुषाऽनध्यवसायिना वेति भावः । ‘ अत्र दैवं द्विविधं, प्रतिबन्धकमप्रतिबन्धकं च । प्रतिबन्धकं तदपि द्विविधं स्वतः प्रतिषेधरूपं वंध्यस्त्रीपुत्रयागादौ । द्वितीयं तु सहकारिविघटनद्वारा राज्यप्राप्त्यादौ कार्योत्पत्तिप्रतिबन्धकम् । अप्रतिबन्धकं तदपि द्विविधम् । स्नानदानादिसामग्रीसमवधानेन प्रतिबन्धकं न भवति । तदभावे तु प्रतिबन्धकम् । अतोऽदृष्टस्याप्रत्यक्षत्वेन विविच्य ज्ञातुमशक्यत्वात् । द्वितीयसंभावनां चेतसि कृत्वाह यावदिति ’ । इति भानुचन्द्रः । मानुष्यके मनुष्याणां समूहः मानुष्यकं मनुष्यशक्तावित्यर्थः । उपपादयितुं कर्तुम् । गुरवः सन्मार्गप्रवर्तयितारो धर्मोपदेष्टारो वा । ‘ गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । ’ इति हैमः । सपर्या सेवा । यथासमीहितानि फलानि येषु । बृहद्रथकथोक्ता । अविद्यमानः प्रतिरथो यस्य । विभाण्डकः काश्यपसुतः । ऋष्यशृङ्गः—ऋष्यस्य शृङ्गमृष्यशृङ्गं तद्वच्छृङ्गमस्य । ‘ सप्तम्युपमान—’ इत्यादिनोत्तरपदलोपी समासः । अप्रतिहताननिवार्यान् । अमोघफला

१ अलमतिरुदितेन. २ वयमननुग्राह्याः. ३ गुरुभक्तिम्. ४ परिचर्यासु. ५ प्रसादात्, प्रसादप्रभावात्. ६ मगधेशः. ७ अमरतुल्यभुज. ८ वया अपि.

मुनिसेवा भवति । अहमपि खलु देवि कदा समुपारूढगर्भभरालसामापाण्डुमुखीमासन्नपूर्णचन्द्रोदयामिव पौर्णमासीनिशां देवीं द्रक्ष्यामि । कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः । कदा हारिद्रवसनधारिणी सुतसनाथोत्सङ्गा द्यौरिवोदितरविमण्डला सबालातपा मामानन्दयिष्यति देवी । कदा सर्वौषधिपिञ्जरजटिलकेशो निहितरक्षाघृतबिन्दुनि तालुनि विन्यस्तगौरसर्षपोन्मिश्रभूतिलेशो गोरोचनाचित्रकण्ठसूत्रग्रन्थिरुत्तानशयो दशनशून्यस्मिताननः पुत्रको जनयिष्यति मे हृदयाह्लादम् । कदा गोरोचनाकपिलद्युतिरन्तःपुरिकाकरतलपरंपरासंचार्यमाणमूर्तिरशेषजनवन्दितो मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः । कदा च क्षितितलरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह परिभ्रमन्भवनाङ्गनम् । कदा केसरिकिशोरक इव संजातजानुचङ्क्रमणावस्थः संचरिष्यतीतस्ततः स्फटिकमणिभित्त्यन्तरितान्भवनमृगशावकाञ्जिघृक्षुः । कदान्तः—

---

अमोघं निश्चयेन भावि फलं यस्याः सा । **समुपेति**—समुपारूढः कठोरो यो गर्भस्तस्य भरेणालसां मन्थराम् । पूर्णपात्रम्-प्रियनिवेदकेन बलादाकृष्य गृह्यमाणमलंकारवस्त्रादिकम् 'वर्धापकं यदानन्दादलङ्कारादिकं पुनः । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत्' ॥ इति हारावली । 'पूर्णपात्रं वर्धापकेपि च' इति मेदिन्यपि । हरिद्रया पीतया रक्तं हारिद्रं वसनं । तेन रक्तं रागात् । इत्यण् । तस्य धारिणी । अचिरोत्पन्नस्य पुत्रस्य रक्तदेहप्रभया शबलत्वाद्धारिद्रवसनस्य पीतरक्तेन बालातपेन साम्यम् । सूर्यबिम्बपुत्रयोश्च रक्तत्वात्समानधर्मत्वम् । बालरक्षाप्रकारमाह—**सर्वौषधीति** । सर्वाश्च ता ओषधयः—कुष्टमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराचन्दनकर्पूरैर्मुस्ता सर्वौषधिः स्मृता ॥ इत्युक्तलक्षणास्ताभिः पिञ्जरा जटिलाः केशा यस्य । रक्षया युतं रक्षार्थं वा घृतं रक्षाघृतम् । विन्यस्तो गौरसर्षपाः सिद्धार्थास्तैः मिश्रो भूतिलेशो भस्मलेशो यस्य । भूतादिभ्या रक्षार्थमयं विधिः । 'सरिषपः सिते तस्मिन्रक्षोघ्नो भूतनाशनः ।' इति रभसः । गोरोचनया चित्रः कण्ठसूत्रस्य ग्रन्थिर्यस्य । रक्षार्थमिदम् । उत्तानशयः उत्तान ऊर्ध्वमुखः शेते सः । 'उत्तानादिषु कर्तृषु' इत्यच् । गोरोचनावत्कपिला पिङ्गला द्युतिर्यस्य । अन्तःपुरे भवा अन्तःपुरिकास्तासां करतलपरम्परया संचार्यमाणा । एकस्या हस्तादपरस्या हस्ते स्थाप्यमानेत्यर्थः । मूर्तिर्यस्य । संजाता जानुभ्यां यच्चङ्क्रमणं प्रसर्पणं तदवस्था तद्योग्यता यस्य । **स्फटिकेति** अन्तरितान्व्यवहितान् । मृगशावकान् हरिणपोतान् जिघृक्षुः [illegible] । स्फाटिकाभित्तीनां पारदर्शकतया दृश्यमानमूर्तीनित्यर्थः । निनादसंगताभिनादानुसारिणः । कक्षान्तराणि प्रधावितः । कक्षायाः कक्षान्तरं संचरन्नित्यर्थः । **कदेति**—मत्तगजरा-

---

१ मुनिजन. २ पाण्डुर. ३ उदित. ४ पिञ्जरित. ५ घृतमधुबिन्दुतालुनि. ६ लेशः. ७ चित्रित. ८ जनाभिनन्दितः. ९ क्षितिरेणु. १० णारम्भः. ११ आजिघृक्षुः.

पुरै[1]र्नूपुरनिनादसंगतान्गृहकलहंसकाननुसरन्कक्षान्तरप्रधावितः कनकमेखलाघण्टिकारवानुसारिणीमायासयिष्यति धात्रीम् । कदा कृष्णागुरुपङ्कलिखितमदलेखालंकृतगण्डस्थलें[2]को मुँ[3]खडिण्डिमध्वनिर्जै[4]नितप्रीतिरूर्ध्वकरविप्रकीर्णचन्दनचूर्णधूलिधूसरः कुञ्चिताङ्गुलिशिखराङ्कुशाकर्षणविधूतशिराः करिष्यति मत्तँ[5]गजराजलीलाक्रीडाः । कदा मातुश्चँ[6]रणयुगलरागोपयुक्तशेषेण पिण्डालक्तकरसेन वृद्धकञ्चुकिनां विडम्बयिष्यति मुखानि । कदा कुतूहलचञ्चललोचनो मणिकुट्टिमेष्वधोदत्तदृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्रतिबिम्बाँ[7]नि । कदा नरेन्द्रसहस्रप्रसारितभुजयुगलाभिनन्द्यमानागमनो भूषणमणिमयूखलेखाकुलीक्रियमाणलोलदृष्टिरा[illegible]स्थितस्य मे पुरः पर्यटिर्ष्यँ[8]ति सभान्तरेषु । इत्येतौँ[9]नि च मनोरथशतानि चिन्तयतोन्तःसंतप्यमानस्य प्रयान्ति रजन्यः । मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोकँ[10]ः । शून्यमिव मे प्रतिभाति जगत् । अफलमिव पश्यामि राज्यँ[11]म् । अप्रतिविधेये तु विधातरि किं करोमि । तन्मुच्यतामयं देवि शोकानुबन्धः । आधीयतां धैर्ये धर्मे च धीः । धर्मपरायणानां हि सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति । इत्येवँ[12]मभिधाय [illegible] स्वयं करतलेनाभिनवपल्लवेनेव विकचकमलोपँ[13]मानमाननमस्याः साश्रुलेखं ममार्ज । पुनः पुनश्च प्रियशा-

---

जस्य इव लीला विलासो यासु तादृश्यः क्रीडाः । उभयोः सादृश्यं प्रदर्शयन्नाह—कृष्णं च तदगुरु च तस्य पङ्केन लिखिता या मदलेखावल्लेखा तयालंकृतं गण्डस्थलं यस्य । पक्षे कृष्णागुरुपङ्कवन्मदलेखा दानराजिः । मुखेति—' धात्र्यादीनां लालनार्थं मुखेन यो डिण्डिमध्वनिस्तेन जनितोत्पादिता प्रीतिर्यस्य । ' इ. भानु० । ऊर्ध्वकराभ्यां विप्रकीर्णं यच्चन्दनचूर्णं तदेव धूलिस्तया धूसरः । पक्षे ऊर्ध्वकरेण ऊर्ध्वीकृतशुण्डया विप्रकीर्णा चन्दनचूर्णवद्या धूलिस्तया धूसरः । कुञ्चिता आकुञ्चिता याङ्गुलिस्तस्याः शिखरमङ्कुशइव शिखरमिव च योङ्कुशः सृणिस्तेनाकर्षणं पुरस्तात्पश्चाद्वा चालनं तेन विधूतं शिरो येन । मातुश्चरणयुगलस्य रागो रञ्जनं तत्रोपयुक्तात् शेषस्तेन । विडम्बयिष्यति तद्रसेन रञ्जयित्वा विरूपीकरिष्यतीत्यर्थः । नरेन्द्रसहस्रेण प्रसारितानि भुजयुगलानि तैरभिनन्द्यमानमागमनं यस्य । भूषणमणीनां मयूखलेखाभिः आकुलीक्रियमाणा समन्तादाकृष्यमाणा अत एव लोला चञ्चला दृष्टिर्यस्य । सभान्तरेषु परिषन्मध्यदेशेषु । अप्रतिविधेये प्रतीकारानर्हे । शोके शोकस्य वा अनुबन्धः शोकानुबन्धः शोकसन्तानः । धर्मे धर्माचरणे । अभिनवं नूतनम् । धर्मः परमयनं येषां तेषाम् । प्रियशतैश्चाटूक्तिशतैर्मधुराभिर्हृदयंगमाभिः । अपनोदः

---

१ पुरिका. २ स्थलः. ३ कोमलमुखरवडिण्डिम. ४ जात. ५ मदमत्त; लीलां; मत्तगजक्रीडां; मत्तगजराजलीलः क्रीडाम्. ६ चरणरागो०. ७ प्रतिबिम्बितानि. ८ सर्पिष्यति. ९ इत्येतानि चान्यानि १० संतापः. ११ राज्यं जीवितं च. १२ इत्थम्. १३ कमलतुल्यम्.

तमधुराभिः शोकापनोद[1]निपुणाभिर्धर्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम।

निर्गते च तस्मिन्मन्दीभूतशोका[2]वेगा विलासवती यथाक्रियमाणाभरणपरिग्रहादिकमुचितं दिवसव्यापारमन्वतिष्ठत्। ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनस[3]पर्यासु चादरवती बभूव। यद्यच्च किंचित्कुतश्चिच्छुश्राव[4] गर्भतृष्ण[5]या तत्तत्सर्वं चकार। न महान्तमपि क्लेशमजीगणत्। अनवरतदह्यमानगुग्गुलुबहुलधूपान्धकारितेषु चण्डिकागृहेषु धवलाम्बरा[6] शुचिमूर्तिरुपोषिता हरितकुशोप[7]च्छदेषु मुसल[8]शयनेषु सुष्वाप। पुण्यसलिलपूर्णै[9]र्विविधकुसुमफलोपेतैः क्षीरतरुपल्लवलाञ्छनैः सर्वरत्नगर्भैः शातकुम्भकुम्भैर्गोकुलेषु वृद्धगोपवनिताकृतमङ्ग[10]लानां लक्षणसंपन्नानां गवामधः सस्नौ। प्रतिदिवसमुत्थायोत्थाय सर्वरत्नोपेतानि हैमानि तिलपात्रा[11]णि ब्राह्मणेभ्यो ददौ। महानरेन्द्रलिखितमण्डलमध्यवर्तिनी विविधबलिदानानन्दितदिग्देवतानि बहुलपक्षचतुर्दशीनिशासु चतुष्पथे[12] स्नपन[13]मङ्गलानि भेजे। सिद्धायतनानि कृतविचित्रै[14]र्देवतोपयाचितकानि सिषेवे। दर्शितप्रत्यया[15]नि संनिधी[16]-

---

दूरीकरणम्। धर्मस्येष्टफलप्राप्तिहेतोरुपदेशो गर्भे यासां ताभिः। तथेति–यथा यथापूर्वं क्रियमाण आभरणपरिग्रहः आदौ यस्मिन्। गर्भतृष्णया गर्भधारणेच्छया। महान्तं गुरुम्। अजीगणत् गणयामास। दुःसहं न मेने इत्यर्थः। अनवरतं दह्यमानो यो गुग्गुलुस्तस्य बहुलेन धूमेन सञ्जातान्धकारेषु। हरिता हरिद्वर्णा ये कुशास्त एवोपच्छद उत्तरपटो येषां तेषु। मुसलशयनेषु देहदण्डार्थमिदम्। मुसलान्ययोग्राणि वा तेषां शयनेषु। एवमग्रेपि 'कण्टकव्रतशयनलीलाम्' इत्यादि। क्षीरतरवो वटादयस्तेषां पल्लवा लाञ्छनं येषां तैः। तदुक्तम्––अश्वत्थोदुम्बरप्लक्षवटपिप्पलसंज्ञिताः। पञ्चैते क्षीरिणो वृक्षाः समाख्याता विचक्षणैः॥ इति। 'क्वचित्क्षीरपल्लव–' इति पाठः। 'तत्र क्षीरपल्लवः कोमलपल्लव इति व्याख्येयम्। इति भानु०। शतकुम्भे पर्वते भवं शातकुम्भं सुवर्णम्। गोकुलेषु व्रजेषु। मङ्गलं कुङ्कुमतिलकादि। हैमानि सौवर्णानि। महानरेन्द्रेण महामायिकेन लिखितानि यानि मण्डलानि माहेन्द्रादिदेवतायतनानि तेषां मध्यवर्तिनी। 'नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते'। इति विश्वकोशाद्यद्यपि नरेन्द्रशब्दो विषवैद्यवाची तथाप्यत्रेन्द्रजालविद्याज्ञातरि वर्तते। बहुलपक्षः कृष्णपक्षः। चतुर्णां पथां समाहारश्चतुष्पथम्। सिद्धा योगिनस्तेषामायतनानि चैत्यानि। 'चैत्यमायतनं तुल्ये' इत्यमरः। कृतानि विचित्राणि देवतानामुपयाचितकानि येषु। तदुक्तं 'दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः'॥ दर्शित-

---

१ नोदन. २ शोका. ३ परिचर्यासु. ४ शुश्राव व्रतम्. ५ अर्भक. ६ धवलाम्बरशु०, ०म्बरेण. ७ उपच्छन्ने. ८ भूतल. ९ पूरितैः, पूर्तैः. १० ०मङ्गला. ११ तिलपत्राणि. १२ पथेषु. १३ स्नान. १४ विविध. १५ प्रत्यादेशानि. १६ संनिहित–संनिध–मान०

नमातृभवनानि जगाम। प्रसिद्धेषु नागकुलह्रदेषु ममज्ज। अश्वत्थप्रभृतीनुपपादितपूजान्महावनस्पतीन्कृतप्रदक्षिणा ववन्दे। दोलायमानमणिवलयेन पाणियुगलेन स्नाता स्वयमखण्डसिक्थसंपादितं रजतपात्रे परिगृहीतं वायसेभ्यो दध्योदनबलिमदात्। अपरिमितकुसुमधूपविलेपापूपपललपायसबलिलाजकलितामहरहरम्बादेवीसपर्यामाततान। स्वयमुपहृतपिण्डपात्रान्भक्तिप्रवणेन मनसा सिद्धादेशान्नग्नक्षपणकान्पप्रच्छ। विप्राश्निकादेशवचनानि बहु मेने। निमित्तज्ञानुपचचार। शकुनज्ञानविदामादरमदर्शयत्। अनेकवृद्धपरंपरागमागतानि रहस्यान्यङ्गीचकार। दर्शनागतं द्विजजनमात्मजदर्शनोत्सुका वेदश्रुतीरकारयत्। अनवरतवाच्यमानाः पुण्यकथाः शुश्राव। गोरोचनालिखितभुर्जपत्रगर्भान्मन्त्रकरण्डकानुवाह। रक्षाप्रतिसरोपेतान्योषधिसूत्राणि बबन्ध। परिजनोपि चास्याः सततमुपश्रुत्यै निर्जगाम तन्निमित्तानि च जग्राह। शिवाभ्यो मांसबलिपिण्डमनुदिनं निशि समुत्ससर्ज। स्वप्नदर्शनाश्चर्याण्यार्याणामाचचक्षे। चत्वरेषु शिवबलिमुपजहार।

---

प्रत्ययोनुष्ठानानुरूपसिद्धिर्यैः। सान्निधाने समीपे स्वतानि मातृणां माहेश्वरीप्रभृतिदेवतानां भवनान्यायतनानि। अस्य शिवस्य परिवारत्वेन मान्ति वर्तन्ते इति मातृनाम्न्यः इति क्षीरस्वामी। 'ब्राह्मी माहेश्वरी चंडी ( चैन्द्री ) वाराही वैष्णवी तथा। कौमारी चैव चामुंडा चर्चिकेत्यष्टमातरः'। इत्यष्टौ मातरः। अखण्डितैरक्षतैः सिक्थैर्धान्यकणैः संपादितानि। स्नाता पाणियुगलेनादादित्यन्वयः। **अपरीति**। अपरिमितानि कुसुमानि धूपः विलेपो घृष्टचन्दनादिः अपूपः पिष्टकः पललं पिष्टतिलमिश्रमन्नम्। 'पललं तिलमिश्रे स्यात्' इति शाश्वतः। पायसं परमान्नं बल्यर्थं लाजा भ्रष्टव्रीह्यादयो बलिलाजाः एतैः कलितां युक्ताम्। स्वयमुपहृतानि पिण्डपात्राणि भिक्षान्नपात्राणि येभ्यः। भक्तिप्रह्वेण। सिद्धादेशान् सिद्धसंज्ञान्। सिद्धा अव्यभिचारिण आदेशा येषामिति वा। नग्नक्षपणकान् दिगम्बरान्। विप्राश्निका लक्षणादिना शुभाशुभे जानती स्त्री। 'विप्राश्निका त्वीक्षणिका दैवज्ञा' इत्यमरः। तासामादेशवचनान्याज्ञावचनानि। बहुमेने तदुक्तं चकारेत्यर्थः। निमित्तं शुभाशुभसूचकमाक्षिस्पन्दनादि जानन्तीति तान्। शकुनं वायसादिशकुनिचेष्टादि तस्य ज्ञानं विदन्तीति तेषाम्। 'निमित्तं भौमाद्यष्टविधं जानन्तीति तान्। शकुनज्ञानविदां वसन्तराजादिशास्त्रज्ञानैर्विदाम्' इति भानु०। अनेकवृद्धानां परम्परया परिपाट्याय आगम उचितविधिज्ञानं मन्त्रशास्त्रं वा तदागतानि रहस्यानि। वेदश्रुतीरकारयत् ब्राह्मणद्वारा श्रवणं कारयामास। 'हृक्रोरन्यतरस्याम्' इत्यण्यन्तस्य कर्ता। द्विजजनः कर्मसंज्ञः। मन्त्रकरण्डकान्मन्त्रयुक्तान् रक्षापिटकान्। रक्षाप्रतिसरो रक्षाकङ्कणम्। उपश्रुत्यै—'देवप्रश्न उपश्रुतिः' इति कोषः। 'नक्तं निर्गत्य यत्किंचिच्छुभाशुभकरं वचः। श्रूयते तद्विदुर्धीरा देवप्रश्नमुपश्रुतिम्॥

---

१ कृतस्नाना. २ अखण्डितासिक्थकुसुमसम्पादितम्. ३ ०विलेपाम्. ४ ज्येष्ठा०. ५ उपाहृत; उपहित. ६ समागतानि. ७ द्विजगणान्. ८ पुण्याः कथाः. ९ गण्डकान्, दण्डकान्. १० परिसरो.

एवं च गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यामल्प[1]शेषपाण्डुतारके जरत्पारावतपक्षधूम्रे[2] नभसि स्वप्ने सितप्रासादशिखराश्रिताया[3] विलासवत्याः करिण्या इव बिसवलय[4]मानने सकलकलापरिपूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत् । प्रबुद्धश्चोत्थाय हर्षविकासस्फीततरेण चक्षुषा धवलीकृतवासभवनस्तस्मिन्नेव क्षणे समाहूय[5] शुकनासाय तं स्वप्नमकथयत् । स तं समुपजातहर्षः प्रत्युवाच । देव संपन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः । कतिपयैरेवाहोभिरसंदेह[6]मनुभविष्यति स्वामी सुतमुखकमलावलोकनसुखम् । अद्य खलु मयापि निशि स्वप्ने धौतसकल[7]वाससा शान्त[8]मूर्तिना दिव्याकृतिना द्विजेन विकचं चन्द्रकलावदातदलशतमालोलकेसरसहस्रजटालं[9] मकरन्द[10]बिन्दुसीकरवर्षि पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमानन्दमग्र[11]पातीनि शुभानि निमित्तानि । किं चान्यत्प्रियतर[12]मधिकमानन्दकारणमतो भविष्यति । अवितथफलाश्च[13] प्रायो निशावसानसमय[14]दृष्टा भवन्ति स्वप्नाः । सर्वथा नचिरेण[15] मान्धातारमिव धौरेयं सर्वराजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । शरत्कालकमलिनीवाभिनवकमलोद्गमेन गन्धगजमाह्लादयिष्यति देवम् । येनेयं दिग्गजमदलेखेवाविच्छिन्नसंताना क्षितिभारधारणोचिता भविष्यति कुलसंततिः स्वामिनः । इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयांचकार[16] ।

---

इति हारावल्याम् । तन्निमित्तानि तदुक्तशकुनानि । चत्वरेषु शृङ्गाटकेषु प्राङ्गणेषु वा । **अल्पेति** अल्पाः शेषाः क्षीणप्रभात्वात्पाण्डुतारका यस्याम् । पारावतः कपोतः । धूम्रो धूमलः । 'धूम्रो धूमलो कृष्णलोहिते ' इत्यमरः । **हर्षेति**—हर्षाख्यो विकासः प्रफुल्लता तेन स्फीततरमतिविस्तृतं तेन । **धौतेति**—धौतानि सकलानि वासांसि यस्य । विकचं विकसितं चन्द्रकलावदवदातं शुभ्रं दलशतं यस्मिन् । आलोलानां केसराणां सहस्रेण जटालं जटिलम् । प्राणिस्थादातो मत्वर्थे आलच् । अग्रपातीनि पुरोभवन्ति । अवितथं सत्यमवश्यंभावीत्यर्थः फलं येषाम् । मान्धाता युवनाश्वपुत्रः सूर्यवंश्यः सार्वभौमो राजा । तदुक्तं भागवते—यौवनाश्वोथ मान्धाता चक्रवर्त्यवनीं प्रभुः । सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ इति । धौरेयं धुरीणम् । **शरदिति**—'पक्षे अभिनवा कमला पुत्रसंपत् । अत एव देव्याः कमलिनीसाम्यं राज्ञो गन्धगजसाम्यं चेति भावः । इति भानु० । अविच्छिन्नः संतत इत्यर्थः । सन्तानः पुत्रपौत्रादिपरम्परा पक्षे प्रवाहः यस्याः ।

---

१ अल्पावशेष. २ धूसरे. ३ सौधशिखर. ४ बिसपल्लवम्, किसलयम्. ५ सबहुमानं शुकनासमाहूय स्वप्नम्. ६ असंशयं; अनुभवति. ७ धवल. ८ प्रशान्त. ९ जटिलम्; जटालमक०. १० मधु; संदोहवर्षि. ११ अग्रे, अग्रजातानि. १२ किंवान्यत्प्रियतरं परमानन्द., ०मधिकानन्द. १३ हि. १४ समये. १५ न चिरेणैव, अचिरेण. १६ विनोदयांचकार.

कतिपयदिवसापगमे च देवताप्रसादात्सरसीमिव प्रतिमाशशी विवेश गर्भो विलासवतीम् । येन नन्दनवनराजिरिव पारिजातेन मधुसूदनवक्षःस्थलीव कौस्तुभमणिना सा सुतरामराजत । दर्पणश्रीरिव गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह । शनैः शनैश्च प्रतिदिनमुपचीयमानगर्भा निर्भरपरिपीतसागरसलिलभरमन्थरेव मेघमाला मन्दं मन्दं संचचार । मुहुर्मुहुरनुबद्धविजृम्भिकमाजिह्मितलोचना सालसं निशश्वास । तथावस्थां तामहरहः स्वयमनेकरसवाञ्छितपानभोजनां प्रावृषमिव श्यामायमानपयोधरमुखीं केतकीमिव गर्भच्छविपाण्डुरामालोक्येङ्गितकुशलः परिजनो विज्ञातवान् ।

अथ तस्याः सर्वपरिजनप्रधानभूता सदा राजकुलसंवासचतुरा सर्वदा च राजसंनिकर्षप्रगल्भा सर्वमङ्गलकुशला कुलवर्धना नाम महत्तरिका प्रशस्ते

---

**कतिपयेति**—प्रतिमाशशी प्रतिबिम्बरूपश्चन्द्रमाः । नन्दनवनमिन्द्रवनम् । पारिजातः कल्पद्रुमः । प्रशस्तं वक्षः वक्षस्थली । दर्पणश्रीरादर्शशोभा । अवनिपालप्रतिबिम्बम्—अनेन भाविनः पुत्रस्य सर्वात्मना पितुरनुरूपत्वं सूचितम् । एवं रघुवंशेऽपि वर्णनम्—' न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ' । इति । **निर्भरेति**—निर्भरमतिशयं परिपीतं यत्सागरसलिलं तस्य भरेण मन्थरा । अनुरूपभावो रघौ—' ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः । सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ' ॥ इति । **अनुबद्धेति**—अनुबद्धा विजृम्भा एव विजृम्भिका । स्वार्थे कप्रत्ययः । यस्यां क्रियायां तद्यथा तथा । आ ईषज्जिह्मितं जडीकृतं संकुचितं वा लोचनं यस्याः । सालसम्—गर्भानुभावाच्छ्वासप्रच्छ्वासग्रहणेऽपि तादृशसामर्थ्याभावादित्यर्थः । **तथेति**—इङ्गितेष्वन्तर्गतभावावबोधकचेष्टितेषु कुशलो निपुणः परिजनस्तामालोक्य विज्ञातवानन्तर्वत्नीस्वरूपतया निश्चितवान् । **अनेकेति**—अनेके रसा यस्मिन्नेवं भूतं वाञ्छितं पानं भोजनं च यया । श्यामायमानं कृष्णीभवत्पयोधरयोर्मुखं चूचुकं यस्यास्ताम् । पक्षे श्यामायमानं पयोधरैर्मेघैर्मुखं यस्याः । गर्भजनिता छविर्देहकान्तिस्तया पाण्डुराम् । पक्षे गर्भो मध्यभागस्तस्य छव्या पाण्डुराम् । जृम्भणादिगर्भलक्षणे वाहटः—क्षामता गरिमा कुक्षेर्मूर्च्छा सर्दिररोचकम् । जृम्भा प्रसेकः सदनं रोमराज्याः प्रसादनम् ॥ इति । ' अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ' इति च । भावप्रकाशे चोक्तम्—स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ॥ अकामतश्छर्दयति गन्धादुद्विजतेऽशुभात् । प्रसेकः सदनं चैव गर्भिण्या लिङ्गमुच्यते ॥ इत्या० । **अथेति**—राजकुले यः संवासस्तत्र तेन वा चतुरा । अनेन तस्या अवसरकार्यकरत्वमुक्तम् । प्रगल्भा—अनेन धैर्यमुक्तम् । सर्वमङ्गलेषु कुशला मङ्गलकार्याभिज्ञा ।

---

१ देवी. २ ०दिवसम्. ३ लोचनम्. ४ अभिनन्दितपान. ५ अन्तःपुरिकाजनः. ६ सेवकवर्ग. ७ सदा. ८ महान्तःपुरिका.

दिवसे प्रदोषवेलायामभ्यन्तरास्थानमण्डपगतं गन्धतैलावसेकज्वलितदीपिकासहस्र-परिवारमुडुनिकरमध्यवर्तिनमिव पौर्णमासीशशिनमुरगराजफणामणिसहस्रांतराल-स्थितमिव नारायणं मूर्धावसिक्तैः प्रधाननरेन्द्रैः परिमितैः परिवृतमनतिदूरावस्थि-तपरिजनमनन्तरमुत्तुङ्गवेत्रासनोपविष्टेन धौतधवलाम्बरपरिधानेनानुल्बणवेषेण जल-निधिनेवागाधगाम्भीर्येण समुपारूढविश्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन सह कुर्वाणं भूमिपालमुपसृत्य रहः कर्णमूले विदितं विलासवतीगर्भवृत्तान्तमकार्षीत् । तेन तु तस्या वचनेनाश्रुतपूर्वेणासंभाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य सद्यःप्ररूढ-रोमाङ्कुरनिकरकण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य स्मितविकसितकपोल-स्थलस्य परिपूरितहृदयातिरिक्तं हर्षमिव दशनांशुवितानच्छलेन विकिरतो राज्ञः शुकनासमुखे लोलतारकमानन्दजलबिन्दुक्लिन्नपक्ष्ममालं तत्क्षणं पपात चक्षुः । अनालोकितपूर्वं तु हर्षप्रकर्षमभिसमीक्ष्य भूपतेः कुलवर्धनां च स्मितविकसितमु-खीमागतां दृष्ट्वा तस्य चार्थस्य सततं मनसि विपरिवर्तमानत्वादविदितवृ-त्तान्तोपि तत्कालोचितमपरमतिमहतो हर्षस्य कारणमपश्यञ्शुकनासः स्व-यमुत्प्रेक्ष्य समुत्सर्पितासनः समीपतरमुपसृत्य नातिप्रकाशमाबभाषे । देव किमस्ति किंचित्तस्मिन्स्वप्नदर्शने सत्यम् । अत्यन्तमुत्फुल्ललोचना हि कुल-

---

महत्तरिका वयसातिशयिता महती महत्तरिका अन्तःपुरदासी । अभ्यन्तरे आस्थानमण्डपस्तं गतः । गन्धतैलस्य सुगन्धतैलस्यावसेकेन ज्वलितानां दीपिकानां सहस्रं परिवारो यस्य । अत एव उडुनिकरस्य नक्षत्रसमूहस्येति । पूर्णो मासोऽस्यां, पूर्णमाश्चन्द्रमाः तस्येयमिति वा पौर्ण-मासी तत्सम्बन्धी शशी तमिव । उरगराजो वासुकिः । मूर्धावसिक्तैः कृताभिषेकैः । अविद्यमान-मन्तरं यथास्यात्तथा । अनन्तरं राज्ञो निकटे इत्यर्थः । धौतं धवलाम्बरं परिधानमधोंशुकं यस्य । अनुल्बणोऽनुज्ज्वलः । अगाधमपरिच्छेद्यं गाम्भीर्यं सत्वं यस्य । पक्षे अगाधमतलस्पर्शं गाम्भीर्यं गभीरता यस्य । समुपारूढः प्ररूढो विश्रम्भो विश्वासो निर्भरो यस्मिन् । तास्ता विविधाः । संभावयितुं योग्यं संभाव्यं न संभाव्यमसंभाव्यं तेन । प्ररूढाः प्रादुर्भूता ये रोमाङ्कु-रास्तेषां निकरेण समूहेन कण्टकिता सञ्जातकण्टका तनुर्यस्य । गाढरोमोद्गमखचित-गात्रस्येत्यर्थः । विह्वलीक्रियमाणस्य आकुलीक्रियमाणस्य । परिपूरितं यद्धृदयं तस्माद-तिरिक्तं [illegible]वैरितस्य । वितानं पुरःस्फुरणं समूहो वा । आनन्दजलबिन्दुभिः क्लिन्ना प्रक्लिन्ना पक्ष्ममाला नेत्ररोमसमूहो यस्य । हर्षप्रकर्षो हर्षातिरेकः । विपरिवर्तमानत्वात्पुनः पुन-श्चिन्त्यमानत्वात् । उत्प्रेक्ष्य वितर्केण ज्ञात्वा । उत्फुल्ललोचना हर्षविकसिताक्षी ।

---

१ अभिषेक. २ परिवृतम्. ३ फण. ४ नात्युल्बण. ५ विदितविलास०; संवाससंचारचतुरा विदित०. ६ प्रकट, ०रोमाञ्च. ७ ०मूलस्य. ८ अनालोचित. ९ अभिसंवीक्ष्य. १० ०प्रकटम्.

वर्धना दृश्यते । देवस्यापीदं प्रियवचनश्रवणकुतूहलादिव श्रवणमूलमुपसर्पदुपरचयदिव नीलकुवलयकर्णपूरशोभामानन्दजलपरिप्लुतं[1] तरलतारकं विकसदावेदयति महत्प्रहर्ष[2]कारणमीक्षणयुगलम् । उपारूढमहोत्सवश्रवणकुतूहलमुत्सुकोत्सुकं क्राम्यति मे मनः । तदावेदयतु देवः किमिदम् । इत्युक्तवति तस्मिन्राजा विहस्याब्रवीत् । यदि सत्यमनया यथा कथितं तथा[3] सर्वमवितथं स्वप्नदर्शनम् । अहं तु न श्रद्दधे । कुतोस्माकमियती भाग्यसंपत् । अभाजनं हि वयमीदृशानां प्रियवचनश्रवणानाम् । अवितथवादिनीमप्यहं कुलवर्धनामेवंविधानां कल्याणानामसंभावितमात्मानं मन्यमानो विपरीतामिवाद्य पश्यामि । तदुत्तिष्ठ स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामीत्यभिधाय विसर्ज्य[4] सकलनरेन्द्रलोकमुन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्धनायै दत्त्वा तया च दत्तप्रसादानन्तरमवनितलाश्लिष्टललाटलेखया शिरःप्रणामेनाभ्यर्चितः सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्यमाणो मनसा पवनचलितनीलकुवलयदललीलाविडम्बकेन दक्षिणेनाक्ष्णा परिस्फुरताभिनन्द्यमानस्तत्कालसेवासमुचितेन विरलविरलेन परिजनेनानुगम्यमानः पुरःसंसर्पिणीनामनिललोलस्थूल[5]शिखानां प्रदीपिकानामालोकेन समुत्सार्यमाणकक्षान्तरातिमिर[6]संहतिरन्तःपुरमयासीत् ।

---

त्वात्पुनः पुनश्चिन्त्यमानत्वात् । उत्प्रेक्ष्य वितर्केण ज्ञात्वा । उत्फुल्ललोचना हर्षविकसिताक्षी । **देवेति**—देवस्यापीदमीक्षणयुगलं महद् गुरु प्रहर्षस्यानन्दातिशयस्य कारणमावेदयति । प्रियवचनस्य राज्ञीगर्भभावावेदकस्य श्रवणे यत्कुतूहलं तस्मात् । उत्सुकोत्सुकमत्यन्तोत्सुकम् । **यदीति**—यदि अनया यथा कथितं तथा सर्वमेव सत्यं तर्हि इ० । अवितथं सत्यम् । विपरीतां स्वस्वभावच्युतामसत्यवादिनीमित्यर्थः । अवनितलमाश्लिष्टा ललाटलेखा यस्याः । अत्र राज्ञोतिवदान्यत्वं कुलवर्धनायाश्च कृतज्ञतादर्शनाभिनिवेशः सूचितः । हर्षविशेषस्यानन्दातिशयस्य निर्भरः प्रकर्षो यस्मिंस्तेन । पवनेन चलितं यन्नीलकुवलयं तस्य दलस्य या लीला तस्या विडम्बकेनानुकारिणा । अनुरूपभावः कुमारे—'ततो मन्दानिलोद्भूतकमलाकरशोभिना । गुरुं नेत्रसहस्रेण—' इति । अभिनन्द्यमान आनन्द्यमानो दक्षिणाक्षिस्पन्दस्य शुभसूचकत्वात् । तदुक्तं निमित्तनिदाने—'वामभागस्तु नारीणां श्रेष्ठः पुंसां तु दक्षिणः । दाने देवादिपूजायां स्पन्दे कुंकरणेपि च' ॥ इति । उक्तं च 'अङ्गविस्फुरणं नृणां दक्षिणं सर्वकामदम् । तदेव शस्यते सद्भिर्नारीणामप्रदक्षिणम्' ॥ इति । विरलविरलेन अल्पेन । यथा यथा वासभवनाभ्यन्तरं प्रविवेश तथा तथा विरलविरलेनेति वा । संसर्पिणीनां गच्छन्तीनाम् । समुत्सार्यमाणा कक्षान्तरेषूत्तरोत्तरप्रकोष्ठेषु

---

१ प्लुततरल. २ प्रकर्ष. ३ तदा. ४ विसृज्य. ५ लोलोच्छलच्छिखानाम्. ६ ०तिमिरमन्तःपुरम्.

तत्र च सुकृतरक्षासंविधाने नवसुधानुलेपनधवलिते प्रज्वलितमङ्गलप्रदीपे पूर्णकलशाधिष्ठितद्वारपक्षके प्रत्यग्रलिखितमङ्गल्यालेख्योज्ज्वलितभित्तिभागमनोहारिणि उपरचितविताने वितानपर्यन्तावबद्धमुक्तागुणे मणिप्रदीपप्रहततिमिरे वासभवने भूतिलिखितपत्रलताकृतरक्षापरिक्षेपं, शिरोभागविन्यस्तधवलनिद्रामङ्गलकलशम्, आबद्धविविधौषधिमूलैर्यन्त्रपवित्रम्, अवस्थापितरक्षाशक्तिवलयम्, इतस्ततो विप्रकीर्णगौरसर्षपम्, अवलम्बितबालयोक्त्रग्रथितलोलपिप्पलपत्रम्, आसक्तहरितारिष्टपल्लवम्, उत्तुङ्गपादपीठप्रतिष्ठितम्,इन्दुदीधितिधवलप्रच्छदपटम्, अचलराजाशि-

---

तिमिरसंहतिर्ध्वान्तसमूहो यस्य । **तत्र चेति**–तत्र च वासभवने शयनतलमधिशयानां विलासवतीं ददर्शेत्यन्वयः । वासभवनविशेषणान्याह–सुष्ठु उत्तमप्रकारेण रक्षासंविधानं 'पापपाखण्डशाकिनीडाकिनीप्रभृतीनां प्रवेशप्रतिबन्धकर्मणि मन्त्राद्यौषधप्रकारो यस्मिन्'। इति भा० । पूर्णकलशैरधिष्ठितौ द्वारपक्षकौ द्वारपार्श्वौ यस्य । पक्षके इति पाठे 'पक्षद्वारं तु पक्षकः' इत्यमरः । **प्रत्यग्रेति**–मङ्गले साधु मङ्गल्यं शिवकरम् । 'तत्र साधुः' इति यत् । मङ्गल्यानि शिवकराणि । वितानपर्यन्तेषु अवबद्धा मुक्तागुणा मुक्ताफलप्रालम्बा यस्मिन् । **भूतीति**–इतः शयनतलविशेषणानि । भूत्या भस्मना लिखिताभिः पत्रलताभिराकृतिविशेषैः कृतो रक्षार्थं पापपिशाचादिबाधापरिहारार्थं परिक्षेपो यस्य । अत्र भानुचन्द्रव्याख्या यथा–"भूत्या ऐश्वर्यार्थं लिखिता या पत्रलता पत्रफलान्विता लता कल्पलता तया कृतो रक्षाया गर्भरक्षायाः परिक्षेपो दार्ढ्यं यस्मिन् । दृश्यते हि देशविशेषे सद्यो गर्भसंभूत्यर्थं प्रथमर्तौ नवोढायाः फलपत्रान्वित कदलीच्छाया क्रियते । गर्भानन्तरं च पर्यङ्के उत्तरच्छदे शयनीयगृहभित्तौ वा फलपत्रान्विता लिखिता कल्पलता गर्भस्य पुष्ट्यर्थं वृद्ध्यर्थं च क्रियते" । इति । **शिर इति**–शयनस्य शिरोभागे विन्यस्तो निहितो धवलो रूप्यमयश्चन्दनादिना लिप्तो वा निद्रार्थं सुखस्वापार्थं मङ्गलकलशो यस्य । तदुक्तम्–'निद्राकलशो रूप्यमयः सर्वश्वेतः शिरोभागेऽहर्निशं पूर्णजलः स्थाप्यते'। इति । **आबद्धेति**–आबद्धानि विविधानामौषधीनां मूलानि यन्त्राणि मन्त्रपूर्वं भूर्जपत्रादौ लिखितानि चक्रव्यूहादीनि पवित्राणि मन्त्रपूतगोरोचनाप्रभृतीनि यस्मिन् । अवस्थापितानि रक्षार्थं शक्तीनां कात्यायनीनां वलयानि बर्हैर्निर्मितानि यस्मिन् । अवलम्बितानि बालानां केशानां यार्क्लमाबन्धः । 'आबन्धो योत्रं योक्त्रम्' इत्यमरः । तेन ग्रथितानि लोलानि पिप्पलपत्राणि यस्मिन् । आसक्ता अवलम्बिता हरिता अरिष्टपल्लवा निम्बकिसलयाः फेनिलपल्लवा वा यस्मिन् । उत्तुङ्गेषूच्चेषु पादपीठेषु पर्यङ्किकापादाधारेषु प्रतिष्ठितम् । अचलराजो हिमाचलः ।

---

१ वसु-बहु-कृ. २ अधिष्ठिते. 'द्वार' इति नास्ति क्वचित्. ३ उज्ज्वल. ४ भागे. ५ न्तारथित. ६ प्रतिहत. ७ भूमि, भित्ति. ८ मन्त्र; पत्रम्. ९ अवलम्बि. १० लोह, लोहित. ११ दलम्.

लातलविशालं गर्भोचितं शयनतल्पमधिशयानां, कनकपात्रपरिगृहीतैरविच्छिन्नाविरलावस्थितदधिलवैः जलतरंगतरलसितशालिसिक्थनिकरैराप्यायितकुसुमाञ्जलिसनाथैः पूर्णभाजनैः अच्छिन्नमत्स्यपटलैश्च प्रत्यग्रपिशितपिण्डमिश्रैरविच्छिन्नसलिलधारानुगम्यमानमार्गैः पटलकप्रज्वलितैश्च शीतलप्रदीपैः गोरोचनामिश्रगौरसर्षपैश्च सलिलाञ्जलिभिश्चाचारकुशलेनान्तःपुरजरतीजनेन क्रियमाणावतरणकमङ्गलां, धवलाम्बरविविक्तवेषेण प्रमुदितेन प्रस्तुतमङ्गलप्रायालापेन परिजनेनोपास्यमानाम्, उपारूढगर्भतयान्तर्गतकुलशैलामिव क्षितिं, सलिलनिमग्नैरावतामिव मन्दाकिनीं, गुहागतसिंहामिव गिरिराजमेखलां, जलधरपटलान्तरितदिनकरामिव दिवसश्रियम्, उदयगिरितिरोहितशशिमण्डलामिव विभावरीम्, अभ्यर्णब्रह्मकमलविनिर्गमामिव नारायणनाभिम्, आसन्नागस्त्योदयामिव दक्षिणाशां, फेनावतामृतकलशामिव क्षीरोदवेलां, गोरोचनाचित्रितदशमनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श । ससंभ्रमपरिजनप्रसारितकरतलावलम्बनावष्टम्भेन वामजानुविन्य-

गर्भोचितं गर्भवत्या उचितमित्यर्थः । **कनकेति**–अधुना विलासवतीं विशेषयन्नाह–आचारो गर्भवत्या उचितसंस्कारविधानं तत्र कुशलेनाभिज्ञेन । अन्तःपुरे या जरत्यो वृद्धास्तासां जनेन समूहेन क्रियमाणमवतरणमङ्गलं यस्यास्ताम् । अवतरणप्रकारमेवाह । अविच्छिन्ना अखण्डा विरलावस्थिताश्च ये दध्नो लवाः शकलानि तैः । जलतरङ्गवत्तरलाः शोभमानाः सितशालिसिक्थानां निकरास्तैः । पूर्णानि भाजनानि तैः । इति शालिसिक्थनिकरविशेषणम् । प्रत्यग्रं सद्योगृहीतं पिशितं मांसं तस्य पिण्डैः मिश्रास्तैः । अविच्छिन्ना अत्रुटिता संततेत्यर्थः । सलिलधारा तयानुगम्यमानो मार्गो येषां तैः । पटलको रक्तवस्त्रनिर्मितं गृहं मण्डलकं वा तस्मिन्प्रज्वलितैः शीतलप्रदीपैः कर्पूरदीपैः । पुनर्विलासिनीमेव विशेषयति । **धवलेति**—धवलाम्बरस्य विविक्तः पूतो वेषो यस्य तेन । मङ्गलप्रायो मङ्गलप्रचुरः । **अन्तरिति**—कुलशैलः कुलपर्वतः । अन्तर्गतेत्यनेन कुक्षिस्थस्य पुत्रस्य सर्वाधारत्वं स्थैर्यं चोक्तम् । **सलिलेति**— अनेन गर्भस्य महाप्राणता सूचिता । गुहागतेति—अनेन धैर्यप्रकर्षः सूचितः । **जलधरेति**— अनेन प्रताप उक्तः । **उदयेति**— तिरोहितमन्तर्हितम् । अनेन सर्वजनाह्लादकत्वं दर्शितम् । अभ्यर्णे आसन्नो ब्रह्मकमलस्य धातृयोनिभूतनलिनस्य विनिर्गमो यस्याः । दक्षिणाशां दक्षिणदिशम् । अगस्त्यो हि दक्षिणां दिशमाश्रित्य नभसि स्थित इति ब्रह्मपुराणे । क्षीरोदवेला क्षीरसागरकूलम् । दशा अन्ताः । अनुपहतमपरिहितपूर्वम् । अच्छिद्रं वा । ससंभ्रमं सरभसं परिजनेन प्रसारितं करतलं तस्यावलम्बनं तस्यावष्टम्भेनाधारेणोत्थि-

१ अविच्छिन्न. २ श्वेत. ३ कुसुमस०. ४ अभिचार. ५ मङ्गल्य. ६ दिन. ७ चनातिलक. ८ माणिध०. ९ लालम्बा०

स्तहस्तपल्लवां प्रचलितभूषणमणिरवमुखरमुत्तिष्ठन्तीं विलासवतीमलमलमत्यादरेण देवि नोत्थातव्यमित्यभिधाय सह तया तस्मिन्नेव शयनीये पार्थिवः समुपाविशत्। प्रमृष्टचामीकरचारुपादे धवलोपच्छदे चासन्ने शयनान्तरे शुकनासोपि न्यषीदत्।

अथ तामुपारूढगर्भामालोक्य हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा देवि शुकनासः पृच्छति यदाह कुलवर्धना किमपि तत्किं तथैव इत्युवाच। अथाव्यक्तस्मितच्छुरितकपोलाधरलोचना लज्जया दशनांशुजालकल्याजेनांशुकेनेव मुखमाच्छादयन्ती विलासवती तत्क्षणमधोमुखी तस्थौ। पुन. पुनश्चानुबध्यमाना किं मामतिमात्रं त्रपापरवशां करोषि नाहं किंचिदपि वेद्मि इत्यभिदधाना तिर्यग्वलिततारकेण चक्षुषावनतमुखी राजानं साभ्यसूयमिवापश्यत्। अपरिस्फुटहासज्योत्स्नाविशदेन मुखशशिना भूभुजां पतिरेनां भूयो बभाषे। सुतनु यदि मदीयेन वचसा तव त्रपा वितन्यते तदयमहं स्थितो निभृतम्। अस्य तु किं प्रतिविधास्यसि विघटमानदलकोशविशदचम्पकद्युतेः सवर्णतया परिमलानुमीयमानस्य कुङ्कुमाङ्गरागस्य पाण्डुरतामापद्यमानस्य, अनयोश्च गर्भसंभवामृतावसेकनिर्वाप्यमाणहृदयशोकानलप्रभवं धूममिव वमतोर्गृहीतनीलोत्पलयोरिव चक्रवाकयोस्तमालपल्लवला-

---

न्तिम्। वामेति–एतदुपारूढगर्भभरालस्यलक्षणम्। प्रचलितभूषणानां मणयस्तेषां रवेण मुखरं वाचालं यथा तथा। प्रमृष्टं परिष्कृतं यच्चामीकरं सुवर्णं तस्य चारवः पादा यस्य। अथेति–प्रस्तुत आरब्धः परिहासो नर्मभाषणं येन। अव्यक्तमस्फुटं यत् स्मितं तेन छुरितं रूषितं कपोलाधरनयनं यस्याः। ०व्याजेन मिषेण। अनुबध्यमाना सनिर्बन्धं पृच्छयमाना। त्रपापरवशां लज्जाधीनाम्। साभ्यसूयमिव दोषं गृह्णतीवेत्यर्थः। विनयशालिन्याः पतिव्रतायास्तादृशप्रश्ननिर्बन्धस्यानुचितत्वादिति भावः। अपरिस्फुटोऽव्यक्तो यो हासः स एव ज्योत्स्ना तया विशदेनोज्ज्वलेन। वितन्यते वृद्धिं प्राप्यते। निभृतं तूष्णीम्। प्रतिविधास्यसि प्रतीकारं करिष्यसि। विघटमानानि भिद्यमानानि दलानि यस्य तादृशो यः कोशो मुकुलस्तेन विशदस्य भास्वरस्य। चम्पकस्येव द्युतिर्यस्य। कुंकुमस्य काश्मीरजस्य योऽङ्गरागोऽनुलेपनं तस्य। गर्भेति–गर्भसंभव एवामृतं तस्यावसेकेन निर्वाप्यमाणः शान्तिं प्राप्यमाणो हृदयशोकश्चिरकालं यावत्पुत्रानुत्पत्तिजनितः स एवानलस्तस्मात्प्र-

---

१ प्रचल. २ पदे. ३ अनुरुध्यमाना. ४ किं नाम. ५ मदीयवचसा. ६ कुङ्कुमरागस्य. ०मीयमानकुङ्कुमां. ७ पाण्डुताम्. ८ आपाद्य०, मानस्य वर्णस्य. ९ मानशो०. १० वमतोरन्तर्गृही०, वहतोरानतगृहीत.

ञ्छितमुखयोरिव कनककलशयोः सकृदिवालिखितकृष्णागुरुपङ्कपत्रलतयोः श्यामायमानचूचुकयोः पयोधरयोरस्य च प्रतिदिनमतिगाढतरतामापद्यमानेन काञ्चीकलापेन दूयमानस्य नश्यत्त्रिवलिलेखावलयस्य कृशिमानमुज्झतो मध्यभागस्य । इत्येवं ब्रुवाणमवनिपालमन्तर्मुखविनिगूढहासः शुकनासो देव किमायासयसि देवीमियमनया कथयापि लज्जते त्यज कुलवर्धनाकथितवार्तासंबद्धमालापमित्यब्रवीत् । एवंविधाभिश्च नर्मप्रायाभिः कथाभिः सुचिरं स्थित्वा शुकनासः स्वभवनमयासीत् । नरेन्द्रोपि तस्मिन्नेव वासगृहे तया सह तां निशामत्यवाहयत् ।

ततः क्रमेण यथासमीहितगर्भदोहदसंपादनप्रमुदिता पूर्णे प्रसवसमये पुण्येहन्यनवरतगलन्नाडिकाकलितकालकलैरहिरागृहीतच्छायैर्गणकैर्गृहीते लग्ने प्रशस्तायां वेलायामिरंमदमिव जलधरमाला सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत । तस्मिञ्जाते सरभसमितस्ततः प्रधावितस्य परिजनस्य चरणशतसंक्षोभचलितक्षितितलो भूपालाभिमुखप्रसृतस्खलद्गतिविकलकञ्चुकिसहस्रो

---

भवो यस्य । सकृदेकवारम् । ०पत्रलतयोरिव । चूचुकं स्तनाग्रम् । 'चूचुको ना कुचाननम्' इति रत्नकोषः । अतिगाढतरतामतिदृढताम् । कृशस्य भावः कृशिमा कार्श्यं तमुज्झतो बहुलीभवत इत्यर्थः । एतान्यन्तर्वत्नीलक्षणानि प्रायः संस्कृतकाव्येषूपलभ्यन्ते । अन्तर्मुखे विनिगूढो हासो यस्य । 'अनेन महापुरुषत्वं सूचितम्' इ. भानु० । नर्मप्रायाभिः—परिहासप्रचुराभिः । इष्टजनावर्जनरूपोऽग्राम्यः परिहासो नर्म । 'वैदग्ध्यक्रीडितं नर्म' इति दशरूपकम् । **यथेति**—यथासमीहितमिच्छामनतिक्रम्य यद्दोहदसम्पादनं गर्भिणीच्छापूरणं तेन प्रमुदिता । गर्भिण्या दोहदस्याप्रदाने अनिष्टं स्यात् । तदुक्तम्—गर्भिण्यास्तत्तदिच्छायां विशेषेण प्रयुज्यते । दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥ इति । अन्यत्र च—देयमप्यहितं तस्यै हिताय हितमल्पकम् । श्रद्धाभिघाते गर्भस्य विकृतिश्च्युतिरेव वा ॥ इति । **अनवरतेति**—अनवरतं गलन्ती या नाडिका घटिका । लक्षणया नाडीबोधकं पात्रम् । तया कलिता निश्चिता कालस्य कला मात्रा यैः ॥ आगृहीता आत्मनः शंकोर्वा छाया यैः । सूक्ष्मकालज्ञानार्थं छायामानमपि गृहीत्वा कृतकालनिर्णयैरित्यर्थः । गणकैर्मौहूर्तिकैः । लग्ने—'राशीनामुदयो लग्नम्' इत्यमरः । इरया जलेन माद्यति दीप्यते इरंमदो मेघज्योतिः । तमिव । **तस्मिञ्जातेति**—तस्मिन्पुत्रे जाते राजकुले राजगृहे परिजनस्य महान् दिष्टिवृद्धिसंभ्रमः अभूत् इत्यन्वयः । चरणशतानां संक्षोभेण संरम्भन्यासेन चलितं कम्पितम् । भूपालाभिमुखं प्रसृतं प्रधावितं हर्षोद्रेकात्स्खलन्ती या गतिस्तया विकलं क्लान्तं कञ्चुकिसहस्रं यस्मिन् । जनसंमर्देन लोकसमूहेन निष्पिष्यमाणः

---

१ सकृल्लिखित. २ अतिगाढताम्. ३ रेखा. ४ अन्तर्मुखहासः. ५ समुचित. ६ पूर्णप्रसव. ७ कले. ८ मेघ, ९ शून्य.

जनसंमर्दनि[1]ष्पिष्यमाणपतितकुब्जवामनकिरातगणो विस्फार्यमाणान्तःपुरजनाभरणझंकारमनोहरः पूर्णपात्राहरणवि[2]लुप्यमानवसनभूषणः संक्षोभितनगरो राजकुले दिष्टिवृद्धिसंभ्रमो महानभूत्। अनन्तरं च मन्दरमथ्यमानजलधिघोषगम्भीरदुन्दुभिध्वानपुरःसरेण प्रहतमृदुमृदङ्गशङ्खकाहलानकनिवहनिनादनिर्भरेण मङ्गलपटहपटुरवसंवर्धितेनानेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयतोत्सवकोलाहलेन ससामन्ताः सा[3]न्तःपुराः सप्रकृतयः सराजलोकाः सवेश्यायुवतयः सबालवृद्धा ननृतुरागो[4]पालमुन्मत्ता इव हर्षनिर्भराः प्रजाः। प्रतिदि[5]नमवर्धत चन्द्रोदयेनेव जलधिः कलकलमुखरो राजसूनोर्ज[6]न्ममहोत्सवः।

पार्थिवस्तु तनयाननदर्शनोत्स[7]वहृतहृदयोपि दिवसवशेन मौहूर्तिकगणोपदिष्टे प्रशस्ते मुहूर्ते निवारितनिखिलपरिजनः शुकनासद्वितीयो मणि[8]मयमङ्गलकलशयुगला[9]शून्येनासक्तबहुपुत्रिका[10]लंकृतेन विविधन[11]वपल्लवनिवहनि

संपीड्यमानोऽत एव पतितः कुब्जा वामनाः किराताश्च तेषां गणो यस्मिन्। 'येषां शिरः शिरोधिपृष्ठिपादं लक्षणोपेतं न भवति पृष्ठमुदरहृदयं च सुलक्षणं स्यात्ते कुब्जाः। एतद्विपरीतास्तु वामनाः केवलं स्वल्पतनवः किराताः' इति भानु०। विस्फार्यमाणो वृद्धिं प्राप्यमाणः। पूर्णपात्रमुक्तपूर्वं तस्याहरणे विलुप्यमानानि वसनभूषणानि यस्मिन्। दिष्टिरानन्दस्तद्वृद्धिरानन्दसमयेऽन्यैः क्रियमाणमभिनन्दनं तस्य संभ्रमः संरम्भः। **अनन्तरमिति**—अनन्तरमुत्सवकोलाहलेन हर्षनिर्भराः प्रजा ननृतुरित्यन्वयः। कोलाहलं विशिनष्टि—०जलधिघोषवद्गम्भीरो धीरो दुन्दुभिध्वानः पुरःसरो यस्मिन्। प्रहतो यो मृदुर्मन्द्रो मृदङ्गः, शङ्खः काहलो वाद्यविशेषः। 'वाद्यभाण्डविशेषे तु काहलः काहलाः खले।' इति विश्वः। आनको दुन्दुभिस्तेषां निवहस्तस्य निनादेन निर्भरः पूर्णः। मङ्गलार्थः पटहो मङ्गलार्थपटहो मङ्गलपटहः। प्रजा विशेषयति—सामन्तैः प्रत्यन्तदेशवर्तिभिर्नृपैः सहिताः। सवेश्यायुवतयस्तरुणवाराङ्गनासहिताः। आगोपालं गोपालान्बालक-मर्यादीकृत्य यथा स्यात्तथा। **पार्थिवेति**—पार्थिवः सूतिकागृहमपश्यदिति दूरेणान्वयः। **तनयेति**—०दर्शनमेवोत्सवस्तेन हृतहृदयो दर्शनेच्छापरवशोपि। दिवसवशेन शुभदिनानुरोधात्। सूतिकागृहं विशिनष्टि—**द्वारेति**। द्वारदेशं विशेषयन्नाह—**मणीति**— ०युगलाशून्येन युगलसनाथेन। 'पुत्रवत्या गृहद्वारोपरि मणिमयकलशारोपणं क्रियते इति राजस्थितिः।' इति भानु०। आसक्ताः संश्लिष्टा बहुपुत्रिका मषीलिखितास्ताभिरलंकृतमिति गृहविशेषणम्। यस्मिन्गृहे प्रसूति-

१ घूर्णमान. २ विलुठ्यमान. ३ सान्तःपुरजनाः. ४ गोपम्. ५ क्षणम्. ६ जन्मनः. ७ महोत्सव. ८ कनकमय. ९ कलशाशून्येन. १० काप्रतानेन. ११ वन.

रन्तरनिचितेन संनिहितकनकमयहलमुसलयुगेन[1] विरलग्रथितसितकुसुममिश्रदूर्वाप्रवालमालालंकृतेनावलम्बिता[2]विकलव्याघ्रचर्मणा वन्दनमा[3]लान्तरालघटितघण्टागणेन द्वारदे[4]शेन विराजमानम्, उभयतश्च द्वारपक्षकयोर्मर्यादानिपुणेन गोमयमयीभिरुत्तानविनिहितवराटकदन्तुराभिरन्तरान्तराबद्धविविधवर्णरागरुचिरक[5]र्पासकुसुमलेशा[6]लाञ्छिताभिः कुसुम्भकेसरलवाश्लेषलोहिताभिर्लेखाभिरालिखितस्वस्तिकभक्तिजालमुपरचयता हरिद्रा[7]द्रवविच्छुरणपिरि[8]पिञ्जराम्बरधारिणीं भगवतीं षष्ठीदेवीं कुर्वता विकचपक्षपुटविकटशिख[9]ण्डिपृष्ठमण्डलाधिरूढमालोललोहितपटघटितपताकमुल्लसि-

जीयते तद्द्वारदेशे क्रमव्युत्क्रमाभ्यां मषीलिखिते संश्लिष्टे पुत्रिके क्रियेते इति वृद्धाचारः । कैश्चित्तु बहुपुत्रिका नाम श्लक्ष्णफलैरुपेतो विटपिविशेषः कथ्यते । शतावरीत्यन्ये । " इति भानु० । संनिहितानि कनकमयानि हलं सीरः मुसलमयोग्रं युगं हलाङ्गविशेषः एतानि यस्मिन् । हलमुसलयोर्युगमिति वा । अयं राज्ञां गृहे क्वचिद्देशाचारः । **विरलेति**–विरलान्यसंहतानि ग्रथितानि गुम्फितानि यानि सितकुसुमानि धवलपुष्पाणि तैर्मिश्रा ये दूर्वाप्रवालास्तेषां मालयालंकृतेन । अविकलमखण्डम् । वन्दनमाला–' तोरणार्धे तु मङ्गल्यं दाम वन्दनमालिका । ' इत्यभिधानचिन्तामणिः । तस्या अन्तराले मध्ये मध्ये घटितो घण्टागणो यस्य । पुनरपि गृहं विशेषयन्नाह– **उभयत इति** । मर्यादानिपुणेन स्थितिज्ञेन । पुरन्ध्रिवर्गेण । पुरन्ध्रिः पतिपुत्रवती स्त्री । ' स्यात्तु कुटुम्बिनी । पुरन्ध्री ' इत्यमरः । समधिष्ठितम् । किंकुर्वतेत्याह-द्वारपक्षकयोः द्वारपार्श्वभागयोरुभयतः ०जालमुपरचयता कुर्वता । गोमयमयीभिर्गोमयेन लिप्ताभिः । उत्तानमूर्ध्वमुखं विनिहितैर्वराटकैः कपर्दकैर्दन्तुराभिर्विषमाभिः । अन्तरान्तरा आबद्धा ये विविधा वर्णा गैरिकादयस्तेषां रागेण रुचिरः कर्पासस्तूलः स एव तस्य वा कुसुमं तस्य लेशैर्लाञ्छिताभिः । कुसुम्भं कमलोत्तरं तस्य केसरलवाः किञ्जल्कखण्डास्तेषामाश्लेषेण मिश्रणेन लोहिताभिः । आलिखिताः स्वस्तिका बन्धविशेषाः यस्मिन्नेवंभूतं भक्तीनां रचनाविशेषाणां जालमुपरचयतेति सम्बन्धः । यद्वा स्वस्तिकभक्तयो स्वस्तिकरचनाः । विच्छुरणं सिञ्चनं मिश्रणं वा । षष्ठीदेवी कात्यायनी जीवन्त्यपरनाम्नी । सा हि सूतिकायाः पञ्चमषष्ठदिनयोः—' आयाहि वरदे देवि महाषष्ठीति विश्रुते । शक्तिभिः सह बालं मे रक्ष जागरवासरे ' ॥ इति मन्त्रेणावाह्य ' शक्तिस्त्वं सर्वदेवानां लोकानां हितकारिणी । मातर्बालमिमं रक्ष महाषष्ठि नमोस्तु ते ' ॥ इति मन्त्रेण पूज्यते । देवसेनेति केचित् । विकचाभ्यां विस्तीर्णाभ्यां पक्षपुटाभ्यां विकटो विशालः । ' विशङ्कटं विशालं स्यात्करालं विकटं तथा ' । इति वैजयन्ती । यः शिखण्डी मयूरः तस्य पृष्ठमण्डलमधिरूढम् । आलोला ईषच्चञ्चला लोहितपटघटिताः पताका वैजयन्त्यो यस्मिन् । उल्लसितावुद्भ्रमितौ शक्तिदण्डौ आयुधविशेषौ ताभ्यां प्रचण्डम् । विन्यस्तेनालक्तकपटलेन लाक्षारस-

१ युगलेन. २ आलम्बिता–विरल–विकट. ३ मालिका. ४ द्वारेण. ५ ०प्रकर. ६ कूर्पास, कार्पास. ७ हारिदद्राव. ८ पिञ्जरित. ९ शिखि.

तशक्तिदण्डप्रचण्डं कार्तिकेयं संघटयता विन्यस्तालक्तकपटलपाटलमध्यभागौ सूर्याचन्द्रमसावाबध्नता कुङ्कुमपङ्कपिञ्जरीकृतामूर्ध्वप्रोतकनकमययवनिकरकण्टकितामविरललग्नगौरसिद्धार्थक[1]प्रकरतया काञ्चनरसखचितामिव मृन्मयगुटिकाकदम्बमालां विन्यस्यता चन्दनजलधवलितेषु भित्तिशिखरभागेषु पञ्चरागविचित्रचेलचीरकलापचिह्नामापीत[2]पिष्टपङ्काङ्कितां वर्धमान[3]परंपरामन्यानि च प्र[4]सवगृहमण्डनमङ्गलानि संपादयता पुरन्ध्रिवर्गेण समधिष्ठितम्, उपद्वारसंयतविविधगन्धकुसुममालालंकृतजरच्छागम्, अखिलव्रीहिम[5]ध्योवस्थापितार्यवृद्धाध्यासितश[6]यनशिरोभागम्, अनवरतदह्यमानाज्यमिश्रभुजगनिर्मोकमेषविषाणक्षोदम्, अनलप्लुष्यमाणारिष्ट[7]तरुपल्लवोल्लसितरक्षाधूमगन्धम्, अध्ययनमुखरद्विजगणविप्रकीर्यमाणशान्त्युदकलवम्, अभिनवलिखितमातृपटपूजाव्यग्रधात्रीजनम्, अनेकवृद्धाङ्गनारब्धसूतिकामङ्गलगीतिकामनोहरम्, उपपाद्यमानस्वस्त्ययनं, क्रियमाणशिशुरक्षाबलिविधानम्,

---

निवहेन पाटलौ श्वेतरक्तौ आरक्तौ वा　　भागौ ययोस्तौ । सूर्याचन्द्रमसौ देवताद्वंद्वत्वात्पूर्वपदान्तस्य दीर्घः । पुनः किं कुर्वता । **कुङ्कु　ते** । ऊर्ध्वमुपरि प्रोताः स्यूता ये कनकमयाः सौवर्णा यवास्तेषां निकरेण कण्टकितां दन्तुरिताम् । अविरलं निबिडं लग्ना ये गौरसिद्धार्थका गौरसर्षपास्तेषां प्रकरो यस्यां सा० प्रकरा तस्या भावस्तत्ता तया हेतुभूतया । एवंविधां मृन्मयगुटिकानां मृत्तिकानिर्मितगुलिकानां कदम्बाः पुञ्जास्तेषां मालाम् । विन्यस्यता रचयता । **पञ्चेति** । पञ्चभिः वर्णैः विचित्राणि चेलचीराणि वस्त्रखण्डानि । आपीतेनेषत्पिञ्जरेण । वर्धमानपरम्परां शरावश्रेणीम् । 'वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु' । इति कोषः । वृद्ध्यर्थं संविधानं वर्धमानमिति केचित् । **उपेति**–उपद्वारं द्वारसमीपे । जरच्छागो जरठोऽजः । **अखिलेति**–अखिला अखण्डाः । यद्वाखिलं हलाद्यकृष्टभूमिः । 'द्वे खिलाप्रहते समे' इत्यमरः । तत्र भवतीत्यखिलं हलकृष्टं क्षेत्रं तत्र भवा अखिलाः ये व्रीहयस्तेषां मध्येऽवस्थापिता यार्यवृद्धा तयाध्यासितः । मध्येवस्थापितश्चार्यवृद्धयाध्यासितश्च इति वा । शयनशिरोभागो यस्मिन् । 'आयुर्वृद्ध' इति पाठे आयुर्वृद्धा गोमयपुत्तलिका इति भा० । अनवरतं दह्यमान आज्येन सर्पिषा मिश्रो भुजगनिर्मोकः सर्पकञ्चुको मेषविषाणं च तयोः क्षोदश्चूर्णं यस्मिन् । अनले प्लुष्यमाणानां दह्यमानानामरिष्टपल्लवानां निम्बकिसलयानामूर्ध्वं प्रसृतो रक्षाधूमगन्धो यस्मिन् । ०शान्त्यर्थमुदकं तस्य लवाः पृषता यस्मिन । अभिनवो लिखितो मातृपटः मातरो बालरक्षिण्यो देवताविशेषा यस्मिन्पटे लिख्यन्ते स पटः तस्य पूजायां व्यग्रो धात्रीजनो यस्मिन् । सूतिका प्रसूता स्त्री तस्या मङ्गलार्थं क्षेमार्थं गीतिकाः । उपपाद्यमानं क्रिय-

---

१ प्रकारतया. २ पिष्टातक. ३ नक. ४ सूतिकागृह. ५ अवास्थित. ६ शयनीय. ७ निम्बतरु.

आबध्यमानधवलकुसुमदामशतम्, अविच्छिन्नपठ्यमाननारायणनामसहस्रम्, अम॰ ाटकयष्टिप्रतिष्ठापितैरन्तःशुभशतानीव निश्चलशिखैर्ध्यायद्भिर्मङ्गलप्रदीपै-रुद्भासितम्, उत्खातासिलतासनाथपाणिभिः सर्वतो रक्षापुरुषैः परिवृतं सूतिकागृहमपश्यत् । अम्भः पावकं च स्पृष्ट्वा विवेश ।

प्रविश्य च प्रसवपरिक्षामपाण्डुमूर्तेरुत्सङ्गगतं विलासवत्याः, स्वप्रभासमुद-येोपहतगर्भगृहप्रदीपप्रभम्, अपरित्यक्तगर्भरागत्वादुदयपरिपाटलमण्डलमिव सवि-तारम्, अपरसंध्यालोहितबिम्बमिव चन्द्रमसम्, अनुपजातकाठिन्यमिव कल्पतरु-पल्लवम्, उत्फुल्लमिव रक्तारविन्दराशिम्, अवनिदर्शनावतीर्णमिव लोहिताङ्गं, विद्रुमकिसलयदलैरिव बालातपच्छेदैरिव पद्मरागरश्मिभिरिव रचितावयवम्, अन-भिव्यक्तमुखपञ्चकमिव महासेनं, सुरवनिताकरपरिभ्रष्टमिवामरपतिकुमारकम्, उत्त-प्तकल्याणकार्तस्वरभास्वरया स्वदेहप्रभया पूरयन्तमिव वासभवनम्, उद्भासमानैः सहजभूषणैरिव महापुरुषलक्षणैरुपेतम्, आगामिकालपालनप्रहृष्टयेव श्रिया समा-

माणं स्वस्ति ईयते प्राप्यतेऽनेनेति स्वस्त्ययनं मन्त्रादिपाठेनारिष्टनिवारणं यस्मिन् । ०बलि-विधानं देवताभ्य उपहारकल्पनम् । **अविच्छिन्नेति**—अविच्छिन्नं यथा तथा पठ्यमानं नारायणस्य नामसहस्रं यस्मिन् । हाटकयष्टयः सुवर्णदण्डाः । निश्चला निष्कम्पा शिखा येषाम् । निश्चलशिखत्वाद्ध्यायद्भिरिवेत्युत्प्रेक्षा । ध्यानस्थितयोगिनो निश्चलदीपसाम्यं वर्णितमीश्वरगीतासु—' यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता । योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ' ॥ इति । उत्खाताः कोशाद्बहिःकृष्टाः । **अम्भ इति** बालकदर्शने दृष्टिदोषनिवारणार्थमेतत् । इति भानु० । **प्रविश्येति**—स्वप्रभासमुदयेन स्वकान्त्युदयेनोपहतास्तिरस्कृततेजःप्रसरा गर्भगृहप्रदीप-प्रभा येन तम् । महाप्रदीपपुरतोऽल्पा दीपा न स्फुरन्तीति भावः । अनुरूपभावो रघुवंशे-'अरि-ष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा । निशीथदीपाः सहसा हतत्विषो बभू-वुरालेख्यसमर्पिता इव ' ॥ ' रघुवंशप्रदीपेन तेनाप्रतिमतेजसा । रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ' ॥ इति च । **उदयेति**—उदयेन परि समन्तात्पाटलं श्वेतरक्तं मण्डलं यस्य । अपरसन्ध्या पश्चिमसन्ध्याकालः । लोहिताङ्गो मङ्गलग्रहः । विद्रुमेति—प्रवालाङ्कुरच्छेदैः । अन-भिव्यक्तमप्रकटीभूतम् । तस्य षण्मुखत्वात् । अमरपतिरिन्द्रः । कल्याणं क्षेमकरं कार्तस्वरं सुवर्णम् । कल्याणकार्तस्वरमुत्तमजाति हेम वा । महापुरुषलक्षणानि सामुद्रकशास्त्रे प्रसिद्धानि तैः । एतानि त्वग्रे शुकनास एव कथयिष्यति । **आगामीति**—आगामिनि काले भविष्यत्काले यदात्मनः पालनं तेन प्रहृष्टया । विगतो निमेषो यस्मात्तदत एव निश्चलं पक्ष्म यस्य तेन ।

१ उपत. २ भवदर्शन्. ३ अपरेति नास्ति क्वचित्. ४ करतल.

लिङ्कितमाह्लादहेतुमात्मजं ददर्श । विगतनिमेषनिश्चलपक्ष्मणा मुहुर्मुहुः प्रमृष्टसंघटितानन्दबाष्पपटलप्लुततारकेण दूरविस्फारितेन स्निग्धेन चक्षुषा पिबन्निवालपन्निव स्पृशन्निव मनोरथसहस्रप्राप्तदर्शनं सस्पृहमीक्षमाणस्तनयाननं मुमुदे । कृतकृत्यं चात्मानं मेने । समृद्धमनोरथः शुकनासस्तु शनैः शनैरङ्गप्रत्यङ्गान्यस्य निरूपयन्प्रीतिविस्तारितलोचनो भूमिपालमवादीत् । देव पश्य पश्यास्य कुमारस्य गर्भसंपीडनवशादपरिस्फुटावयवशोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि । तथा हि अस्य संध्यांशुरक्तबालशशिकलाकारे ललाटपट्टे नलिननालभङ्गतन्तुतन्वीयमूर्णा परिस्फुरति । एतद्विकचपुण्डरीकधवलं कर्णान्तायतं मुहुर्मुहुरुन्मिषितैर्धवलयतीव वासभवनमरालपक्ष्म लोचनयुगलम् । विजृम्भमाणकमलकोशपरिमलमनोहरमियमस्य सहजमाननामोदमाजिघ्रतीव दूरायता कनकलेखेव नासिका । रक्तोत्पलकलिकाकारमुद्वहतीव चास्याधररुचकम् । रक्तोत्पलकलिकालोहिततलौ भगवतो विष्टरश्रवस इव शङ्खचक्रचिह्नौ प्रशस्तलेखालाञ्छितौ करौ । अभिनवकल्पतरुपल्लवकोमलं लेखामयैर्ध्वजरथतुरगातपत्रकमलैरलंकृतमनेकनरेन्द्रसहस्रचूडा-

---

**प्रमृष्टेति**—मुहुर्मुहुः प्रमृष्टं यत्संघटितानामविरलानामानन्दबाष्पाणां पटलम् । आदौ प्रमृष्टं पश्चात्संघटितं पुनःप्रादुर्भूतमानन्दपटलमिति वा । तेन प्लुताकुला तारका यस्मिन् । विस्फारितेन विस्तारितेन । स्निग्धेन स्नेहपूर्णेन । अङ्गानि मुख्यावयवाः प्रत्यङ्गानि तेषामवयवास्तानि । स्थूलसूक्ष्मावयवानित्यर्थः । **गर्भेति**—गर्भे गर्भाशये यत्सम्पीडनं तस्याल्पावकाशत्वात्तेनापरिस्फुटा अनभिव्यक्ता अवयवानां शोभा यस्य । सन्ध्यांशुभी रक्ता या बालशशिकला द्वितीयाचन्द्रस्य कला सेवाकारो यस्य । नलिननालं मृणालं तस्य भङ्गाच्छेदाद्यः तन्तुस्तद्वत्तन्वी सूक्ष्मा । एतच्चक्रवर्तिलक्षणद्वयमुक्तं प्राक् (पृ. २०.) । विकचं प्रफुल्लं । उन्मिषितैरुन्मीलनैः । अरालं पक्ष्म यस्य तदरालपक्ष्म कुटिलरोम । 'अरालं वृजिनं जिह्मम्' इत्यमरः । विजृम्भमाणो विकसन् यः कमलकोशस्तस्य परिमलवन्मनोहरम् । दूरमत्यन्तमायता । अधरो रुचकमिव । रुचकं ग्रीवाभरणं मणिनिर्मितं वा सुवर्णनिर्मितं वा । 'ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम् ।' इत्यनेकार्थः । विष्टरश्रवा विष्णुः । विष्टर इव श्रवसी कर्णौ अस्य । यद्वा विष्टरे वृक्षविशेषे श्रूयते इति विष्टरश्रवाः । विष्टरोत्राश्वत्थः । 'अश्वत्थः सर्ववृक्षाणाम्' इति भगवद्गीतोक्तेः । **रक्तेति**—चक्रवर्तिचिह्नानि उक्तपूर्वाणि (पृ० ९) । **ध्वजेति**—तदुक्तं सामुद्रिके—यस्य पादतले पद्मं चक्रं

---

१ संघट्टिता. २ बाष्पबिन्दु. ३ दूरम्. ४ विस्फारितलोचनम्, विस्फारिताक्षः, विस्फारितलोचनः. ५ ०शुक. ६ नवनलिन. ७ अनुरागम्. ८ एतस्य, अधरकं,-कपुटकम्. ९ भवतः.

मणिचक्रचुम्बनोचितं चरणयुगलम् । एष च दुन्दुभेरिवातिगम्भीरः स्वरयोगोस्य रुदतः श्रूयते ।

इत्येवं कथयत्येव तस्मिन्ससंभ्रमापसृतेन राजलोकेन द्वारि स्थितेन दत्त-मार्गस्त्वरितगतिरागत्य प्रहर्षोद्गमपुलकिततनुः स्फारीभवल्लोचनो मङ्गलकनामा प्रहृष्टवदनः पुरुषः पादयोः प्रणम्य राजानं व्यजिज्ञपत् । देव दिष्ट्या वर्धसे । प्रतिहतास्ते शत्रवः । चिरं जीव । जय च पृथिवीम् । त्वत्प्रसादादत्रभवतः शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां राम इव रेणुकायां तनयो जातः । श्रुत्वा देवः प्रमाणमिति ।

अथ नृपतिरमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं प्रीतिविस्फारिताक्षः प्रत्यवदत् । अहो कल्याणपरंपरा । सत्योयं जनप्रवादो यद्विपद्विपदं संपत्संपदमनुबध्नातीति । सर्वथा समानसुखदुःखतां दर्शयता विधिनापि भवतेव वयमनुवर्तिताः । इत्यभि-धाय प्रीतिविकसितमुखः सरभसमालिङ्ग्य विहसन्स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । तस्मै च प्रीतमनाः प्रियवचनश्रवणानुरूपं पुरुषायापरिमितं पारितोषिकमादिदेश । उत्थाय च तथैव तेन चरणविकुट्टनक्वणितनूपुरसहस्र-

वाप्यथ तोरणम् । अङ्कुशं कुलिशं छत्रं स सम्राड् भवति ध्रुवम् ॥ इति । **अनेकेति**—अनेकानि यानि नरेन्द्रसहस्राणि तेषां चूडामणीनां चक्रम् । स्वरयोगो ध्वनिसंमेलनम् । **प्रहर्षेति**—प्रकृष्टस्य हर्षस्योद्गमेनोद्रेकेण पुलकिततनू रोमाञ्चितगात्रः । रामः परशुरामः । रेणुका जमदग्निभार्या । सा च क्षत्रिया राज्ञः प्रसेनजितस्तनया । तदुक्तं भारते—'स प्रसेनजितं राजन् अधिगम्य नराधिपम् । रेणुकां वरयामास स च तस्मै ददौ नृपः' ॥ इति । जनप्रवादो लोकोक्तिः । **सर्वथेति**—इयं शुकनासं प्रत्युक्तिः । कर्तव्याकर्तव्यनिश्चये समवृत्तिना भवतेव वस्तुयाथार्थ्यदर्शनेन विधिना वयमनुवर्तिताः । अजानता मया पुत्रजननात्प्राक् नियतिर्दूषिता । अधुना च तथैवानन्दस्य परां काष्ठामधिरोपितस्य मम प्रज्ञाचक्षुरुन्मीलितं येन वस्तुस्वरूपस्य यथावद्ग्रहणेलमस्मि संवृत्त इति राज्ञोभिप्रायः । 'सर्वप्रकारेण समानं सुखदुःखं ययोस्तयोर्भावस्तत्ता तां दर्शयता । यथा पुत्रप्राप्त्या मत्साम्यं तव तथा भवतो ममापि ग मिति भावः' इति भानुचन्द्रः । सरभसं सहर्षम् । पूर्णपात्रं तत्स्थाने इत्यर्थः । आदिदेश दातुम िष्टवान् । उत्थाय च शुकनासभवनं गत्वा द्विगुणतरमुत्साहमकारयदित्यन्वयः । अन्तःपुरिकाजनेनानुगम्यमानः सन् । अन्तःपुरिकाजनविशेषणान्याह । **चरणेति**—चरणानां विकुट्टनेन सरभसपातेन क्वणितं यन्नूपुरसहस्रं तेन मुखरितानि वाचालितानि दिगन्तराणि येन । सरभसं वेगेन य उत्क्षेपस्तेन

१ द्वारास्थितेन २ मङ्गल०. ३ पृ० परिपालय. ४ लोक० ५ प्रियवचनानुरूपम्. ६ विघट्टन. ७ मणिनूपुर

मुखरितदिगन्तरेण सरभसोत्क्षेपचलितमणिवलयावलीवाचालितभुजलतेनोर्ध्वीकृतै- रुत्तानतलैः करपुटैरनिललुलितामाकाशकमलिनीमिव दर्शयता पर्यस्तमृदितकर्णपल्ल- वेन परस्पराङ्गदकोटिसंघट्टदष्टपाटितोत्तरीयांशुकेन श्रमजलधौताङ्गरागरञ्जितनवीन- वाससा किंचिदवशिष्टतमालपत्रेण विलसद्वारविलासिनीहसितैरुन्निद्रकैरववनानुकारं प्रथयता सरभसवल्गनस्खलल्लोलहारलतास्फालितकुचस्थलेन सिन्दूरतिलकलुलिता- लकलेखेन विप्रकीर्णपिष्टातकपांशुपुञ्जपिञ्जरितकेशपाशेन प्रनृत्तकलमूककुब्ज- किरातवामनबधिरजडजनपुरःसरेणोत्तरीयांशुकग्रीवाबद्धावकृष्टविडम्बितजरत्कञ्चु- किकदम्बकेन वीणावेणुमुरजकांस्यताललयानुगतेन कलमधुरमुद्गायता हर्षनिर्भ- रतया मत्तेनेवोन्मत्तेनेव ग्रहगृहीतेनेव व्यक्त...वाच्यविवेकेन नृत्तक्रीडाप्र- सक्तेनान्तःपुरिकाजनेन, प्रचलैर्मणिकुण्डलाहतकपोलभित्तिना च विघूर्णमानकर्णो- त्पलेनाधोविगलितविलोलशेखरेण दोलायमानवैकक्षककुसुममालेन निर्दयप्रहतभेरी-

चलिता या मणिवलयावली रत्नकंकणश्रेणिः तया वाचालिता भुजलता यस्य तेन । उत्तान- तलैरूर्ध्वतलैः प्रसृततलैर्वा । अनिललुलितां वायुना लुठिताम् । कमलिनीं सरः । विकचकमल- तुल्यहस्तप्रसरणादिति भावः । पर्यस्ताः संरम्भवशात्परिच्युता मृदिताः पादास्फालनेन चूर्णि- ताश्च कर्णपल्लवाः कर्णोपरि निहिताः पल्लवा यस्य । परस्परं योऽङ्गदकोटीनां बाहुभूषणाग्राणां संघट्टस्तेन दष्टं विद्धं पाटितं चोत्तरीयांशुकं यस्य तेन । किंचिदल्पमवशिष्टं न त्वधश्च्युतं तमा- लपत्रं यस्य । संरम्भवशादितरेषां वस्त्रभूषणानां पतनेपि सौभाग्यातिशयलक्षणमण्डनानि तमा- लपत्राणि कथमपि व्यवस्थापितानीति भावः । तमालपत्रं कस्तूर्यादिकृतो ललाटे तिलकविशेषो वा । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' । इत्यमरः । **विलसदिति**—विलसन्त्यः सविलासा या वारयोषितः तासां हसितैः यद्वा विलसन्ति यानि हसितानि तैः । सरभसं वेगेन यद्वल्गनं परिवर्तनं तेन स्खलन्त्यः स्वस्थानाच्चलन्त्यो लोलाश्च या हारलतास्ताभिरास्फालितं ताडितं कुचस्थलं यस्य । सिन्दूरतिलकेषु लुलिता सक्तेति यावत् अलकलेखा केशततिः यस्य । पिष्टात एव पिष्टातकः पटवासः । 'पिष्टातः पटवासकः' इत्यमरः । विप्रकीर्ण इतस्ततः क्षिप्तः यः पिष्टातकपांशुपुञ्जस्तेन पिञ्जरितः केशपाशः केशकलापो यस्य तेन । **प्रनृत्तेति**—प्रनृत्ताः प्रमोदातिरेकादारब्धताण्डवाः कलमूका अवाक्श्रुतयः । 'कलमूकोऽवाक्श्रुतिः' इति हलायुधः । जडा मूर्खाः । एते पुरःसरा अग्रगामिनो यस्य तेन । उत्तरीयांशुकेन ग्रीवायां बद्धमवकृष्टं च तेन प्रकारेण विडम्बितं च कञ्चुकिकदम्बकं येन । **वीणेति**—एतेषां लयः साम्यं तेनानु- गतेन । मत्तेन क्षीबेन । उन्मत्तेन वायुग्रस्तेन । पुनश्च राजपरिजनेनानुगम्यमानः । कीदृशेन परि- जनेनेत्याह-**प्रचलेति**। प्रचलैः मणिकुण्डलैः आहते । प्रशस्तौ कपोलौ कपोलभित्ती पृथुकपोलौ यस्य तेन विघूर्णमानं विलुठत् । कर्णोत्पलं यस्य तेन । वैकक्षकं विशिष्टः कक्षोऽस्माद्विकक्षमुरः । तत्र भवम् । 'तत्र भवः' इत्यण् । यद्यज्ञोपवीतवदुरसि तिर्यक् क्षिप्तं तत् । 'वैकक्षकं तु तत् । यत्ति-

१ भुजवलयेन. २ लुण्ठिताम्. ३ आकाशगङ्गा. ४ चीन, स्वच्छचीन; चीर. ५ वलन. ६ लोलित. ७ विकल. ८ विलम्बित. ९ अनुयातेन. १० नृत्यगीत. ११ प्रचलित. १२ उद्घट्टित. १३ वैकक्ष.

मृद मर्दलपटहानकनादानुगतकाहलाशङ्खरवजनितरभसेन चरणसंनिपातैर्दारयतेव वसुधां राजपरिजनेन, प्रवृत्तनृत्तेन च चारणगणेन विविधमुखवाद्यकृतकोलाहलेन पठता गायता चानुगम्यमानः शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयत् ।

अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेऽहनि पुण्ये मुहूर्ते गाः सुवर्णं च कोटिशो ब्राह्मणसात्कृत्वा मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन्दृष्टः इति स्वप्नानुरूपमेव राजा स्वसूनोश्चन्द्रापीड इति नाम चकार । अपरेद्युः शुकनासोऽपि कृत्वा ब्राह्मणोचिताः सकलाः क्रियाः राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे । क्रमेण कृतचूडाकरणादिबालक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य ।

तारापीडः क्रीडान्यासङ्गविघातार्थं बहिर्नगरादनुसिप्रमर्धक्रोशमात्रायाममतिमहता तुहिनगिरिशिखरमालानुकारिणा सुधाधवलेन प्राकारमण्डलेन परिवृतमनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितमतिदृढकपाटसंपुटमुद्घाटितैकद्वारप्रवेशमेकान्तोपरचिततुरंगवाह्यालीविभागमधःकल्पितव्यायामशालममरागाराकारं विद्यामन्दिरमकारयत् । सर्वविद्याचार्याणां च संग्रहे यत्नमतिमहान्तमन्वतिष्ठत् । तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गममाचार्यकुलपुत्रप्रा-

---

येऽक्षिप्तमुरसि ' इत्यमरः । **निर्दयेति**–निर्दयं प्रहता ये भेरी–पटहास्तेषां रवेणानुगतो यः काहलाशंखरवस्तेन जनितो रभस उत्साहो यस्य । चारणगणेन कुशीलवसमुदायेन । मुखवाद्यं वंशादि सुषिरम् । मुखमेव वाद्यमिति भानु० । षष्ठीजागरे पूर्वोक्तषष्ठीदेवीपूजादिषष्ठदिनकृत्ये । षष्ठदिने रात्रौ जागरणमावश्यकम् । तदुक्तं–सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्तिता । षष्ठाह्नरात्रियागं तु जन्मदानां तु कारयेत् । राम जागरणं कार्यं जन्मदानां तथा बलिः ॥ ' षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः । जागृयुर्बान्धवास्तस्या दधतः परमां मुदम् ' ॥ इति वाग्भटश्च । प्राप्ते दशमेऽहनि–जननाद्दशरात्रे व्युष्टे नामधेयकरणमिति गोभिलस्मरणात् । एकादशे द्वादशे वा पिता नाम कुर्यादिति श्रुतेश्च । चन्द्रापीडः –चन्द्र आपीडः शेखरो लक्षणया लाञ्छनं यस्य । चूडाकरणं चौलकर्म । तथाहि मनुशासनम्–चूडाकर्म द्विजातीनां ( ब्राह्मणक्षत्रियवैश्यानाम् ) सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं धर्मचोदनात् ॥ इति । **क्रीडेति**–क्रीडा कन्दुकादिना खेलनम् । ' क्रीडा खेला च कूर्दनं ' इत्यमरः । तत्र व्यासङ्गोऽत्यासक्तिस्तस्य विघातार्थं दूरीकरणार्थम् । अनुसिप्रं सिप्रायाः समीपम् । आयामो दैर्ध्यम् । तुहिनगिरिर्हिमाचलः । प्राकारमण्डलेन वप्रवलयेन । परिखा खातं तस्य वलयेन । अतिदृढानि कपाटसंपुटानि यस्य । •वाह्यालीनां शिबिकाप्रवहणादीनां विभागो व्यवस्थापनस्थानम् । **आचार्येति**–आचार्या विद्याध्यापकाः कुलपुत्रप्रायः परिजनश्च परिवारो

---

१ विदारयतेव. २ वसुन्धराम्. ३ विविधवाद्य. ४ वलगता च. ५ अनुक्षिप्रम्. ६ शिखरानुकारिणा. ७ धवलेन, प्राकारधवलेन चन्द्रशालावलयेन विलासितम्. ८ विद्यागृहम्.

यथा [illegible] वारमपनीतो शिशुजनक्रीडाव्यासङ्गमनन्यमनसमखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव। प्रतिदिनं चोत्थायोत्थाय सह विलासवत्या [illegible] गत्वैनमालोकयामास राजा।

चन्द्रापीडोऽप्यनन्यहृदयतया तथा नियन्त्रितो राज्ञाचिरेणैव कालेन यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानाः सर्वा विद्या जग्राह। मणिदर्पण इवातिनिर्मले तस्मिन्संचक्राम सकलः कलाकलापः। तथा हि पदे वाक्ये प्रमाणे धर्मशास्त्रे राजनीतिषु व्यायामविद्यासु चापचक्रचर्मकृपाणशक्तितोमरपरशुगदाप्रभृतिषु सर्वेष्वायुधविशेषेषु रथचर्यासु गजपृष्ठेषु तुरंगमेषु वीणावेणुमुरजकांस्यतालदर्दुरपुटप्रभृतिषु वाद्येषु भरतादिप्रणीतेषु नृत्तशास्त्रेषु नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु हस्तिशिक्षायां तुरगवयोज्ञाने पुरुषलक्षणेषु चित्रकर्मणि पत्रच्छेद्ये पुस्तकव्यापारे लेख्यकर्मणि सर्वासु द्यूतकलासु गन्धर्वशास्त्रेषु शकुनिरुतज्ञाने ग्रहगणिते रत्नपरीक्षासु दारुकर्मणि दन्तव्यापारे वास्तुविद्यास्वायुर्वेदे यन्त्रप्रयोगे विषापहरणे सुरुङ्गोपभेदे तरणे लङ्घने प्लुतिष्वारोहणे रतितन्त्रेष्विन्द्रजाले कथासु नाटकव्याख्यायिकासु काव्येषु महाभारतपुराणेतिहासरामायणेषु सर्वलिपिषु सर्वदेशभाषासु सर्वसंज्ञासु सर्वशिल्पेषु छन्दःस्वन्येष्वपि कलाविशेषेषु परं कौशलमवाप।

---

यस्य। अर्पयाञ्चभूव एतच्च पञ्चमवर्षान्ते ज्ञेयम्—तदुक्तम् 'प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत्।' इति। अपनीतेति—अपनीतः अशेषा याः शिशुजनक्रीडास्तासु व्यासंगो यस्य तम्। [illegible]ति—उपजातोत्साहैः श्रमसाफल्यादिति भावः। उक्तं च रघौ 'क्रिया हि वस्तूपहिता प्रसीदति' इति। पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः इति च मालविकाग्निमित्रे। [illegible]णीति—अनुरूपभाव उत्तररामचरिते—प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः। इति। पदं व्याकरणशास्त्रम्। वाक्यं मीमांसाद्वयम्। प्रमाणं न्यायवैशेषिकसांख्यपातञ्जलादिरूपम्। धर्मशास्त्रं मन्वादिप्रणीतम्। चर्म खड्गाद्याघातनिवारणार्थः चर्मफलकः। रथचर्या रथपरिवर्तनम्। दर्दुरपुटं वाद्यविशेषः। चित्रकर्मण्यालेख्यविद्यायाम्। पत्रच्छेद्ये पत्रभङ्गच्छेदने। पुस्तकव्यापारे मृद्दार्वादिमयाकृतिनिर्माणे। 'पुस्तं लेप्यादिकर्मणि' इत्यमरः। लेख्यकर्मणि शलाकादिनाकृतिविशेषनिर्माणे। ग्रहगणिते ज्योतिर्विद्यायाम्। दारुकर्मणि तक्षशिल्पे। दन्तव्यापारे दन्ता हस्तिरदनास्तेषु व्यापारे यद्वा दन्तचिकित्सायाम्। वास्तुविद्यासु गृहनिर्माणविद्यासु। आयुर्वेदे वैद्यकशास्त्रे। सुरङ्गा संधिला तद्भेदोपभेदे गृहान्तःप्रवेशकर्मणि। लङ्घने परिखादीनामुल्लङ्घने। प्लुतयो हस्त्यादिभिर्युद्धेषु संग्रामादिषु च [illegible]। इन्द्रजालं मायिकविद्या। नाटकादि व्याख्यातम्। महाभारतम्—अस्य निरुक्तिः—'भाति सर्वेषु वेदेषु रतिः सर्वेषु जन्तुषु। तरणं सर्वतीर्थानां तेन भारतमुच्यते॥' संज्ञाः परिभाषाः हस्ताद्यैरर्थसूचना वा तासु।

---

१ शिशुक्रीडन. २ मानः. ३ चर्म. ४ यन्त्र. ५ मन्त्रप्रयोगे. ६ आरोहणावरोहणे. ७ सर्वकौशलम्.

सहजा चास्याजस्रमभ्यस्यतो वृकोदरस्येव शैशव एवाविर्बभूव सर्वलोकविस्मयजननी महाप्राणता। यदृच्छया क्रीडताप्यनेन करतलावलम्बितकर्णपल्लवावनताङ्गाः सिंहकिशोरकक्रमाक्रान्ता इव गजकलभकाश्चलितुमपि न शेकुः। एकैकेन कृपाणप्रहारेण बाल एव तालतरून्मृणालदण्डानिव लुलाव। सकलराजन्यवंशवनदावानलस्य परशुरामस्येवास्य नाराचाः शिखरिशिलातलभिदो बभूवुः। दशपुरुषसंवाहनयोग्येन चायोदण्डेन श्रममकरोत्। ऋते च महाप्राणतायाः सर्वाभिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः। चन्द्रापीडस्य तु सकलकलाकलापपरिचयबहुमानेन शुकनासगौरवेण सहपांशुक्रीडनतया सहसंवृद्धतया च सर्वविश्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत्। निमेषमपि तेन विना स्थातुमेकाकी न शशाक। वैशम्पायनोऽपि तमुष्णकरमिव वासरोऽनुगच्छन्न क्षणमपि विरहयांचकार।

एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य, सकललोकहृदयानन्दजननश्चन्द्रोदय इव प्रदोषस्य, बहुविधरागविकारभङ्गुरः सुरधनुःकलाप इव जलधरसमयस्य, मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य, अभिनवाभिव्यज्यमानरागरमणीयः सूर्योदय इव कमलवनस्य, विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनः, यौवनारम्भः प्रादुर्भवन्नमणीयस्यापि द्विगुणां रमणीयतां पुपोष। लब्धावसरो नवसेवक इव निकटीबभूवास्य मन्मथः। लक्ष्म्या सह वितस्तार वक्षः-

---

अभ्यस्यतः श्रमं कुर्वतः। महाप्राणता वीर्यातिशयः। करतलेन अवलम्बिता धृताः कर्णपल्लवाः कर्णान्तास्तैरवनतान्यङ्गानि येषां ते तथोक्ताः। क्रम आपातः। नाराचा अयोमुखा बाणाः। **शिखरीति**—परशुरामेण क्रौञ्चपर्वतदारणकथा प्रसिद्धैव। सकला राजन्य(क्षत्रिय)वंशास्तेषां तेषु वा दावानलस्तस्य। तदुक्तं भारते—त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः। समन्तपञ्चके पञ्च चकार रुधिरह्रदान्॥ इति। श्रमम्—व्यायामम्। शुकनासगौरवेण शुकनाससम्बन्धिन्या पूज्यत्वबुद्ध्या सर्वविश्रम्भस्थानमाखिलवस्तुषु विश्वासभूमिः। **त्रिभुवनेति**—अमृतरसः यौवनारम्भश्च। इतराण्यपि विशेषणान्युभयत्र योज्यानि। **बहुविधेति**—बहुविधो रागः शृङ्गारभावस्तस्य विकारैर्भङ्गुरोऽस्थिरः। पक्षे बहुविधा ये रागा नीलपीतादयस्तेषां विकारैर्भङ्गुरो वक्रोऽचिरस्थायी वा। **अभिनवेति**—रागोऽनुरागो रक्तिमा च। विविधानि लास्यानि विलासाश्च तेषां योग्यः। विलासः—धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः। इत्युक्तलक्षणः। विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु। इत्युक्तलक्षणो वा। नवसेवक इव तस्य शृङ्गारसहायत्वात्सेवकत्वम्। स्वामिसेवकभावान्मदनस्य चन्द्रापीडाधीनता। **लक्ष्म्येति**—अत्र सहोत्या लक्ष्म्या विस्तारस्येव

---

१ श्रमम्, अजस्रश्रमम्. २ आकुञ्चित. ३ विद्याभिः. ४ हृदयनयना०. ५ सेवक, अनुसेवक.

स्थलम् । बन्धुजनमनोरथैः सहापूर्यतोरुदण्डद्वयम् । अरिजनेन सह तनिमानमभजत मध्यभागः । त्यागेन सह प्रथिमानमाततान नितम्बभागः । प्रतापेन सहारुरोह रोमराजिः । अहितकलत्रालकलताभिः सह प्रलम्बतामुपययौ भुजयुगलम् । चरितेन सह धवलतामभजत लोचनयुगलम् । आज्ञया सह गुरुर्बभूव भुजशिखरदेशः । स्वरेण सह गम्भीरतामाजगाम हृदयम् ।

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकलाविज्ञानमधीताशेषविद्यं चावगम्यानुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृतमतिप्रशस्तेऽहनि प्राहिणोत् । स गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य क्षितितलावलम्बितचूडामणिना शिरसा प्रणम्य स्वभूमिसमुचिते राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत् । स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्यजिज्ञपत् । कुमार महाराजः समाज्ञापयति । पूर्णा नो मनोरथाः । अधीतानि शास्त्राणि । शिक्षिताः सकला कलाः । गतोसि सर्वास्वायुधविद्यासु परां प्रतिष्ठाम् । अनुमतोसि निर्गमाय विद्यागृहात्सर्वाचार्यैः । उपगृहीतशिक्षं गन्धगजकुमारकमिव वारिबन्धाद्विनिर्गतमवगतसकलकलाकलापं पौर्णमासीशशिनमिव नवोद्गतं पश्यतु त्वां जनः । व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि । दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि । अयमत्रभवतो दशमो वत्सरो विद्यागृहमधिवसतः । प्रविष्टोसि षष्ठमनुभवन्वर्षम् । एवं संपिण्डितेनाधुना षोडशेन प्रवर्धसे । तदद्य प्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलाभ्यो मातृभ्योभिवाद्य च गुरूनपगतानियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च ।

---

मनोरथादीनां पूर्णत्वादेः स्वस्ववाक्याद्रमकत्वेपि सातिशयत्वं व्यङ्ग्यम् । **अहितेति**—शत्रुस्त्रीणां केशलताभिः । भाविभर्तृवधाद्वेण्यादिसंस्कारशून्यत्वादलकानां प्रलम्बत्वम् । गुरुः—तस्याज्ञापि गुर्वी अलङ्घनीयाऽभवत् । **एवमिति**—बलाधिकृतं सेनाध्यक्षम् । समावेदितः चन्द्रापीडाय निवेदितागमनः । स्वभूमिसमुचिते स्वपदोचितभूमौ । वारिबन्धात्—वारिर्गजबन्धनस्थानम् । ' ' वारी तु गजबन्धिनी ' इति यादवः । तत्र बन्धस्तस्मात् । **अवगतेति**—अवगतो ज्ञातः सकलानां चतुःषष्ट्याः कलानां कलापः समूहो येन । पक्षे प्राप्तः पञ्चदश कलास्तासां कलापो येन । अतिचिरकालेन यद्दर्शनं तत्रोत्कण्ठितानि । अन्तःपुराणि अन्तःपुरस्त्रियः । विद्यागृहम्-' उपान्वध्याङ्वसः ' इति द्वितीया । संपिण्डितेन संमिलितेन । नवयौवनललितानि •विलासान् ।

---

१ समग्र. २ बृहत्. ३ द्वारपैः. ४ लम्बुम्बि . ५ वारिविनिर्गतम्. ६ अधिगत. ७ संवत्सरः. ८ अधुना. ९ अखिलमा. १० गुरूणामपगत.

संमानय राजलोकम् । पूजय द्विजातीन् । परिपालय प्रजाः । आनन्दय च बन्धुवर्गमिति । अयं च ते त्रिभुवनैकरत्नमनिलगरुडसमजव इन्द्रायुधनामा तुरंगमः प्रेषितो महाराजेन द्वारि तिष्ठति । एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति कृत्वा जलधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यमिति संदिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षणविद्भिः। देव यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि तैरयमुपेतो नैवंविधो भूतो भावी वा तुरंगम इति । तदयमनुगृह्यतामधिरोहणेन । इदं च मूर्धाभिषिक्तपार्थिवकुलप्रसूतानां विनयोपपन्नानां शूराणामभिरूपाणां कलावतां च कुलक्रमागतानां राजपुत्राणां सहस्रं परिचारार्थमनुप्रेषितं तुरंगमारूढं द्वारि प्रणामलालसं प्रतिपालयति। इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा प्रवेश्यतामिन्द्रायुध इति निर्जिगमिषुरादिदेश ।

अथ वचनानन्तरमेव प्रवेशितम्, उभयतः खलीनकनककटकावलग्नाभ्यां पदे पदे कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवकृष्यमाणम्, अतिप्रमाणम्, ऊर्ध्वकरपुरुषप्राप्यपृष्ठभागम्, आपिबन्तमिव संमुखागतमखिलमाकाशम्, अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोदररन्ध्रेण हेषारवेण पूरितभुवनोदरविवरेण निर्भर्त्सयन्तमिवालीकवेगदुर्विदग्धं गरुत्मन्तम्, अतिदूरमवनमता प्रतिक्षणमतिदूरमुन्नमता च जवनिरोधस्फीतरोषघुरघुरायमाणघोरघोणेन शिरोभागेन निजजवदर्पवशादुल्लङ्घनार्थमाकलयन्तमिव त्रिभुवनम्, असितपीतहरितपाटलाभिराखण्डलचापानु-

अनिलो वायुर्गरुडश्च तयोस्ताभ्यां वा समो जवो वेगो यस्य । अयोनिजम्—ग्राम्यधर्मादनुत्पन्नं दिव्यमित्यर्थः । उच्चैः श्रवसी यस्य उच्चैर्महच्छ्रवो यशो यस्य इति वा उच्चैःश्रवा इन्द्रस्याश्वः । पारिचारार्थं सेवार्थम् । प्रणामे लालसा स्पृहा यस्य । निर्जिगमिषुर्गन्तुमिच्छुः । नवजलधरस्य यो ध्वानः शब्दस्तद्वद्गम्भीरया गिरा आदिदेशेत्यन्वयः । **अथेति**—अथ वचनानन्तरमेव प्रवेशितमिन्द्रायुधमद्राक्षीदित्यन्वयः । तमेव वर्णयति—खे मुखबिले लीनः खलीनः कविका तस्य कनककटके हेमवलये तत्रावलग्नाभ्यामासक्ताभ्याम् । कृत आकुञ्चन आकर्षणे प्रयत्नो याभ्याम् । अतिप्रमाणमतिक्रान्तसाधारणाश्वप्रमाणमतिविशालम् । हेषारवः हेषणशब्दः । **अलीकेति**—अलीकोऽसत्यो यो वेगस्तेन दुर्विदग्धं मिथ्यागर्वितम् । गरुत्मन्तं गरुडम् । जवस्य निरोधेन प्रतिहत्या स्फीतो वृद्धिं गतो यो रोषस्तेन घुरघुरायमाणा घुरघुर इति शब्दं कुर्वाणा घोरा भीषणा घोणा नासिका यस्य तेन । आकलयन्तं तस्य प्रमाणमिव गृह्णन्तं विचारयन्तं

१ परिपूजय २ ०षिक्तानाम्. ३ परिवारार्थम्. ४ खलीनकटक. ५ माणघोणेन. ६ मुखेन. ७ निजदर्प, दर्पावेशात्.

कारिणीभिर्लेखाभिः कल्माषितशरीरम्, आस्तीर्णविचित्रवर्णकम्बलमिव कुञ्जर-कलभं, कैलासतटाघातधातुधूलिपाटलमिव हरवृषभम्, असुररुधिरपङ्कलेखालो-हितसटमिव पार्वतीसिंहं, रंहःसंघातमिव मूर्तिमन्तम्, अनवरतपरिस्फुरत्प्रोथ-पुटोन्मुक्तसूत्कारेणातिजवापीतमनिलमिव नासिकाविवरेणोद्वमन्तम्, अन्तःस्खलित-मुखरखलीनखरशिखरक्षोभजन्मनो लालाजलभुवः फेनपल्लवानुदधिनिवासप-रिपीतामृतरसगण्डूषानिवोद्गिरन्तम्, अत्यायतमतिनिर्मांसतया समुत्कीर्णमिव वद-नमुद्वहन्तम्, आननमण्डलनि[illegible]तारुणमणिसमुद्गतां[illegible]ुकलापैरुपेतेनावसक्तकर[illegible]ा-मरेणेव निश्चलशिखरेण कर्णयुगलेन विराजमानम्, उज्ज्वलकनकशृङ्खलारचि-तैरश्मिकलापकलितया लाक्षालोहितलम्बलोलसटासंतानया जलनिधिसंचरणल-ग्नविद्रुमपल्लवयेव शिरोधरयोपशोभितम्, अतिकुटिलकनकपत्रलताप्रतानभ[illegible]ुरेण पदे पदे रणितरत्नमालेन स्थूलमुक्ताफलप्रायेण तारागणेनेव संध्यारागमरुणेना-श्वालंकारेणालंकृतम्, अश्वालंकारनिहितमरकतरत्नप्रभाश्यामायमानदे[illegible]तया गग-नतलनिपातितदिवसकररथतुरंगमशङ्कामिवोपजन[illegible]न्तम्, अतितेजस्वितया जव-निरोधरोषवशात्प्रतिरोमकूपमुद्गतानि सागरपरिचयाल्लग्नानि मुक्ताफलानीव स्वेदल-वजालकानि वर्षन्तम्, इन्द्रनीलमणिपादपीठानुकारिभिरञ्जनशिलाघटितैरिवानव-

---

वा । असिताः कृष्णाः पाटलाः श्वेतरक्ता लेखाः ताभिः कल्माषितशरीरं कर्बुरितदेहम् । **कैलासेति**-वप्रक्रीडायां कैलासतटे योऽभिघातस्तत्र या धातुधूलिर्गैरिकादिधातूनां क्षोदस्तेन पाटलम् । ०लोहितसटं रक्तकेसरम् । रंहःसंघातं त्रैलोक्यस्थवेगसमूहम् । अनवरतं निरन्तरं परिस्फुरत्प्रस्पन्दमानं यत् प्रोथोऽश्वघोणा तस्य पुटं तस्मादुन्मुक्तेन सूत्कारेण निश्वासविशेषेण । **अन्तरिति**—अन्तर्मुखमध्ये स्खलितं चलितं यन्मुखरं वाचालं खलीनं तस्य खरशिखरैरयःकण्टकाग्रैर्यः क्षोभ आकुलत्वं तस्माज्जन्म येषाम् । ०गण्डूषान्मुखचुलुकान् । समुत्कीर्णं टङ्कोन्मीलिताकृतिम् । अरुणमणयः पद्मरागाः । अंशुकलापैरुपेतेनात एव अवसक्तेति । **उज्ज्वलेति**—उज्ज्वलकनकशृङ्खलया रचिता निर्मिता ये रश्मयः प्रग्रहास्तेषां कलापेन कलितया युक्तया । लाक्षा जतु तद्वल्लोहिता लम्बा लोलाश्चञ्चलाश्च याः सटाः केसरास्तासां संतानो विस्तारो यत्र । अत एव जलनिधौ यत्संचरणं । तत्प्रभवत्वात् । तेन लग्ना विद्रुमपल्लवाः प्रवालकिसलया यस्यास्तया । **अतीति**—अतिकुटिला अतिवक्रा या कनकपत्रलताः सुवर्णपत्रभङ्गास्तासां प्रतानैः सूक्ष्मलेखाभिर्भङ्गुरः श्लक्ष्णस्तेन । **गगनेति**—गगनतलान्निपतितः । सूर्यतुरगाणां हरितत्वादियमुत्प्रेक्षा । अतितेजस्वितया सत्त्वोत्कर्षात् । अयं रोषजनने हेतुः । अञ्जनशिला कृष्णवर्णशिला । अनवरतं यत्पतनोत्पतनं तेन जनितो

---

१ विविध. २ ०फूत्कारेण, प्रोथोन्मुक्तफू. ३ फेनलवान्. ४ गण्ड. ५ रुचिर. ६ संध्यारागारुणेन. ७ प्रतिरोमकूपात्. ८ परिचयल०. ९ स्वेदजललव. १० नीलपाद.

रतपतनोत्पतनजनितविषमखरमुखरवैः पृथुभिः खुरपुटैर्जर्जरितवसुंधरैर्मुरजवाद्यमिवाभ्यस्यन्तम्, उत्कीर्णमिव जङ्घासु, विस्तारितमिवोरसि, श्लक्ष्णीकृतमिव मुखे, प्रसारितमिव कंधरायाम्, उल्लिखितमिव पार्श्वयोः, द्विगुणीकृतमिव जघनभागे, जवप्रतिपक्षमिव गरुत्मतः, त्रैलोक्यसंचरणसहायमिव मारुतस्य, अंशावतारमिवोच्चैःश्रवसः, वेगसब्रह्मचारिणमिव मनसः, हरिचरणमिव सकलवसुंधरोल्लङ्घनक्षमं, वरुणहंसमिव मानसप्रचारं, मधुमासदिवसमिव विकसिताशोकपाटलं, व्रतिनमिव भस्मसितपुण्ड्रकाङ्कितमुखं, कमलवनमिव मधुपङ्कपिङ्गकेसरं, ग्रीष्मदिवसमिव महायाममुग्रतेजसं च, भुजंगमिव सदागत्यभिमुखम्, उदधिपुलिनमिव शङ्खमालिकाभरणं, भीतमिव स्तब्धकर्णं, विद्याधरराज्यमिव चक्रवर्तिनरवाहनोचितं, सूर्योदयमिव सकलभुवनार्घार्हम्, अश्वातिशयमिन्द्रायुधमद्राक्षीत् ।

---

विषमो विरुद्धः खरः कर्णकठोरो मुखरवो येषाम् । खुरपुटैः शफपुटैः । **मुरजेति**—मृदङ्गशब्दतुल्यशब्दोत्पादनात् । **उत्कीर्णमिवेति**—इतस्तस्य शास्त्रप्रोक्तं प्रत्यवयवं गुणातिशयं वर्णयन्सौन्दर्यातिशयं द्योतयति—विस्तारितमिव । विशालोरस्कमित्यर्थः । श्लक्ष्णीकृतं निर्मांसतया तनूकृतम् । मुखे निर्मांसता ह्यश्वसौन्दर्यलक्षणम् । उक्तमेवैतत्प्राक् निर्मांसतया समुत्कीर्णमिव मुखमुद्वहन्तामित्यनेन । गरुत्मतो गरुडस्य जवे प्रतिपक्षं प्रतिस्पर्धिनम् । तत्तुल्यजवमित्यर्थः । **वेगेति**—वेगे रंहसि सब्रह्मचारिणं सतीर्थ्यमिव । मनोवेगमित्यर्थः । हरिर्वामनः । **मानसेति**—मानसं मनस्तद्वत्प्रचारो गतिर्यस्य । पक्षे मानसे तन्नामकसरसि प्रचारो यस्य । विकसिताशोकवत्पाटलं श्वेतरक्तम् । पक्षे विकसितानि अशोकानि अशोकपुष्पाणि पाटलानि पाटलीपुष्पाणि च यस्मिन् । विकसिताशोकैः पाटलमिति वा । भस्मवत्सितो यः पुंड्रको भालस्थश्वेतपट्टकस्तेनाङ्कितं मुखं यस्य । एतद्धि शुभलक्षणम् । तदुक्तमग्निपुराणे—'सृक्कण्यां च ललाटे च कर्णमूले निगालके । बाहुमूले गले श्रेष्ठा आवर्तास्त्वशुभाः पदे ॥' इति । पक्षे स्पष्टम् । **मध्विति**—मधुयुक्तो यः पङ्को वचादिचूर्णं तेन पिङ्गाः केसराः स्कन्धकेशा यस्य । उक्तं च वैद्यके—'अश्वस्य वातादिदोषशान्तये मधुयुक्तवचादिचूर्णस्य पङ्कस्तेन तनुलेपनम् ।' इति भानु० । पक्षे मधु मकरन्दस्तस्य पङ्केन पिङ्गानि केसराणि यस्मिन् । **ग्रीष्मेति**—महानायामो दैर्घ्यं यस्य तम् । पक्षे महान्यामः प्रहरो यस्मिन् । तेजो दीप्तिर्बलं वा पक्षे आतपः । सदा या गतिर्गमनं तस्या अभिमुखम् । पक्षे सदागतिर्वायुः । शंखानां कम्बूनां माला आभरणं यस्येत्यभङ्गश्लेषः । यद्वा पक्षे शंखमाला अश्वानां कंठस्थः रोमावर्तभेदः । **चक्रेति**—चक्रवर्ती यो नरस्तस्य वाहने उचितं योग्यम् । पक्षे चक्रवर्ती यो नरवाहनो वत्सराजसुतो विद्याधरः कुबेरो वा । **सकलेति**—सकलभुवनमेवार्घो मूल्यं तस्यार्हम् । पक्षे सकलभुवनस्यार्घः पूजा तदर्हम् । ' सकलभुवननाथार्हम् ' इति कुत्रचित्पाठः । तत्र सकलभुवनस्य नाथः स्वामी तस्यार्हं योग्यम् । पक्षे सकलभुवनस्य नाथ आशीस्तस्यार्हं योग्यम् । ध्वान्तध्वंसकत्वेन त्रिभुवनेन मङ्गलशंसनमस्य क्रियते इति भावः ।

---

१ स्वर, विषममुख. २ उग्रतेजस। भुजगम्. ३ भुवनाभ्यर्हम्.

दृष्ट्वा च तमदृष्टपूर्वममानुषलोकोचिताकारमखिलत्रिभुवनराज्योचितमशेषलक्षणोपपन्नमश्वरूपातिशयमतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयो हृदयम्। आसीच्चास्य मनसि। सरभसविवर्तनवलितवासुकिभ्रमितमन्दरेण मथ्नता जलनिधिजलमिदमश्वरत्नमनुद्धरता किं नाम रत्नमुद्धृतं सुरासुरलोकेन। अनारोहता च मेरुशिलातलविशालमस्य पृष्ठमाखण्डलेन किमासादितं त्रैलोक्यराज्यफलम्। उच्चैःश्रवसा विस्मितहृदयो वञ्चितः खलु जलनिधिना शतमखः। मन्ये च भगवतो नारायणस्य चक्षुर्गोचरमियता कालेन नायमुपगतोः येनाद्यापि तां गरुडारोहणव्यसनितां न परित्यजति। अहो खल्वतिशयितत्रिदशराजसमृद्धिरियं तातस्य राज्यलक्ष्मीः। यदेवंविधान्यपि सकलत्रिभुवनदुर्लभानि रत्नान्युपकरणतामागच्छन्ति। अतितेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिः। यत्सत्यमारोहणे शङ्कामिव मे जनयति। न हि सामान्यवाजिनाममानुषलोकोचिताः सकलत्रिभुवनविस्मयजननस्य ईदृश्यो भवन्त्याकृतयः। दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीरकाणि शापवचनोपनीतानि शरीरान्तराण्यध्यासत एव। श्रूयते हि। पुरा किल स्थूलशिरा नाम महातपा मुनिरखिलभुवनललामभूतामप्सरसं रम्भाभिधानां शशाप। सा सुरलोकमपहायाश्वहृदये निवेश्यात्मानमश्वहृदयेति विख्याता वडवा मृत्तिकावत्यां शतधन्वानं नाम राजानमुपसेवमाना मर्त्यलोके

इति भानु०। **अमानुषेति**–मानुषलोकोचितो न भवतीति तथा। दिव्यलोकोचित इत्यर्थः। आकारो यस्य अत एव अखिलेति। अश्वरूपस्यातिशय औत्कृष्ट्यं यस्मिन्। 'उत्कर्षोऽतिशये' इत्यमरः। **सरभसेति**–सरभसं वेगोत्तरं यानि निवर्तनानि परिवर्तनानि तैर्वलितो यो वासुकिः सर्पराजस्तेन भ्रमितो विवर्तितो मन्दरो येन। तेनोद्धृतानि रत्नान्यस्य पुरतः तुच्छानि इति भावः। आखण्डल इन्द्रः। **गरुडेति**–गरुडारोहणे व्यसनितामासक्तिम्। अन्यथास्यारोहण एव मतिं कुर्यादितिभावः। उपकरणतामुपभोगसाधनताम्। सदैवता देवतात्मिका। **स्थूलशिरा** इ०-कथा चात्र "स्थूलशिरा नाम महर्षिः कुशसमिदर्थं पर्यटन् 'महति श्वभ्रान्तरे पतामः। परित्रायस्व' इत्युच्चतरं ध्वनिमशृणोत्। गत्वा च तत्र क्षामशरीरान्पुरुषांस्तत्र लम्बान्प्रलम्बमानानपश्यत। पृष्टाश्च "के यूयम्"। ते च पितर इत्यवोचन्–'त्वया चापत्योत्पत्तिर्न कृता। तद्विरहात्त्वदुपरमे पुंनाम्नि नरके पतिष्यामः।' इति। तच्छ्रुत्वा महर्षी रम्भाभिधानामेव योषितमिदमुक्तवान्–'त्वां कामयामः'। तया चोक्तम्–'यथाज्ञापयसि। किंतु देवकार्यं कृत्वागच्छामि। क्षम्यतां तावत्'। गतायां संकेतभङ्गो जात इति महर्षिणा क्रुद्धेन 'वडवा भव' इति सा

१ विस्मयम्. २ अनभ्युद्धरता. ३ सुरलो. ४ तं गरुडारोहणव्यसनिता. ५ ०वचनबलो. ६ शरीराणि. ७ त्रिभुवन. ८ वडवा भूत्वा. ९ मृत्तिका०.

महान्तं कालमुवास। अन्ये च महात्मानो मुनिजनशापपरिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम्। असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम्। आवेदयतीव मदन्तःकरणमस्य दिव्यताम्।

इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत्। मनसा च तं तुरंगममुपसृत्य[1] महात्मन्नर्वन्योसि सोसि नमोस्तु ते सर्वथा मर्षणीयोयमारोहणातिक्रमोऽस्माकमपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्तीत्यामन्त्रयांबभूव। विदितामिप्राय इव स तमिन्द्रायुधश्चटुलशिरःकेसरसटाहत्याकूणिताकेकरतारकेण तिर्यक्चक्षुषा विलोक्य मुहुर्मुहुस्ताडयता क्षितितलमुत्खातधूलिधूसरितक्रोडरोमराजिना दक्षिणखुरेणारोहणायाह्वयन्निव स्फुरितघ्राणविवरघर्घरध्वनिमिश्रं मधुरमपरुषं[2] हुंकारपरंपरानुबद्धमतिमनोहरं हेषारवमकरोत्। अथानेन मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इवेन्द्रायुधमारुरोह चन्द्रापीडः। समारुह्य तं प्रादेशमात्रमिव त्रैलोक्यमखिलं मन्यमानो निर्गत्य प्रलयजलधरविमुक्तोपलासारपरुषेण[3] जर्जरयतेव रसातलमतिनिष्ठुरेण खुरपुटानां रवेण खुररजोनिरुद्धघ्राणघोरघोषेण[4] च हेषितेन बधिरीकृतसकलभुवनविवरम्[5], अशिशिरकिरणदीधितिपरामर्श[6]स्फुरितविमलफलकेनोर्ध्वीकृतेन[7] कुन्तलतावनेनोन्नालनीलोत्पलकलिकावनगहनं सर इव गगन-

---

शप्ता नरनारायणविग्रहावधिश्च शापो भविष्यति' इति। इति भानु०। मुनिजनशापेन परिपीतोऽस्तमित इत्यर्थः प्रभावो येषाम्। आवेदयति दिव्यतां कोपि दिव्योयमश्वरूपतां प्राप्त इति। **मनसेति**—तं तुरंगममुपसृत्योपेत्य मनसा आमन्त्रयांबभूव इत्यन्वयः। योसि सोसि यः कोपि त्वमज्ञातयथार्थस्वरूपो वर्तसे स तथासि नाम। आरोहणेन आरोहणरूपो वा योतिक्रमो मर्यादात्यागः। अवज्ञेति यावत्। अपरिगतान्यज्ञातस्वरूपाणि। परिभवोऽवमानना। **चटुलेति**—चटुला चञ्चला या शिरःकेसरसटा तस्या आहत्या ताडनेनाकूणिता किंचित्संकुचिता आकेकरा किंचिद्वक्रा तारका यस्य तेन। तिर्यक्चक्षुषेति समस्तं भिन्नं वा पदम्। क्रोडं भुजान्तरम्। प्रादेशो विततर्जन्यङ्गुष्ठमितः तत्प्रमाणम्। 'प्रदेशिन्यादिभिः सार्धमङ्गुष्ठे वितते सति। प्रादेशतालगोकर्णवितस्तयो यथाक्रमम्'॥ इत्यभिधानचिन्तामणिः। **प्रलयेति**—अथाश्वसैन्यं विशिनष्टि—प्रलयकाले ये जलधरास्तैर्विमुक्तो य उपलासारः करकावृष्टिस्तद्वत्परुषेणेति रवविशेषणम्। जर्जरयता दारयता। खुररजसा निरुद्धं यद् घ्राणं तस्य घोरो घोषो यस्मिन्। बधिरीकृतं जडीकृतम्। **अशिशिरेति**—अशिशिरकिरणः सूर्यस्तस्य दीधितिभिर्यः परामर्शः संपर्कस्तेन स्फुरितानि फलकानि पत्राणि यस्य। कुन्ताः प्रासा लता इव। तेषां सरलत्वादायतत्वाच्च लतासाम्यम्। तासां वनम्। उद्गतानि नालानि मृणालानि यासां तादृश्यो या नीलोत्पलकलिका

---

१ अनुपसृत्य. २ अपरुषम्. ३ उपलसारपातपरुषेण. ४ प्रचुर. ५ भुवनम्. ६ संस्पर्श. ७ कृतकुन्त.

तलमलंकुर्वाणम्, उद्दण्डमायूरातपत्रसहस्रान्धकारिताष्टदिङ्मुखतया स्फुरितशत-मन्युचापकलापकल्माषमिव जलधरवृन्दम्, उद्गमत्फेनपुञ्जधवलितमुखतयानवरत-वल्गनचटुलतया च प्रलयसागरजलकल्लोलसंघातमिव समुद्गतम्, अदृष्टपर्यन्तमश्व-सैन्यमपश्यत्। तच्च सागरजलमिव चन्द्रोदये चन्द्रापीडनिर्गमेन सकलमेव मंचचालाश्वीयम्। अहमहमिकया च प्रणामलालसाः सरभसापनीतातपत्रशून्य-शिरसः परस्परोत्पीडनकुपिततुरंगमनिवारणायस्ता राजपुत्रास्तं पर्यवारयन्त। एकैकशश्च प्रतिनामग्रहणमावेद्यमाना बलाहकेन विप्रचलितमुकुटपद्मरागकिरणो-द्गमच्छलेनानुरागमिवोद्गमद्भिः संघटितसेवाञ्जलिमुकुलतया यौवराज्याभिषेककल-शावर्जितसलिललग्नकमलैरिव दूरावनतैः शिरोभिः प्रणेमुः।

चन्द्रापीडस्तु तान्सर्वान्मानयित्वा यथोचितमनन्तरं तुरंगमाधिरूढेनानु-गम्यमानो वैशम्पायनेन राज्यलक्ष्मीनिवासपुण्डरीकाकृतिना सकलराजन्य-

---

इन्दीवरकोरकास्तासां वनं तेन गहनं दुःसंचारं सर इव गगनतलमलंकुर्वाणम्। मायूरातपत्राणि मयूरपिच्छनिर्मितानि छत्राणि। शतमन्युरिन्द्रस्तस्य चापो धनुः। कल्माषं कर्बुरम्। अनवरतं सततं यद्वल्गनमितस्ततश्चालनं तेन चटुलमस्थिरं तस्य भावस्तया। अनेन कल्लोलसाम्यम्। अदृष्टो नयनपथातीतः पर्यन्त आ समन्तादन्तो यस्य। अश्वीयम्–अश्वानां समूहः। ‘केशाश्वाभ्यां यञ्छावन्यतरस्याम्’। इति सूत्रेण समूहे छः प्रत्ययः। अहमहमिका परस्परस्पर्धया। ‘अह-महमिका तु सा स्यात्परस्परं यो भवत्यहंकारः।’ इत्यमरः। सरभसं ससंभ्रममपनीतानि यानि आतपत्राणि तैः शून्यानि रहितानि शिरांसि येषाम्। परस्परोत्पीडनेन कुपिता ये तुरंगमास्तेषां निवारणे व्यवस्थापने आयस्ताः सोद्यमाः। प्रतिनामग्रहणं प्रत्येकं नामनिर्देशपूर्वकम्। **विप्रेति**–विप्रचलितानां मुकुटानां पद्मरागास्तेषां किरणोद्गमो रश्म्युदयस्तस्य छलेन मिषेण। अनुरागं रक्तत्वमुद्गमद्भिरुद्गिरद्भिः। पक्षे अनुरक्ततां प्रकटयद्भिः। **संघटितेति**–संघटिताः संयोजिता ये सेवार्थमञ्जलयस्त एव मुकुलानि तेषां भावस्तत्ता तया। तेषां यौवराज्ये अभिषेकस्तत्र कलशैरावर्जितं निर्मुक्तं यत्सलिलं तेन लग्नानि यानि कमलानि तैरिव। अत्र भानुचन्द्रव्याख्यानं यथा—‘शिरसां वर्तुलत्वसाम्यादञ्जलिमुकुलस्य कमलमुकुलसाम्याच्छिरःस्थिताञ्जलिमुकुलो-त्प्रेक्षामाह–यौवराज्यस्य योऽभिषेकस्तदर्थं ये कलशाः कुम्भास्तैरावर्जितं गृहीतं यत्सलिलं तत्र लग्नानि यानि कमलानि तैरिव’। इति। यथोचितं यथायोग्यं मानयित्वा। अनन्तरं निकटम्। आतपत्रेण निवारितो दूरीकृत आतपो यस्य। आतपत्रं विशेषयन्नाह **राज्येति**–राज्यलक्ष्म्या निवासभूतं यत्पुण्डरीकं तद्वदाकृतिर्यस्य तद्वच्छोभमानेन। सदैव लक्ष्मीसांनिध्यादियमुत्प्रेक्षा। लक्ष्मीर्हि पद्मातपत्रेण सम्राजं सेवते इत्यागमः। सकलराजन्यकुलमेव कुमुदखण्डं कुमुद-

---

१ कल्माषितम्. २ अप्रमेयमश्व०,अश्वीयं. ३ ०णायासितहस्ताः, निवारणायायासिताः. ४ ०प्राहस. ५ संघट्टित. ६ निवासयोग्य.

कुलकुमुदखण्डचन्द्रमण्डलेनेव तुरंगमसेनास्रवन्तीपुलिनायमानेन क्षीरोदफेनधवलितवासुकिफणामण्डलच्छविना स्थूलमुक्ताकलापजालकावृतेनोपरि चिह्नीकृतं केसरिणमुद्वहतातिमहता कार्तस्वरदण्डेन ध्रियमाणेनातपत्रेण निवारितातप उभयतः समुद्धूयमानचामरकलापपवननर्तितकर्णपल्लवः पुरःप्रधावता तरुणवीरपुरुषप्रायेणानेकसहस्रसंख्येन पदातिपरिजनेन जय जीवेति च मधुरवचसा मङ्गलप्रायैमनवरतमुच्चैः पठता बन्दिजनेन स्तूयमानो नगराभिमुखः प्रतस्थे ।

क्रमेण च तं समासादितविग्रहमनङ्गमिवावतीर्णं नगरमार्गमनुप्राप्तमवलोक्य सर्व एव परित्यक्तसकलव्यापारो रजनिकरोदयपरिवृध्यमानकुमुदवनानुकारी जनः समजनि । सत्यस्मिन्संप्रति मुखकुमुदकदम्बकाविकृताकृतिः कार्तिकेयो विडम्बयति कुमारशब्दम् । अहो वयमतिपुण्यभाजो यदिमाममानुषीमस्याकृतिमन्तःसमारूढप्रीतिरसनिष्पन्दविस्तारितेन कुतूहलोत्तानितेन लोचनयुगलेनानिवारिताः पश्यामः । सफला नोद्य जाता जन्मवत्ता । सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय । इति वदन्नारचितप्रणामाञ्जलिर्नगरलोकः प्रणनाम । सर्वतश्च समुपावृतकपाटपुटप्रकटवातायनसहस्रतया चन्द्रापीड-

वनं तस्य चन्द्रमण्डलेनेव । छत्रेण राजचिह्नेन हि राजन्या उल्लसितमुखा भवन्तीति भावः । **तुरंगेति** तुरंगसेना एव स्रवन्ती नदी तस्याः पुलिनं सैकतमिवाचरता । 'अत्र विततगहनगाम्भीर्यादिगुणवत्वादश्वसेनाया नद्युपमानम्' । इति भानु० । क्षीरोदफेनः मन्थनकाले क्षीरसागरोत्पन्नो यः फेनोब्धिकफः । कार्तस्वरदण्डेन सुवर्णदण्डयुक्तेन ध्रियमाणेन सेवकेनेति शेषः । ०नर्तिताः कर्णस्थितपल्लवा यस्य । जय जीवेति आलोकशब्दमुच्चारयतेत्यर्थः । 'आलोको जयशब्दः स्यात्' इति विश्वः । **क्रमेणेति**—नगरमार्गमनुप्राप्तं तं समासादितविग्रहं लब्धशरीरमवतीर्णं गृहीतावतारमनङ्गमिवावलोक्येति योजना । **रजनीति**—परिबुध्यमानं विकसत् । हर्षोत्फुल्लवदनाम्बुजा बभूवुरित्यर्थः । **सतीति**—मुखान्येव कुमुदानि तेषां कदम्बकं तेन विकृता बीभत्सा आकृतिः स्वरूपं यस्य । तस्य षण्मुखत्वात् । कुमारशब्दम्—कौ पृथिव्यां मारो मदनः कुमारः कुत्सितो मारो यस्मादिति वा । मदनमपि सौन्दर्येणातिशयान इत्यर्थः । वस्तुतो मदनतुल्यशरीरेऽस्मिन्सति षण्मुखतया विकृताकृतिर्महासेनः कुमार इत्युच्यते इत्यहो कुमारशब्दविडम्बनमिति भावः । **अन्तरिति**—अन्तः समारूढो यः प्रीतिरसः प्रेमरसस्तेन निष्पन्दं स्पन्दनरहितं यथास्यात्तथा विस्तारितेन । निष्यन्देति पाठे निष्यन्देन क्षरणेन । उत्तानितेनोर्ध्वमुखेन । पुण्डरीकेक्षणो विष्णुः । **समुपेति**—समुपावृतानि समुद्घाटितानि कपाटपुटानि यस्यात एव प्रकटं वातायनसहस्रं यस्मि-

१ मुक्ताफलक. २ परिवृ. ३ प्रायालापम्. ४ ०मुखम्. ५ मुखकलापविडम्बन. ६ कपाटप्रकट. ७ वातायन.

दर्शनकुतूहलान्नगरमपि समुन्मीलितलोचननिवहमिवाभवत् । अनन्तरं च समाप्तसकलविद्यो विद्यागृहान्निर्गतोऽयमागच्छति चन्द्रापीड इति समाकर्ण्यालोकनकुतूहलिन्यः सर्वस्मिन्नेव नगरे ससंभ्रममुत्सृष्टार्धपरिसमाप्तप्रसाधनव्यापाराः काश्चिद्वामकरतलगतदर्पणाः स्फुरितसकलरजनिकरमण्डला इव पौर्णमासीरजन्यः काश्चिदार्द्रालक्तकरसपाटलितचरणपुटाः कमलपरिपीतबालातपा इव नलिन्यः काश्चित्ससंभ्रमगतिविगलितमेखलाकलापाकुलितचरणकिसलयाः शृङ्खलासंदानमन्दमन्दसंचारिण्य इव करिण्यः काश्चिज्जलधरसमयदिवसश्रिय इवेन्द्रायुधरागरुचिराम्बरधारिण्यः काश्चिदुल्लसितधवलनखमयूखपल्लवान्नूपुररवाकृष्टगृहकलहंसकानिव चरणपुटानुद्वहन्त्यः काश्चित्करतलस्थितस्थूलहारयष्टयो रतिमिव मदनविनाशशोकगृहीतस्फटिकाक्षवलयां विडम्बयन्त्यः काश्चित् पयोधरान्तरालगलितमुक्तालताः[2]स्तनुविमलस्रोतोजलान्तरितचक्रवाकमिथुना इव प्रदोषश्रियः काश्चिन्नूपुरमणिसमुत्थितेन्द्रायुधतया परिचर्[3]यानुगतगृहमयूरिका इव विराजन्त्यः काश्चिदर्धपीतोज्झितमणिचषकाः स्फुरितरागैर्मधुरसमिवाधरपल्लवैः क्षरन्त्यो हर्म्यतलानि ललनाः समारुरुहुः । अन्याश्च मरकतवातायनविवरविनिर्गतमुखमण्डला विकचकमलकोशपुटाम्बरतलसंचारिणीं कमलिनीमिव दर्शयन्त्यो ददृशुः ।

---

**स्तस्समु**•सहत्वं तस्य भावस्तत्ता तया । अत्र दर्शननिमित्तकत्वाद्वातायनान्येव नयनत्वेनोत्प्रेक्षितानि । **अनन्तरमिति**—अनन्तरं चन्द्रापीड आगच्छतीति समाकर्ण्यालोकनकुतूहलिन्यो ललना हर्म्यतलानि समारुरुहुरित्यन्वयः । ता एव वर्णयति—उत्सृष्टोऽर्धपरिसमाप्तः प्रसाधनव्यापारो नेपथ्यालंकाररचनादिकर्म याभिः । **वामेति**—अत्र वर्तुलत्वान्निर्मलत्वाच्च दर्पणं चन्द्रमण्डलस्थानीयम् । **कमलेति**—बालातपच्छुरितकमलाः । नलिन्य इत्यनेन तासां पद्मिनीत्वं ध्वनितम् । **ससंभ्रममिति**—ससंभ्रमगत्या विगलितो यो मेखलाकलापः काञ्चीदाम तेनाकुलिता व्याकुलीकृताश्चरणकिसलयाः पादपल्लवा यासां ताः । शृंखलया संदानं बन्धनम् । करिण्य इत्यनेन हस्तिनीत्वं सूचितम् । **इन्द्रेति**—इन्द्रायुधं शक्रधनुस्तस्य राग इव रागो येषामेवंविधानि रुचिराण्यम्बराणि वासांसि धारयन्त्यः । पक्षे इन्द्रायुधरागै रुचिरमम्बरमाकाशं धारयन्त्यः । उल्लसिताः स्फुरिता उज्ज्वला इत्यर्थः । धवला नखमयूखाः पल्लवा इव येषां तान् । हारयष्टिर्मौक्तिकावलिः । गलिता स्रस्ता मुक्तालता मुक्ताहारो यासां ताः । तन्वल्पं विमलं यत् स्रोतोजलं नद्यादिप्रवाहजलं तेनान्तरितानि व्यवहितानि चक्रवाकमिथुनानि यासु ताः । अर्धपीता उज्झिताश्च मणिचषका रत्ननिर्मितमधुपानपात्राणि याभिः । मधुपानात् स्फुरितेति । **मरकतेति**—अत्र मरकतवातायनानां नैल्यसाम्यान्मुखानां च विकचकमलसाम्यादाकाशकमलिन्युपमानम् ।

---

१ मुक्ताहार. २ लताविमल. ३ परिचर्या. ४ पुटाम्बर.

उदपादि च सहसा सरभससंचलनजन्मा मधुरसारणास्फालितवीणारवको-लाहल[1]बहलो रसनारवाहूतगृहसारसरसितसंभिन्नः स्खलितचरणतलताडितसोपा[2]-नजातगम्भीरध्वनिप्रहृष्टानामवरोधशिखण्डिनां केकारवैरनुगम्यमानो नवजलधरर-वभयचकितकल[3]हंसकोलाहलकोमलो मकरध्वजविजयघोषणानुकारी परस्परवि-घट्टनारणिततार[4]तरहारमणीनां रमणीनां श्रोत्रहारी हर्म्यकुक्षिषु प्रतिरवनि-ह्रादी भूषणनिनादः ।

मुहूर्तादिव युवतिजननिरन्तरतया नारीमया इव प्रासादाः सालक्तकपदक्रम-लविन्यासैः पल्लवमयमिव क्षितितलमङ्गनानामङ्ग[5]प्रभाप्रवाहेण लावण्यमयमिव नगरमाननमण्डलनिवहेन चन्द्रबिम्बमयमिव गगनतलमातपनिवारणायोत्तानित[6]-करतलजालकेन कमलवनमयमिव दिक्चक्रवालमाभरणांशुक[7]लापेनेन्द्रायुधमय इवातपो लोचनमयूखलेखासंतानेन नीलोत्पलदलमय इव दिवसो बभूव । कौतु-कप्रसारितनिश्चललोचनानां च पश्यन्तीनां तासामादर्शमयानीव सलिलमयानीव स्फटिकमयानीव हृदयानि विवेश चन्द्रापीडाकृतिः ।

आविर्भूतमदनरसानां चान्योन्यतः सपरिहासाः सविश्रम्भाः ससंभ्रमाः सेर्ष्याः सोत्प्रासाः साभ्यसूयाः[8] सविलासाः समन्मथाः सस्पृहाश्च तत्क्षणं र[10]मणीयाः प्रसस्रुरालापाः । तथा हि । त्वरितगमने मामपि प्रतिपालय ।

---

**उदपादीति**–ततो भूषणरवः सहसोदपादि । तमेव वर्णयति–**मधुरेति**—मधुरा या सारणाङ्गु-लिचालनं तया आस्फालिता वादिता । सारणासु तन्त्रीषु इति वा । ०संभिन्नो मिश्रः । स्खलिता विपर्यासपतिता ये चरणास्तेषां तलैस्ताडितं यत्सोपानजातमारोहणपरम्परा तस्मात् । सोपानाज्जात इति वा यो गम्भीरध्वनिस्तेन प्रहृष्टानाम् । कोलाहलवत् कोमलो मृदुलो मधुरो वा । परस्परं या विघट्टना संघर्षस्तया रणिताः शब्दितास्तारतरा अतिस्थूला विशुद्धा वा हारमणयो यासाम् । तारतराः—'आकरशुद्धोद्भवा अतिरमणीयाः' इति भानु० । हर्म्यकुक्षिषु प्रासादाभ्यन्तरेषु । प्रतिरवनिह्रादी प्रतिध्वनिमनोहरः । **मुहूर्तेति**—निरन्तरतया सान्द्रतया । लावण्यमयंलावण्य-लक्षणम्—'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' ॥ इति **कौतुकेति**–कौतुकात्प्रसारिते निश्चले च लोचने यासाम् । मदनरसः कामाविर्भावः । परिहासो नर्मकेलिरूपहासक्रीडा । ससंभ्रमाः ससंवेगाः ससाध्वसा वा । ईर्ष्या परोत्कर्षासहिष्णुत्व-

---

१ कोलाहलः. २ मणिसोपान. ३ हंसकुल. ४ तारहार. ५ अङ्गनाङ्गप्रभा. ६ नितेन. ७ शुक-कला. ८ साभ्यसूयालोचन. ९ अन्योन्यम्. १० अति–अभि–रमणीयाः

दर्शनोन्मत्ते गृहाणोत्तरीयम् । उल्लासयालकलतामाननावलम्बिनीं मूढे । चन्द्रलेखामुपाहर उपहारकुसुमस्खलितचरणा पतसि मदनान्धे । संयमय मदनिश्चेतने केशपाशम् । उत्क्षिप चन्द्रापीडदर्शनव्यसनिनि काञ्चीदामकम् । उत्सर्पय पापे कपोलदोलायितं कर्णपल्लवम् । अहृदये गृहाण निपतितं दन्तपत्रम् । यौवनोन्मत्ते विलोक्यसे जनेन स्थगय पयोधरभारम् । अपगतलज्जे शिथिलीभूतमाकलय दुकूलम् । अलीकमुग्धे द्रुततरमागम्यताम् । कुतूहलिनि देहि दर्शनान्तरम् । असंतुष्टे कियदालोकयसे । तरलहृदये परिजनमपेक्षस्व । पिशाचि गलितोत्तरीया हस्यसे जनेन । रागावृतनयने पश्यसि न सखीजनम् । अनेकभङ्गिविकारपूर्णे दुःखमकारणायासितहृदया जीवसि । मिथ्याविनीते किं व्यपदेशवीक्षितैर्विश्रब्धमालोकय । यौवनशालिनि किं पीडयसि पयोधरभारेण । अतिकोपने पुरतो भव । मत्सरिणि किमेकाकिनी रुणत्सि वातायनम् । अनङ्गपरवशे मदीयमुत्तरीयांशुकमुत्तरीयतां नयसि । रागासवमत्ते निवारयात्मानम् । उज्झितधैर्ये किं धावसि गुरुजनसमक्षम् । उल्लसत्स्वभावे किमेवमाकुलीभवसि । मुग्धे निगूहस्व मदनज्वरजनितपुलकजालकम् । असाध्वाचरणे किमेवमुत्ताम्यसि । बहुविकारे विविधाङ्गभङ्गवलनायासितमध्यभागा वृथा खिद्यसे । शून्यहृदये स्वभवनान्निर्गतमपि नात्मा-

---

लक्षणा । उत्प्रासो वितर्क उपहासो वा । अभ्यसूया गुणेषु दोषारोपणम् । विलासो व्याख्यातः । दर्शनेनोन्मत्ते उन्मादिते । उत्तरीयमुपरिवस्त्रमधः पतदिति शेषः । मुग्धे दर्शनेनाकिंचिज्ञे । उल्लासय उद्धान । चन्द्रलेखा अलिकाभरणम् । उपहारार्थं पूजार्थं कुसुमान्युपहारकुसुमानि । मदनिश्चेतने मदाद्गतचेतने । उत्सर्पयोर्ध्वं कुरु स्वस्थानं प्रापयेत्यर्थः । अहृदये असंवेदने । स्थगय वस्त्रेणाच्छादय । अलीकमुग्धे–त्वं मुग्धा नासि । चन्द्रापीडदर्शनकुतूहलाकुलहृदयैवासि । केवलं मिथ्यामुग्धत्वं प्रकटयसि । अत एव झटित्यागच्छेति भावः । दर्शनार्थमवकाशम् । परिजनेति तदनुरोधान्मा चिरं चन्द्रापीडमवलोकयन्ती भव । अन्यथा तव चाञ्चल्यं ज्ञातं स्यादिति भावः । पिशाचि सकामं परपुरुषदर्शनं पिशाचधर्मस्तच्छीले । रागः कामरागो दर्शनलालसा वा । अनेके ये भङ्गिविकाराः छलेन विभ्रमास्तैः पूर्णे । त्वमनेकभङ्गिपूर्णासीति ते सव्याजावलोकनाज्जानीमः । अत एवालं निजभावगोपनार्थं हृदयेनायासितेन । यथाभिलषितं पश्येति भावः । मिथ्याविनीते अलीकविनयवति । व्यपदेशवीक्षितैः सव्याजावलोकनैः । किं पीडयसि पयोधरभारेण मम पृष्ठदेशे संघट्टितेनेत्यर्थात् । निवारयात्मानमतिरागादिति शेषः । अन्यथा तव दुरवस्था स्यादिति भावः । उल्लसत्स्वभावे स्फुरन्मनोविकारे । असाध्वाचरणे चन्द्रापीडार्थमुत्ताम्यसि । नैतत्पतिव्रताया उचितमिति भावः । बहवो विकाराः शृंगारजा यस्यास्तत्सम्बुद्धिः । विविधा अङ्गभङ्गा गात्रविक्षेपा यस्मिन्नेवंविधेन

---

१ भागम्. २ नृपदर्शना०. ३ पिशाचिके. ४ रागमत्ते. ५ अङ्गभङ्ग०. विविधांगवलन.

नमवगच्छसि । कौतुकाविष्टे विस्मृतासि निश्वासितुम् । अन्तःसंकल्परचितसुरतसमागमसुखरसनिमीलितलोचने समुन्मीलय लोचनयुगलमतिक्रामत्ययम् । अनङ्गशरप्रहारमूर्छिते रविकिरणनिवारणाय कुरु शिरस्युत्तरीयांशुकपल्लवम् । अयि सतीव्रतग्रहगृहीते द्रष्टव्यमपश्यन्ती वञ्चयसि लोचनयुगलम् । अधन्ये हतासि परपुरुषदर्शनपरिहारव्रतेन । प्रसीदोत्तिष्ठ सखि पश्य रतिविरहितं साक्षादिव भगवन्तमगृहीतमकरध्वजं मकरध्वजम् । अयमस्य सितातपत्रान्तरेणालिकुलनीले शिरसि तिमिरशङ्कानिपतित इव शशिकरकलापो मालतीकुसुमशेखरोभिलक्ष्यते । एतदस्य कर्णाभरणमरकतप्रभाश्यामायितमुपरचितविकचशिरीषकुसुमकर्णपूरमिव कपोलतलमाभाति । अयमस्य हारान्तर्निविष्टारुणमणिकिरणकलापच्छलेन हृदयं विविक्षुरभिनवयौवनराग इव बहिः परिस्फुरति । एतदनेन चामरकलापान्तरैरित एव वीक्षितम् । एतत्किमपि वैशम्पायनेन सह समामन्त्र्य दशनमयूखलेखाधवलीकृतदिक्चक्रवालं हसितम् । एषोस्य शुकपक्षातिहरितरागेणोत्तरीयांशुकप्रान्तेन बलाहकस्तुरंगखुरचलनजन्मानमालग्नमग्रकेशेषु रेणुमपहरति । अयमनेन लक्ष्मीकरकमलकोमलतलः समुत्क्षिप्य तिर्यक्तुरंगमस्कन्धे निक्षिप्तश्चरणपल्लवः । सलीलमयमनेन च ताम्बूलयाचनार्थमुत्तानिततलो दीर्घाङ्गुलिराताम्रपुष्करकोशशोभी गजेनेव शैवाल[illegible]लालसः प्रसारितः करः । धन्या सा या लक्ष्मीरिव

---

वलनेनायासितो मध्यभागो यया । कौतुकाविष्टे कुतूहलाक्षिप्तचित्ते । अन्तःसंकल्पेन मनोरथेन रचितो यः सुरतसमागमस्तस्मायत्सुखमि॰ । अतिक्रामति दृष्टिपथाद्बहिर्याति । **सतीति**—सतीव्रतं पातिव्रत्यं स्वपतिव्यतिरिक्तपुरुषादर्शनरूपं तदेव ग्रहस्तेन गृहीते ग्रस्ते । परपुरुषाणां परपुरुषैर्वा दर्शनं तस्य परिहार एव व्रतं तेन । **अगृहीतेति**—अगृहीतो मकरलाञ्छितो ध्वजो येन । **अयमिति**—अयं मालतीकुसुमशेखरः शशिकरकलाप इव सितातपत्रान्तरेण आतपत्रयष्ट्यन्तरात् दृश्यते । तिमिरस्य शशिकरविनाश्यत्वात्तद्विनाशाय निपतित इवेत्युत्प्रेक्षा । कर्णाभरणे कर्णाभरणभूतं वा यन्मरकतं हरिन्मणिस्तस्य प्रभया श्यामायितं श्यामतामापादितमत एव उपरचितः कुसुममेव कर्णपूरो यत्र । तथा भूतमिव । **हारेति**—अरुणमणयः पद्मरागाः । नायं पद्मरागमणीनां किरणसमूहः किंतु तन्मिषेण हृदयं विविक्षुरभिनवयौवनरागः किमयं बहिः स्फुरतीत्युत्प्रेक्षा । चामरकलापान्तरैस्तदन्तरावकाशात् । तुरङ्गखुराणां चलनाज्जन्म यस्य तं चलनोत्थमित्यर्थः । उत्तानितं तलं यस्य । **आताम्रेति**—आ ईषत्ताम्रो यः पुष्करकोशः कमलकोशस्तद्वच्छोभत इत्येवंशीलः । पक्षे पुष्करकोशः शुण्डाग्रपुटम् । करो हस्तः शुण्डा च ।

---

१ रति. २ दर्शनमनेन. ३ अलकचामरकलापान्तरैरितविरलवीक्षितं, अनेकचामरकलापान्तरितमस्य वीक्षितम्. ४ धवलित. ५ कोमलदीर्घाङ्गुलिः. ६ वाञ्छया.

निर्जितकमलं करतलमस्य वसुंधरासपत्नी ग्रहीष्यति । धन्या च देवी विलासवती सकलमहीमण्डलभारधारणक्षमः ककुभा दिग्गज इव गर्भेण यथायं व्यूढः ।

इत्येवंविधानि चान्यानि च वदन्तीनां तासामापीयमान इव लोचनपुटैराहूयमान इव भूषणरवैरनुगम्यमान इव हृदयैर्निबध्यमान इवाभरणरत्नरश्मिरज्जुभिरुपह्रियमाण इव नवयौवनबलिभिः शिथिलभुजलताविगलितधवलवलयानिकरैः पदे पदे विवाहानल इव कुसुममिश्रैर्लाजाञ्जलिभिरवकीर्यमाणश्चन्द्रापीडो राजकुलसमीपमाससाद । क्रमेण च यामावस्थिताभिरनवरतकरटस्थलगलितमदमसीपङ्ककरीभिरञ्जनगिरिमालामलिनाभिः कुञ्जरघटाभिरन्धकारितादिङ्मुखतया जलधरदिवसायमानमुद्दण्डधवलातपत्रसहस्रसंकटमनेकद्वीपान्तरागतदूतशतसमाकुलं राजद्वारमासाद्य तुरंगमादवततार ।

अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमानमार्गस्त्रिभुवनमिव पुञ्जीभूतम्, आगृहीतकनकवेत्रलतैः सितवारबाणधारिभिः सिताङ्गरागैः सितकुसुमशेखरैः सितोष्णीषैः सितवेष-

वसुन्धरायाः सपत्नी सती सपत्न्यन्तरविरहितेत्यर्थ । **सकलेति**—दिग्गजोपि तथा । व्यूढो धृतः । उपह्रियमाणोर्च्यमाणः । नवयौवनान्येव बलयः पूजोपहारास्तैः । **शिथिलेति**—शिथिला मनोविकारदर्शनश्लथा या भुजलतास्ताभ्यो विगलितानि धवलानि रजतमयानि हीरकनिर्मितानि वा यानि बलयानि तेषां निकराः समूहा येषु तैः । लाजाञ्जलिभिः—राजा हि पुरःप्रवेशे अङ्गनाभिर्लाजाञ्जलिभिरवकीर्यते इत्याचारः । एवं रघुवंशेपि—' अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः' । इति 'आचारलाजैरिव पौरकन्याः' इति च । यामावस्थिताभिः यामे यामे प्रतिप्रहरं सेवार्थमवस्थिताभिः । प्रतियामं राजभवने सज्जतया कुञ्जराणामवस्थापनं तत्कालिकः प्रचारः । यामः संयमो वा । बद्धाभिरित्यर्थः । अनवरतं करटस्थलाद्गण्डस्थलाद्गलितो यो मदः स एव मसीपङ्को मलिनाम्बुकर्दमः । ' मलिनाम्बु मषी मसी ' इति हैमः । तं कुर्वन्तीत्येवंशीलाभिः । मालावन्मलिनाभिः मलीमसाभिः । उद्दण्डैरुन्नतदण्डैर्धवलातपत्रसहस्रैः संकटं संकुलम् । **अवेति**-अवतीर्य च करतलेन करे वेशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमानमार्गो राजकुलं राजगृहं प्रविवेशेति दविष्ठेनान्वयः । ' कुलं गृहेपि तालाङ्के कुबेरे चैव कुण्डले । 'इत्यनेकार्थः । राजकुलमेव विशेषयन्नाह—आगृहीताः कनकवेत्रलताः सुवर्णपत्रवेष्टिता वेत्रयष्ट्यो यैस्तैः । सितं धवलं वारबाणं धारयन्तीति तैः । वारबाणश्चोल्काकृतिः सन्नाहः । बाणं वारयति वृणोति वा वारबाणः । मयूरव्यंसकादित्वात्, राजदन्तादित्वात्, वा परनिपातः । यद्वा वारमाच्छादकं वानमस्य । ' कञ्चुको वारबाणोऽस्त्री ' इत्यमरः । उष्णीषः शिरो-

१ शिथिलित. २ निकरे. ३ मदमषीकरीभिः, मसीपट्टधराभिः. ४ सितवारवाणैः.

परिग्रहतया श्वेतद्वीपसंभवैरिव कृतयुगपुरुषैरिव महाप्रमाणैर्दिवानिशमालिखितैरिवो-त्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम्, अनेकसंजवनचन्द्र-शालिकाविटङ्कवेदिकासंकटशिखरैरभ्रंकषैरपहसितकैलासशैलशोभैरमलसुधावदातैः सप्रालेयशैलमिव महाप्रासादैरनेकवातायनविवरविनिर्गतयुवतिभूषणकिरणसहस्र-तया कनकशृङ्खलाजालकेनेवोपरि वितितेन विराजमानम्, अन्तर्गतायुधनिव-हाभिराशीविषकुलसंकुलाभिः पातालगुहाभिरिवातिगम्भीराभिरायुधशालाभिरुपेतम्, अबलाचरणालक्तकरसरक्तमणिशकलैः शिखरनिलीनशिखिकुलकृतकेकारवकल-कलैः क्रीडापर्वतकैरुपशोभितम्, उज्ज्वलवर्णकम्बलावगुण्ठितकनकपर्याणाभिः प्रलम्बचामरकलापचुम्बितचलकर्णपल्लवाभिः कुलयुवतिभिरिवोपरूढशिक्षाविनयनि-भृताभिर्यामकरेणुकाभिरशून्यकक्षान्तरम्, आलानस्तम्भनिषण्णेन नवजलधरघोष-गम्भीरमनुगतवीणावेणुरवरम्यमास्फालितघर्घरिकाघर्घरमनवरतसंगीतमृदङ्गध्वनिमा-मीलितलोचनत्रिभागेण वामदशनकोटिनिषण्णहस्तेन निश्चलकर्णतालेनाकर्णयता

---

वेष्टनम् । कृतयुगपुरुषैरिव **महाप्रमाणैरत्युच्चैः** । तोरणो बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । तत्र ये स्तम्भास्तत्र निषण्णैस्तदवष्टम्भेनावस्थितैरित्यर्थः । पुनः प्रासादैर्देवभूभुजां गृहैः सप्रालेयशैलं सहिमगिरींव शोभमानम् । कीदृशैः प्रासादैरित्याह—अनेकानि संजवनानि चतुःशालानि चन्द्रशालिकाः शिरोगृहाणि । 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि ।' इति रभसः । विटङ्काः कपोतपालिकाः । वेदिका उपवेशनार्थं कृता उन्नतप्रदेशाः ताभिः संकटानि संकुलानि शिखराणि येषाम् । अभ्रंकषैरभ्रंलिहैः । पुनश्च विराजमानं कथं **अनेकेति** । आशिषि विषं येषां ते आशीविषाः सर्पाः । **उज्ज्वलेति**—उज्ज्वलैर्वर्णकम्बलैश्चित्रवर्णै रल्लकैरवगुण्ठि-तान्याच्छादितानि कनकपर्याणानि सुवर्णपल्ययनानि यासाम् । **उपरूढेति**—उपरूढा या शिक्षा संज्ञादिज्ञानं विनयः साधुवाह्यत्वं ताभ्यां निभृताभिर्निश्चलाभिः सम्पन्नाभिरिति वा । पक्षे उपरूढौ शिक्षाविनयौ ताभ्यां निभृताभिर्मर्यादावतीभिः । **आलानेति**—आलानस्तम्भो बन्धनस्तम्भ-स्तत्र निषण्णेन गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम् । अथ गजमेव विशिनष्टि—नवेत्यादिना । ०घोषवद्गम्भीरम् । अनवरतं यत्संगीतं तत्र यो मृदङ्गध्वनिस्तं सलीलमाकर्णयता । तत्प्रकारमाह—**आमीलितेति**—तृतीयो भागस्त्रिभागः । आमीलितेत्यन्तरात्मनः प्रसन्नतां दर्शयति । हस्तिनां स्वभाव एवायम् । हस्तः करः । अयमपि हस्तिनां स्वभाव एव । निश्चलः कर्णतालो विस्तृतकर्णो यस्य । अत्र तालशब्देन तालपत्रं लक्ष्यते । कर्णतालः कर्णास्फालनं वा । उभयपार्श्वे अवलम्बत इत्येवंशीलो वर्णकम्बलो यस्य तस्य भावस्तत्ता तया । आविष्कृतं धातु-

---

१ संयवन, संयमन. २ अपहसितसितकैलास०, उपहसितकैलासशिखरैः ३ विस्तीर्णेन, विताननेन. ४ प्रचल. ५ गर्जितघोष. ६ अनवरतमृदुमृदङ्ग अनवरतसङ्गीतमृदुमृदङ्गध्वनिमतिमनोहरं किंचिदामीलित.

सलीलमुभयपार्श्वावलम्बिवर्णकम्बलतया विन्ध्यगिरिणेवाविष्कृतधातुविचित्रितपक्षसंपुटेन आधोरणगीतानन्दकृतमन्द्रकण्ठगर्जितेन मदजलशबलशङ्खशोभितश्रवणपुटेन रजनिकरबिम्बचुम्बिसंवर्तकाम्बुदवृन्दविडम्बकेन कर्णावलम्बिना काञ्चनमयेन कृतकर्णपूरमिवाङ्कुशेन मुखमुद्वहता मदजलमलिनेन द्वितीयेनेव कर्णचामरेण कपोलतलदोलायमानेन मधुकरकुलेनालंक्रियमाणेन अत्युदग्रतया पूर्वकायस्यातिवामनतया च जघनभागस्य पातालादिव उत्तिष्ठता निशासमयेनेव परिस्फुरत्सार्धचन्द्रनक्षत्रमालेन शरदारम्भेणेव प्रकटितारुणचारुपुष्करेण वामनरूपेणेव कृतत्रिपदीविलासेन स्फटिकगिरितटेनेव लग्नसिंहमुखप्रतिमेन प्रसाधितेनेवालोलकर्णपल्लवाहतमुखेन गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम्, उज्ज्वलपट्टकम्बलपटप्रावारितपृष्ठैश्च रसितमधुरघण्टिकारवमुखरकण्ठैः मञ्जिष्ठालोहितस्कन्धकेसरबालैः वनगजरुधिरपाः—

---

भिर्गैरिकादिभिर्विचित्रितं पक्षसंपुटं यस्य । आधोरणा हस्तिपकाः । मदजलेन शबलः कल्माषो यः शङ्खो भालास्थि । 'शङ्खः कम्बौ न योषिता भालास्थिनिधिभिन्नखे ।' इति मेदिनी । तेन शोभितं श्रवणपुटं यस्य । संवर्तकाम्बुदाः कल्पान्ते वृष्टिकर्तारो मेघविशेषाः । तदुक्तं विष्णुपुराणे— 'ततो गजकुलप्रख्यास्तडिद्वन्तोऽभिनादिनः । उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्तका घनाः' ॥ इति । मदजलमलिनेन मधुकरसाम्यार्थमिदम् । कर्णश्चामरमिव । मधुकरेत्यनेन मदातिरेकः सूचितः । उदग्रतयोच्चतया । **परीति**—परिस्फुरन्ती देदीप्यमाना अर्धचन्द्रेण मणिखचितरूचकेन सह वर्तमाना नक्षत्रमाला आभरणविशेषो यस्मिन् । पक्षे सार्धचन्द्रा नक्षत्रमाला ताराव्यूहः । प्रकटितमरुणं रक्तं पुष्करं शुण्डाग्रं येन । पक्षे पुष्कराणि कमलानि । कृतः सुखावस्थितस्य गजस्य पदत्रयावस्थानं त्रिपदी तस्या विलासो येन । त्रिपदी पादबन्धनशृङ्खला वा । 'त्रिपदी पादबन्धनम्' इति यादवः । 'त्रिपदीछेदिनामपि' इति कालिदासः । तया विलासः क्रीडनं वा । लग्ना सिंहमुखा प्रतिमा दन्तबन्धो यस्य । 'प्रतिमा प्रतिरूपके । गजस्य दन्तबन्धे च' इत्यनेकार्थः । पक्षे लग्ना संक्रान्ता सिंहमुखस्य प्रतिमा यस्मिन् । प्रसाधितेनालंकृतेन । कर्णस्य पल्लवः कर्णः पल्लव इवेति वा । पक्षे कर्णे पल्लवः । पुनस्तदेव प्रकारान्तरेण विशेषयति उज्ज्वलेति— उज्ज्वला भासुरा ये पट्टकम्बलाः कृमिकोषोत्थसूत्रनिर्मिताः । "पट्ट इति प्रसिद्धा वा" इति भानु० । तेषां पटैः प्रावारितानि आच्छादितानि पृष्ठानि येषाम् । रसितानां रसितेन वा मधुरः कर्णसुखदो यो घण्टिकानां क्षुद्रघण्टानां रवस्तेन मुखरः कण्ठो येषाम् । मञ्जिष्ठया लोहिताः स्कन्धकेसराणां बालपल्लवाः केशविस्तरा येषाम् । 'पल्लवः किसले बले । विटपे विस्तरे' इति

---

१ पार्श्वप्रलम्बित. २ चुम्बित, चुम्बितावर्तक. ३ वृन्देति नास्ति क्वचित्. ४ कर्णान्तलम्बिना. ५ लोध्र. ६ प्रावृत, प्रावरित. ७ केशरवालैः, बहुपल्लवैर्निहतगज.

टलसटैरिव केसरिभिः पुरोनिहितयवसराशिशिखरोपविष्टमन्दुरापालैरासन्नमङ्गल-गीतध्वनिदत्तकर्णैरन्तःकपोलधृतमधुरसलुलितलाजकवलैर्भूपालवल्लभैर्मन्दुरागतैस्तुरंगमैरुद्भासितम्, अधिकरणमण्डपगतैश्चार्यवेषैरत्युच्चपेशलासनोपविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितम्, अधिगतसकलग्रामनगैरनामभिरेकभवनमिव-जगदखिलमालोकयद्भिरालिखितसकलभुवनव्यापारतया धर्मराजनगरव्यतिकरमिव दर्शयद्भिरधिकरणलेखकैरालिख्यमानशासनसहस्रम्, अभ्यन्तरावस्थितनरपति-निर्गमप्रतीक्षणपरेण च स्थानस्थानेषु बद्धमण्डलेन कनकमयार्धचन्द्रतारागणश-तशबलैश्चर्मफलकैर्निशासमयमिव दर्शयता स्फुरितनिशितकरवालकरप्ररोहकरा-लितातपेनैकश्रवणपुटघटितधवलदन्तपत्रेणोर्ध्वबद्धमौलिकलापेन धवलचन्दनस्था-सकखचितभुजोरुदण्डेन बद्धासिधेनुकेनान्ध्रद्रविडसिंहलप्रायेण सेवकजनेनास्था-नमण्डपगतेन च यथोचितासनोपविष्टेन प्रसारयता दुरोदरक्रीडाम्, अभ्यस्यता-ष्टापदव्यापारम्, आस्फालयता परिवादिनीमालिखता चित्रफलके भूमिपालप्रतिबि-

---

कोषः । अत एव वनगजेति । यवसं तृणम् । मन्दुरापाला वाजिशालावेक्षकाः । 'वाजिशाला तु मन्दुरा' इत्यमरः । अन्तःकपोलयोर्धृता मधुरसेन सह लुलिता हस्तेन मर्दिता लाजास्तेषां कवला गुडेरका येषाम् । **अधिकरणेति**—अधिक्रियन्ते जना अस्मिन्नित्यधिकरणं तस्य मण्डपो व्यवहारदर्शनसभा । 'धर्मशास्त्रविचारेण सारासारविवेचनम् । यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥' इति कात्यायनः । आर्यवेषैः सभ्यजनोचितनेपथ्यैः । **आलिखितेति**—आलिखितः सकलभुवनस्य व्यापारो व्यवहारस्तस्य भावस्तत्ता तया । **धर्मराजेति**—धर्मराजो यमस्तस्य नगरस्य व्यतिकरं व्यवहारम् । तत्रापि जगतोऽखिलस्य धर्माधर्मादीनां चित्रगुप्तेन लिपीकरणात् । 'धर्मराजो यमस्तस्य नगरं संयमनीति ख्यातं तस्माद्व्यतिकरमतिशयं दर्शयद्भिः । एतेन चित्रगुप्तलिखितोत्कृष्टलिपीकरणेन यमनगरापेक्षयाप्यत्र सातिशयत्वं सूचितम् ।' इति तु भानु० । शासनान्याज्ञापत्राणि । 'स्थानानि च स्थानानि च स्थानस्थानानि इति कर्मधारयस्तेषु' इति भानु० । **कनकेति**—कनकमया येऽर्धचन्द्रा अर्धचन्द्राकृतिचित्राणि तारागणश्च तेषां शतैः शबलानि तैः । स्फुरिता देदीप्यमाना निशितास्तीक्ष्णा ये करवालाः खड्गास्तेषां करप्ररोहैः किरणाङ्कुरैः करालितो दन्तुरित आतपो येन । घटित—निहित— । धवलचन्दनचर्चया खचितौ निरन्तरं व्याप्तौ भुजयोरुरुदण्डौ विपुलदण्डौ यस्य तेन । असिधेनुका छुरिका । अन्ध्रस्तिलङ्गः द्रविडो द्राविडदेशः सिंहलः सिंहलद्वीपम् । एतद्देशोद्भवाः प्रायेण बाहुल्येन सन्त्यस्मिन्निति तेन । **आस्थानेति**—इतः सामन्तविशेषणानि । दुष्टमासमन्तादुदरं यस्य । दुरोदरक्रीडां द्यूतक्रीडां प्रसारयता । अष्टापदः शारिफलम् । 'नयविटकमित्यन्ये' इति भानु० । तस्य व्यापारं क्रीडनम् । परिवादिनी वीणा । काव्यगोष्ठीं 'काव्यश्रवणार्थं स्वस्योपवेशनेन जनबन्धं कुर्वते-

---

१ रसलव०, मधुरसरस०. २ जम्बाल. ३ ग्रामकर्वटनगर, नगरखेटखर्वट, खेटकर्वट. ४ स्थाने स्थाने. ५ घटितानेकदन्त.

म्बमाबध्नता काव्यगोष्ठीमातन्वता परिहासकथां विन्दता बिन्दुमतीं चिन्तयता प्रहेलिकां भावयता नरपतिकृतकाव्यसुभाषितानि पठता द्विपदीं[1] गृह्णता कविगुणानुत्किरता[2] पत्रभङ्गानालपता वारविलासिनीजनमाकर्णयता वैतालिकगीतमनेकसहस्रसंख्येन धवलोष्णीषपटाश्लिष्टविकटकिरीटसंकटशिरसा सनिर्झरशिखरालग्नबालातपमण्डलेनेव कुलपर्वतचक्रवालेन मूर्धाभिषिक्तेन सामन्तलोकेनाधिष्ठितम्, आस्थानोत्थितभूमिपालसंवर्तितानां च कुथानां रत्नासनानां च राशिभिरनेकवर्णैरिन्द्रायुधपुञ्जैरिव विराजितसभापर्यन्तम्, अमलमणिभूमिसंक्रान्तमुखनिवहप्रतिबिम्बतया विकचकमलपुष्पप्रकरमिव संपादयता गतिवशरणितनूपुरपारिहार्यरस[3]नास्वनमुखरेण स्कन्धावसक्तकनकदण्डचामरेण निर्गच्छता प्रविशता चानवरतं वारविलासिनीजनेनाकुलितम्, एकदेशनिषण्णचामीकरशृङ्खलासंयतश्वगणम्[4], इतस्ततः प्रचलितपरिचितामितकस्तूरिकाकुरङ्गपरिमलवासितादिङ्मुखम्, अनेककुब्जकिरातवर्षवरबधिरवामनमूकसंकुलम्[5], उपाहृतकिंनरमिथुनम्, आनीतवनमानुषम्, आबद्धमेषकुक्कुटकुररकपिञ्जललावकवर्तिकायुद्धम्, उत्कूजितचकोरकादम्बहारीतकोकिलम्, आलप्यमानशुकसारिकम्[6], इभपतिमदपरिमलामर्षजृम्भितैश्च निष्कूजद्भिः शिखरिणां जीवितैरिव गिरिगुहानिवासिभिर्गृहीतैः पञ्जरकेसरिभिरुद्भास्यमानम्, उत्त्रास्यमानैः काञ्चनभवनप्रभाजनितदावानलशङ्कैर्लोलतारकैर्भवनहरिणकदम्बकैर्लोचनप्रभया शबलीकृतादिगन्तरम्, उद्दामकेकारवा-

त्यर्थः' इति भा०। विन्दता बिन्दुचिह्नैर्मूलपद्यमूहमानेनेत्यर्थः। प्रहेलिकालक्षणमुक्तम्। भावयता विचारयता। धवलोष्णीषपटाश्लिष्टं यद्विकटं विशालं किरीटं तेन संकटं संकीर्णं शिरो यस्य। अत एव सनिर्झरेति। अत्र धवलत्वेन निर्झरोष्णीषपटयोः साम्यं किरीटगतपद्मरागप्रभया च बालातपसाम्यम्। आस्थानोत्थितो यो भूमिपालस्तस्मात्संवर्तितानां संवेष्टितानाम्; पारिहार्याणि कङ्कणानि। आकुलितं संकटम्। **अनेकेति**—वर्षवराः षण्ढाः। 'ये त्वल्पसत्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' ॥ इति कामन्दक्यां तेषां लक्षणम्। किंनरमिथुनम्—कुत्सिता नराः किंनरास्तेषामश्वमुखत्वान्मनुष्यशरीरत्वाच्च। **आबद्धेति**—कुररादयो वर्तिकान्ताः पक्षिविशेषाः। आबद्धं पूर्वोक्तानां युद्धं यस्मिन्। उत्प्राबल्येन कूजिताश्चकोरा विषसूचकाः कादम्बाः कलहंसा हारीताः पक्षिविशेषाः। शुका इति केचित्। कोकिलाः परभृतो यस्मिन्। **इभेति** इभपतयो गजेन्द्रास्तेषामिभपतिर्गन्धगजो वा तस्य मदपरिमलेन योऽमर्षः क्रोधस्तेन जृम्भितैः संधुक्षितैः। निष्कूजद्भिर्घूर्णितैः गृहीतैर्गिरिगुहाभ्य इत्यर्थात्। उत्प्राबल्येन त्रास्यमानैस्त्रासं प्राप्यमाणैः। यतः कनकभवनप्रभया जनिता दावानलशङ्का येषाम्। उद्दाम उत्कटो यः केकारवस्तेनानुमीयमानं मरकतकुट्टिमस्थितं ०मण्डलं यस्मिन्।

१ द्विपदीः. २ उत्कीर्यता. ३ परिहार्य. ४ रव. ५ संयताश्व. ६ वर्षवर, बर्बरवर्षवर. ७ लालप्यमान.

नुमीयमानमरकतकुट्टिमास्थितशिखण्डिमण्डलम्, अतिशिशिरचन्दनविटपिच्छायानिषण्णानिद्रायमाणगृहसारसम्, अन्तःपुरेण च बालिकाजनप्रस्तुतकन्दुकपञ्चालिकाक्रीडेनानवरतसंवाह्यमानदोलाशिखरक्वणितघण्टाटंकारपूरिताशामुखेन भुजगनिर्मोकशङ्कितमयूरह्रियमाणहारेण सौधशिखरावतीर्णप्रचलितपारावतकुलतया स्थलोत्पलिनीवनशोभितेनेवान्तःपुरिकाजनप्रस्तुतनरपतिचरितविडम्बनक्रीडेनाश्वमन्दुरापरिभ्रष्टागतैरवलुप्तभवनदाडिमीफलैराखण्डिताङ्गणसहकारपल्लवैरभिभूतकुब्जवामनकिरातकरतलाच्छिन्नानि भूषणानि विकिरद्भिः कपिभिराकुलीकृतेन शुकसारिकाप्रकाशितसुरतविश्रम्भालापलज्जितावरोधजनेन प्रासादसोपानसमारोहचलितैरबलानां चरणावसक्तैर्मणिमयैः पदेपदे रणद्भिस्तुलाकोटिवलयैर्द्विगुणीकृतकूजितरुताभिर्भवनकलहंसमालाभिर्धवलिताङ्गणेन धृतधौतधवलदुकूलोत्तरीयैः कलधौतदण्डावलम्बिभिः पलितपाण्डुरमौलिभिराधारमयैरिव मर्यादामयैरिव मङ्गलमयैरिव गम्भीराकृतिभिः स्वभा-

---

पुनश्चान्तःपुरेणावरोधजनेन समुपेताभ्यन्तरम् । अन्तःपुरं विशिनष्टि **बालिकेति**—बालिकाजनेन प्रस्तुता कन्दुकानां गेन्दुकानां पञ्चालिकानां पुत्तलिकानां च क्रीडा यस्मिन् । 'पाञ्चालिका पुत्तलिका दण्डकाष्ठादिनिर्मिता ।' इति हलायुधः । 'पञ्चभिर्मृदादिमयीभिरल्पाभिर्गुलिकाभिर्द्यूतं पञ्चालिकोच्यते' इति भानु० । अनवरतं संवाह्यमानाह्रियमाणा संचाल्यमाना वा या दोला प्रेङ्खा तस्याः शिखरे क्वणिता या घण्टास्तासां टङ्कारेण पूरितमाशामुखं दिशां मुखं येन । भुजगनिर्मोकैः शङ्कितैर्मयूरैर्ह्रियमाणा हारा यस्य । सौधशिखरादवतीर्णं च तत्प्रचलितं च यत्पारावतकुलं तस्य भावस्तत्ता तया । **स्थलेति**—पारावतानां नीलत्वसाम्यात्कमलिन्युत्प्रेक्षा । अन्तःपुरिकाजनेन प्रस्तुता नरपतिचरितस्य विडम्बनमनुकारस्तस्य क्रीडा यस्मिन् । **अश्वेति**—अश्वमन्दुरायाः परिभ्रष्टाश्च ते आगताश्च तैः । 'अश्वानां दृष्टिदोषबाधनार्थमश्वशालायां कपयः स्थाप्यन्ते इति राज्ञामाचारः' । इति भानु० । आखण्डिताश्चूर्णिता अङ्गणे ये सहकारा अतिसौरभा आम्रास्तेषां पल्लवा यैः । अभिभूताः पराभूता ये कुब्जादयस्तेषां करतलेभ्य आच्छिन्नानि । कपित्रस्तानां कुब्जादीनां संरम्भस्तत्र तत्र वर्ण्यते कविभिः । एवं रत्नावल्याम्—नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपामित्यादि । आकुलीकृतेन कृतक्षोभेण । **शुकेति**—अयमपि शुकसारिकादीनां स्वभावस्तत्र तत्र वर्ण्यते कविभिः । तुलाकोटिवलयैः 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।' इत्यमरः । **धृतेति**—धृतं धौतं क्षालितं धवलं दुकूलमुत्तरीयं यैः । कलधौतं सुवर्णं रूप्यं वा तस्य दण्डावलम्बो विद्यते येषाम् । अतिवार्धक्यात्तदवष्टम्भेन स्थितैरित्यर्थः । आधारोवष्टम्भस्तन्मयैरिव । मर्यादा वर्णाश्रमधर्मस्थितिपालनं तन्मयैरिव । उष्णीषं शिरोवेष्टनं

---

१ वनेनेव...तेनान्तः०. २ भूतेन. ३ मणिमयैर्भिर्भूषणैः. ४ मालिका. ५ धवलीकृताजिरेण. ६ पलितपाक. ७ आचार. ८ विनयमयैरिव मर्यादा.

नधीरैरुष्णीषिभिर्वयःपरिणामेपि जरत्सिंहैरिवापरित्यक्तसत्त्वावष्टम्भैः कञ्चुकिभिरधिष्ठितेन समुपेताभ्यन्तरं,जलधरसनाथमिव कृष्णागुरुधूमपटलैः,सनीहारमिव यामकुञ्जरघटाकरसीकरैः,सनिशमिव तमालवीथिकान्धकारैः, सबालातपमिव रक्ताशोकैः, सतारागणमिव मुक्ताकलापैः, सवर्षासमयमिव धारागृहैः, सतडिल्लतमिव हेममयीभिर्मयूरयष्टिभिः, सगृहदैवतमिवं शालभञ्जिकाभिः, शिवभवनमिव द्वारावस्थितदण्डपाणिप्रतीहारगणम्, उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थसंचयम्,अप्सरोगणमिव प्रकटमनोरमारम्भं, दिवसकरोदयमिवोल्लसत्पद्माकरकमलामोदम्, उष्णकिरणमिव निजलक्ष्मीकृतकमलोपकारं, नाटकमिव प्रकटपताकाङ्कशो-

---

तद्विद्यते येषां तैः। वयःपरिणामे वार्धक्ये। **अपरीति**—अपरित्यक्तः सत्त्वं गुणविशेषः, मनसोऽविकार्यत्वं वा व्यवसायो वा तत्रावष्टम्भोवलम्बनं यैः। पक्षे अपरित्यक्तः सत्त्वानां जन्तूनामवष्टम्भ आक्रमणं यैः। 'सत्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः। पिशाचादावात्मभावे बले प्राणेषु जन्तुषु'॥ इति हेमचन्द्रः। कञ्चुकिभिः—एतल्लक्षणं ३५ पृष्ठे द्रष्टव्यम्। अधिष्ठितेनान्तःपुरेण समुपेतं युक्तमन्तरमन्तर्भागो यस्य। पुना राजकुलमेवप्रकारान्तरेण वर्णयति। नीहारस्तुषारः। धारागृहैः जलयन्त्रसनाथगृहैः। शालभञ्जिकाः पञ्चालिकाः। **शिवेति**—प्रतीहारगणः द्वाररक्षकगणः। पक्षे कुष्माण्डकादयो गणाः। **विविधेति**—विविधा ये वर्णा ब्राह्मणादयस्तैः श्रेणिभिश्च। 'एकमुख्यसजातीयसमूहः श्रेणिः' इति भानु०। प्रतिपाद्यमानो दीयमानोऽभिनवो नूतनोर्थसंचयो द्रव्यसमूहो यस्मिन्। पक्षे विविधा ये वर्णा अक्षराणि तेषां श्रेणिभिः पंक्तिभिः प्रतिपाद्यमानः स्फुटीक्रियमाणोभिनवोश्रुतपूर्वः। चमत्कृतिजनक इत्यर्थः। अर्थोभिधेयस्तस्य संचयो यस्मिन्। प्रकटा मनसो रमा मनोरमा आरम्भाः प्रारम्भा यस्मिन्। पक्षे प्रकटा मनोरमा रम्भा मनोरमा रम्भा चेति वा यस्मिन्। **उल्लसदिति**—उल्लसन्ति यानि पद्माकरेषु तटाकेषु कमलानि तेषामामोदः परिमलो यत्र। अभङ्गश्लेषः। यद्वा प्रथमपक्षे पद्मारूपाः करा राजदेयद्रव्याणि तैर्या कमला सम्पत्तिस्तया मोदो यस्मिन्। 'उल्लसन्तः पद्माकराः श्रीकारकाः शोभाकरा वा कमला हरिर्यविशेषा यस्मिन्'। इति भानु०। **निजेति**—निजलक्ष्मीकृतः स्वस्य लाञ्छनीकृतः कमलया वित्तत्यागेन उपकारो येन। निजौदार्यलब्धकीर्तिः इत्यर्थः। यद्वा निजलक्ष्म्या स्वराज्यसम्पत्त्या कृतः कमलमालमत्। जलं यथाऽविशेषेण सर्वांस्तोषयदेवोपकरोति तथा। उपकारः। अर्थिनामुपरीति शेषः। येन। यद्वा निजलक्ष्म्या कृतः कमलायाः श्रिय उपकारो निजलक्ष्म्याः सातत्यात्कमला चञ्चलेति दोषापमार्जनरूपो येन। पक्षे निजशोभया स्वदीप्त्या कृतः कमलानामुपकारो विकासरूपो येन तम्। **प्रकटेति**—प्रकटा उल्लसिता या पताका वैजयन्ती तस्या अङ्केन शोभितम्। पक्षे प्रकटा स्फुटा या पताका नाटकाङ्गविशेषः। अत्र भरतः—यद् वृत्तं हि परार्थं स्यात्प्रधानस्यो-

---

१ सजलजल. २ काव्यम्. ३ अनेकाभिनव. ४ ०रम्भाभोगम्.

भितं, शोणितपुरमिव बाणयोग्यावासोपेतं, पुराणमिव यथाविभागावस्थापितसकलभुवनकोशं, संपूर्णचन्द्रोदयमिव मृदुकरसहस्रसंवर्धितरत्नालयं, दिग्गजमिवाविच्छिन्नमहादानसंतानं, ब्रह्माण्डमिव सकलजीवलोकव्यवहारकारणोत्पन्नहिरण्यगर्भम्, ईशानबाहुवनमिव महाभोगिमण्डलसहस्राधिष्ठितप्रकोष्ठं, महाभारतमिवानन्तगीताकर्णनानन्दितनरं, यदुवंशमिव कुलक्रमागतशूरभीमपुरुषोत्तमबलपरिपा-

पकारकम् । प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ इति । 'प्रासङ्गिकं पराश्रय्य स्वार्थो यस्य प्रसङ्गतः । सानुबन्धं पताकाख्यम्' इत्युक्तलक्षणो वा । अङ्कः– प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इत्युक्तलक्षणः । ताभ्यां शोभितम् । शोणितपुरं बाणासुरस्य नगरम् । "तच्च 'देवीकोट' इति प्रसिद्धम्" इति भानु० । **बाणेति**—बाणः शस्त्राणामुपलक्षणम् । बाणादिशस्त्राणां योग्याऽभ्यासस्तदर्थमावासः गृहं तेनोपेतम् । पक्षे बाणस्तदाख्योऽसुरः । आवासः प्रासादः । **पुराणम्**—सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम् ॥ इत्युक्तलक्षणम् । **यथेति**–यथाविभागं व्ययानुरोधाद्विभज्य तत्र तत्रावस्थापितः सकलभुवनस्य कोशः द्रव्यसमूहो यस्मिन् । पक्षे यथाविभागं तत्तद्विभागानुरोधादवस्थापितो व्यवस्थापितः सकलभुवनकोशो भूमण्डलव्यापार इत्यर्थः येन । **मृद्विति**—मृदवोऽपीडाकराः ये कराः राजदेयद्रव्याणि तत्सहस्रेण संवर्धितानां रत्नानामालयो यस्मिन् । पक्षे मृदुकरसहस्रेण कोमलांशुसहस्रेण संवर्धितो वेलां ग्राहितो रत्नाकरः सागरो येन । महादानं महद्वितरणं तस्य संतानं सान्तत्यम् । पक्षे पृथुमदसंततिः । **सकलेति**–सकलजीवलोकस्य यो व्यवहारो विवादादिनिर्णयः स एव कारणं तस्मादुत्पन्नं हिरण्यं गर्भे यस्य । पक्षे सकलजीवलोकस्य प्राणिजातस्य व्यवहारो व्यापारः स्थितिर्वा । 'व्यवहारः स्थितौ पणे' इति हैमः । तस्य कारणेन स प्रवृत्तो भवेदिति । उत्पन्नः हिरण्यगर्भो यस्मिन् । तथा च श्रुतिः–हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत । स दाधार पृथिवीं द्यामुतेमाम्' इति । **ईशानेति**—ईशानः शिवः तस्य । आयतत्वाद्बहुत्वात्ताण्डव ऊर्ध्वीकृतत्वाच्च वनोपमानम् । **महेति**—महान् भोगः सुखं द्रव्यं वा । एषामस्तीति महाभोगिनो धनिका नृपा वा । 'भोगः सुखे धने चाहेः शरीरफणकाययोः ।' इति मेदिनी । तेषां मण्डलसहस्रैरधिष्ठितः प्रकोष्ठः कक्षान्तरं यस्मिन् । यद्वा महानाभोगः परिणाह एषामस्तीति महाभोगीनि । 'आभोगः परिपूर्णता' इत्यमरः । मण्डलानि पत्रलतादिशोभितानि वर्तुलानि तेषां सहस्रैरधिष्ठिताः प्रकोष्ठा कक्षान्तराणि यस्य । पक्षे महाभोगिनां महानागानां मण्डलसहस्रैरधिष्ठिताः प्रकोष्ठा मणिबन्धकूर्परान्तराणि यस्य । 'प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्' इति मेदिनी । **अनन्तेति**–अनन्तानां संख्यातीतानां गीतानामाकर्णनेनानन्दिता नरा यस्मिन् । पक्षे अनन्तः कृष्णस्तस्य गीताकर्णनेनानन्दितो नरोऽर्जुनो यस्मिन् । **यदुवंशम्**–यदुर्नाम ययातेः पुत्रो यस्माद्यादववंशः प्रवृत्तः । **कुलेति**—कुलक्रमेणागताः । मौला इत्यर्थः । ये शूरा भीमाश्चात

१ अवस्थित. २ अभ्यासित.

लितं, व्याकरणमिव प्रथममध्यमोत्तमपुरुषविभक्तिस्थितानेकादेशकारकाख्यातसंप्रदानक्रियाव्ययप्रपञ्चसुस्थितम्, उदधिमिव भयान्तःप्रविष्टसपक्षभूमिभृत्सहस्रसंकुलम्, उषानिरुद्धसमागममिव चित्रलेखादर्शितविचित्रसकलत्रिभुवनाकारं, बलियज्ञमिव पुराणपुरुषवामनाधिष्ठिताभ्यन्तरं, शुक्लपक्षप्रदोषमिव विततशशिकिरणकलापधवलाम्बरवितानं, नरवाहनदत्तचरितमिवान्तःसंवर्धितप्रियदर्शनराजदारिकागन्ध-

---

एव पुरुषोत्तमाः श्रेष्ठा वीरपुरुषास्तेषां बलेन परिपालितम्। पक्षे शूरो वसुदेवपिता भीमावरातिभयावहौ पुरुषोत्तमः कृष्णो बलो बलभद्रश्च तैः परिपालितम्। **प्रथमेति**—प्रथममध्यमोत्तमत्वेन या पुरुषविभक्तिः, अयं प्रथमः, अयं मध्यमगुण इत्यादिप्रकारेण पुरुषविभाजना तत्र स्थिता येऽनेके आदेशकारका नियोगिनस्तैराख्याता निर्दिष्टा या सम्यक्प्रकारेण दानक्रिया तस्यां यो व्ययः तस्य प्रपञ्चो विस्तारस्तत्र तेन वा सुस्थितम्। पक्षे प्रथमपुरुषो मध्यमपुरुष उत्तमपुरुष इति पाणिनिना कृतास्तिस्रः संज्ञाः। विभक्तयः प्रथमाद्याः। 'संख्यात्वव्याप्यसामान्ये शक्तिमान्प्रत्ययस्तु यः। सा विभक्तिर्द्विधा प्रोक्ता सुप् तिङ् चेति प्रभेदतः॥' इत्युक्तलक्षणा वा। तासु स्थिता आदेशाः। कस्यचिद्वर्णस्य स्थाने तद्विनाशपूर्वमन्यवर्णस्य प्राप्तिरादेशः। यथा त्रिशब्दस्य स्थाने स्त्रियां 'तिसृ' इत्यादेशः, 'अस्तेर्भूः' इत्यस्धातोः स्थाने 'भू' इत्यादेशः। कारकाणि कर्त्रादीनि। आख्यातानि भावप्रधानानि। 'भावप्रधानमाख्यातम्' इति निरुक्तम्। 'धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने। समर्थः स्वार्थयत्नस्य शब्दो वाख्यातमुच्यते'॥ इत्युक्तलक्षणानि वा। संप्रदानं चतुर्थीकारकम्। क्रिया—भाववचनम्। 'यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥' इत्युक्तलक्षणा वा। अव्ययानि 'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥' इत्युक्तलक्षणानि। इत्येतेषां प्रपञ्चस्तेन सुस्थितं सुघटितम्। **भयेति**—सपक्षाः सपरिच्छदा भूमिभृतो राजानः। पक्षे सपक्षाः पर्वताः। **उषेति**—उषा बाणासुरपुत्री, अनिरुद्धः प्रद्युम्नसुतः। **चित्रेति**—चित्रलेखाभिरालेख्यैर्दर्शितः इ०। पक्षे चित्रलेखा उषायाः सखी तयेत्यादि। चित्रलेखा किल स्वप्नदृष्टमनिरुद्धं प्रति सोत्कण्ठामुषामनिरुद्धज्ञानार्थं सकलं त्रिभुवनं चित्र आलिख्य दर्शितवती। तदुक्तं विष्णुपुराणे—ततः पटे सुरान्दैत्यान् गन्धर्वांश्च प्रधानतः। मनुष्यांश्चाभिलिख्यास्यै चित्रलेखाप्यदर्शयत्॥ इति। पुराणपुरुषा वृद्धाः। वामनाः खर्वाः। पक्षे पुराणपुरुषो वामनः पञ्चमावतारधारी विष्णुः। **विततेति**—विततशशिकिरणकलापवद्धवलं यदम्बरं वस्त्रं तस्य वितानं यस्मिन्। पक्षे कलापेन धवलमम्बरमाकाशमेव वितानं यस्मिन्। **अन्तरिति**—अन्तरन्तःपुरे संवर्धिताः प्रियदर्शना रमणीयालोका या राजदारिकास्ताभिर्गन्धर्वाणां दत्तोत्कण्ठा यस्मिन्। अनेन राजदारिकाणां गन्धर्वेभ्योऽपि सौन्दर्यातिशय उक्तः। पक्षे अन्तःसंवर्धिता प्रियदर्शना या राजदारिका राज्ञः सागरदत्तस्य पुत्री गन्धर्वदत्ता। तदुक्तं कथासरित्सागरे—राजा सागरदत्ताख्यो गन्धर्वाणामिहास्ति यः। तस्य गन्धर्वदत्ताख्या

---

१ दानापान. २ भयान्त. ३ धवलित. ४ वृन्तकथेव.

वेदत्तोत्कण्ठं, महातीर्थमिव सद्योनेकपुरुषप्राप्ताभिषेकफलं, प्राग्वंशमिव नानासवपात्रसंकुलं, निशासमयमिवानेकनक्षत्रमालालंकृतं, प्रभातसमयमिव पूर्वादिग्भागरागानुमेयामित्रोदयं, गान्धिकभवनमिव स्नानधूपविलेपनवर्णकोज्ज्वलं, ताम्बूलिकभवनमिव कृतलवलीलवङ्गैलाकङ्कोलपत्रसंचयं, प्रथमवेश्यासमागममिवाविदितहृदयाभिप्रायचेष्टाविकारं, कामुकजनमिव बहुचाटुसंलापसुभाषितरसास्वाददत्ततालशब्दं, धूर्तमंडलमिव दीयमानमणिशतसहस्रालंकरणकृतलेख्यपत्रसं-

---

सुतास्ति न्यक्कृताप्सराः ॥ तस्या नरवाहनवियोगात्तदर्थं उत्कण्ठा यस्मिन् । ' अन्तःसंवर्धिता प्रियदर्शनानाम्नी राजदारिका नरवाहनपुत्री गन्धर्वदत्तश्च तस्या गान्धर्वशिक्षोपाध्यायस्तयोश्चिरविरहितयोः समागमोत्कण्ठा यस्मिन् ' । इति भानु० । महातीर्थं वाराणस्यादि । अनेकपुरुषैः प्राप्तमभिषेकस्य देवताभिषेकस्य फलं दक्षिणारूपं यस्मिन् । पक्षे सद्यस्तत्कालं प्राप्तमभिषेकस्य स्नानस्य फलं पुनर्जन्मनिवृत्तिरूपमुक्तिलक्षणम् । उक्तं च कालिदासेन गङ्गायमुनासंगमं वर्णयता । ' समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् । तत्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ' इति । प्राग्वंशः हविःशालायाः प्राक्सदस्यादीनां स्थित्यर्थं गृहम् । ' प्राग्वंशः प्राग्हविर्गेहात् ' इत्यमरः । नानानेकविधानि यानि आसवपात्राणि मधुपानपात्राणि तैः संकुलम् । पक्षे आसवः सोमाभिषवस्तस्य पात्राणि । सवपात्राणि यज्ञपात्राणि जुहूपभृत्प्रभृतीनि वा तैराकुलं संकीर्णम् । नक्षत्रमाला—' सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः । ' इत्यमरः । पक्षे स्पष्टम् । **पूर्वेति**—' पूर्वदिशा पूर्वरीत्या भागेन एकदेशेन यो रागः स्नेहस्तेनाप्यनुमेयो मित्रस्य सुहृद उदयोऽभ्युन्नतिर्यस्मिन् । स्तोकसम्बन्धेन समागतानामपि सुहृदामतिगौरवम् । का कथा बहुसम्बन्धेनागतानामिति भावः ' । इति भानु० । पक्षे पूर्वदिग्भागरागेण लौहित्येनानुमीयमानो मित्रोदयो यस्मिन् । गन्धः पण्यमस्य इति गान्धिकः सुगन्धिद्रव्यविक्रयी । ' तदस्य पण्यम् ' इति ठक् । **स्नानेति**—स्नानानन्तरं केशानामनार्द्रतापादनार्थं धूपः, विलेपनं घृष्टचन्दनलेपः वर्णकपङ्करागः । ' वर्णकं चाथ विच्छित्तिः स्त्रीकषायोङ्गरागके । ' इति रभसः । तैरुज्ज्वलमित्युभयत्र समानम् । ताम्बूलिको नागवल्लीपत्रविक्रयकृत् । लवली सुरभिवल्लीविशेषः पत्रं जातिफलपत्रं ताम्बूलीपत्राणि वा तेषां संचयो यस्मिन्नित्यभङ्गश्लेषः । **अविदितेति**—अविदितो गाम्भीर्यादज्ञातो हृदयस्याभिप्रायो याभ्यस्तादृश्यश्चेष्टाश्चेष्टितानि विकाराश्च मुखभङ्गादयो यस्मिन् । पक्षे अपरिचयादविदितो हृदयाभिप्रायो यासु तादृश्यश्चेष्टाः कामचेष्टाः । विकारा भ्रूभङ्गादयश्च यस्मिन् । बहूनि चाटूनि प्रियवचनानि यस्मिन्नेतादृशः संलापो मिथोभाषणं तस्मिन्, सुभाषितरसास्वादश्च तस्मिन्दत्तः तालशब्दोभिमतार्थावबोधककरतलाहतिशब्दो यस्मिन् येन च । धूर्तमण्डलं द्यूतकारसमूहः । 'दीयमानं मणिशतसहस्रं यस्मिस्तादृगलंकरणं तत्र कृतो लेख्यपत्रसंचयो यस्मिन् । अवरोधजनस्य मध्ये यदलंकारादिकं प्रेष्यते दीयते वा तत्सर्वं

---

१ कंकोलि, कक्कोलि. २ प्रधान.

त्रयं, धर्मारम्भमिवाशेषजनमनःप्रह्लादनं महावनमिव विविधश्वापदद्विजोपघुष्टं, रामायणमिव कपिकथासमाकुलं, माद्रीकुलमिव नकुलालंकृतं, संगीतभवनमिवानेकस्थानावस्थापितमृदङ्गं, रघुकुलमिव भरतगुणानन्दितं, ज्योतिषमिव ग्रहमोक्षकलाभागनिपुणं, नारदीयमिवावर्ण्यमानराजधर्मं, यन्त्रमिव विविधशब्दरसलब्धास्वादं, मृदुकाव्यमिवानन्यचिन्तितस्वभावाभिप्रायावेदकं, महानदीप्रवाहमिव सर्वदुरितापहरं, धनमिव न कस्यचिन्न काङ्क्षणीयं, संध्यासमयमिव दृश्यमानचन्द्रापीडोदयं, नारायणवक्षःस्थलमिव श्रीरत्नप्रभाभासितदिगन्तं, बलभद्रमिव कादम्बरीरसविशेषवर्णनाकुलमति, ब्राह्मणमिव पद्मासनोपदेशदर्शित-

बहिःस्थैः लिपीक्रियते इति राजस्थितिः। पक्षे कृतो लेख्यसंचयो यैः। धूर्तैरपि सर्वं पत्रलेख्यपूर्वकं गृह्यते इति तदुपमानम्'। इति भानु०। **विविधेति**-श्वापदा गृहे रक्षिता व्याघ्रादयः, द्विजाः पक्षिणो ब्राह्मणा वा तैरुपघुष्टं सशब्दम्। पक्षे द्विजाः पक्षिण एव। माद्री पाण्डोर्द्वितीया पत्नी तस्याः कुलं संततिः। नकुलः सर्पारिः। पक्षे माद्रीसुतः। अनेकेषु स्थापितानि मृदोऽङ्गानि मृत्पुत्रिका इत्यर्थः यस्मिन्। पक्षे मृदङ्गा मुरजाः। भरताः शैलूषाः। पक्षे भरतः कैकयीतनयः। **ग्रहेति**-उद्धतानां शत्रूणां ग्रहः, मोक्षस्तेषां दण्डादिना मोक्षणम् एतद्रूपो यः कलाभागो नीतिशास्त्रैकदेशस्तस्मिन्निपुणा यस्मिन्। पक्षे ग्रह उपरागो मोक्षस्तस्मान्मुक्तिः, कलाः षोडश तासां भागाः परिच्छेदास्तेषु। यद्वा कला राशेरष्टादशशततमांशास्तद्रूपा भागास्तेषु निपुणम्। नारदीयं नारदपुराणम्। नारदनीतिस्तु प्रसिद्धैव। आवर्ण्यमानाः प्रतिपाद्यमाना राजधर्मा यस्मिन्नित्यभङ्गश्लेषः। यन्त्रं वीणादि वाद्यम्। विविधाः शब्दा रसाः शृङ्गारादयस्तेषां लब्ध आस्वादो येन। पक्षे विविधा ये शब्दास्तन्त्रीकण्ठोत्थिताः स्वरास्तत्तद्रागजनकास्तत्र यो रसस्तस्य लब्ध आस्वादो यस्मात्। मृदु मृदुवर्णयुक्तं वैदर्भरीत्या लिखितमित्यर्थः। यद्वा शृङ्गारप्रधानं काव्यम्। **अनन्येति**-अनन्यचिन्तितः अनन्यचिन्तागोचरः स्वभावोभिप्राय आशयश्च तयोरावेदकम्। पक्षे अनन्यचिन्तितोऽपूर्वः स्वस्यानन्यसाधारणः भावो रत्यादिरभिप्राय आशयश्चेति पूर्ववत्। महानदी गङ्गादिः। दुरितं दुष्टम् इतं गमनं दुराचार इत्यर्थः। पक्षे दुरितं पापम्। **दृश्यमानेति**-चन्द्रापीडो राजसूनुः तस्योदय उद्गमनं उत्कर्षो वा। पक्षे चन्द्र आपीडः सन्ध्यायाः शिरोभूषणमिव चन्द्रापीडस्तस्योदयः। 'पक्षे चन्द्रापीड ईश्वरः। सन्ध्यायां नृत्यविधानात्' इति तु भानुचन्द्रः। श्रीः संपत्तिः रत्नानि च। श्रीयुक्तानि शोभायुक्तानि रत्नानि श्रीरत्नानीति वा। पक्षे श्रीर्लक्ष्मीः, रत्नं कौस्तुभाख्यं तयोः इ०। 'श्रीर्वेषरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तौ' इति विश्वमेदिन्यौ। कादम्बरी प्रबन्धविशेषः। पक्षे वारुणी तस्या रसविशेषवर्णन आकुला मतिर्जनानां यस्मिन्। अत्र प्रच्छन्नं स्वप्रबन्धनाम अपि सूचितम्। **पद्मेति**-पद्मासनं एतल्लक्षणमुक्तं हठयोगप्रदीपिकायाम्-वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना कृत्वा कराभ्यां दृढम्। अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेदेतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते

१ कुला०. २ अन्य. ३ दुरितनाप. ४ ब्राह्मणम्.

भूमण्डलं, स्कन्दमिव शिखिक्रीडारम्भचञ्चलं, कुलाङ्गनाप्रचारमिव सर्वदोपजातशङ्कं, वेश्याजनमिवोपचारचतुरं, दुर्जनमिवापगतपरलोकभयम्, अन्त्यजजनमिवागम्यविषयाभिलाषम्, अगम्यविषयासक्तमपि प्रशंसनीयम्, अन्तकभटगणमिव कृताकृतसुकृतविचारनिपुणं, सुकृतमिवादिमध्यावसानकल्याणकरं, वासरारम्भमिव परिस्फुरत्पद्मरागारुणीक्रियमाणनिशान्तं, दिव्यमुनिमण्डलमिव कैलापिसनाथश्वेतकेतुशोभितं भारतसमरमिव कृतवर्मशिलीमुखचक्रसंभारभीषणं पातालमिव

इति । ' ऊरुमूले वामपादं पुनस्तु दक्षिणं पदम् । वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम् ॥' इत्युक्तलक्षणं वा । तस्योपदेशाय दर्शितं भूमिमण्डलं यस्मिन् । अनेन योगसाधनमुक्तम् । पद्मा राज्यलक्ष्मीस्तस्या आसनं स्थितिस्तदर्थमुपदेशो नीतिशास्त्रोपदेशस्तेन दर्शितं भूमण्डलं तद्व्यवहार इत्यर्थः यत्र । पक्षे पद्मासनो ब्रह्मा तस्योपदेशो वदस्तेन दर्शितं तदुक्तमार्गेण प्रतिपादितं भूमण्डलं येन । ब्रह्माणमिति पाठे पद्माया आसनमाधारभूतो विष्णुस्तस्योपदेशेन दर्शितं भूमण्डलं यस्मै । **शिखीति**—शिखिनां क्रीडा । पक्षे शिखिनः क्रीडा । स्कन्दस्य मयूरवाहनत्वादभङ्गश्लेषः । कुलाङ्गनाभिजाता स्त्री तस्याः प्रचारो वर्तनक्रमः । सर्वदा उपजाता शङ्का यस्मिन्नित्युभयत्र समानम् । सर्वदा सावधानमित्यर्थः । प्रथमपक्षे ' सर्वं ददातीति सर्वदः परमेश्वरस्तस्मादुपजाता शङ्का भयं यस्मिन् ' इति वा । उपचारेऽभ्यागतादीनां पूजने चतुरम् । पक्षे उपचारः सेवा तत्र चतुरम् । यद्वा परस्य रञ्जनार्थं यदसत्यादिभाषणं स उपचारस्तत्र चतुरम् । **अपेति**—परलोकः शत्रुजनः । पक्षे स्पष्टम् । अन्त्यजश्चाण्डालादिः । नीचजातिविशेषो वा । 'रजकश्चर्मकारश्च नटो व(बु)रुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः' ॥ इति अत्रिसं० । अगम्यः परैरतर्क्यो विषयो देशस्तस्याभिलाषो यत्र । अनेन राज्ञो निगूढमन्त्रत्वमुक्तम् । पक्षे अगम्योऽगम्यानां वा विषयाभिलाषो यस्मिन् यस्य वा । अन्त्यजैः संपर्कस्य निषिद्धत्वात् । उक्तं च कविनैतत् ' अपगतस्पर्शसंभोगसुखे कुले ' इति । अग्राह्य उपभोगानर्हः अगम्यानां वा विषयस्तदासक्तमपि प्रशंसनीयमिति विरोधः । अगम्याः परैरग्राह्या विषयास्तदासक्तमिति विरोधपरिहारः । अन्तकभटगणो यमदूतवर्गः । कृताकृतादि प्रजाजनस्य यमलोकं नीतानां जीवानां च । सुकृतम्—शोभनं कृत्यं, पक्षे पुण्यम् । **परीति**—परिस्फुरत्पद्मरागैररुणीक्रियमाणं लोहितीक्रियमाणं निशान्तं गृहं यस्मिन् । पक्षे पद्मानां कमलानां रागेणारुणीक्रियमाणो निशान्तो निशावसानं यस्मिन् । कलापिसनाथा मयूरचित्रयुक्ता ये श्वेताः केतवस्तैः शोभितम् । पक्षे कलापिना तन्नामकर्षिणा सनाथः सहितः श्वेतकेतुनामा देवर्षिर्यस्मिन् । कलापी, सनाथः श्वेतकेतुश्च त्रयोऽप्येते देवर्षयस्तैः । इति भानु० । **कृतेति**—कृतो यः वर्माणि कवचानि शिलीमुखा बाणाः चक्राणि च तेषां संभारस्तेन भीषणम् । पक्षे कृतवर्मा यदुवंश्यः क्षत्रियविशेषः । स हि भीमपराक्रम आसीत् । तदुक्तं हरिवंशे–'स्वयंभोजः स्वयंभोजाद् हृदिकः संबभूव ह । तस्य पुत्रा

१ अन्य. २ चित्रकलापि. ३ बाण. ४ तु५०.

महाकञ्चुकिसहस्राध्यासितं वर्षपर्वतसमूहमिवान्तःस्थितापरिमाणशृङ्गिहेमकूटं महाद्वारमपि दुष्प्रवेशमवन्तिविषयगतमपि मागधजनाधिष्ठितं स्फीतमपि भ्रमन्नग्नलोकं राजकुलं विवेश।

ससंभ्रमोपगतैश्च कृतप्रणामैः प्रतीहारमण्डलैरुपदिश्यमानमार्गः, सर्वतः प्रचलितेन च पूर्वकृतावस्थानेन दूरपर्यस्तमौलिशिथिलितचूडामणिमरीचिचुम्बितवसुधातलेन राजलोकेन प्रत्येकशः प्रतीहारनिवेद्यमानेन सादरं प्रणम्यमानः, पदे पदे चाभ्यन्तरविनिर्गताभिराचारकुशलाभिरन्तःपुरवृद्धाभिः क्रियमाणावतरणमङ्गलः भुवनान्तराणीव विविधप्राणिसहस्रसंकुलानि सप्तकक्षान्तराण्यतिक्रम्य अभ्यन्तरावस्थितम्, अनवरतशस्त्रग्रहणश्यामिकालीढकरतलैः करचरणलोचनवर्जमसितलोहजालकावृतशरीरैरालानस्तम्भैरिव गजमदपरिमललोभनिरन्तरनिलीनमधुकरपटलजटिलैः कुलक्रमागतैरुदात्तान्वयैरनुरक्तैर्महाप्राणतयातिकर्कशतया च दानवैरिवाशयाकारसंभाव्यमानपराक्रमैः

---

बभूवुर्हि सर्वे भीमपराक्रमाः। कृतवर्माग्रजस्तेषां शतधन्वा तु मध्यमः' ॥ इ०। तस्येत्यादि पूर्ववत्। महाकञ्चुकिनः सौविदल्लाः। पक्षे फणिनः। वर्षाणां चिह्नीभूता सीमाभूता वा पर्वता वर्षपर्वताः। ते च सप्त—'हिमवान्हेमकूटश्च निषधो मेरुरेव च। श्वेतः कृष्णश्च [चैत्रः कर्णी च] शृङ्गी च सप्तैते वर्षपर्वताः॥' इति हारावलिः। अन्तःस्थितमपरिमाणमपरिमितं यत् शृङ्गिहेम। 'अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः।' इत्यमरः। तस्य कूटानि राशयो यस्मिन्। पक्षे अपरिमाणानि शृङ्गाणि यस्य तादृशो हेमकूटो यस्मिन्। अपरिमाणौ शृङ्गिहेमकूटौ यस्मिन्निति वा। दुष्प्रवेशम्—परिहारपक्षे सुरक्षितत्वात्तथा। अवन्तिमगधदेशयोर्भिन्नत्वाद्विरोधः : परिहारस्तु मागधाः स्तुतिपाठका इत्यर्थात्। स्फीतं समृद्धम्। परिहारपक्षे नग्नलोका दिगम्बरा जैना बौद्धा वा। **सर्वत इति**-पूर्वं कृता अवस्थितिर्येन तदागमनं प्रतिपालयतेत्यर्थः। **दूरेति**—दूरात्पर्यस्ता आवर्जिता मौलयः शिरांसि किरीटानि वा तैः शिथिलिताश्चूडामणयः इ०। प्रतीहारनिवेद्यमानेन सनामग्रहणमावेद्यमानेन क्रियमाणपरिचयेनेत्यर्थः। आचारस्तत्तत्कालोचितकृत्यम्। अनवरतशस्त्रग्रहणेन या श्यामिका कार्ष्ण्यं तयालीढं व्याप्तं करतलं येषाम्। असितलोहमयस्तस्य जालकैः कञ्चुकैरावृतानि शरीराणि येषाम्। अत एवालानस्तम्भैर्गजबन्धनस्तम्भैरिव। ०लोभान्निरंतरं निलीनानां मधुकराणां पटलैर्जटिलैरावृतैः। महाप्राणता विपुलबलवत्वम्। कर्कशता साहसिकता कठोरता वा। 'स्यात्कर्कशः साहसिकः कठोरामसृणावपि'। इत्यमरः। आशयश्चित्ताभिप्रायः वक्षःस्थलं वा। आकारोभिप्रायानुरूपचेष्टा ताभ्यां संभाव्यमानः परा-

---

१ अपरिमित, शृङ्गी. २ चालित. ३ ०माननाम्ना. ४ प्रमाणतया. ५ अतिशयाकारैः, अतिशयाकार.

सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतम्, उभयतो वारविलासिनीभिश्चानवरतमुद्धूयमानधवलचामरम्, अमलपुलिनतलशोभिनि सुरकुञ्जरमिव मन्दाकिनीवारिणि हंसधवलशयनतले निषण्णं पितरमपश्यत् ।

आलोकयेति च प्रतीहारवचनानन्तरमतिदूरावनतेन चलितचूडामणिना शिरसा कृतप्रणाममेह्येहीत्यभिदधानो दूरादेव प्रसारितभुजयुगलः शयनतलादीषदुच्छ्वसितमूर्तिरानन्दजलापूर्यमाणलोचनः समुद्गतपुलकतया सीव्यन्निवैकीकुर्वन्निव पिबन्निव तं पिता विनयावनतमालिलिङ्ग । आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डी[illegible]मुत्तरीयमात्मैताम्बूलकरङ्कवाहिन्या सत्वरमासनीकृतमपनयेति शनैर्वद[illegible]न समुत्सार्य चन्द्रापीडः क्षितितल एव निषसाद । अनन्तरनिहिते चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत् । मुहूर्तमिव विस्मृतचामरोत्क्षेपनिश्चलानां वारविलासिनीनां साभिलाषैरनिलचलितकुवलयदलदामदीर्घैराजिह्मतरलतारशारैरवलुप्यमान इव दृष्टिपातैः स्थित्वा गच्छ वत्स पुत्रवत्सलां मातरमभिवाद्य दर्शनलालसा यथाक्रमं सर्वा जननीर्दर्शनेनानन्दयेति विसर्जितः पित्रा सविनयमुत्थाय निवारितपरिजनो वैशम्पायनद्वितीयोन्तःपुरप्रवेशयोग्येन राजपरिजनेनोपदिश्यमानवर्त्मान्तःपुरमाययौ ।

तत्र धवलकञ्चुकावच्छन्नशरीरैरनेकशतसंख्यैः श्रियमिव क्षीरोदकल्लोलैः समन्तात्परिवृतां शुद्धान्तान्तर्वंशिकैः, अतिप्रशान्ताकाराभिश्च कषायरक्ताम्बरधारिणीभिः संध्याभिरिव सकललोकवन्द्याभिः प्रलम्बश्रवणपाशाभिर्विदितानेककथावृत्तान्ताभिर्भूतपूर्वाः पुण्याः कथाः कथयन्तीभिरितिहासान्वाचयन्तीभिः पुस्तकानि

क्रमो येषां तैः । **आलोकयेति**—उच्छ्वसितोन्नमिता । सीव्यन् स्यूतिं कुर्वन् । पिण्डीकृतं संवेष्टितम् । विस्मृतश्चामरोत्क्षेपो याभिस्ता अत एव निश्चलाः । **अनिलेति**—अनिलेन वायुना चलितानां कुवलयानां दलदामवद्दीर्घैः । आजिह्मेषत्कुटिला तरला च या तारा तया शारैश्चित्रैः । सारेति पाठे तारैव सारं प्रधानं येषु तैः । अवलुप्यमान आपीयमानः । क्षीरोदो दुग्धोदधिः । अन्तर्वंशिकैः अन्तर्वंशोन्तर्गृहं तत्र नियुक्ता अन्तर्वंशिकाः । 'तत्र नियुक्तः' इति ठक् । 'संज्ञापूर्वकत्वान्न वृद्धिः' । यद्वा अन्तर्वंशोऽस्यास्तीति । 'अत इति ठनौ' इति ठन् । कषायेण रक्तेन । 'सुरभावपथे रक्ते कषायः' इति केशवः । रक्तं रञ्जितम् । श्रवणपाशः

१ आदरेणाभिदधानः. २ उल्लसित. ३ पुलककण्टकतया. ४ आत्मीयम्. ५ कुवलयदाम. ६ तरलतर. ७ लालसाम्. ८ नैक. ९ शुद्धान्तर्वंशिकैः. १० श्रुत.

दधतीभिर्धर्मोपदेशान्निवेदयन्तीभिर्जरत्प्रव्रजिताभिर्विनोद्यमानाम्, उपरचितस्त्रीवेष-भाषेण गृहीतविकटप्रसाधनेन वर्षधर[2]जनेन संसेव्यमानाम्, अनवरतविधूयमान-बालव्यजनकलापाम्, अङ्गनाजनेन च वसनाभरणकुसुमपटवासताम्बूलतालवृन्ता-ङ्गरागभृङ्गारधारिणा मण्डलोपविष्टेनोपास्यमानां पयोधराव[3]लम्बितमुक्तागुणामचलै[4]-द्वयमध्यप्रवृत्तगङ्गाप्रवाहामिव मेदिनीम्, आसन्नदर्पणपतितमुखप्रतिबिम्बामर्क-बिम्बप्रविष्टशशिमण्डलामिव दिवम्[5], समुपसृत्य मातरं ननाम।

सा तु तं ससंभ्रममुत्थाप्य सत्यप्याज्ञासंपादनदक्षे पार्श्वपरिवर्तिनि परिजने स्वयमेव कृतावतरणकौ[6] प्रस्नुतपयोधरक्षरत्पयोबिन्दुच्छलेन द्रवीभूय स्नेहाकुलेन निर्गच्छतेव[7] हृदयेनान्तःशुभशतान्यभिध्यायन्ती मूर्धन्युपाघ्राय तं सुचिरमाशिश्लेष। अनन्तरं च तथैव कृतयथोचितसमुपचारमाश्लिष्टवैशम्पायना स्वयमुपविश्य विनयाद् वनितले समुपविशन्तमाकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्सङ्गमारोपितवती। ससंभ्रम[8]परिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने चन्द्रापीडं पुनःपुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्। वत्स कठिनहृदयस्ते पिता येनेयमाकृतिरीदृशी त्रिभुवनलालनीया क्लेशम-

---

श्रवणपाली। जरत्प्रव्रजिताभिर्वृद्धपरिव्राजिकाभिः। विकटो विशालो विरूपो वा। वर्षधराः षण्ढाः। तल्लक्षणमुक्तम्। अनवरतं विधूयमानः बालव्यजनकलापश्चामरसमूहो यस्याः। **वसनेति**-पटवासः पिष्टातः। 'त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतश्चूर्णः। पटवासः प्रवरोयं मृगकर्पूरप्रबोधेन॥ इति वराह०। ताम्बूलं नागवल्लीदलवीटिका, तालवृन्तानि व्यजनानि, अङ्गरागो विलेपनं, भृंगारः कनकालुका। एतान्धरतीति धारी तेन। मण्डलेन मण्डलं कृत्वेत्यर्थः उपविष्टेन। पयोधरयोरवलम्बितो मुक्तागुणो मुक्ताहारो यस्याः सा ताम्। **अचलेति**—अचलसाम्यात्स्तनयोरत्युच्चत्वं मेदिनीसाम्याद्राज्ञ्याः सर्वसहत्वं च सूचितम्। गंगाप्रवाहसाम्यान्मुक्ताहारस्य विपुलत्वं च ध्वनितम्। अर्कबिम्बे प्रविष्टं शशिमण्डलं यस्याम्। एककलयावशिष्टश्चन्द्रो हि अमावास्यायां सूर्यमण्डलं प्रविशति इति शास्त्रकारा मन्यन्ते। **कृतावतरणेति**-कृतमवतरणमङ्गलं यया। प्रस्नुतौ क्षीराभिस्यन्दिनौ यौ पयोधरौ ताभ्यां क्षरत्स्रवद्यत्पयस्तस्य च्छलेन मिषेण। स्नेहाकुलेन स्नेहपरिप्लुतेन। मूर्धन्युपाघ्रायोत्तमाङ्गे चुम्बनं कृत्वा। कृतो यथोचित उपचारः प्रियवाग्व्यापारादिर्यस्मिन्कर्मणि तद्यथा तथा। उत्संगमारोपितवती अङ्के जग्राह। आसन्द्यां वेत्रासने। 'स्याद्वेत्रासनमासन्दी स्त्री' इति कोषः। त्रिभुवने लालनीया सस्नेहं पालनीया।

---

१ भारेण. २ वर्षवर. ३ पयोधरान्तराव०. ४ अचलमध्यस्रवत्०. ५ दिवसश्रियम्. ६ णमंगला णकापश्रुतपयो. ७ निर्गतेव. ८ ससंभ्रमम्.

तिमहान्तमियन्तं कालं लम्भिता। कथमसि सोढवानतिदीर्घामिमा गुरुजनयन्त्रणाम्। अहो बालस्यापि सतः कठोरस्येव ते महद्धैर्यम्। अहो विगलितशिशुजनक्रीडाकौतुकलाघवमर्भकस्यापि ते हृदयम्। अहो गुरुजनस्योपरि भक्तिरसाधारणा। सर्वथा यथा पितुः प्रसादात्समस्ताभिरुपेतो विद्याभिरालोकितोस्येवमचिरेणैव कालेनानुरूपाभिर्वधूभिरुपेतमालोकयिष्यामि। इत्येवमभिधाय लज्जास्मितावनतमात्ममुखप्रतिबिम्बगर्भे विकचकमलकृतकर्णपल्लवावतंस इव कपोले पर्यचुम्बदेनम्। एवं च तत्रापि नातिचिरमेव स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेनानन्दयामास। निर्गत्य च राजकुलद्वारावस्थितमिन्द्रायुधमारुह्य तथैव तेन राजपुत्रलोकेनानुगम्यमानः शुकनासं द्रष्टुमयासीत्।

यामावस्थितविविधगजघटासंकटमनेकतुरंगसहस्रसंबाधमपरिमितजनसमूहसहस्रसंमर्दसंकुलमेकदेशोपविष्टैः सहस्रशो निबद्धचक्रवालैरनेककार्यागतैर्दर्शनोत्सुकैः समन्ततो विविधशास्त्राञ्जनोन्मीलितबुद्धिलोचनैश्चीवरच्छद्मना विनयानुरागिभिर्धर्मपटैरिवावगुण्ठितैः शाक्यमुनिशासनपथधौरेयै रक्तपटैः पाशुपतैर्द्विजैश्च दिवानि-

---

लम्भिता प्रापिता। यन्त्रणा नियमनम्। कठोरः प्रौढः। विगलितं शिशुजनस्य क्रीडास्तासु कौतुकं तेन लाघवं यस्य। **आत्मेति**—आत्ममुखस्य प्रतिबिम्बं गर्भे यस्य। अत एव विकचं विकसितं यत्कमलं तेन कृतः कर्णपल्लवावतंसो यस्मिन्। सर्वान्तःपुराणि सर्वा अवरोधस्त्रियः। शुकनासगृहद्वारं वर्णयन्नाह **यामेति**—यामावस्थितास्तत्तत्सेवावसरे स्थिता या विविधा गजघटा करिसमूहास्ताभिः संकटं संकुलं दुष्प्रवेशमित्यर्थः। अनेकतुरंगसहस्रैः संबाधं संकीर्णम्। ०संमर्दोन्योन्यसंघर्षस्तेन संकुलं संकटम्। पुनश्च दिवानिशमासेव्यमानम्। कैः। **एकदेशेति**—निबद्धानि चक्रवालानि मण्डलानि यैः। समन्ततः सर्वत आसेव्यमानम्। विविधशास्त्राण्येवाञ्जनं नेत्रौषधं तेनोन्मीलितं विकासं प्रापितं बुद्धिलोचनं येषाम्। चीवरं मुनिवासः, शाक्यभिक्षुप्रावरणम्' इति सुभूतिः। तस्य छद्मना मिषेण। विनयानुरागिभिः विनये अनुरागो येषां तैः। शब्दश्लेषादुभयसाम्यम्। भानुचन्द्रस्तु 'अवरच्छद्मना' इति पठित्वैवं व्याचष्टे—'अवरच्छद्मना सेवकमिषेण विनयेनानुरागो विद्यते येषां तैः। तद्गुणानुरागेण विनयादिव सेवकीभूतैरित्यर्थः'। इति। धर्मपटैः धर्मशासनानि यस्मिन् लिख्यन्ते स धर्मपटः। तैरिवावगुण्ठितैः संवृतैः। तथामवगतशास्त्रशासनत्वाद्धर्मपटसाम्यम्। शाक्यमुनिर्मायादेवीसुतस्तस्य यानि शासनानि तेषां पन्था मार्गस्तत्र धौरेयैर्धुरीणैः। रक्तपटैः रक्ताम्बरैः। पाशुपतैः शैवैः। **जघनेति**—जघनं

---

१ ०के त्वयि, अर्भकत्वेपि ते. २ असाधारणी सर्वथा. ३ द्वारा बहिः. ४ गन्धगज. ५ मूहसंमर्द. ६ उन्मीलितप्रतिभैः. ७ अवर, रक्ताम्बरच्छ० गुरुवि०. ८ रक्तपादैः.

शामासेव्यमानम्, अभ्यन्तरप्रविष्टानां च सामन्तानां जघनोपविष्टपुरुषोत्सङ्गस्थित-द्विगुणकुथाभिरतिचिरावस्थाननिर्वेदप्रसुप्ताधोरणाभिः सपर्याणाभिर्निश्चलावस्थानप्र-चलायिताभिः शतसहस्रशः करिणीभिराकीर्णं शुकनासगृहद्वारमासाद्य सत्वरप्र-धावितैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैरनिवार्यमाणोऽपि राजकुल इव राजपुत्रो बाह्या-ङ्गण एव तुरंगादवततार। द्वारदेशावस्थापिततुरंगश्च वैशम्पायनमवलम्ब्य पुरः-प्रधावितैः समुत्सारितपरिजनैस्तथैव प्रतीहारमण्डलैरुपदिश्यमानमार्गस्तथैव चलित-मुकुटकोटिभिर्नरेन्द्रवृन्दैः सेवासमुपस्थितैरुत्थाय प्रणम्यमानस्तथैव प्रचण्डप्रती-हारहुंकारभयमूकीभवत्परिजनानि प्रचलितवेत्रलताचकितसामन्तचक्रचरणशतच-लितवसुंधराणि कक्षान्तराणि निरीक्षमाणस्तथैव नवनवसुधावदातप्रासादसहस्र-निरन्तरं द्वितीयमिव राजकुलं शुकनासभवनं विवेश। प्रविश्य चानेकनरेन्द्रसहस्र-मध्योपविष्टमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे।

शुकनासस्तं ससंभ्रममुत्थायानुपूर्व्येणोत्थितराजलोकः सादरमभिमुखद-त्ताविरलपदः प्रहर्षविस्फारितलोचनागतानन्दजलकणः सह वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग। आलिङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनम वनावेव राजपुत्रः समुपाविशत्तदनु च वैशम्पायनः। समुपविष्टे च राजपुत्रे शुकनासवर्जमत्यदूरविलम्बवनिपालचक्रमुज्झितनिजासनमवनितलमभजत।

कक्ष्य अग्रभागस्तत्र उपविष्टा ये पुरुषास्तेषामुत्सङ्गेषु अङ्केषु स्थिता द्विगुणा द्विगुणिताः कुथा यासु। अतिचिरावस्थानेन यो निर्वेदः खेदः तेन प्रसुप्ता आधोरणा हस्तिपका यासु। पर्याणं पल्ययनम्। निश्चलावस्थानेन प्रचलायिताभिर्घूर्णिताभिः। 'जागरूको जागरिता घूर्णितः प्रच-लायितः।' इत्यमरः। अत्र प्रचल इवाचरन् प्रचलायितः उपविष्टो निद्रया घूर्णितः। इति क्षीर-स्वामी। अनिवार्यमाणोऽनिषेध्यमानः। समुत्सारितः परि समन्ताज्जनो यैः। तथैव राजकुले इव सेवार्थं समुपस्थितैः प्राप्तैः। प्रचण्डः यः प्रतीहाराणां हुंकारस्तस्माद्भयं तेन मूकीभवन् परिजनो येषु तानि। प्रचलिता या वेत्रलता वेतसयष्टयः। अजहल्लक्षणया वेत्रलताधारिणः। ताभिस्ता-सामतर्कितेन चलनेनेत्यर्थः। चकितं शङ्कितं यत्सामन्तचक्रं तस्य चरणशतेन चलिता कम्पिता वसुंधरा येषु। ०निरन्तरं व्याप्तम्। दूरावनतेनात्यन्तमावर्जितेन। **आन्विति**–आनुपूर्व्येण पूर्वपूर्वानुक्रमेणोत्थिता राजलोका यस्य। सादरमित्यालिलिङ्गेत्यनेन सहान्वयि। अभिमुखं दत्तान्यविरलानि अनल्पानि संरम्भवशान्निर्भराणि वा पदानि येन। प्रहर्षेण विस्फारिते विस्तारिते ये लोचने तयोः आगता ०जलकणा यस्य। शुकनासं वर्जयित्वा शुकनासवर्जम्।

१ जघनस्थानोपविष्टपुरुषावस्थित. २ द्विगुणित. ३ अपर्याणाभिः,--सपर्याणाभिश्च. ४ तत्प्र. ५ उत्थायोत्थाय. ६ त्रासनचकित. ७ उपस्थितम्. ८ पूर्वेण.

स्थित्वा च तूष्णीं क्षणमिव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमानहृदयहर्षप्रकर्षस्तमब्रवीत् ।

तात चन्द्रापीडाद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमालोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः । अद्य फलितमनेकजन्मान्तरोपात्तमवदातं कर्म । अद्य प्रसन्नाः कुलदेवताः । न ह्यपुण्यभाजां भवादृशास्त्रिभुवनविस्मयहेतवः पुत्रतां प्रतिपद्यन्ते । क्वेदं वयः । क्वेयममानुषी शक्तिः । क्व चेदमशेषविद्याग्रहणसामर्थ्यम् । अहो धन्याः प्रजा यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता । किं खलु कृतमवदातं कर्म वसुंधरया ययासि भर्ता समासादितः । हरिवक्षःस्थलनिवासासद्ग्रहव्यसनिनी हता खलु लक्ष्मीर्या विग्रहवती भवन्तं नोपसर्पति । सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुंधराभारं सह पित्रा । इत्यभिधाय च स्वयमाभरणवसनकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार । विसर्जितश्चोत्थायान्तःपुरं प्रविश्य दृष्ट्वा वैशम्पायनमातरं मनोरमाभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्वकल्पितं प्रतिच्छन्दकमिव राजकुलस्य, द्वारावस्थितसितपूर्णकलशम्, आबद्धहरितवन्दनमालम्, उल्लसितसितपताकासहस्रम्, अभ्याहतमङ्गलतूर्यरवपरिपूरितदिगन्तरम्, उपरचितविकचकमलकुसुमप्रकरम्, अचिरकृताग्निकार्यम्, उज्ज्वल-

---

समुद्गता आविर्भूताः प्रीत्या पुलका रोमाञ्चा येषां तैः । 'तात' इति पुत्रादीनां सम्बोधने आदरस्नेहाद्यर्थे वर्तते । 'पूज्ये पितरि पुत्रे च तातशब्दः स्मृतो बुधैः ।' इति केशवः । समृद्धाः सातिशयेन फलिताः । अनेकेषु जन्मान्तरेषूपात्तमर्जितमवदातं पुण्यं कर्म । भरतो दौष्यन्तिः । स हि वंशकरो महाप्रभावोऽप्रतिरथश्चासीत् । अस्य नाम्नो व्युत्पत्तिमाह कालिदासः–'पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ।' इति । भगीरथवृत्तान्त उक्तपूर्वः । **हरीति**–हरिवक्षःस्थलनिवास एवासद्ग्रहो हठस्तत्र व्यसनिन्यासक्ता । हता विनष्टा । विग्रहवती मूर्तिमती । गूढविग्रहा तु भवन्तमुपचरत्येवेति भावः । तथाहि रघुवंशे–'छायामण्डललक्ष्येण तमदृश्या किल स्वयम् । पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्' ॥ इति । महावराह इव वराहरूपधारिणा भगवता दंष्ट्राग्रभागेण पर्वतभारेण पयोधिमग्नायाः पृथिव्या उद्धरणं कृतम् । तदुक्तं 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति । प्रतिच्छन्दकं प्रतिकृतिः । द्वारेवस्थिताः सिताः श्वेताः पूर्णाः कलशा यस्याः । वन्दनमाला द्वारदेशावलम्बिता स्रक् । मङ्गलार्थं तूर्यं वाद्यविशेषो मङ्गलतूर्यम् । उपरचितो विकचानां विकस्वराणां कमलानां कुसुमानां च प्रकरो

---

१ जनकाः. २ व्यसनितया. ३ दंष्ट्रावलेन. ४ हरित–हरि–चन्दनमालम्.

विविक्तपरिजनम्, उपपादिताशेषगृहप्रवेशमङ्गलं कुमारो भवनं जगाम। गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्तमुपविश्य सह तेन राजपुत्रलोकेनाभिषेकादिकमशनावसानमकरोद्दिवसविधिम्। अभ्यन्तरे च स्वशयनीयगृहएवेन्द्रायुधस्यावस्थानमकल्पयत्।

एवंप्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ। गगनतलादवतरन्त्या दिवसश्रियः पद्मरागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात। सलिलप्रवाह[1] इव रथचक्रमार्गानुसारेण दिवसकरस्य वासरालोकः प्रतीचीं ककुभमगात्[2]। अभिनवपल्लवलोहिततलेन[3] करेणेवाधोमुखप्रसृतेन दिवसकरबिम्बेन[4] वासरः कमलरागमशेषं ममार्ज। कमलिनीपरिमलपरिचयागतालिमालाकुलितकण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे। करपुटैरादिवसान्तमापीतमरविन्दमधुरसमिव रक्तातपच्छलेन गगनगमनखेदादिव दिवसकरबिम्बं ववाम।

क्रमेण च प्रतीचीकर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति गभस्तिमालिनि, समुल्लसितायामम्बरतटाक[5]विकचकमलिन्यां संध्यायां, कृष्णागुरुपङ्कपत्रलतास्विव तिमिरलेखासु स्फुरन्तीषु दिशां मुखेषु, अलिकुलमलिनेन

यस्मिन्। अचिरात्कृतमग्निकार्यं होमादि यस्मिन्। उज्ज्वलो मङ्गलप्रवेशानुरोधाद् धवलाम्बरः विविक्तः पूतः परिजनो यस्मिन्। यद्वा उज्ज्वल उल्बणो विविक्तो विविधस्वरूपस्तत्तत्कार्यनियोजितत्वात्परिजनो यस्मिन्। **गृहेति**—गृहप्रवेशमङ्गलं वास्तुपूजाबलिक्रियादि। 'विधाय पूर्वदिवसे वास्तुपूजां बलिक्रियाम्।' इति नारदः। **श्रीमण्डपे आस्थानमण्डपे**। अभिषेकादि स्नानादि। उदन्तेन वृत्तान्तेन। पद्मरागनूपुरं लोहितमणिनिर्मितं मञ्जीरम्। नूपुरस्य सच्छिद्रत्वात्तदनुपलब्धय आह—स्वप्रभया पिहितान्याच्छादितानि **रन्ध्राणि छिद्राणि** यस्य। उन्मुक्ता ऊर्ध्वं मुक्ताः पादाः किरणा येन। अन्योप्यूर्ध्वप्रदेशात्पतन्वेगवशादुन्मुक्तपाद ऊर्ध्वपाद एव पतति। दिवसकरस्य रथचक्रमार्गानुसारेण इ०। जलप्रवाहोपि रथमार्गानुगामी भवति। **अभिनवेति**—वर्तुलत्वरक्तत्वसाम्यार्द्रार्कबिम्बं दिवसकरत्वेनोत्प्रेक्षितम्। कमलरागम्—अस्तमिते हि सूर्ये संकोचात् कमलानि वीतरागाणि भवन्ति। कमलिन्या यः परिमलस्तस्य परिचयादागता यालिमाला तयाकुलितः परिगतः कण्ठो यस्य। अत एव कालेति। विजघटे वियुक्तं बभूव। करपुटैः किरणसंपुटैरञ्जलिपुटैश्च। प्रतीची पश्चिमादिक् तस्याः कर्णपूरभूतं रक्तोत्पलमिव तस्मिन्। **अम्बरेति**-स्वच्छत्वनीलत्वसाम्यादम्बरमेव तटाकस्तस्मिन्नरुणत्वसाम्याद्विकचा कमलिनी नलिनीव तस्याम्। दिशां मुखेषु कृष्णागुरुपङ्कस्य घृष्टकालागुरुणः पत्रलेखास्विव तिमिरलेखासु स्फुरन्तीषु। **अलिकुलेति**—अलिकुलव-

[1] जलप्रवाह. [2] दिशम्, अगमत्. [3] पल्लवदललोहितकरेण. [4] रवि. [5] अम्बरतल.

कुवलयवनेनेव रक्तकमलाकरे तिमिरनिकरेणोत्सार्यमाणे संध्यारागे, कमलिनी-निपीतमातपमुन्मूलयितुमन्धकारपल्लवेष्विव[1] विशत्सु रक्तकमलोदराणि मधुकरकुलेषु, शनैः शनैश्च निशाविलासिनीमुखावतंसपल्लवे गलिते संध्यारागे, दिक्षु दिक्षु विक्षिप्तेषु संध्यादेवतार्चनबलिपिण्डेषु शिखरदेशलग्नतिमिरास्वनारूढमयूरास्वपि मयूराधिष्ठितास्विव मयूरयष्टिषु, गवाक्षविवरनिलीनेषु प्रासादलक्ष्मीकर्णोत्पलेषु[2] पारावतेषु, विगतविलासिनीसंवाहननिश्चलै[3]काञ्चनपीठासु मूकीभूतघण्टास्वरास्वन्तःपुरदोलासु, भवनसहकारशाखावलम्बितपञ्जरेषु विगतालापेषु शुकसारिकानिवहेषु, संगीतविरामविश्रान्तरवासूत्सार्यमाणासु वीणासु, युवतिनूपुरशब्दोपशमनिभृतेषु भवनकलहंसेषु, अपनीयमानकर्णशङ्खचामरनक्षत्रमालामण्डनेषु मधुकरकुलशून्यकपोलभित्तिषु मत्तवारणेषु, प्रदीप्यमानेषु राजवल्लभतुरंगममन्दुराप्रदीपेषु, प्रविशन्तीषु प्रथमयामकुञ्जरघटासु, कृतराजस्वस्त्ययनेषु[6] निष्क्रामत्सु पुरोहितेषु, विसर्जितराजलोकविरलपरिजनेषु विस्तारितेष्विव राजकुलकक्षान्तरेषु, प्रज्वलितदीपिकासहस्रप्रतिबिम्बचुम्बितेषु कृतविकचचम्पकदलोपहारेष्विव मणि-

---

न्मालिनेन कृष्णेन कुवलयवनेन रक्तकमलाकरे रक्तपद्मसमूहे इव तिमिरसमूहेन सन्ध्यारागे उत्सार्यमाणेऽपोह्यमाने। आतपं सूर्यालोकम् । मधुकरकुलेषु अन्धकारपल्लवेष्विव विशत्सु इति योजना। सन्ध्यायां यद्देवतार्चनं तदर्थं बलयः पुष्पोपहाराः पिण्डाश्च तेषु विक्षिप्तेषु विकीर्णेषु । सन्ध्यायां वास्तुदेवतास्थानदेवतादीनां पूजनं तावदाचारः । अनुरूपवर्णनं विक्रमोर्वशीये—'आचारप्रयतः सुपुष्पबलिषु स्थानेषु चार्चिष्मतीः सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धाजनः' ॥ इति । मयूरयष्टिषु मयूराणां निवासार्थं दण्डास्तासु । कालिदासस्तु सन्ध्यासमये बर्हिणां गाढस्वापं वर्णयति-'उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणः।' इति । विगतं यद्विलासिनीनां संवाहनमुद्वहनं तेन निश्चलानि काञ्चनपीठानि सुवर्णफलकानि यासाम् । अत एवान्दोलनाभावान्मूकीभूतो विरतो घण्टास्वरो यासाम् । उत्सार्यमाणासु स्वेषु स्वेषु स्थानेष्वपनीय निवेश्यमानासु । **युवतीति**—०शब्दस्योपशमेन निवृत्त्या निभृतेषु निश्चलेषु । अपनीयमानानि कर्णशङ्खः 'दृष्टिदोषोपशमनार्थं कर्णे बद्धः । ' इति भानु० । चामरं प्रसिद्धं नक्षत्रमाला सप्तविंशतिमौक्तिकै रचित आभरणविशेषः । एवंविधानि मण्डनानि येषाम् । कृतं राज्ञे स्वस्ति ईयते प्राप्यतेऽनेनेति स्वस्त्ययनं शुभावह आशीर्वादो यैः । विस्तारितेषु प्रथमं जनाकीर्णत्वादनन्तरं तेषां विरलभावाद्बहुलीभूतेष्विव । **प्रज्वलितेति**—०प्रतिबिम्बैश्चुम्बितेषु तद्वत्सु इत्यर्थ । अत एव कृता विकचानां

---

१ करपल्लवेषु. २ ०त्पलेष्विव. ३ निश्चलासु. ४ ०रवासु ५ मण्डलपिण्डेषु. ६ कृतस्वस्त्ययनेषु.

भूमिकुट्टिमेषु, निपतितदीपालोकासु रविविरहार्तनलिनीविनोदनागतबालातपास्विव भवनदीर्घिकासु, निद्रालसेषु पञ्जरकेसरिषु, समारोपितकार्मुके गृहीतसायके यामिक इवान्तःपुरप्रविष्टे मकरकेतौ, अवतंसपल्लवेष्विव सरागेषु कर्णे क्रियमाणेषु सुरतदूतिवचनेषु, सूर्यकान्तमणिभ्य इव संक्रान्तानलेषु ज्वलत्सु मानिनीनां शोकविधुरेषु हृदयेषु, प्रवृत्ते प्रदोषसमये चन्द्रापीडः प्रज्वलितदीपिकाचक्रवालपरिवारश्चरणाभ्यामेव राजकुलं गत्वा पितुः समीपे मुहूर्तं स्थित्वा दृष्ट्वा च विलासवतीमागत्य स्वभवनमनेकरत्नप्रभाशबलमुरगराजफणामण्डलमिव हृषीकेशः शयनतलमधिशिश्ये।

प्रभातायां च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः पित्राभिनवमृगयाकौतुकावकृष्यमाणहृदयो भगवत्यनुदित एव सहस्ररश्मावारुह्येन्द्रायुधमग्रतो बालेयप्रमाणानाकर्षद्भिश्चामीकरशृङ्खलाभिः कौलेयकाञ्जरव्द्याघ्रचर्मशबलवसन-

विकस्वराणां चंपकानां चंपकपुष्पाणां दलानामुपहारा बलिप्रकरा येषु। निपतितो दीपानामालोकः प्रकाशो यासु। अत एव नायकस्य रवेर्विरहेणार्ता पर्याकुला या नलिनी तस्या विनोदनार्थं विरहव्यथापनोदार्थमागतो बालातपा यासु। भवनदीर्घिकासु गृहवापीषु। निद्रालसेषु निद्राभिभूतेषु। समारोपितमधिज्यतां नीतं कर्मणे प्रभवतीति कार्मुकं येन। कर्मण उकञ् इति उकञ्। निशायाः कामोद्दीपकत्वादधिज्यकार्मुको मकरकेतुः सर्वत्राप्रतिहतश्चरतीति कवयो वर्णयन्ति। तथा हि 'उदिते दिशः प्रकटयत्यमुना यदधर्मधाम्नि धनुराचकृषे।' इति शिशु० (९·२४)। 'यद्विभुः शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः।' इति किरा०। (९·३३)। यामिकः प्राहरिकः। सरागेषु शृङ्गारपूर्णेषु। पक्षे अरुणिमसहितेषु। कर्णे क्रियमाणेषु आकर्ण्यमाणेषु पक्षे कर्णे निधीयमानेषु। मानिनीनां कोपनानां। 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये।' इति मानलक्षणम्। ०विधुरेषु विह्वलेषु। ०चक्रवालं समूहः परिवारो यस्य। दीपिकासहस्रपरिवृत इत्यर्थः। ०शबलं कर्बुरम्। हृषीकेशः—हृषीकाणामिन्द्रियाणामीशो विष्णुः। तस्य सर्वेन्द्रियप्रवर्तकत्वात्। 'हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान्। हृषीकेशस्ततो विष्णो ख्यातो देवेषु केशव' ॥ इति महाभारतम्। शयनतलम्—'अधिशीङ्' इत्यादिनाधिकरणे द्वितीया। निशीथिनी—निशीथोऽर्धरात्रोऽस्त्यस्यामिति निशीथिनी रात्रिः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। **अभिनवेति**—अभिनवमपूर्वं यन्मृग्यन्तेऽत्र मृगा मगान्यात्यनयेति वा मृगया आखेटस्तस्याः कौतुकं तेनेत्या०। बालेयो रासभस्तत्प्रमाणास्तद्वत्स्थूलास्तान्। कौलेयकान्विश्वकद्रून्। 'श्वा विश्वकद्रुर्मृगयाकुशलः' इत्यमरः। जरद्व्याघ्रस्य वृद्धद्वीपिनश्चर्मैव शबलं वसनं तस्य कञ्चुकश्चोलकस्तद्धारिभिः। मृगयवो हि

१ सूर्यमणिभ्यः. २ बालेयद्वीपिप्रमाणान्. ३ आकर्षयद्भिः. शबलक०.

कञ्चुकधारिभिरनेकवर्णपट्टचीरिकोद्बद्धमौलिभिरुपचितश्मश्रुगहनमुखैरेककर्णाव-मक्तहेमतालीपुटैराबद्धनिबिडकक्षैरनवरतश्रमोपचितोरुपिण्डकैः कोदण्डपाणिभिः श्वपोषकैरनवरतकृतकोलाहलैः प्रधावद्भिर्द्विगुणीक्रियमाणगमनोत्साहो बहुगजतुरग-पदातिपरिवृतो वनं ययौ । तत्र च कर्णान्ताकृष्टमुक्तैर्विकचकुवलयपलाशका-न्तिभिर्भल्लैर्मदकलकलभकुम्भभित्तिभिदुरैश्च नाराचैश्चापटंकाररवभयचकितवनदेव-तार्धाक्षवीक्षितो वनवराहान्केसरिणः शरभांश्चमराननेककुरङ्गकांश्च सहस्रशो जघान । अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह ।

समारूढे च मध्यमह्नः सवितरि वनात्स्नानोत्थितेनेव श्रमसलिलबिन्दुवर्षमनव-रतमुज्झता मुहुर्मुहुर्दशनविघट्टनैः खणखणायितखरखलीनेन श्रमशिथिलमुखगलि-तफेनिलरुधिरलवेन पर्याणपट्टकानुसारोत्थितफेनराजिना कर्णावतंसीकृतमुत्फुल्ल-कुसुमशबलमालिपटलझंकाररवमुखरं वनगमनचिह्नं पल्लवस्तबकमुद्वहतेन्द्रायुधेनो-ह्यमानः समुद्गतस्वेदतयान्तरार्द्रीकृतमण्डलेन मृगरुधिरलवशतशबलेन वारबाणेन

जिह्मीयया । क्षुद्रसत्वानां विद्रावणेच्छया च नानाश्वापदचर्मावृतशरीराश्चरन्तीति **प्रसिद्धम्** । अनेकवर्णा याः पट्टचीरिकाः कौशेयपट्टिकास्ताभिरुद्बद्धा मौल्यः केशा यैः । उपचितैर्वृद्धैः श्मश्रुभिर्मुखलोमभिर्गहनानि निरन्तरव्याप्तानि मुखानि येषाम् । एककर्णावसक्तं हेम्नस्तालीपुटमाभरण-विशेषो यैः । आबद्धा निबिडं दृढं यथा तथा कक्षा मध्यभागा यैः । अनवरतं यः श्रमो व्यायाम-स्तेनोपचिते पुष्टिं प्रापिते ऊरुपिण्डके जङ्घापिण्डिके येषाम् । पिण्डिका गुल्फोपरि च जानोरधः प्रदेशः इति भानु० । श्वपोषकैः कौलेयकरक्षकैः । **कर्णान्तेति**–कर्णान्तं यावदाकृष्टाश्च ते पश्चान्मुक्तास्तैः । भल्लैरर्धचन्द्राकृतिभिर्बाणविशेषैः । 'स्नुहीदलफलो भल्लः' इति यादवः । **एवं** रघुवंशेपि वर्णनम्–'क्वचिदाकर्णविकृष्टभल्लवर्षी' (९–६६) इत्या० । भिदुरैः–भिनत्तीति भिदुरः । 'विदिभिदिच्छिदेः कुरच्' । तैः । नाराचैः सर्वलोहमयैर्बाणैः । **चापेति**—०भयेन चकिता या वनदेवता तया अर्धाक्षेण वीक्षितः । शरभानष्टापदान्मृगविशेषान्वा । 'अष्टापदे च [illegible] शरभः स्यान्मृगान्तरे ।' इति रभसः । महाप्राणतयातिबलवत्वात् । स्फुरतः प्रचलतश्चेष्टमा-नान्वा । **समेति**–अह्नो मध्यं सवितरि समारूढे वनात्स्वभवनमाजगाम चेत्यन्वयः । स्नानो-त्थितेन स्नानादुत्थितेनार्द्रकायेनेत्यर्थः । श्रमसलिलं स्वेदजलम् । उज्झता त्यजता । विघट्टनैः कर्षणैः । खणखणायितं खणखणेति शब्दायितं खरं परुषं खलीनं येन । फेनिलाः फेनवन्तः । 'फेनादिलच्' इतीलच्प्रत्ययः । पर्याणं पल्ययनं तस्य पट्टक उपवेशनपीठं तदनुसारेण तत्स्थानम-भिव्याप्येत्यर्थः । उत्थितोत्पन्ना फेनराजिर्यस्य तेन । उत्फुल्लकुसुमैः शबलं चित्रितम् । स्वेदज-लेनान्तरभ्यन्तरे आर्द्रीकृतं मण्डलं परिधिर्यस्य । वारबाणेन कञ्चुकेन । **द्विगुणेति**–सत्त्ववतो

१ भव-ऊर्ध्व-बद्ध. २ पिण्डिकैः. ३ दण्डपा०, कोण०. ४ मनउत्साह. ५ घनं वनम्. ६ अनुसरणो०. ७ अन्तरा अन्तरा.

द्विगुणतरमुपजनितकान्तिरनेकरूपानुसरणसंभ्रमपरिभ्रष्टच्छत्रधारतया छत्रीकृतेन नवपल्लवेन निवार्यमाणातपो विविधवनलताकुसुमरेणुधूसरो वसन्त इव विग्रहवानश्वखुररजोमलिनललाटाभिव्यक्तावदातस्वेदलेखो दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः प्रजवितुरंगमाधिरूढैरल्पावशिष्टैः सह राजपुत्रैरेवं मृगपतिरेवं वराह एवं वनमहिष एवं शरभ एवं हरिण इति तमेव मृगयावृत्तान्तमुच्चारयन्स्वभवनमाजगाम ।

अवतीर्य च तुरंगमात्ससंभ्रमप्रधावितपरिजनोपनीते समुपविश्यासने वारबाणमवतार्यापनीय चाशेषं तुरंगमाधिरोहणोचितं वेषपरिग्रहमितस्ततःप्रचलिततालवृन्तपवनापनीयमानश्रमो मुहूर्तं विशश्राम । विश्रम्य च मणिरजतकनककलशशतसनाथामन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात् । निर्वर्तिताभिषेकव्यापारस्य च विविक्तवसनपरिमृष्टवपुषः स्वच्छदुकूलपल्लवाकलितमौलेर्गृहीतवाससः कृतदेवार्चनस्याङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता महाप्रतीहाराधिष्ठिता राजकुलपरिचारिकाः कुलवर्धनासनाथाश्च विलासवतीदास्यः सर्वान्तःपुरप्रेषिताश्चान्तःपुरपरिचारिकाः पटलकविनिहितानि विविधान्याभरणानि माल्यान्यङ्गरागान्वासांसि चादाय पुर-

---

रुधिरलाञ्छितो वारबाणो हि कान्तिप्रकर्षं पुष्णातीति प्रसिद्धमेव । **अनेकेति**—अनेकेषां रूपाणां पशूनाम् । 'रूपं तु श्लोकशब्दयोः । पशावाकारे सौन्दर्ये' इति हैमः । अनुधावने यः संभ्रमस्त्वरणम् । 'समौ संवेगसंभ्रमौ ।' इत्यमरः । तेन परिभ्रष्टा वियुक्ताश्छत्रधरा यस्य तस्य भावस्तत्ता तया । छत्रीकृतेन छत्रत्वं प्रापितेन अभूततद्भावे च्विः । विग्रहवान् शरीरधारी । **अश्वेति**-अश्वखुराणां खुरोद्धूतमित्यर्थः यद्रजस्तेन मलिने ललाटे अभिव्यक्ता स्फुटा अवदाता विमला स्वेदलेखा यस्य । दूरविच्छिन्नेन दूरान्तरितेन । **इत इति**—इतस्ततः प्रचलितं विधूयमानं यत्तालवृन्तं तालपत्रव्यजनं तस्य पवनेनापनीयमानः दूरीक्रियमाणः श्रमो यस्य । काञ्चनपीठं स्नानकाल उपवेशनार्थं सुवर्णासनम् । विविक्तेन पूतेन । धौतेनेत्यर्थः । 'विविक्तौ पूतविजनौ' इत्यमरः । वस्त्रेण परिमृष्टं वपुर्यस्य । स्वच्छदुकूलस्य पल्लवेनाञ्चलेनाकलितो वेष्टितो मौलिः शिरो यस्य । अङ्गरागभूमौ विलेपनस्थाने । महाप्रतीहारेण द्वारपालमुख्येन । पटलके पिटके । 'अथ पटलं पिटके च परिच्छदे' इति मेदिनी । विनिहि-

---

१ उरजात. २ धर. ३ वन. ४ उत्तीर्य. ५ आकुलित. ६ ०धौतवाससः. ७ प्रतिचारिकाः

तस्तस्योपतस्थुरुपानिन्युश्च¹। यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनमुपरचिताङ्गरागो दत्त्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि विविधमणिभाजनसहस्रशारं² शारदमम्बरतलमिव स्फुरिततारागणमाहारमण्डपमगच्छत्। तत्र च द्विगुणीकृत³कुथासनोपविष्टः समीपोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्ह⁴भूमिभागोपवेशितेन राजपुत्रलोकेनेदमस्मै दीयतामिदमस्मै⁵ दीयतामिति प्रसादविशेषदर्शनसंवर्धितसेवारसेनाहारविधिमकरोत्। उपस्पृश्य च गृहीतताम्बूलस्तस्मिन्मुहूर्तमिव स्थित्वेन्द्रायुधसमीपमगमत्⁶। तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा मत्यप्याज्ञाप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गुणहृतहृदयः⁷ स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत्। तेनैव क्रमेणावलोक्य राजानमागत्य निशामनैषीत्।

अपरेद्युश्च प्रभातसमय एव सर्वान्तःपुराधिकृतमवनिपतेः⁸ परमसंमतमनुमार्गागतया, प्रथमे वयसि वर्तमानया, राजकुलसंवासप्रगल्भयापि अनुज्झितविनयया, किंचिदुपारूढयौवनया, शक्रगोपकालोहितरागेणांशुकेन रचितावगुण्ठनया सबालातपयेव पूर्वया ककुभा, प्रत्यग्रदलितमनःशिलाचूर्णव⁹-

तानि स्थापितानि। उपतस्थुः समीपं जग्मुरुपानिन्युरानीतानि वस्तूनीत्यर्थात्। उपरचिताङ्गरागः कृतप्रसाधनः। **विविधेति**—सहस्रं सारं प्रधानं यस्मिन्। यद्वा ०सहस्रेण शारं स्फुरत्प्रभं कर्बुरं वा। द्विगुणितं परिवर्तितं यत्कुथासनं तत्रोपविष्टः। तस्य चन्द्रापीडस्य गुणास्तेषामुपवर्णनपरेण। प्रसादः प्रसन्नता तस्य विशेष आधिक्यं तस्य दर्शनेन संवर्धितो वृद्धिं प्रापितः सेवायां सेवाकरणे रसः प्रीतिर्यस्य तादृशेन राजपुत्रलोकेन। उपस्पृश्याचमनं कृत्वा। 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। 'भुक्त्वा चोपस्पृशेत्' इति मनुस्मरणात्। आज्ञायाः प्रतीक्षणमवेक्षा तस्योन्मुखे तत्परे, आज्ञाकरणदक्षे इत्यर्थः। यवसं तृणम्। **अपरेद्युरिति**-अपरेद्युः प्रभातसमय एव कन्ययानुगम्यमानं कैलासनामानं कञ्चुकिनमायान्तमपश्यदित्यन्वयः। परमसंमतं परं मान्यं विश्वस्तं वा। अतः कन्यां विशिनष्टि—अनुमार्गं कञ्चुकिमार्गानुसारेणागतया। राजकुलसंवासेन प्रगल्भयोत्पन्नप्रतिभया। 'प्रगल्भः प्रतिभान्विते' इत्यमरः। प्रगल्भा चतुरा वा। **अनुज्झितेति**-अपरित्यक्तमर्यादया। प्रायः प्रतिभान्वितोऽहंकारातिरेकाद्विनयं त्यजति। अत्र तु सत्यपि प्रागल्भ्ये विनयसद्भाव इत्याश्चर्यमिति भावः। किंचिदुपारूढमुद्भिन्नं यौवनं यस्याः सा तया। शक्रगोपो वार्षिको लोहितः कीटविशेषस्तद्वल्लोहितो रक्तो रागो वर्णो यस्य। कृतावगुण्ठनया कृतशिरोवेष्टनया। ककुभा दिशा। प्रत्यग्रदलिता नवचूर्णिता या मनःशिला

१ श्चोपनीतानि च. २ शाराम्बर. ३ द्विगुणित. ४ यथार्हम्. ५ तस्मै. ६ अगात्. ७ गुणापहृत. ८ अधिकृततया. ९ मनःशिलावर्णेन.

र्णेनाङ्गलावण्यप्रभाप्रवाहेणामृतरसनदीपूरेणेव भवनमापूरयन्त्या, ज्योत्स्नयेव राहुग्रहग्रासभयादपहाय रजनिकरमण्डलं गामवतीर्णया राजकुलदेवतयेव मूर्तिमत्या, क्वणितमणिनूपुराकुलितचरणयुगलया कूजत्कलहंसाकुलितकमलयेव कमलिन्या, महार्हहेममेखलाकलापकलितजघनस्थलया, नातिनिर्भरोद्भिन्नपयोधरया, मन्दं मन्दं भुजलताविक्षेपप्रेङ्खितनखमयूखच्छलेन धाराभिरिव लावण्यरसमनवरतं क्षरन्त्या, दिङ्मुखविसर्पिणि हारलतानां रश्मिजाले निमग्नशरीरतया क्षीरसागरोन्मग्नवदनयेव लक्ष्म्या, बहलताम्बूलकृष्णिकान्धकारिताधरलेखया समसुवृत्ततुङ्गनासिकया विकसितपुण्डरीकधवललोचनया मणिकुण्डलमकरपत्रभङ्गकोटिकिरणातपाहतकपोलतया सकर्णपल्लवमिव मुखमुद्वहन्त्या पर्युषितधूसरचन्दनरसतिलकालंकृतललाटपट्टया मुक्ताफलप्रायालंकारया राधेयराज्यलक्ष्म्येवोपपादिताङ्गरागया नववनलेख-

तस्याश्चूर्णस्येव वर्णो रागो यस्य । अङ्गस्य देहस्य लावण्यं कान्तिः । लावण्यलक्षणमुक्तम् । प्रभाप्रवाहेण दीप्तिसंतानेन । गां भूमिम् । क्वणितैः शब्दायमानैः मणिनूपुरैराकुलितं व्याप्तं चरणयुगलं यस्याः सा । अत एव कूजदिति । महार्हेण महामूल्येन हेममेखलाकलापेन सुवर्णरसनादाम्ना कलितं परिगतं जघनस्थलं कटिर्यस्याः । 'जघनं स्यात्स्त्रियाः श्रोणिपुरोभागे कटावपि ।' इति मेदिनी । नातिनिर्भरं नातिमात्रमुद्भिन्नावभिव्यक्तावुत्पन्नौ वा पयोधरौ यस्याः । भुजलतयोर्बाहुलतयोर्यो विक्षेप इतस्ततो विधूननं तेन प्रेङ्खिता वेल्लिता ये नखमयूखास्तेषां छलेन मिषेण । ०विसर्पिणि प्रसरणशीले । बहलेति—बहल या ताम्बूलम् । ताम्बूलभक्षणमिति यावत् । तज्जन्या कृष्णिका श्यामता तयान्धकारिता मलिनीकृताधरलेखा यस्याः । अत्राधरस्य रागातिशयो व्यङ्ग्यस्तदपेक्षया ताम्बूलरागस्यापि कृष्णत्वापादनात् । समा समरेखा सुवृत्ता सुवर्तुला तुङ्गोच्चा च नासिका यस्याः । मणिकुण्डलयोर्ये मकरपत्रभङ्गा मकराकृतिपत्रलतास्तेषां कोटयोग्राणि तेषां किरणानां मयूखानामातपेन दीप्त्याहते व्याप्ते कपोलतले तयोर्भावस्तत्ता तया । सकर्णपल्लवं कर्णावतंसेन सहितम् । पर्युषितः पूर्वदिनोद्भवोत एव धूसरोऽनुज्ज्वल इ० । मुक्तेति—मौक्तिकप्रचुरालंकारया । राधेयः कर्णः सूर्याज्जातः कुन्त्याः कानीनः सुतः । स किल कुन्त्या जल उत्सृष्टो राधया सूतपत्न्या पालित इति राधेयसंज्ञः । दुर्योधनेन तस्याङ्गदेशराज्यं दत्तम् । तदुक्तं महाभारते–यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः । काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः । अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबलः॥इ०। सचाङ्गदेशो मगधदेशस्य गिरिव्रजात्संनिकृष्टः । उपपादितः कृतो रागोऽङ्गविलेपनं यया । पक्षे उपपादिताङ्गदेशस्य

१ प्रसन. २ भूमण्डलम. ३ आकलित. ४ चरणया रुचिरेणुचर्चितचञ्चरीकचक्रवालवाचालितरक्तकमलयुगलयेव स्थलकमलिन्या. ५ आकलित. ६ कृष्णिमा. ७ कपोलतलतया.

येव कोमलतनुलतया त्रय्येव सुप्रतिष्ठितचरणया मखशालयेव वेदिमध्यया मेरुवनलतयेव कनकपत्रालंकृतया महानुभावाकारयानुगम्यमान कन्यकया कैलासनामानं कञ्चुकिनमायान्तमपश्यत् ।

स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास । कुमार महादेवी विलासवती समाज्ञापयति । इयं खलु कन्यका महाराजेन पूर्वं कुलूत-राजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्धिता च । तदिय-मिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता । न चास्यामा-युष्मता परिजनसामान्यदृष्टिना भवितव्यम् । बालेव लालनीया । स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । शिष्येव द्रष्टव्या । सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीक-रणीया । दीर्घकालसंवर्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे । बलवा-नस्यां पक्षपातः । महाभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि । नियतं स्वयमेवेयमतिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्यामविदितशीलश्चास्याः कुमार इति संदिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमति-

---

रागः प्रीतिर्यया । कोमला तनुलता गात्रयष्टिर्यस्याः । पक्षे कोमलाः तनवो लता यस्याम् । त्रयी वेदत्रयी । सुप्रतिष्ठितौ सुष्ठु स्थापितौ पादौ यया । पक्षे सुष्ठु प्रतिष्ठां प्राप्ताश्चरणाः शाखा यस्याः । वेदिवन्मध्यः कटिर्यस्याः । तनुमध्येत्यर्थः । पक्षे वेदिः परिष्कृता भूमिर्मध्ये यस्याः । कनकपत्रैः कर्णाभरणविशेषैरलंकृतया । पक्षे सुवर्णपत्रैः मेरोः सुवर्णमयत्वात् । कनको नागकेसरश्चम्पको वा । 'कनको नागकेसरे । धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि' । इत्यनेकार्थः । इति तु भानु० । तस्य पत्रैरलंकृता । महाननुभावः प्रभावस्तदनुरूप आकारश्च यस्याः । कुलूतो देशविशेषः । विगतनाथा विगतो नाथो रक्षिता यस्याः । दुहितुर्निर्गतो विशेषो यस्मिन्कर्मणि कन्यातुल्यम् । **परिजनेति**–इयं सामान्यपरिजनवन्न द्रष्टव्येत्यर्थः । चापलेभ्यः अविमृश्य कृतेभ्यः कर्मभ्यः । **सर्वेति**–सर्वरहस्यकथनोचितेत्यर्थः । महाभिजन उदात्तकुलो यो राजवंशस्तत्र प्रसूता । एवं-विधानि बालावल्लालनादीनि । आराधयिष्यति संतोषयिष्यति । उपचिता प्ररूढा । अविदितं

---

१ कन्यया. २ कलूत, कुन्तल. ३ कलूतेश्वर, कुन्तलेश्वर. ४ करण्डक. ५ उपदेष्टव्या. ६ विश्वासेषु. ७ नियतं कर्माणि.

चिरमुचिता परिचारिका ते भवति । इत्यभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रापीडो यथाज्ञापयत्यम्बेत्येवमुक्त्वा कञ्चुकिनं प्रेषयामास ।

पत्रलेखा तु ततःप्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य च्छायेव राजसूनोः पार्श्वं मुमोच । चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । अभ्यधिकं च प्रतिदिवसमस्याः प्रसादमकरोत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेष्वमन्यत ।

एवं समतिक्रामत्सु केषुचिद्दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छञ्शुकनासः सविस्तरमुवाच ।

तात चन्द्रापीड विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा । सततममूलमन्त्रगम्यो विषमो विषयविषास्वा-

शीलं येन । कल्याणिनेति पुत्रं प्रत्याशीर्वादार्थकं वचः । उचिता योग्या । कृतोभिजाता कुलीना तदनुरूपः प्रणामो यया । समुपजातः सेवायां रसः प्रीतिर्यस्याः सा । अव्यतिरिक्तामभिन्नाम् । **उपकरणेति**—उपकरणान्यभिषेकसामग्री तेषां संभाराः समूहास्तेषां संग्रहार्थम् । आरूढविनयं सम्प्राप्तविनयम् । **तातेति**—उपदेष्टव्याभावे किं वृथोपदेशप्रयासेनेति चेत्तत्र हेतुं प्रदर्शयति केवलमित्यादिना भवतीत्यन्तेन । निसर्गतः स्वभावत एव अभानुभेद्यं सूर्यरश्म्यनुच्छेद्यम् । रत्नप्रभयापि दूरीकर्तुमशक्यम् । प्रदीपालोकेनापि नाशानर्हम् । अत एवातिगहनं तमो यौवनप्रभवं विचारशक्त्यावरकम् । समानभावः काव्यादर्शे—अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः । दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ इति । न विद्यते परिणामे वयःपरिणत्यां परिणामेन वा उपशमः शान्तिरस्य । यौवनमदस्य वयःपरिणामे ओषध्यादीनां च परिणामेन विकृत्युपशमो भवति । अयं तु न तथेति दारुणः । तिमिरं नेत्ररोगविशेषः । तज्जनितान्ध्यं बिडालादिवसाञ्जनवर्त्या नश्यति । परं, ऐश्वर्यतिमिरान्ध्यमञ्जनवर्तिसाध्यं न भवतीति तथा । तदुक्तमष्टाङ्गहृदये—रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् । ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥इति । शिशिरोपचारैर्हार्य उपशम्यो न भवतीति तथा । दर्प एव दाहज्वरस्तस्योष्मा । विषया एव विषं तस्यास्वादो भोगस्तस्माद्यो मोहो मूर्च्छा । मूलमोषधीनां मन्त्राश्च । एतद्द्वयोपलक्षिता मणिमधुकरादिविषोत्तारण-

१ अभिजात. २ लोचनः. ३ उपसंभार. ४ कर्तुम. ५ वेद्यस्य. ६ अपटलम. ७ अतितीव्रो. ८ ग्रन्थः

संदाननिष्पन्दीकृतापि नश्यति । उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति । मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न वैदग्ध्यं गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमनुबुध्यते । न लक्षणं प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम् । अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम् । अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डको-

---

संदानं बन्धनं तेन निष्पन्दीकृता निश्चलीकृता । उद्दामा उत्कटो दर्पोऽभिमानो येषामेवंविधैर्भटसहस्रैरुल्लासिता या असिलता ता एव पञ्जरं तत्र विधृतापि । मदेति—दुर्दिनशब्देनात्र वर्षो लक्ष्यते । मदजलदुर्दिनेन दानवारिवर्षेणान्धकारो येषां ते । मदक्षरणमलिनगण्डा इत्यर्थः । एवंविधानां गजानां घनघटाभिः परिपालिता । लक्ष्मीः परिचयाद्यनुरोधान्नैवैकत्र तिष्ठति केवलं स्वच्छन्दमेवानुवर्तते इत्याह न परिचयमित्यादिना । कुलक्रमम्—कुलक्रमेणागताहं कथमकस्मादन्यत्र गच्छामीति नैव विचारयतीति भावः । श्रुतं शास्त्रज्ञानम् । त्यागं त्यागितामित्यर्थः । अनुबुध्यते जानाति । लक्षणं शरीरगतं चिह्नं तिलकादि सामुद्रिकोक्तम् । गन्धर्वनगरं खपुरम् । दृग्भ्रमादाकाशे उदितं नगरम् । तच्चाशुभसूचकमिति शास्त्रकारा मन्यन्ते । तदुक्तं बृहत्संहितायाम्—“ गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम् । दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥ अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा ” ॥ इति । तस्य लेखा सीमा । आरूढो मन्दरस्य परिवर्तेन भ्रमणेन य आवर्तोऽम्भसां भ्रमस्तास्मिन्या भ्रान्तिर्भ्रमणम् । लक्ष्म्या इत्यर्थः । तया जनितः संस्कार आवर्तभ्रमरूपो यस्याः । लक्ष्मीः क्वापि निर्भरं पदं न बध्नात्यतस्तत्कारणमुत्प्रेक्षते—कमलिनीषु संचरणव्यतिकरेण संचारयोगेन लग्ना नलिननालस्य कण्टका यस्याः । परमेश्वरा राजानो वा धनिका वा । पारुष्यं कठिनताम् । अप्रत्ययबहुला अविश्वासप्रचुरा । दिवसावसाने यत्कमलं तद्यथा मुञ्चति तथा भूभुजं मुञ्चति । दिवसावसाने हि कमलमपश्रि भवति । उभयोः साम्यमाह समेति—सम्यगुपचितानि वृद्धिं प्रापितानि मूलं मूलदेशः । दण्डः सेना । यद्वा मूलदण्ड इत्येकं पदं मौलं सैन्यम् । अत्र कौटिल्यः—तत्र मौलं भृतश्रेणीमित्राटवीबलानामन्यतममलब्धदेशकाले दण्डं दद्यात् । इति । यद्वा दण्डो दमो राजशासनतन्त्रात्मकम् । उक्तं च कामन्दकेन—‘ दण्डो दम इति ख्यातस्तात्स्थ्याद्दण्डो महीपतिः ’ ।

---

१ गन्धगज. २ घटाटोप. ३ गन्धर्वलेखेव. ४ कण्टकक्षतेव. ५ दिवसावसान.

षमण्डलमपि मुञ्चति भूभुजम् । लतेव विटपकानध्यारोहति ॥ गङ्गेव वसुजनन्यपि तरंगबुद्बुदचञ्चला । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । हिडिम्बेव भीमसाहसैकहार्यहृदया । प्रावृडिवाचिरद्युतिकारिणी । दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति ।
सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम् । गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहु मन्यते । सुजनमनिमित्तमिव[1] न पश्यति । अभिजातमहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव[2] न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति

---

त्रिवर्गं वर्धयत्याशु राज्ञो दण्डो यथाविधि ।' इति । मनुरप्याह—दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ इति । कोषो भाण्डागारम् । मण्डलं देशः । द्वादशराजकं वा । 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ।' इति विश्वः । द्वादशराजमण्डलं तु मल्लिनाथेन शिशु व. स. २ श्लो. ८१, रघु वं. स. ९ श्लो. १७, टीकायां व्याख्यातं तत्रैव द्रष्टव्यमिह विस्तरभिया नोच्यते । इत्येतानि यस्य । पक्षे मूलं कन्दादि, दण्डो नालं, कोषमण्डलं कुड्मलसमूहश्च । विटा नायकसहायभेदाः—संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः । वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् । इत्युक्तलक्षणाः । जारा वा तान्पान्तीति विटपास्त एव विटपकास्तान् । नीचसङ्गमप्रणयिनीत्यर्थः । पक्षे विटपकान् वृक्षान् । वसु द्रव्यं तज्जननी । पक्षे अष्टवसूनां जननी । गङ्गा किल वसिष्ठशापान्मानुषत्वमुपागतानष्ट वसून् जनयामास । तत्कथा म. भा. आ. प. ९७ अ. द्रष्टव्या । तरङ्गबुद्बुदवच्चञ्चला तैश्चञ्चला च । संक्रान्तिः वस्तुनेच्छासम्बन्ध इति भा० । दशाविपर्ययो वा । पक्षे राश्यन्तरगमनम् । तमोबहुला तमोगुणविकारप्रचुरा । पक्षे तमोन्धकारः । हिडिम्बा हिडिम्बासुरस्वसा । भीमंमतिकठिनं साहसमेवैकं तेन हार्यं हृदयं यस्याः । पक्षे भीमो वृकोदरः । तदुक्तमादिपर्वणि—मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा । वृतोयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ इति । अचिरा द्युतिः प्रकाशः शोभेति यावत् । पक्षे अचिरद्युतिर्विद्युत् । दर्शितोनेकपुरुषाणामुच्छ्रायोऽभ्युन्नतिर्यया । पक्षे पुरुष ऊर्ध्वहस्तनरमानम् । प्रकटीकृतानेकपुरुषदघ्नशरीरेत्यर्थः । अल्पसत्त्वमधीरप्रकृतिम् । ईर्ष्यया—अनेन सपत्नीभाव उक्तः । प्रायेण हीश्वरा मूर्खा विद्वांसश्च निर्धना भवन्तीति भावः । तदुक्तम्—'कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ।' इति । उदारसत्त्वं महाशयम् । अनिमित्तमशुभचिह्नम् । इन्द्रजालं मन्त्रौषधादिना अन्यथा स्थितस्य वस्तुनोऽन्यथादर्शनम् । **सततेति—**

---

१ इव पश्यति. २ दुःस्वप्नम.

दमोहः । नित्यमस्नानशौचवध्यो बलवान्रागमलावलेपः । अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवति । इत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा । सर्वाविनयानामेकैकमप्येषामायतनं किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः । अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिला-

हेतवश्च । तेषां गम्यः साध्यो न भवतीति तथा । विषादिजन्यो मोहो मणिमन्त्रौषधिप्रभावाद्दूरीभवति । अयं तु न तथेति भावः । रागो विषयतृष्णा स एव मलः पङ्कस्तस्यावलेपो लेपनम् । स्नानमभिषेकः । शौचं शुचिक्रिया ताभ्यां वध्यो विनाश्यो न भवतीति तथा । अन्यमललेपनं तु जलादिना प्रक्षालनाद् दूरीभवति । अयं तु न तथेति भावः । सामान्यनिद्राया निशावसाने प्रबोधो भवति । परं राज्यसुखमेव संनिपातनिद्रा संनिपातज्वरो यथा प्राणहानिकरस्तथा हानिकरी निद्रा । यद्वा राज्यसुखानां संनिपातः समूहः राज्यसुखेषु सम्यङ् निपातः पतनम् । तदुपभोग इत्यर्थः । वा । स एव निद्रा सा । नास्ति क्षपावसाने निशान्ते प्रबोध उत्थितिर्यस्याः सा । अत एव घोरा भयावहा । **गर्भेति**—गर्भात्प्रभृति गर्भसंभवादारभ्यैश्वरत्वं धनसम्पन्नता । अप्रतिमरूपत्वमसमसौन्दर्यत्वम् । अविनयानां दुश्चेष्टितानाम् । आयतनं स्थानम् । समवायः समुदायः । उक्तं च हितोपदेशे—यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ इति । उक्तमेव विशदीकरोति **यौवनेति**—शास्त्रमेव जलं तेन यत्प्रक्षालनं तेन निर्मलापि निर्गतोऽज्ञानरूपमलो यस्यास्तादृश्यपि कालुष्यमुपयाति सदसद्विवेकाक्षमा भवतीत्यर्थः । सरागा रागेण सहवर्तमाना । रागो रक्तत्वमिति विरोधः । पक्षे रागो विषयाभिलाष इति परिहारः । वात्या वातसमूहः । 'पाशादिभ्यो यः' इति यः । समुद्भूता रजोगुणेन भ्रान्तिर्भ्रमो यस्याम् । रजोगुणो हि रागादीनामुद्भवः । तदुक्तं भगवद्गीतासु—रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । इति । लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ इति च । वात्यादिसमुद्भूता रजसो धूल्या भ्रान्तिर्भ्रमणं यस्यां तथा । प्रकृतिः शरीरारम्भकत्रिगुणावस्था । सा हि सत्वरजस्तमसामुत्कर्षापकर्षवशान्नरं सदसत्कर्मणि प्रवर्तयति । इंद्रियाणि करणान्येव हरिणास्तेषां हारिणी विलोभिनी । उपभोगः शब्दस्पर्शादिविषयोपभोग एव मृगतृष्णिका मरुमरीचिका । दुरन्ता दुःखावसाना । मरीचिकां वीक्ष्य मृगा यथा जलभ्रान्त्या तृष्णार्त-

१ बाधयन् २ अभिधीयसे. ३ सरागेव. ४ इन्द्रियहरिणं हरतीव. ५ सततदुरन्ता.

नीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु। भवादृशा एव भवन्ति भाजनान्युपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति। हरति च सकलमतिमलिनमप्यन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव गुरूपदेशः। प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण तदेव परिणमयति। अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य। कुसुमशरशरप्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम्। अकारणं च

---

वे भ्रम्यत एव केवलं न च जलं लभ्यते तथा विषयसुखास्वादलोलुपैर्विषयसेवनमुखभ्रान्त्या भ्रम्यत एव न च सुखं लभ्यते केवलं दुःखाकुलैरेव स्थीयते। अतो दुःखपरिणामैव विषयतृष्णेति भावः। कषायितात्मनो विकृतात्मनः। नवयौवनविकृतं हि मनो यथावद्वस्तुस्वरूपग्रहणेऽक्षमं सद्विषयोपभोगेऽसदपि सुखं सदिव पश्यतीति भावः। मलिलेति—'यथा कषायद्रव्येण हरीतक्यादिना अमधुराण्यपि जलानि (सविशेषं) मधुराणि स्युः' इति भानु०। अत्यासङ्गोऽत्यन्तासक्तिः। दिङ्मोहो दिशां भ्रान्तिः। **उन्मार्गेति**—उत्क्रान्तो मार्गादुन्मार्गः कुपथस्तत्र प्रवर्तयतीति तथा। पक्षे दिङ्मोहो दिग्विषयमज्ञानं यथा पुरुषमुन्मार्गेऽपथे प्रवर्तयति। भाजनानि पात्राणि। क्रिया हि वस्तूपहिता प्रसीदतीति भावः। अपगता मलाः संशयविपर्ययमोहादिरूपा यस्मात्। पक्षे मलः कालुष्यम्। तदुक्तं—प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः। इति। 'धीरेषु सत्कविवचो लभते विकासम्।' इति च। अभव्यस्य—भवतीति भव्यः साधुः। 'भव्यगेय—' इत्यादिना कर्तरि निपातः। स न भवतीति तस्यासाधोः। यद्वा अयोग्यस्य। 'भव्यं शुभे च सत्ये च योग्ये' इति कोषः। कुशिष्यो हि गुरूपदेशं मलिनयतीति भावः। शङ्खाभरणं—हस्तिनां दृष्टिदोषशमनार्थं शङ्खाभरणं कर्णे बध्यते इति प्रसिद्धिः। **हरतीति**—हिताहितमार्गोपदेष्टा गुरुस्तस्योपदेशः शिक्षा। प्रदोषसमयनिशाकरोऽतिमलिनमतिकृष्णमप्यन्धकारं यथापनयति तथाऽतिमलिनमपि दोषजातं रागद्वेषादिदोषसमूहं हरति। पुनश्च वयःपरिणामो वार्द्धक्यं शरीरधातूनामपचयात्कामादीनां प्रशमस्य हेतुः कारणं भवन् शिरसिजजालममलीकुर्वन् धवलीकुर्वन् पलितं जरसा शौक्ल्यं तद्रूपेण परिणमयति विकुरुते तथा गुरूपदेशोऽपि दोषजातममलीकुर्वन् प्रशमहेतुरिन्द्रियनिग्रहकारणं च सन् गुणरूपेण परिणमयति परिपाकं नयति। **अकारणमिति**—दुष्प्रकृतेर्दुरात्मनः अन्वय आभिजात्यं श्रुतं

---

१ भाजनम्. २ सुखेन. ३ अपहरति. ४ संप्रहार. ५ हादि.

भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य । चन्दनप्रभवो न दहति किमनलः । किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा। गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानमनुपजातपलितादिवैरूप्यमजरं वृद्धत्वमनारोपितमेदोदोषं गुरूकरणमसुवर्णविरचनमग्राम्यं कर्णाभरणमतीतज्योतिरालोको नोद्वेगकरः प्रजागरः । विशेषेण तु राज्ञाम् । विरला हि तेषामुपदेष्टारः । प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात् । उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति । शृण्वन्तोपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । अहंकारदाहज्वरमूर्छान्धकारिता विह्वला हि राजप्रकृतिः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः ।

---

ज्ञानं वा विनयस्य अकारणं कारणं न भवतीति नञो व्यत्यासेन योजना । उक्तं च हितोपदेशे- 'न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥' इति । प्रकारान्तरेण गुरूपदेशमेव स्तौति **गुरूपदेशश्चेति**- अजलं जलं विनापि । ०प्रक्षालनसमर्थम् । तथा च गुरूपदेशोऽजरं जराव्यतिरेकेणापि वृद्धत्वं तत्कार्यकरणात् । तथा चास्मिन्पलितादयो विरूपताकारिणो दोषा न प्रादुर्भवन्तीत्यहो महिमा गुरूपदेशस्य । एतदेव परमार्थतो वार्द्धक्यं यदाह मनुः—'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति । पुनश्च अनारोपितोऽकारितो मेदोदोषो येनैवंभूतं गुरूकरणं स्थूलीकरणम् । अन्यत्र स्थूलीभवने हि मेदोपचयदोषो भवतीति प्रसिद्धम् । नास्ति सुवर्णस्य विरचनं घटना यस्मिन्नेतादृक् कर्णाभरणं कर्णभूषणमग्राम्यं सुन्दरं च । अतीतं ज्योतिर्येन तादृश आलोकः । परोक्षार्थदर्शनेऽन्यतेजःपरिभाव्यपूर्वं किमप्यान्तरमेतज्ज्योतिरित्यर्थः । यद्वा अतीतं गतं ज्योतिर्यस्मात् । अयं प्रजागरः सकलार्थेषु जागरूकतयावस्थानम् । न तु प्रजागरो जागरणं तद्वदुद्वेगकरः संतापदः । **विरला इति**-प्रायः सर्वे राजच्छन्दानुवर्तिन एव भवन्तीति भावः । तदेव स्पष्टयति-प्रतिशब्दकः प्रतिध्वनिः । दान्त उद्गत उद्दामा उत्कटो यो दर्पोऽहंकारस्तेन यः श्वयथुः शोथस्तेन स्थगितं पिहितं श्रवणविवरं कर्णच्छिद्रं येषाम् । शृण्वन्तः केवलमाकर्णनव्यापारभाजो न त्ववधारयन्त इत्यर्थः । अत एव गजनिमीलितेन गजस्य यन्निमीलनं नेत्रसंकोचस्तद्वत्स्वगौरवचिन्तास्तिमितलोचना इत्यर्थः । खेदयन्त्याकुलीकुर्वन्ति । अहंकार एव दाहज्वरः संतापकारी ज्वरस्तेन या मूर्च्छा तयान्धकारिता लुप्तसंज्ञा । विह्वला विक्लवा । राजप्रकृती राजस्वभावः । अलीका मिथ्या योऽभिमानो गर्व आत्मन्युत्कर्षारोपो वा स एवोन्मादो व्याधिविशेषः । तदुक्तं सुश्रुतेन-मदयन्त्युद्धता दोषा यस्मा-

---

१ अविनयस्य २ ०प्रभवोपि. ३ मददोषम्. ४ विरचनाग्राम्यम्. ५ अपनीत. ६ उद्दामदर्पाश्च पृथु०. ७ तन्द्री, विषयविकार.

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रम[1]भ्रमरी लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैःश्रवसश्चञ्चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणे[2]रतिनैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता । न ह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या[3] । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुण[4]पाश-

---

दुन्मार्गमाश्रिताः । मानसांयमतो व्याधिरुन्माद इति कीर्तितः ॥ इति । यद्वाऽलीकाभिमानेन य उन्मादाश्रितविभ्रमस्तं कुर्वन्तीत्येवंशीलानि । राज्यमेव विषं तेन यो विकारो विकृतिस्तेन कृता या तन्द्रा प्रमीला तत्प्रदा । **आलोकयत्विति**-आलोकयतु यथार्थस्वरूपतया विचारयतु । कल्याणं श्रेयस्तस्मिन्नभिनिवेश इष्टसम्पादने आग्रहो यस्य । **सुभटेति**-सुभटा विक्रान्ता योद्धारस्तेषां खड्गमण्डलमेवोत्पलवनं तत्र यो विभ्रमो विलास इतस्ततः संचारश्च तत्र भ्रमरी । अनेन तस्याश्चाञ्चल्यं कठोरता चोक्ता । **क्षीरेति**-यथा कश्चिद्देशान्तरं गन्तुमिच्छन्निष्टजनवियोगं सोढुं सर्वथाऽसमर्थो विरहविनोदनार्थं किमपि तत्स्मृतिहेतु वस्त्वादाय गच्छति तथेयमपि सहवासाद्यः परिचयः । स्नेह इति यावत् । तद्वशात्पारिजातादीनां विरहविनोदचिह्नान्येतान्यादाय सागरादुद्गतेत्यन्वयः । कानि तानीत्यपेक्षायामाह—पारिजातपल्लवेभ्यो रागमारुण्यमनुरागश्च । पारिजातकुसुमानां रागो यथाऽस्थिरस्तथा लक्ष्म्यनुरागोपि । कस्मिंश्चिदपि दृढं भावं न बध्नातीति भावः । उक्तं च विशाखदत्तेन—'मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।' इति । एवमितरत्र । वक्रतां कुटिलतां प्रातिकूल्यं च । अनेन तस्या दुराराध्यत्वं सूचितम् । उक्तं च तेनैव कविना—'श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ।' इति । चञ्चलताम्-रंहोऽस्थिरतां च । लक्ष्म्याश्चाञ्चल्यं तु तथा प्रसिद्धं यथा 'चञ्चला' इति तस्या नामापि रूढम् । 'चञ्चला तु तडिल्लक्ष्म्योः' इति मेदिनी । आह च कालिदासः-येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् । इति । कालकूटं विषम् । अस्योत्पत्तिः भावप्रकाशे—देवासुररणे देवैर्हतस्य पृथुमालिनः । दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसंनिभः । निर्यासः कालकूटोस्य मुनिभिः परिकीर्तितः ॥ इति । मोहनशक्तिं मूर्च्छोत्पादनसामर्थ्यमन्यवशीकरणसामर्थ्यं च । एतदनुरोधात्केनापि कवयितम् 'चाञ्चल्यमुच्चैःश्रवसस्तुरङ्गात्कौटिल्यमिन्दोर्विपतो विमोहः । एताञ्छ्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥' इति । मदमुन्मादकत्वमौद्धत्यं च । उक्तं च 'कोर्थान्प्राप्य न गर्वितः' इति । अपरिचितं परिचयानिरपेक्षम् । एतदेवोक्तं परस्तात् 'न परिचयं रक्षति' इति । दृढं यद्गुणाः शौर्योदयः । यद्वा 'सन्धिर्नो विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इति नीतिशास्त्रसंमता गुणाः । ते एव पाशास्तैः

---

१ विभ्रम. २ मणेनै०. ३ अनार्या दुःखेन लभ्यते लब्धापि. ४ गुणसंदा०.

निजं चरितम्। तथाहि। सततमुष्माणमारोपयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशिसंभवापि तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। तथाहीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां व्याधगीतिरिन्द्रियमृगाणां परामर्शधूमलेखा सच्चरितचित्राणां विभ्रमशय्या मोहदीर्घनिद्राणां निवासजीर्णवलभी धनमदपिशाचिकानां तिमिरोद्गतिः शास्त्रदृष्टीनां पुरःपताका सर्वाविनयानामुत्पत्तिनिम्नगा क्रोधा-

---

उष्मशैत्ययोर्विरुद्धस्वभावत्वाद्विरोधः। परिहारपक्षे उष्मा धनतेजः। जाड्यं जडता मौढ्यं वा। उन्नतिमुच्छ्रायं धारयन्त्यपि नीचो ह्रस्वः स्वो भावो भवनं तस्य भावस्तत्तां प्रकटयतीति विरोधः। परिहारपक्षे उन्नतिरुत्कर्षः। नीचस्वभावता कुत्सितकर्मता। तृष्णां परिहारपक्षे धनाशाम्। ईश्वरतां शिवप्रकृतित्वम्। पक्षे ईश्वरतां प्रभुताम्, अशिवमशुभं च। बलवृद्धिमादधानापि लघिमानमशक्ततां करोतीति विरोधः। परिहारस्तु बलं सैन्यमित्यर्थाल्लघिमानं कार्पण्यमित्यर्थाद्वा। अमृतं पीयूषम्। कटुको जिह्वाकटुर्विपाको रसो यस्या इति विरोधः। परिहारस्तु कटुको दुःखदायी विपाकः परिणामो यस्या इत्यर्थात्। विग्रहवती शरीरधारिणी। परिहारपक्षे कलहकारिणी। पुरुषोत्तमेषूत्तमपुरुषेषु रतापि खलजनाः प्रिया यस्या इति विरोधः। परिहार पक्षे पुरुषोत्तमो विष्णुः। रेणुमयी पांसुमयी रजोगुणमयी वा। चपला चञ्चला अविमृश्यकारिणी च। दीप्यते स्फुरति स्वप्रभावमाविष्करोति। कज्जलवन्मलिनं कृष्णं। पक्षे कज्जलमेव मलिनं कर्म। संवर्धनवारिधारा पोषकजलधारा। व्याधगीतिः-मृगयाजीवा हि गानप्रियान्हरिणान्गीतैराकृष्य घ्नन्ति। तद्वदियमपि इन्द्रियहरिणान्विषयाभिमुखमाकृष्य विनाशयति। सच्चरितान्येव चित्राणि। तेषां परामृश्यतेऽनेनेति परामर्शः प्रोञ्छनं तदर्थं धूमलेखा। 'लोकैः कफनिवृत्त्यर्थं द्रव्यान्तरस्य धूमपानं कृत्वा पश्चात्स एवोद्गीर्यते। तत्स्पर्शादालेख्यं विनश्यतीति भावः। इति भानु०। विभ्रमशय्या विलासशयनम्। मोहः कर्तव्याकर्तव्यविचाराभावरूपः स एव दीर्घनिद्रा। लक्ष्म्या मोहिता यस्यां चिरं प्रतिबोधरहिताः शेरते। अतो दीर्घत्वम्। मोहविकारापेक्षया बहुवचनम्। **निवासेति**—जीर्णगृहेष्वेव पिशाचादयो निवसन्तीति प्रसिद्धम्। तिमिरं नेत्ररोगविशेषः। निम्नगा नदी। **क्रोधः** **परानिष्टाभिलाषेणानिष्टविषयप्रद्वेषहेतुकश्चित्तवृत्तिविशेषः**। स्वकामात्कृतश्चित्प्रतिहन्यमानादभि-

---

१ संततम्. २ उपजनयन्त्यपि. ३ कटु. ४ पुरःसर.

वेगग्राहाणामापानभूमिर्विषयमधूनां संगीतशाला भ्रूविकारनाट्यानामावासदरी दोषाशीविषाणामुत्सारणवेत्रलता सत्पुरुषव्याहाराणामकालप्रावृड्गुणकलहंसकानां विसर्पणभूमिर्लोकापवादविस्फोटकानां प्रस्तावना कपटनाटकस्य कदलिका कामकरिणो वध्यशाला साधुभावस्य राहुजिह्वा धर्मेन्दुमण्डलस्य। न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति। पुस्तकमय्यपीन्द्रजालमाचरत्युत्कीर्णापि विप्रलभते श्रुताप्यभिसंधत्ते चिन्तितापि वञ्चयति।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः। सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथाहि। अभिषेकसमय एवैषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्। अग्निकार्यधूमेनेव मलिनीभवति हृदयम्। पुरोहितकुशाग्रसंमार्जनीभिरिवापनीयते क्षान्तिः। उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम्। आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम्। चामरपवनैरिवापह्रियते सत्यवादिता। वेत्रदण्डैरिवोत्सार्यन्ते गुणाः। जयशब्दकलकलैरिव तिरस्क्रियन्ते साधुवादाः। ध्वजपटपल्लवैरिव परामृश्यते यशः। तथाहि। केचिच्छ्रमवशशिथिलशकुनिगलपुटचप-

---

ज्वलनात्मको वा। तस्यावेगा विस्फूर्जितानि त एव ग्राहा मकरादयः। भ्रूविकारा भ्रूभङ्गास्तेषां नाट्यं नर्तनम्। सत्पुरुषव्याहाराणां शिष्टोपदेशानाम्। **अकालेति**–प्रावृषि हंसा नश्यन्ति इति प्रसिद्धिः। लक्ष्मीः सर्वगुणानां विनाशहेतुरिति भावः। विस्फोटाः पिटकाः। कदलिका वैजयन्तिका। यद्वा रम्भा यत्र कामकरी स्वच्छन्दं विहरतीति भावः। धर्मो धर्माचरणम्। अपरिचितयाऽसंस्तुतया। यो निर्भरं गाढं नोपगूढः। 'वा' चार्थे। न च विप्रलब्धः प्रतारितः। श्रियं लब्ध्वा यावन्नर आत्मानं सुस्थं मन्यते तावदेव लक्ष्मीस्तं मुञ्चति। एवं वञ्चितः स दुःखसागरे निमज्जतीति भावः। सर्वप्रकारेण वञ्चनप्रकारमेवाह नियतमित्यादिना। दैववशेन दुर्दैवात्। विक्लवाः सर्वतो हता इत्यर्थः। ०अधिष्ठानतामधिकरणताम्। तदेवोपपादयन्ति तथाहीति। दक्षिणस्य भावो दाक्षिण्यम्। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु'। इति शाश्वतः। अग्निकार्यमभिषेकानन्तरं क्रियमाणं होमादि। पुरोहितः पुरोधाः तस्य दर्भाग्राण्येव संमार्जन्यः शोधन्यः। उष्णीषं शिरोवेष्टनम्। साधुवादा हितवचनानि। परामृश्यते अपमृज्यते। **श्रमेति**–श्रमवशादायासहेतुना शिथिलं श्लथं यत्पारावतमयूरादिशकुनीनां गलपुटं तद्वच्चपलाभिश्चञ्चलाभिः।

---

१ व्यवहाराणाम्. २ दैवपरिगृहीताः. ३ विक्लवीभवन्ति. ४ मलिनी क्रियते. ५ अपाक्रियते. ६ अपसार्यते. ७ कलरवैः ८ श्रमशिथिल. ९ पक्षपुट.

त्वाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोऽनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमाना विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति । ग्रहैरिव गृह्यन्ते । भूतैरिवाभिभूयन्ते । मन्त्रैरिवावेश्यन्ते । सत्त्वैरिवावष्टभ्यन्ते । वायुनेव विडम्ब्यन्ते । पिशाचैरिव ग्रस्यन्ते । मदनशरैर्मर्माभिहता इव मुखभङ्गसहस्राणि कुर्वते । धनोष्मणा पच्यमाना इव विचेष्टन्ते । गाढप्रहाराहता इवाङ्गानि न धारयन्ति । कुलीरा इव तिर्यक्परिभ्रमन्ति । अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते । मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति । सप्तच्छदतरव इव कुसुमरजोविकारैरासन्नवर्तिनां शिरःशूलमुत्पादयन्ति । आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते । कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते । जातुषाभरणानीव सोष्माणं न सहन्ते । दुष्टवारणा

---

खद्योतो ज्योतिरिङ्गणस्तस्योन्मेषवन्मुहूर्तं क्षणं मनोहराभिः । एतादृशीभिः सम्पद्भिः प्रलोभ्यमानाः । धनस्य लवो लेशस्तस्य लाभेनावलेपो दर्पस्तेन विस्मृतं जन्म जन्मसमयस्थितिरित्यर्थः । यैः । स्वकुलविरुद्धाचरणं कुर्वन्त इति यावत् । पुनश्च राग आसक्तिलक्षणस्तस्य वेशस्तस्मिन्नभिनिवेशस्तेन । रागावेशं विशेषयति **अनकेति**—अनेके ये दोषा विध्यतिक्रमलक्षणा वा गुरुतल्पगमनाभक्ष्यभक्षणादयो वा तैरुपचितेन व्याप्तेन । यद्वा गौतमोक्ता दोषाः । तथा हि सूत्रम् ' तत्र त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ' । ' तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः । रागपक्षाः—कामो मत्सरः स्पृहा तृष्णा क्रोध इति ' । अनेकैर्दोषैर्वातकफपित्तविकारैरुपचितेन दुष्टासृजा दूषितरक्तेनेव । **पञ्चभिरपि**—ज्ञानेन्द्रियैः तानि च—'श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी' । इति । **मन्त्रैरिति**—मन्त्रैर्देवताधिष्ठानकैरावेश्यन्ते भूतादिप्रवेशवन्तः क्रियन्ते । सत्त्वैर्दुष्टप्राणिभिरिवावष्टभ्यन्ते हठाद्गृह्यन्ते । विडम्ब्यन्त इतस्ततो विक्षिप्त्या । मुखभङ्गा आननविकृतयः । कुलीराः कर्कटाः । तिर्यक्परिभ्रमन्ति उन्मार्गेण गच्छन्तीत्यर्थः । अधर्मः शिष्टाचारादित्यागः । मृषावादविपाकोऽसत्यभाषणपरिणामः । **कुसुमेति**—कुसुमं नेत्ररोगस्तस्यैव रजोविकारे रजोविकृतेक्षणैरित्यर्थः । पक्षे कुसुमरजः पुष्पपरागः । ' कुसुमं स्त्रीरजो नेत्ररोगयोः फलपुष्पयोः । ' इति मेदिनी । उत्कुपितलोचना दूषितनेत्राः । कालदष्टाः कालसर्पदष्टाः । अकाले सन्ध्यादिरूपे दष्टा वा । अस्मिन्पक्षे सर्पेणेति शेषः । जातुषाभरणानि लाक्षा-

---

१ विषयरस. २ वाद्विप०. ३ पार्श्व. ४ इव पुरःस्थितं. ५ उत्कम्पित. ६ जातुषा इव.

इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम् । तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति । इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति । दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति । अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः । श्मशानाग्नय इवातिरौद्रभूतयः । तैमिरिका इवादूरदर्शिनः । उपसृष्टा इव क्षुद्राधिष्ठितभवनाः । श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति । चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति । अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति । तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति ।

भूषणानि । सोष्माणं तेजस्विनम् । जत्वपि तेजःसान्निध्याद्द्रवीभवति । महान् मनोहंकारः तेन यः स्तम्भो जडिमा तेन । पक्षे महन्मानं प्रमाणमस्य तादृशः स्तम्भ आलानस्तम्भः तेन । पानेन मधुपानेन तज्जन्यमदेनेति यावत् । वर्धितं तैक्ष्ण्यं क्रौर्यं येषाम् । पक्षे पानं निशाने घर्षणं तेन वर्धितं तैक्ष्ण्यं तिग्मता येषाम् । परप्रेरिता धूर्तैः प्रोत्साहिताः । पक्षे शत्रुमुक्ताः । दण्डविक्षेपैः लगुडक्षेपणैः । पक्षे सैन्यप्रेषणैः । दण्ड उपायभेदो वा तत्प्रयोगैः । द्रव्यापहारादि कृत्वेत्यर्थः । **अकालेति**—अनार्तवपुष्पोद्गमो हि दुश्चिह्नम् । तदुक्तम्—"द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः । फलप्रसवयोर्वन्ध्यं महोत्पातं विदुर्बुधाः ' ॥ इति भानु० । उक्तं च हितोपदेशे—'अकालकुसुमानीव भयं संजनयन्ति हि । ' इति । अतिरौद्रा अन्येषां भयावहा भूतिः सम्पद्येषां ते । पक्षे भूतिर्भस्म । तैमिरिकाः तिमिररोगेणोपहतचक्षुषः । **अदूरेति**—भाविनमनर्थं न पश्यन्तीति भावः । परलोकभयं वा न गणयन्ति । पक्षे दूरस्थितं वस्तु द्रष्टुमक्षमाः । उपसृष्टाः सञ्जातकामोपसर्गाः कामुका इत्यर्थः । आविष्टा इति केचित् । क्षुद्रा वेश्यास्ताभिरधिष्ठितमाश्रितं भवनं येषाम् । 'क्षुद्रा व्यङ्गा नटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोः ' इति विश्वमेदिन्यौ । इत्युभयत्रसमानम् । यद्वा उपसृष्टा बहिःकृता इव । क्षुद्रैर्विटैः क्षुद्राभिर्वाधिष्ठितं गृहं येषां । पक्षे क्षुद्रैर्नीचैः । मृतपटहाः नृपादीनां मरणे पटहा वाद्यन्ते । कस्मिंश्चिद्देशे मृतकानां पुरस्तादपि वाद्यवादनं देशाचारः । ते यथा श्रूयमाणा निर्वेदमुत्पादयन्ति तथा अमी अपि । **महापातकेति**—महापातकानि ब्रह्महत्यादीनि तदध्यवसायास्तन्निश्चयाः । आध्मातमूर्तयः स्फीतदेहाः । व्यसनानां मृगयामदपानस्त्रीसेवनदुरोदरादीनां शतं तस्य शरव्यतां लक्ष्यताम् । व्यसनवशं याता इत्यर्थः । वल्मीकं वामलूरस्तस्य तृणं तदग्रावस्थिताः । ते यथा पतितास्तत्रैव झटिति विलीयन्ते तथा । पतितं स्वधर्मच्युतम् । अत्र याज्ञवल्क्यः—'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ' ॥ इति । तदुक्तं मनुना—'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह इति'॥

१ महालान. २ अतितृष्णाविषवेग, तृष्णावेश. ३ असवः, आसवाः. ४ पारुष्याः. ५ संख्यतां.

[1]अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्द्यूतं विनोद इति परदाराभिगमनं वैदग्ध्यमिति मृगयां श्रम इति पानं विलास इति प्रमत्तता शौर्यमिति स्वदारपरित्यागोऽव्यसनितेति गुरुवचनावधीरणमपरप्रणेयत्वमित्यजितभृत्यता सुखोपसेव्यत्वमिति नृत्यगीतवाद्यवेश्याभिसक्ती रसिकतेति महापराधा-[2]वकर्णनं महानुभावतेति परिभवै[3]सहत्वं क्षमेति स्वच्छन्दता प्रभुत्वमिति देवाव-

---

राजान इति शेषः । **अपरे त्विति**—अपरे तु उक्तप्रकारेण दोषानपि गुणपक्षमध्यारोपयद्भिर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतां यान्ति इत्यन्वयः । कीदृशैर्धूर्तैः । स्वार्थसाधनतत्परैः । धनमेव पिशितमामिषं तस्य ग्रासे गृध्रैः । अतिगृध्नुभिरित्यर्थः । **आस्थानेति**—आस्थानं राजसभा तदेव नलिनी कमलिनी तस्यां बकैरिव स्थितैः । बका यथा नलिनीमाश्रित्य तत्पत्रादिभिरावृतशरीरा मत्स्यान्वञ्चयित्वाकस्मादेव भक्षयन्ति तद्वद्धूर्ता अपि नृपाश्रयबलात्परान् वञ्चयित्वा तत्स्वं भक्षयन्तीति भावः । प्रतारणाप्रकारमेवाह—द्यूतं विनोदः क्रीडामात्रम् । एवं शाकुन्तलेपि—'मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ।' इति । न च तद्विधाने कापि हानिः पातकं वास्ति । इत्यादिकथनप्रकारेण । एवमुत्तरत्रापि । **परेति**—यः परदारवशीकरणचतुरः स एव तत्संभोगं करोतीति प्रतिपादयन्तीति भावः । पानं मद्यपानम् । एतानि चत्वारि कामजानि व्यसनानि । तदुक्तं मनुना—पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ इति । प्रमत्तताऽनवधानता । अव्यसनितानासक्तता । **गुर्विति**—' मूढः परप्रत्ययनेयबुद्धिः ' इति वचनादमूढेन राज्ञा स्वयमेव सर्वव्यवहारः कार्यः । न कस्यचिदनुरोधाद्वर्तितव्यं गुरुवचनमप्यनादरणीयम् । अतो भवत्कृतो गुरुवचनतिरस्कारो भवतोऽपरप्रणेयत्वमेव स्थापयेदित्यादिकथयन्तीति भावः । ' गुरुवचनावधीरणेन क्रूरोयं प्रभुरिति भियाऽपरे सामन्तादयो वश्यत्वं प्रतिपद्यन्ते इति तेषामाशयः । ' इति भानु० । **अजितेति**—" शिक्षार्थे ताडिता भृत्या यस्य राज्ञः सम्यक्सेवां कुर्वन्ति स जितभृत्योऽन्यथाऽजितभृत्यस्तस्य भावस्तत्ता ताम् । इदं च नृपतेर्दूषणम् । वैगुण्ये भृत्यानामवश्यं शिक्षा प्रदातव्येति राजचिह्नम् । तदुक्तम्—' शठदमनमशठपालनमाश्रितभरणं च राजचिह्नानि ' इति । तस्मिन्सुखोपसेव्यत्वं सुखेनोपसेवितुं योग्यः सुखोपसेव्यस्तस्य भावस्तत्त्वम् । सुखोपसेव्योयं नृप इति लोके ख्यातिमात्रं गुण आरोप्यते । " इति भानु० । रसिकता सहृदयता । अन्यथा अरसिकत्वदोषापत्तिः स्यादिति भावः । महापराधानां मनुष्यवधादीनामवकर्णनमाकर्णनं न तु तेन पर्याकुलीभावश्चित्तस्य तत्प्रतीकारचिन्तनं वा । महानुभावता महापराक्रमः । अन्यकृतः परिभवोऽवमानना तस्य सहत्वं क्षमा तितिक्षा । स्वच्छन्दता स्वैरवर्तनमेव स्वप्रभुत्वप्रकटनम् । देवानां विष्ण्वादिदेवतानामवमाननमवगणनं

---

१ केचिन्मृगयापानमत्ततादिशब्दा द्वितीयान्ताः पठ्यन्ते । २ ०राधानाकर्णनं, अनवकर्णनम्. ३ पराभव.

माननं महासत्त्वतेति बन्दिजनख्यातिर्यश इति तरलतोत्साह इत्यविशेषज्ञता-अपक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तःस्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति । मनसा देवताध्यारोपणप्रतारणादसद्भूतसंभावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति । त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते । दर्शनप्रदानमप्यनुग्रहं गणयन्ति । दृष्टिपातमप्युपकारपक्षे स्थापयन्ति । संभाषणमपि संविभागमध्ये कुर्वन्ति । आज्ञामपि वरप्रदानं मन्यन्ते । स्पर्शमपि पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । न पूजयन्ति द्विजातीन् । न मानयन्ति मान्यान् । नार्चयन्त्यर्चनीयान् । नाभिवादयन्त्यभिवादनार्हान् । नाभ्युत्तिष्ठन्ति गुरून् । अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनो-

---

महासत्त्वता महद्धैर्यप्रकाशनम् । बन्दिजना मागधास्तैः ख्यातिः स्तुतिः । न तु पण्डितजनकृता स्तुतिः । अविशेषज्ञता भृत्येषूत्तमाधममध्यमविवेकाभावः । तदुक्तम्—निर्विशेषं यदा राजा समं सर्वेषु वर्तते । तदोद्यमसमर्थानामुत्साहः परिहीयते ॥ इति । अपक्षपातित्वं समवृत्तित्वम् । गुणेति—गुणत्वेन प्रतिपादयन्ति । पुनश्च धूर्तानेव विशिनष्टि अन्तरिति । अमानुषोचिताभिर्दिव्योचिताभिः । वित्तमदेन मत्तमुन्मादितं चित्तं येषां तेऽत एव निश्चेतनतयाऽपगतविवेकतया इ० । अतिमानुषमतिक्रान्तमनुष्यधर्मम् । उत्प्रेक्षमाणा मन्यमानाः । प्रारब्धा दिव्योचिता देवतोचिता याश्चेष्टास्तास्ताः क्रियास्ताभिरनुभावो माहात्म्यं येषाम् । आत्मविडम्बनामसद्गुणारोपलक्षणाम् । देवतात्वेन संभावनाप्रकारमेवाह । मनसेति । असद्भूता मिथ्याऽनुपपन्ना वा या संभावना हरिहराद्यवतारत्वेन कल्पना तयोपहताः । अन्तरिति—हरेश्चतुर्भुजत्वात् । त्वगिति—हरस्य त्र्यम्बकत्वात् । संविभागः पात्रवशाद्द्रव्यादिवितरणं पारितोषिकं वा । अनर्थकोऽर्थशून्यो यः आयासः श्रौतस्मार्तादिकर्मानुष्ठानप्रयासस्तेनान्तरितं विषयोपभोगसुखं यस्य । जरया यद्वैक्लव्यं विकलता तस्मात्प्रलपितं जल्पनम् ।

---

१ अमानुषलोक. २ आत्मारोपित. ३ अतिमानुष्यकम्. ४ विप्रता०, प्रतारणासंभूत,—समुद्भूत. ५ स्वललाटे. ६ द्विजान्.

पदेशम् । आत्मप्राज्ञपरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनदन्ति तमालपन्ति तं पार्श्वे कुर्वन्ति तं संवर्धयन्ति तेन सह सुखमवतिष्ठन्ते तस्मै ददति तं मित्रतामुपनयन्ति तस्य वचनं शृण्वन्ति तत्र वर्षन्ति तं बहु मन्यन्ते तमाप्ततामापादयन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति । किं वा तेषां सांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणमभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः पराभिसंधानपरा मन्त्रिण उपदेष्टारो नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिर्मारणात्मकेषु शास्त्रेष्वभियोगः सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः ।

तदेवंप्रायेतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः । यथा च न प्रकाश्यसे विटैर्न प्रतार्यसे कुशलैर्नास्वाद्यसे भुजंगैर्नावलुप्यसे सेवकवृकैर्न वञ्च्यसे

---

**आत्मेति**–आत्मबुद्ध्यवज्ञानमिति कृत्वा सचिवोपदेशेऽनादरं कुर्वन्ति । तत्र वर्षन्ति धनमिति शेषः । आप्ततां शिष्टतामापादयन्ति प्रापयन्ति । उद्भावयति प्रथयति । **किंवेति**–सांप्रतं युक्तम् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । ते युक्तायुक्तविचारं नैव कुर्वन्तीति भावः । येषां न मन्वादिप्रणीतं धर्मशास्त्रं प्रमाणं किंतु अतिनृशंसप्रायोऽतिक्रौर्यप्रचुरो य उपदेशस्तेन निर्घृणं वीतदयम् । कौटिल्यशास्त्रं–कौटिल्यश्चाणक्यः 'कौटिल्यः कुटिलमतिः स एष येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः' इति मुद्राराक्षसे वर्णितः । तत्प्रणीतं शास्त्रं 'अर्थशास्त्रम्' इति प्रसिद्धम् । येषां गुरव उपदेष्टारो न श्रुतिस्मृतिशास्त्रनिष्णाः शिष्टाः किंतु अभिचारक्रिया परवधोत्पादनार्थं कृत्यादिजननक्रिया । 'हिंसाकर्माभिचारः स्यात्' इत्यमरः । तया क्रूरा एकाद्वितीया प्रकृतिर्येषां तादृशः पुरोधसः । अभिसंधानं वञ्चना । उक्तं च भारविना–स किंसखा साधु न शास्ति योऽधिपम्' इति । मारणात्मकेषु अभिचारक्रियया परवधोत्पादकेषु तन्त्रेषु । अभियोगः साग्रहप्रयत्नः । 'अभियोगस्त्वभिग्रहः' इत्यमरः । सहजप्रेम्णार्द्रं स्निग्धं हृदयं येषामत एवानुरक्ताः । **तदेवमिति** । अतीति–अतिकुटिला अतिकौटिल्यपूर्णाः कष्टा आयासप्रदाश्चेष्टास्तासां सहस्रैर्दारुणे । राज्यतन्त्रे राज्यशासनव्यवहारे । उपालभ्यसे निन्दागर्भोक्त्या परिभाष्यसे । प्रकाश्यसे असदाचारतया प्रकटीक्रियसे । विटैः कामुकैः । भुजङ्गैर्जारैः । आस्वाद्यसे द्रव्यापहरणद्वारोपभुज्यसे । वनितोपोढरागा स्त्री । उक्तं च–' सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि ।

---

१ तस्य मन्त्रिताम्. २ उपजनयन्ति. ३ असांप्रतम्. ४ शस्त्रेषु. ५ कुटिलकुचेष्टा. ६ मोहान्धकार. ७ प्रहस्यसे, प्रतार्यसे. ८ प्रहस्यसे.

धूर्तैर्न प्रलोभ्यसे वनिताभिर्न विडम्ब्यसे लक्ष्म्या न नर्त्यसे मदेन नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे[1] रागेण नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गं। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव[2] पित्रा सप्तद्वीप[3]भूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति। इत्येतावदभिधायोपशशाम।

उपशान्तवचसि शुकनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इवोन्मीलित इव स्वच्छीकृत[4] इव निर्मृष्ट इवाभिषिक्त इवाभिलिप्त इवालंकृत इव पवित्रीकृत इवोद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

ततः कतिपयदिवसापगमे च राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन पुण्येहनि पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलमनेकनरपतिसहस्रपरि-

---

कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति' ॥ इति। नर्त्यसे तास्ताश्चेष्टाः कार्यसे। आक्षिप्यसे कुपथं नीयसे। अपह्रियसे आत्मसात्क्रियसे। केवलं सुखोपभोगरतेन न त्वया भाव्यमित्यर्थः। काममत्यन्तम्। यद्वा काममभ्युपगमे अप्रतिबुद्धमप्रगल्भमतिम्। मदयन्ति समदं कुर्वन्ति। न भवादृशमिति शेषः। कल्याणैः मङ्गलैः सह। प्रतापं कोषदण्डजं तेजः 'स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्।' इत्यमरः। आरोपयितुं शत्रुनृपाणामुपरि लब्धप्रतिष्ठं कर्तुम्। सिद्धादेशः सिद्धः अप्रतिहत आदेशो भविष्यकथनमाज्ञा च यस्य। आह च विशाखदत्तः—'पैरैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते'। उन्मीलित उज्ज्वालितः। निर्मृष्टः संस्कृतः। उद्भासित उद्दीपितः। तत इति—ततो राजा स्वयमुत्क्षिप्तकलशः सुतमभिषिषेचेत्यन्वयः। पुरोधसा पुरोहितेन सम्पादितं विहितमशेषं राज्याभिषेकमङ्गलं यस्येति सुतमि-

---

१ आ-अव कृष्यसे. २ भवत्. ३ द्वीपसमुद्र. ४ स्वस्थीकृत.

वृतः सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन सर्वौषधिभिः सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेनानन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच। अभिषेकसलिलार्द्रदेहं च तं लतेव पादपान्तरं निजपादपममुञ्चत्यपि तारापीडं तत्क्षणमेव संचक्राम राजलक्ष्मीः। अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमापादतलादामोदिना चन्द्रातपधवलेन चन्दनेनानुलिप्तमूर्तिरभिनवविकासितकुसुमकृतशेखरो गोरोचनाच्छुरितदेहो दूर्वाप्रवालरचितकर्णपूरो दीर्घदशमनुपहतमिन्दुधवलं दुकूलयुगलं वसानः पुरोहितप्रतिबद्धप्रतिसरप्रसाधितपाणिर्नवराजलक्ष्मीकमलिनीमृणालेनाभिषेकदर्शनार्थमागतेन सप्तर्षिमण्डलेनेव हारेणालिङ्गितवक्षःस्थलः सितकुसुमग्रथिताभिरजानुलम्बिनीभिरिन्दुकरकलाभिर्वैकक्षकस्रग्भिर्निरन्तरनिचितशरीरतया धवलवेषपरिग्रहतया च नरसिंह इव विधुतकेसरनिकरः कैलास इव स्रवत्स्रोतस्विनीस्रोतोराशिरैरावत इव मन्दाकिनीमृणालजालजटिलः क्षीरोद इव स्फुरितफेनलवाकुलस्तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरःप्रारब्धसमुत्सारणः सभामण्डपमुपगम्य काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह।

---

त्यस्य विशेषणम्। निजपादपं स्वाश्रयम्। एवं कालिदासोपि—नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम्। अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम्॥ आमोदिनात्यन्तमनोहरगन्धवता। 'आमोदः सोतिनिर्हारी' इत्यमरः। छुरितदेहोन्तरान्तरा लिप्तमूर्तिः। दूर्वेति-दूर्वाया विष्णुलोमोत्पन्नत्वात्पवित्रतया माङ्गल्याच्च। तदुक्तं भविष्योत्तरे—'वन्द्या पवित्रा देवैस्तु सर्वदाभ्यर्चिता तथा' इति। 'दूर्वा दहति पापानि धात्री हरति पातकम्। हरीतकी हरेद्रोगं तुलसी हरते त्रयम्॥' इति विष्णुधर्मोत्तरे च। अनुपहतं नूतनमधौतं च। 'अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे'। इत्यमरः। पुरोहितेन प्रतिबद्धो यः प्रतिसरो हस्तसूत्रम्। 'आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने।' इति विश्वः। तेन प्रसाधितोलंकृतः पाणिर्यस्य। नवाभिनवा राजलक्ष्मीर्यौवराज्यश्रीः सैव कमलिनी तस्य आयतत्वान्मृणालमिव स्थितेन। मुक्ताफलानामतिस्थौल्यादुत्प्रेक्षते **अभिषेकेति**। अनुरूपभावो विक्रमाङ्कचरिते—वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव। मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सुप्रसादास्तु सरस्वती वः॥ इति। इन्दुकरकलाभिश्चन्द्रकिरणमनोहराभिः। वैकक्षकशब्दोव्याख्यातः। ० निचित—व्याप्त—। **नरसिंह** इव—चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम्। इति भागवते। केसरनिकरः सटासमूहः अत्र केसरस्रजोः धवलवेषशरीरवर्णयोश्च साम्यम्। एवमन्यत्राप्यूह्यम्।

---

१ सितकु०. २ अभिनव. ३ कोमलाभिः, कलापकोमलाभिः. ४ वैकक्ष. ५ विधुत. ६ लला. ७ आगम्य.

आरूढस्य चास्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रलयघनघटाघोषघर्घरध्वनिरुदधिरिव मन्दरपातैर्वसुंधरापीठमिव युगान्तनिर्घातैरुत्पातजलधर इव तडिद्दण्डपातैः पातालकुक्षिरिव महावराहघोणाभिघातैः कनककोणैरभिहन्यमानः प्रस्थानदुन्दुभिरामन्थरं दध्वान । येन ध्वनता समाध्मातानीवोन्मीलितानीव पृथक्कृतानीव विस्तारितानीव गर्भीकृतानीव प्रदक्षिणीकृतानीव बधिरीकृतानीव रवेण भुवनान्तराणि । विश्लेषिता इव दिशामन्योन्यबन्धसंधयः । यस्य च भयवशविषमवलितोत्तानफणासहस्रेणालिङ्ग्यमान इव रसातले शेषेण मुहुर्मुहुरभिमुखदत्तदन्तोर्ध्वघातैराहूयमान इव दिक्षु दिक्कुञ्जरैः संत्रासरचितरेचकमण्डलैः प्रदक्षिणीक्रियमाण इव नभसि दिवसकररथतुरगैरपूर्वशर्वाट्टहासशङ्काहर्षहुंकृतेनाभाष्यमाण इव कैलासशिखरिणि त्र्यम्बकवृषभेण कृतगम्भीरकण्ठगर्जितेन प्रत्युद्गम्यमान इव विबुधसद्मन्यैरावतेनाश्रुतपूर्वरवजनितरोषावेशातिर्यगवनमितविषाणमण्डलेन प्रणम्यमान इव यमसद्मनि कृतान्तमहिषेण संत्रस्तलोकपालाकर्णितो

---

स्रोतस्विनी गङ्गा । कृतेति—कृतो यथोचितः सकलराजलोकस्य संमानो येन तस्य । प्रलयकालिका या घनघटा मेघमाला तस्या घोषवद् घर्घरो ध्वनिर्यस्य । वसुन्धरापीठं धरातलम् । युगान्ते ये निर्घाता महाभूतानां परस्पराहतिशब्दास्तैः । निर्घातशब्दो व्याख्यातः [ पृ. २९ पं. १० ] । कोणाः पटहादिवादनदण्डाः । 'कोणो वीणादिवादनम्' इत्यमरः । आ अभिव्याप्य मन्थरं स्तिमितं यथा तथा । दुन्दुभिध्वानस्य सकलभुवनपूरणप्रकारमाह येनेति । समाध्मातान्यापूरितानि । अतएव उन्मीलितानीव स्फीतानीव । गर्भीकृतानीव सकलविवरपूरणात् । प्रदक्षिणीकृतानि सकलभूमण्डलभ्रमणात् । विश्लेषिता विघटिताः । यस्य च दुन्दुभेर्निनादस्त्रिभुवनं बभ्राम । भयवशेन विषममसंस्थितं यथा तथा वलितं परिवर्तितमुत्तानमूर्ध्वीकृतं फणामण्डलं येन । आलिङ्ग्यमानः सर्वतः प्राप्यमाणः । आहूयमानः प्रतिद्वंद्विगजशङ्कयेति शेषः । सत्रासाद्रचितं रेचकमण्डलं 'तिर्यग्भ्रमणमण्डलम्' इति भानु० । यैः । रेचकमण्डलं मध्यमगत्या परिभ्रमणं वा । उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः ।' इति हैमनाममाला । अपूर्वोऽश्रुतपूर्वो यः शर्वस्य शिवस्याट्टहास उच्चैर्हासस्तस्य शङ्कया बुद्ध्या हर्षेण यत् हुंकृतं तेन । अश्रुतपूर्वरवेण यो रोषावेशः क्रोधोदयस्तेन तिर्यगवनमितं प्रहारेच्छयेत्यर्थः । अयं महिषाणां स्वभावः । विषाणमण्डलं येन । कृतान्तो

---

१ घातैः. २ चण्डपातैः. ३ अस्मात्परं 'मुखरीकृतानीव' इत्यधिकं क्वचित्. ४ चलित. ५ मेरौ.

बभ्राम त्रिभुवनमखिलं निनादः । ततो दुन्दुभिरवमाकर्ण्य जयजयेति च सर्वतः समुद्घुष्यमाणजयशब्दः सिंहासनात्सह द्विषतां श्रिया संचचाल चन्द्रापीडः । समन्तात्ससंभ्रमोत्थितैश्च परस्परसंघट्टविघटितहारसूत्रविगलिताननवरतमाशाविजयप्रस्थानमङ्गललीलालाजानिव मुक्ताफलप्रकरान्क्षरद्भिः पारिजात इव सितकुसुममुकुलपातिभिः कल्पपादपैरैरावत इव विमुक्तकरसीकरैराशागजैर्गगनाभोग इव तारागणवर्षिभिर्दिगन्तरैर्जलदकाल इव स्थूलजललवासारस्यन्दिभिर्जलधरैरनुगम्यमानो नरपतिसहस्रैरास्थानमण्डपान्निरगात् ।

निर्गत्य च पूर्वारूढया पत्रलेखयाध्यासितान्तरासनामुपपादितप्रस्थानसमुचितमङ्गल्यालंकारां ससंभ्रमाधोरणोपनीतां करेणुकामधिरुह्याचलरेचकचक्रीकृतक्षीरोदावर्तपाण्डुरेण दशवदनबाहुदण्डावस्थितकैलासकान्तिना मुक्ताफलजालिना शतशलाकेनातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे । निर्गच्छंश्चाभ्यन्तरावस्थित एव प्राकारान्तरितदर्शनानां द्वारावस्थितानां प्रतिपालयतां राज्ञामुन्मयूखानां चूडामणीनामलक्तकद्रवद्युतिमुषा बहलेनालोकजालातपेन राज्याभिषेकानन्तरप्रसृतेन स्वप्रतापवह्निनेवात्यर्थं पिञ्जरीक्रियमाणा दश दिशो यौवराज्याभिषेकजन्मना

---

यमस्तस्य महिषो वाहनभूतः । **समन्तादिति**—अथ नरपतिसहस्रैरनुगम्यमान आस्थानमण्डपान्निरगात् । समन्तादित्यादीनि नरपतिविशेषणानि । परस्परसंघट्टेन संघर्षेण विघटितं त्रुटितं यद्धारसूत्रं तस्माद्विगलितान् । आशाविजयो दिग्विजयस्तदर्थं प्रस्थानं तत्र या मङ्गललीला तदर्थान् लाजान् । विमुक्ताः करेभ्यः शुण्डाभ्यः सीकरा पृषता यैः । आशागजैः दिग्गजैः । गगनाभोगो गगनविस्तारः । स्थूलाः पृथवो ये जललवा अम्बुबिन्दवस्तेषामासारो वेगवती वृष्टिस्तं स्यन्दन्त इत्येवंशीलैः । **समेति**—समध्यासितमन्तरासनं नृपासनानन्तरवर्त्यासनं यस्यास्ताम् । प्रस्थानसमये समुचिता मङ्गल्या मङ्गलकरा अलंकारा यस्याः । आधोरणो हस्तिपकः । अचलस्य मन्दरस्य रेचकस्तिर्यग्भ्रमणं तेन चक्रीकृतः परिभ्रमितो यः क्षीरोदो दुग्धोदधिस्तस्यावर्तवत्पाण्डुरेण । ०कैलासकान्तिना कैलासवच्छोभमानेन । शतं शलाका ईषिका यस्य तेन । **निर्गच्छन्निति**—निर्गच्छंश्च दश दिशोऽवनितलमम्बरतलं दिवसं च ददर्शेत्यन्वयः । अभ्यन्तरावस्थितोऽर्थात् करेणुकापृष्ठगतासनावरणस्य । दिशो विशेषयति । प्राकारेणान्तरितं व्यवहितं दर्शनं येषां तेषाम् । प्रतिपालयतां चन्द्रापीडागमनं प्रतीक्षमाणानाम् । राज्ञामुद्गतकिरणानां चूडारत्नानाम् । अलक्तकद्रवस्य यावकरसस्य द्युतिं मुष्णातीति तेन । अर्थात्पद्मरागमणीनाम् । बहलेन प्रभूतेन

---

१ विघट्टित. २ बीजानीव, मङ्गललाजानिव. ३ कुलतेश्वरपुत्र्या. ४ सितानन्तरा०, ५ आरुह्य. ६ वक्रीकृत. ७ धवलप्राकार. ८ ०क्रियमाणदश दिशः.

निजानुरागेणेव रज्यमानमवनितलमासन्नरिपुविनाशपिशुनेन दिग्दाहेनेव पाटलीक्रियमाणमम्बरतलमभिमुखागतभुवनतललक्ष्मीचरणालक्तकरसेनेव लोहितायमानातपं दिवसं ददर्श ।

विनिर्गतश्च ससंभ्रमप्रचलितगन्धगजघटासहस्रैः अन्योन्यसंघट्टजर्जरितातपत्रमण्डलैः आदरावनतमौलिशिथिलमणिमुकुटपङ्क्तिभिः आवर्जितरत्नकर्णपूरैः कपोलस्थलस्खलितकुण्डलैः आज्ञप्तसेनापतिनिर्दिश्यमाननामभिः अवनिभुजां चक्रवालैः प्रणम्यमानो बहलसिन्दूररेणुपाटलेन क्षितितलदोलायमानस्थूलमुक्ताकलापावचूलेन सितकुसुममालाजालशबलशिरसा संलग्नसंध्यातपेन तिर्यगावर्जितश्वेतगङ्गाप्रवाहेण तारागणदन्तुरितशिखरशिलातलेन मेरुगिरिणेव गन्धमादनेनानुगम्यमानः कनकालंकारप्रभाकल्माषितावयवेन च दत्तकुङ्कुमस्थासकेनेवाकृष्यमाणेनेन्द्रायुधेन सनाथीकृतपुरोभागः शनैः शनैः प्रथममेव शातक्रतवीमाशामभिप्रतस्थे । अथ चलितगजघटाकम्पितधवलातपत्रमनेककल्लोलपरंपरापातितचन्द्रम-

आलोक एव बालातपस्तेन पिञ्जरीक्रियमाणाः पीतरक्तीक्रियमाणाः । दश दिशो ददर्श । अत्रोत्प्रेक्षामाह-राज्याभिषेकानन्तरं यौवराज्याभिषेकानन्तरं प्रसृतेन प्रथितेन स्वस्य प्रतापः कोषदण्डजं तेजः स एव वह्निस्तेनेव । अत्र प्रतापस्य रक्तत्वं शत्रुदाहकत्वं चोत्प्रेक्षाबीजम् । पिशुनेन सूचकेन । **दिग्दाहेन**-तदुक्तं बृहत्संहितायां-दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः । इति । दिने दिने दारुणा दिशां दाहा दृश्यन्ते । इति हर्षचरिते । अभिमुखागता दिग्विजयार्थं प्रस्थितत्वात्संमुखीभूता या भुवनतललक्ष्मीस्तस्याश्चरणालक्तकरसेन पादयावकपङ्केनेव । **विनिर्गत इति**-अवनिभुजां चक्रवालैः समूहैः प्रणम्यमानः सन् । अथ चक्रवालविशेषणानि-**ससंभ्रमेति** । अन्योन्यसंघट्टेन परस्परसंपीडनेन जर्जरितानि मृदितानि आतपत्रमण्डलानि येषां तैः । आदरेणादरदर्शनार्थमवनता आवर्जिता ये मौलयस्तैः शिथिला मणिमुकुटपंक्तयो येषाम् । कपोलस्थलयोः स्खलिते स्रस्ते कुण्डले येषाम् । आज्ञप्तो यः सेनापतिरित्या० । पुनश्च गन्धमादनेनानुगम्यमानः । **बहलेति**-बहलो यः सिन्दूररेणू रक्तचूर्णपङ्कस्तेन पाटलेन रक्तेन । गजस्य हि कुम्भपीठान्तरालं सिन्दूरपट्टेनालंक्रियते इति प्रसिद्धम् । क्षितितले दोलायमानः स्थूलो मुक्ताकलापो यस्य तादृशः अवचूलः पृष्ठदेशादधोवलम्बमान प्रावारकः कर्णाभरणं वा यस्य । शबलं चित्रितम् । तारागणेन दन्तुरितानि विषमितानि शिलातलानि यस्य । कल्माषिताः कर्बुरिताः । दत्ताः कुङ्कुमस्य काश्मीरजस्य स्थासका हस्तबिम्बा यस्य । शतक्रतोरियं शातक्रतवी तामैन्द्रीं दिशं पूर्वाम् । **चलितेति**-चलिताश्च ता गजघटाश्च ताभिः कम्पितानि धवलान्यातपत्राणि

१ आदरावनतप्रणामशिथिलित. २ रत्नकुण्डलैः. ३ राजाप्त, अज्ञात. ४ ०मानानाम्. 'शिखर' ५ इति क्वचिन्नास्ति. ६ प्रभाप्रतान. ७ परार्थेन. ८ एतन्नास्ति क्वचित्. ९ तातपत्रवनम्.

ण्डलप्रतिबिम्बसहस्रं महाप्रलयजलधिजलमिव प्लावितमहीतलमद्भुतोद्भूतकलकलमखिलं संचचाल बलम् ।

उच्चलितस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो धवलदुकूलवासाः सितकुसुमाङ्गरागो महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानो धृतधवलातपत्रो द्वितीय इव युवराजस्त्वरितपदसंचारिण्या करिण्या वैशम्पायनः समीपमाजगाम। आगत्य च रजनिकर इव रवेरासन्नवर्ती बभूव । अनन्तरमितश्चेतश्च निर्गतो युवराज इति समाकर्ण्य प्रधावतां बलानां भरेण चालितकुलशैलकीलितजलधिजलतरंगगतेव तत्क्षणमाचकम्पे मेदिनी । संमुखागतैरन्यैश्चान्यैश्च प्रणमद्भिर्भूमिपालैरंशुलताजालजटिलचूलिकानां मणिमुकुटानामालोकेनोन्मिषितबहुलरोचिषां च पत्रभङ्गिनीनां केयूरमण्डलीनां प्रभासंतानेन क्वचिद्विकीर्यमाणचाषपक्षक्षोदा इव क्वचिदुत्पतितशिखिकुलचलच्चन्द्रकशतशारा इव क्वचिदकालजलधरतडित्तरला इव क्वचित्सकल्पतरुपल्लवा इव क्वचित्सशतयज्ञचापा इव क्वचित्सबालातपा इवाक्रियन्त दश दिशः । धवलान्यपि विविधमणिनिकरकल्माषैरुत्सर्पिभिश्चूडामणिमरीचिभिर्मायूराणीवाराजन्त राज्ञामातपत्राणि । क्षणेन च तुरगमयमिव महीतलं कुञ्जरमयमिव दिक्चक्रवालमातपत्रमण्डलमयमिवान्तारिक्षं ध्वजवनमयमिवाम्बरतलमिभमदगन्धमय इव समीरणो भूपालमयीव प्रजासृष्टिराभरणां-

---

यस्मिन् । अनेककल्लोलपरम्परासु पंक्तिषु पतितं संक्रान्तं चन्द्रमण्डलप्रतिबिंबसहस्रं यस्मिन् । अद्भुत आश्चर्यकर उद्भूतः कलकलो यस्मिन्। उच्चेति—स्वभवनादुच्चलितस्यास्य समीपम् । सितैः कुसुमैरङ्गरागः शरीरशोभा यस्य । चलिता ये कुलशैलाः कुलपर्वतास्तैः कीलितः पीडितो यो जलधिस्तस्य तरङ्गास्तद्गतेव संमुखागतैः प्रणमद्भिः भूमिपालैश्च हेतुना । अंशुलताजालेन किरणसंतानसमूहेन जटिला संजातजटा चूलिका येषाम् । 'चूलिका प्रान्तभागः' इति भानु०। उन्मिषितोल्लसिता बहुला रोचिस्त्विट् येषाम्। पत्रभङ्गिनीनां पत्रलताविशिष्टानाम्॥ केयूरमण्डलीनां केयूरसमूहानाम् । विकीर्यमाणश्चाषाणां किकीदिवीनाम् । 'किकीदिविश्च चाषः स्यात्' इति रत्नकोषः । पक्षक्षोदश्छदचूर्णं यासु । उत्पततः शिखिकुलस्य मयूरसमूहस्य चलन्तः स्फुरन्तो ये चन्द्रका मेचकास्तेषां शतेन शारा विचित्राः । शतयज्ञ इन्द्रस्तस्य चापो धनुः । कल्माषैः शबलैः । मायूराणि मयूरपिच्छनिर्मितानि । भूपालमयी सर्वत्र भूपानां प्रसरणात् । अंशुमयी अंशूनामेव सर्वत्र ग्रहणात् । उत्पातकाले बहूनि चन्द्रमण्डलान्याविर्भवन्ति । तदनुरोधादिदमुक्तम् । संवर्तका

---

१ धवलवासाः. २ शशिधर. ३ पत्रभङ्गीनाम्. ४ शतक्रतु.

शुमयीव दृ[1]ष्टिः किरीटमय इव दि[2]वसो जयशब्दमयमिव त्रिभुवनमभवत् । सर्वतश्च कुलपर्वताकारैः प्रचलद्भिर्मत्तवारणैरुत्पातचन्द्रमण्डलनिभैश्च प्रेङ्खद्भिरा[3]तपत्रैः संवर्तकाम्भोदगम्भीरभीमनादेन च ध्वनता दुन्दुभिना तारकावर्षसदृशेन विसर्पता गजसीकरनिकरेण धूमकेतुधूसरैश्चोल्लसद्भिरवनिरजोदण्डकैर्निर्घातपातपरुषगम्भीरघोषैश्च करिकण्ठगर्जितैः क्षतजकणवर्षबभ्रुणा च भ्रमता मतङ्गजकुम्भसिन्दूररेणुना संक्षुभितजलधिजलकल्लोलचञ्चलाभिश्च प्रविसर्पन्तीभिस्तुरंगममालाभिरन्धकारितदिगन्तरेण चानवरतं क्षरता मद[4]जलधारादुर्दिनेन कलकलेन च भुवनान्तरव्यापिना महाप्रलयकाल इव संजज्ञे ।

बलबहलकोलाहलभीता इव धवलध्वजनिवहनिरन्तरावृता ययुः क्वापि दश दिशः । मलिनावनिरजःसंस्पर्शशङ्कितामिव समदगजघटावचूलसहस्रसंरुद्धमतिदूरम[5]म्बरतलमपससार । प्र[6]बलवेत्रिवेत्रलतासमुत्सार्यमाणा इव तुरगखुररजोधूसरताभीता इवार्ककिरणा मुमुचुः पुरोभागम् । इभक[7]रसीकरनिर्वापणत्रस्त इवातपत्रसंछादितातपो दिवसो ननाश । ब[8]लभरजर्जरीकृता मदकलकरिचरणशतसंताडिता द्वितीयेव प्रयाणभेरी भैरवं भूमी ररास । गुल्फद्वयसे च तुरंगमुखविनिःसृतसितफेनपल्लविते मदपयासि मदस्रुतां करिणां प्रचस्खलुः पदे

---

अम्भोदाः प्रलयकालपयोदविशेषाः । **निर्घातेति**–निर्घातपातोऽशनिपातस्तद्वत्परुषः कठोरो गम्भीरश्च घोषो येषाम् । क्षतजं रक्तं तस्य कणानां वर्षस्तद्वद्बभ्रुणा पिङ्गलेन । संक्षुभितोऽत्यन्तं क्षुब्धो यो जलनिधिस्तस्य जलकल्लोलास्तद्वच्चञ्चलाभिः । **धवलेति**–धवलध्वजानिवहेन निरन्तरं निरवकाशं यथा तथावृता व्याप्ताः । अत एवावकाशाभावाद्विनष्टा इव बभूवुः । **समदेति**— अत्र गजानामपरिमितत्वं ध्वनितम् । प्रबला ये वेत्रिणो द्वारपालास्तेषां वेत्रलताभिः समुत्सार्यमाणा अपसार्यमाणा इव । अत एव तेषां प्रबलत्वम् । **तुरगेति**–अनेन तुरङ्गाणां भूयस्त्वं वेगातिशयः खुरनिक्षेपशक्तिविशेषश्च व्यज्यते ' इति भानु० । **इभेति**–इभकरसीकरैर्हस्तिशुण्डादण्डोत्क्षिप्तैः अम्बुकणैर्यन्निर्वापणं नाशः तस्मात्त्रस्तामिव । ननाश तिरोहितोभूत् । बलभरेण जर्जरीकृतातिपीडिता । मदकला मदोद्धता इ० । भैरवं भीमम् । मदस्रुतां दानस्राविणाम् । गुल्फश्चरणग्रन्थिः स प्रमाणमस्य तत् गुल्फद्वयसं तस्मिन् । तुरंगममुखविनिः-

---

१ वृष्टिः. २ आतपश्चामरमय इव दिवसः. ३ शशिसितातपत्रैः. ४ गजमद. ५ अम्बरम्. ६ प्रचलितवेत्र, प्रचुरवेत्र. ७ सीकरनिकर. ८ बहलबल.

पदे पदातयः । हरितालपरिमलनिभेन चातिपटुना गजमदामोदेनानुलिप्तस्य सामजस्येव समुपययौ निखिलान्यगन्धग्रहणसामर्थ्यं घ्राणेन्द्रियस्य । क्रमेण प्रसर्पतो बलस्य पुरःप्रधावतां जनकदम्बकानां कोलाहलेन तारतरदीर्घेण च काहलानां निनादेन खुररवविमिश्रेण च वाजिनां हेषारवेणानवरतकर्णतालस्वैरसंपृक्तेन च दन्तिनामाडम्बररवेण ग्रैवेयककिङ्किणीक्वणितानुसृतेन च गतिवशाद्विषमविराविणीनां घण्टानां टंकृतेन मङ्गलशङ्खशब्दसंवर्धितध्वनीनां च प्रयाणपटहानां निनादेन मुहुर्मुहुरितस्ततस्ताड्यमानानां डिण्डिमानां च निःस्वनेन जर्जरीकृतश्रवणपुटस्य मूर्च्छेवाभवज्जनस्य ।

शनैःशनैश्च बलसंक्षोभजन्मा क्षितेरनेकवर्णतया क्वचिज्जीर्णशफरक्रोडधूम्रः क्वचित्क्रमेलकसटासंनिभः क्वचित्परिणतरल्लकरोमपल्लवमलिनः क्वचित्पत्त्रोर्णतन्तुपाण्डुरः क्वचिज्जरठमृणालदण्डधवलः क्वचिज्जरत्कपिकेशकपिलः क्वचि-

सृतो यः सितो धवलः फेनस्तेन पल्लविते विस्तारिते । यद्वा तेन संजातपुञ्जे । **हरीति**—अतिपटुनातितीक्ष्णेन सामजस्य गजस्य । 'सामजौ गजसामोत्थौ' इति शाश्वतः । तदुक्तं पाल्काप्ये—सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्यादौ सप्त सामान्यगायत ॥ गायतो ब्रह्मणस्तस्य समुत्पन्ना मतङ्गजाः ॥ इति । यथा मदोद्धतगजस्य मदलिप्तत्वेनान्यगन्धग्रहणसामर्थ्यं नश्यति तथा । 'यथा नानारसशाष्कुल्यादिस्थले सकलसमुदायवशान्नैकस्यापि रसविशेषस्य ग्रहो रसनेनैवं तादृशसमुदायद्वंद्वयुक्तृष्टार्द्रकनिम्बूफलरससमवधाने च रसनेन सकलान्यरसग्रहो भवत्ययमुत्कर्षः । आर्द्रकरसादेस्तथैव घ्राणेन्द्रियस्य नानासुगन्धद्रव्यसंनिधानदोषवशान्नैकस्यापि गन्धविशेषस्य धूपग्रहणसामर्थ्यम् । एवं तादृशोक्तगजमदामोदेनानुलिप्तस्य घ्राणस्यापि नान्यगन्धग्रहणसामर्थ्यमभवदित्यर्थः । इति भानु० । **अनवरतेति**—अनवरतं यः कर्णतालः कर्णविधूननं तस्य स्वरः शब्दस्तेन संपृक्तेन मिश्रेण । आडम्बररवेण गजानां बृंहितेन । 'आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ।' इत्यमरः । ग्रैवेयकाणि कण्ठाभरणानि तेषां किङ्किणीनां यत्क्वणितं शब्दस्तेनानुसृतेन । विषमं यथा तथा विराविणीनां शब्दायमानानाम् । टंकृतेन टंकारशब्देन । निःस्वनेन शब्देन । जर्जरीकृतं स्फोटितं श्रवणपुटं कर्णपुटं यस्य । **बलेति**—बलस्य सैन्यस्य यः संक्षोभः सरभसचलनं तस्माज्जन्म यस्य । एवंविधो रेणुरुत्पपातेत्यन्वयः । जीर्णो वृद्धो यः शफरो मत्स्यविशेषस्तस्य क्रोडवद्धूम्रो धूसरः । क्रमेलक उष्ट्रः । परिणतो जरठो यो रल्लकः कम्बलमृगः । 'रल्लकः कम्बले स्मृतः । तथैव कम्बलमृगे' इति हैमः । तस्य रोमपल्लववत्तनूरुहप्रतानवन्मलिनः । पत्त्रोर्णं धौतकौशेयम् । भानु० तु उत्पन्नोर्णातन्तु० इति पठित्वा उत्पन्नः य ऊर्णातन्तुर्जालकारकः इति व्याख्याति । त्रिपथगा गङ्गा । 'गङ्गा त्रिपथगा नाम दिव्या भागी-

१ अप-उप-ययौ, समाययौ. २ हर्षहेषारवेण. ३ स्वन, रव. ४ अनुगृहीतेन. ५ द्विरद-डिण्डिमानाम्. ६ सदृशाः. ७ घटा.

द्धैरवृषभरोमन्थफेनपिण्डपाण्डुरास्त्रिपथगाप्रवाह इव हरिचरणप्रभवः कुपित इव मुञ्चन्क्षमामारब्धपरिहास इव रुन्धन्नयनानि तृषित इव पिबन्करिकरसीकरजलानि पक्षवानिवोत्पतन्गगनतलमलिनिव इव चुम्बन्मदलेखां मृगपतिरिव रचयन्करिकुम्भस्थलीषु पदम्, उपात्तविजय इव गृह्णन्पताका जरागम इव पाण्डुरीकुर्वञ्शिरांसि मुद्रयन्निव पक्ष्माग्रसंस्थितो दृष्टिम्, आजिघ्रन्निव मकरन्दमधुबिन्दुलग्नः कर्णोत्पलानि मदकलकरिकर्णतालताडनत्रस्त इवाविशन्कर्णशङ्खोदरविवराणि पीयमान इवोन्मुखीभिरवनिपतिमुकुटमणिपत्रभङ्गमकरिकाभिरभ्यर्च्यमान इव तुरगमुखविक्षेपविप्लुतैः फेनपल्लवकुसुमस्तबकैरनुगम्यमान इव मत्तगजघटाकुम्भभित्तिसंभवेन धातुधूलिवलयेनालिङ्ग्यमान इव चलच्चामरकलापविधुतेन पटवासपांशुना प्रोत्साह्यमान इव नरपतिशेखरसहस्रपरिच्युतैः कुसुमकेसररजोभिरुत्पातराहुरिव दिवसकरमण्डलमकाण्ड एव पिबन् नृपप्रस्थानमङ्गलप्रतिसरवलयमालिकासु गोरोचनाचूर्णायमानः क्रकचकृतचन्दनक्षोदधूसरो रेणुरुत्पपात । अपरिमाणबलसंघट्टसमुपचीयमानश्च शनैः शनैः संहरन्निव विश्वमशेषमकालकालमेघपटलमेदुरो विस्तारमुपगन्तुमारेभे ।

---

रथीति च । त्रीन्पथो भावयन्तीति तस्मात्त्रिपथगा स्मृता ' ॥ इति रामा० । हरिचरणप्रभवः—हरयोऽश्वाः । पक्षे विष्णुः । क्षमां भूमिं पक्षे शान्तिम् । नयनानि रुन्धन् परिहासशीलोऽपि पश्चादागत्य नयने पिदधातीति प्रसिद्धम् । पिबन्निति—सीकरजलान्यन्तरयन्नित्यर्थः । गृह्णन्पताका जेता हि पराभूतशत्रोः पताकामपहरतीति प्रसिद्धम् । पाण्डुरीकुर्वन्—जरागमोऽपि पलितेन शिरो धवलीकरोति । मुद्रयन्निव पक्ष्मसंमीलनान्नेत्रयोरुपरि मुद्रां ददद्दिव । कर्णोति—कर्णाः श्रोत्राणि शङ्खा भालश्रवोन्तराणि तेषां विवराण्याविशन् । तुरगाणां मुखानि तेषां विक्षेपाः प्रसरणानि तेभ्यो विप्लुतैर्गलितैः । फेनपल्लवा एव कुसुमस्तबकास्तैः । धात्विति—धातवो गैरिकादयः । गैरिकादिधातुभिर्हि गजकुम्भाः शोभार्थमनुलिप्यन्ते । पटवासः पिष्टातकस्तस्य पांशुना धूल्या । प्रोत्साह्यमानः सोत्साहः क्रियमाणः । कुसुमानां केसराणि किंजल्कानि तेषां रजांसि परागास्तैः । उत्पातराहुः—अशुभसूचकदुश्चिह्नभूतो राहुः । उक्तमेवैतत्प्राक् ' चन्द्रसूर्याविव कबन्धग्रस्तौ त्रिभुवनभयं महच्चक्रतुः ' इत्यत्र । नृपाणां चन्द्रापीडेन सहयायिनां प्रस्थानमङ्गलेषु ये प्रतिसरास्तेषां वलयमालिकासु । क्रकचः करपत्रं तेन कृतो यश्चन्दनक्षोदो मलयजचूर्णं तद्वद्धूसरः । अपरिमाणबलस्य यः संघट्टः संमर्दस्तेन समुपचीयमानो वृद्धिं प्राप्यमाणः । संहरन् सर्वविश्वं व्याप्यान्तरयन्निव । मेदुरः सान्द्रः । पुनरपि रेणुमेव विशेष-

---

१ उत्पन्नोर्मा. २ वर. ३ बिन्दुपङ्क. ४ करिकर्ण. ५ प्रसार्य—प्रोत्सार्य—माणः.

तेन च क्रमेणोपचीयमानबहलमूर्तिना दिग्विजयमङ्गलध्वजेन रिपुकुलकमलप्रलयनीहारेण राज्यलक्ष्मीविलासपटवासचूर्णेनाहितातपत्रपुण्डरीकखण्डतुषारेण सैन्यभरपीडितमहीतलमूर्च्छान्धकारेण चलद्बहलजलदकालकदम्बकुसुमोद्गमेन दिवसकरकरकमलवनोद्दलनद्विपयूथेन गगनमहीतलप्लावनप्रलयपयोधिपूरेण त्रिभुवनलक्ष्मीशिरोवगुण्ठनपटेन महावराहकेसरनिकरकर्बुरेण प्रलयानलधूमराजिमांसलेन पातालतलादिवोत्तिष्ठता चरणेभ्य इव निर्गच्छता लोचनेभ्य इव निष्पतता दिग्भ्य इवागच्छता नभस्तलादिव पतता पवनादिवोल्लसता रविकिरणेभ्य इव संभवता अनपहृतचेतनेन निद्रागमेन अनवगणितसूर्येणान्धकारेण, अप्रमकालोपस्थितेन भूमिगृहेण, अनुदिततारागणनिवहेन बहुलनिशाप्रदोषेण, अपतितसलिलेन जलधरसमयेन, अभ्रान्तभुजंगेन रसातलेन, हरिचरणेनेव संवर्धमानेन त्रिभुवनमलङ्घ्यत रजसा ।

---

यत्राह तेनेति—रिपुकुलान्येव कमलानि तेषां प्रलयनीहारेण विध्वंसकहिमेन । अहितानामरातीनां आतपत्राणि छत्राणि एव पुण्डरीकाणि सिताम्भोजानि तेषां खण्डं समूहस्तस्य तुषारेण तुहिनेन । अतिहिमनिष्यन्देन कमलानि नश्यन्तीति प्रसिद्धम् । आह च कालिदासः—'हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ।' इति । सैन्यभरेण पीडितं यन्महीतलं तस्य मूर्छा कश्मलं तस्माद्योऽन्धकारस्तिमिरं तेनेव स्थितेन । चलद्बहलमेव जलदकालस्तत्र कदम्बकुसुमोद्गमेन नीपपुष्पप्रादुर्भावेन । कविभिर्हि प्रायः वर्षाकाले एव कदम्बपुष्पोद्गमवर्णनं क्रियते । तथा हि शि० वधे—'विहगाः कदम्बसुरभाविहगाः' इति 'भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः' इति च । 'त्वत्सम्पर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः' इति मेघ० । तथापि नायमेकान्तेन नियमः । क्वचिद्वसन्तेपि तद्वर्णनात् । यथा काव्यप्रकाशे—'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः' । इति । मथुरादिदेशे तथा दर्शनाच्च । दिवसेति—दिवसकरकरा एव कमलवनं तस्योद्दलने विध्वंसने द्विपयूथेनेव । गगनमेव महीतलं तस्य प्लावनं स्थगनम् । प्रलयपयोधिपूरेण—प्रलयकाले हि उद्वेलेन सागरेणाखिलं पृथ्वीतलमाप्लाव्यते । मांसलेन पुष्टेन । उल्लसतोत्स्फुरता । अथ प्रकारान्तरेण वर्णयति अनुपहृतेत्यादिना । निद्रागमे चेतना विलीयते । अयं तु अनुपहृता लोपमप्राप्ता चेतना येन तादृशोऽपूर्व एव निद्रागमः । यथा निद्रायां नेत्रनिमीलनं तथात्रापीति रजसो निद्रासाम्यम् । अनवगणितेति—अयं लोकविलक्षणो रजोन्धकारो यो न केवलं सूर्यतेजसा न नश्यति किंतु तमेव तिरस्करोतीति भावः । भूमिगृहेण—आतपसंतापनिवारणार्थं भूम्यां खनित्वा यद्गृहं क्रियते तत् । अत्र तिमिरमयत्वमुभयोः साधर्म्यम् । बहुलनिशा कृष्णपक्षरात्रिः । रसातलेन पातालेन । हरिचरणेन अत्र हरिर्वामनः । बलिदमनकाले तच्चरणो यथा क्रमेण वृद्धिं प्राप्तस्तथायमपि । बलिद-

---

१ खण्डन. २ बहलबल. ३ किरणकमल० ४ लोचनेनानवगणित चे०.

विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोदफेनपाण्डुना क्षितिक्षोदेन । बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् । दुकूलपट्टधवला कदलिकेव कलुषतामाजगाम गगनापगा । नरपालबलभरमतिगुरुमसहमाना पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण मही । निःशेषनिपीतातपमन्तर्दह्यमानमिव जलधिजलेषु धूसरितरविरथध्वजपटमपतदवनिरजः । मुहूर्तेन च गर्भवासमिव संहारसागरजलमिव कृतान्तजठरमिव महाकालमुखमिव नारायणोदरमिव ब्रह्माण्डमिव विवेश पृथिवी । मृन्मय इव बभूव दिवसः । पुस्तमय्य इव चकाशिरे ककुभः । रेणुरूपेणेव परिणतमम्बरतलम् । एकमहाभूतमयमिव त्रैलोक्यमासीत् ।

अथ निजमदोष्मसंतप्तानां दन्तिनां दिशि दिशि करविवरविनिःसृतैः क्षरद्भिः क्षीरोदधवलैः सीकरासारैः कर्णपल्लवप्रहतिविस्तृतेन च विसर्पता दानजलबिन्दुदुर्दिनेन हेषारवविप्रकीर्णैश्च वाजिनां लालाजललवजालकैरुपशमिते रजसि पुनरुपजातालोकासु दिक्षु सागरसलिलादिवोन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे ।

युवराज किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि । का दिशो न वशीकृता या वशीकरिष्यसि । कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि । कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि । कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि । के वा न प्रणता राजानः । कैर्न विरचितः शिरसि बालकमलकुड्मलकोमलः सेवाञ्जलिः । कैर्न मसृणीकृताः

---

मनकथा तु हरि वं. २६१ अ० द्रष्टव्या । **अवेति**–अवष्टभ्यमानमाक्रम्यमाणम् । अशिशिरकिरणः सूर्यः । अवचूलचामरमधोलम्बिबालव्यजनं तादिव । कदलिका केतनम् । 'रम्भा' इति भानु० । गगनापगा वियद्गङ्गा । पुनरिव–पौलस्त्यादिभाराक्रान्तायास्तस्या एकदा गोरूपेण गगनात्पुनारेणुरूपेण गतेव । तदुक्तं महाभारते आदिपर्वणि–'एवं भूरिबलोत्सिक्तैर्भूरियत्नैर्महासुरैः । पीड्यमाना मही राजन् ब्रह्माणमुपचक्रमे ॥' इत्या० । निःशेषनिपीतातपमत एवान्तर्दह्यमानमिव जलधिजलेष्ववनिरजोऽपतत् । **मुहूर्तेनेति**–सकला पृथिवी सबाह्याभ्यन्तरं धूलीपटलव्याप्ताभूदित्यर्थः । एकमहाभूतमयं पृथ्वीमयमिव । अन्येषां महाभूतानामाकाशवाय्वादीनां तिरोभूतत्वादिति भावः । **अथेति**–निजमदोष्मणा दानतापेन संतप्तानां जातदाहानाम् । **सीकरासारैः** सीकरावातप्रेरिता अम्बुकणास्तेषामासारैर्वेगवर्षणैः । 'सीकरं सरले वातसृताम्बुकणयोः पुमान्' । इति कोषः । कर्णपल्लवैः कर्णाञ्चलैर्या प्रहतिस्ताडनं तया विस्तृतेन समन्ततः क्षिप्तेन । दुर्दिनेन लक्षणया सान्द्रवर्षणेन प्रसाधितान्यात्मसात्कृतानि । मसृणीकृताः स्निग्धाः कृताः । कैर्न प्रतिपन्ना वेत्रलताः–

---

१ अलक्ष्यत क्षणात्. २ प्रस्थ. ३ महाभूतमिव. ४क्षीरोदक्षोद. ५ विसृ–विप्लुतेन. ६ किमजितम्.

प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः । कैर्न घृष्टाः पादपीठे चूडामणयः । कैर्न प्रतिपन्ना वेत्रलताः । कैर्नोद्धूतानि चामराणि । कैर्नोच्चारिता जयशब्दाः । केषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्मलास्तच्चरणनखमयूखराजयः । एते हि चतुरुदधिजलावगाहदुर्ललितबलमदावलिप्ता दशरथभगीरथभरतदिलीपालर्कमान्धातृप्रतिमाः कुलाभिमानशालिनः सोमपायिनो मूर्धाभिषिक्ताः पृथिव्यां सर्वपार्थिवा रक्षाभूतिमिवाभिषेकपयःपातपूतैश्चूडामणिपल्लवैरुद्वहन्ति मङ्गल्यां भवच्चरणरजःसंहतिम् । एभिरियमादिपर्वतैरिवापरैर्धृता धरित्री । एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते । तथाहि । पश्य पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुस्तस्यां तस्यां रसातलमिवोद्गिरति वसुधेव सूते ककुभ इव वमन्ति गगनमिव वर्षति दिवस इव सृजति बलानि । अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारतसमरसंक्षोभस्याद्य क्षितिः । एष शिखरदेशेषु स्खलितमण्डलो ध्वजानगणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूखमाली । सर्वतश्च मदजलमुचां करिणामेलापरिमलसुरभीणि वेणिकावाहीनि मदवारीणि निरन्तरमग्न

अनेन सर्वेषामपि राज्ञां प्रतीहारकर्म सूचितम् । एवमन्यत्राप्यूह्यम् । **एते हीति**–'हि' निश्चये अवधारणे वा । एते राजानो रक्षाभूतिमिव मङ्गलकरीं भवच्चरणरजःसंहतिमुद्वहन्ति इत्या० । चतुर्णामुदधीनां जलेष्ववगाहो मज्जनं दुर्ललितं हठो यस्य । चतुरुदधिवलयितभूमिजयसतृष्णमित्यर्थः । एवंविधं यद्बलम् । 'चतुरुदधयश्चतुःसमुद्रास्तेषां जलानामवगाहः सम्बन्धो महाप्रलयस्तद्वद्दुर्ललितं दुश्चेष्टितं रिपुक्षयकृल्लक्षणं यस्मिन्नेतादृशं बलम् । इति तु भानुचन्द्रः । तस्य मदेनावलिप्ता उद्धताः । अलर्कः कश्चिद्राजर्षिः । तदुक्तं महाभारते–'अलर्को नाम राजर्षिरभवत्सुमहातपाः । धर्मज्ञः सत्यवादी च महात्मा सुदृढव्रतः' ॥ इति । अयं दानशौण्ड इति 'अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ।' इति रामायणोक्तेर्ज्ञायते । वंशस्तु यथार्थतो न ज्ञायते । अयं प्रतर्दनस्य पुत्र इति विष्णुपुराणम् । कुवलयाश्वमदालसयोः पुत्र इति मार्कण्डेयपुराणं च । अयं मदालसायाः पुत्रः स्यादित्यनुमीयते । विशेषस्तु म० भा० अश्व० प० ३० अध्याये द्रष्टव्यः । कुलस्याभिमानो गर्वस्तेन शालिनः शोभिनः । सोमपायिनः सोमयागकारिण इत्यर्थः । चूडामणयस्त एव पल्लवास्तैः । आदिपर्वतैः कुलपर्वतैः । आप्लावित–पूरित— । महान्यो भारतानां कौरवपाण्डवानां समरसंक्षोभो रणसंरम्भस्तस्य । **स्खलितेति**–शिखरदेशेषु ध्वजशिखरेषु सूर्यबिम्बस्य प्रतिबिम्बितत्वात्तथा । कदलिकावनान्तरेषु ध्वजसमूहेषु । अत्र ध्वजानामत्युच्चत्वं बाहुल्यं च व्यङ्ग्यम् । एलायाश्चन्द्रशालायाः परिमलः सौगन्ध्यं तद्वत्सुरभीणि । करिमदस्यैला-

१ वेत्रयष्टयः. २ उद्धूतानि. ३ त्वच्चरण. ४ मांगल्यां, मङ्गलदाम्. ५ पश्य यस्यां...तस्यां. ६ गगनमलम्. ७ बलसमर. ८ मत्तेभकरटाशिखरदेशेष.

निपतितमधुकरकुलकलकलकलिलो कालिन्दीजलकल्लोलकलितेव भाति भूतधात्री। सैन्यभरसंक्षोभभयात्सरित इव गगनतलमुत्पतिताः संछादयन्त्येता दिक्चक्रवालमिन्दुधवला ध्वजपङ्क्तयः। सर्वथा चित्रं यन्नाद्य विघटितसकलकुलशैलसंधिबन्धा सहस्रशः शकलीभवति बलभरेण धरित्री यद्वा बलभरपीडितवसुधाधारणविधुरा न चलन्ति फणिनां पत्युः फणाभित्तयः।

इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां तृणमयप्राकारमन्दिरसहस्रसंबाधामुल्लासितधवलपटमण्डपशतशोभिनीमावासभूमिमवाप। तस्यां चावतीर्य राजवत्सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभिनवपितृवियोगजन्मना शोकावेगेनायस्यमानहृदयो दुःखेनात्यवाहयत्। अतिवाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन वैशम्पायनेनान्यतश्च समीपे क्षितितलविन्यस्तकुथप्रसुप्तया पत्रलेखया सहान्तरा पितृसक्तमन्तरा मातृसंबद्धमन्तरा शुकनासमयं कुर्वन्नालापं नात्युपजातनिद्रः प्रायेण जाग्रदेव निन्ये। प्रत्यूषे चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानसेनासमुदायेन जर्जरयन् वसुंधरामाकम्पयन् गिरीनुत्सिञ्चन्सरितो रिक्तीकुर्वन्सरांसि चूर्णयन्काननानि समीकुर्वन् विषमाणि दलयन् दुर्गाणि पूरयन्निम्नानि निम्नयन्स्थलानि प्रातिष्ठत। शनैः शनैश्च स्वेच्छया परिभ्रमन्नमयन्नुन्नतानुन्नमयन्नवनतानाश्वासयन्भीतान्रक्षञ्छरणागतानुन्मूलयन्विटपकानुत्सादयन्कण्टकानभिषि-

---

परिमलसादृश्यं कालिदासेनापि वर्णितम्–'ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः। तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥' इति। वेणिकावाहिनि वेणिका प्रवाहः। 'वेणी सेतुप्रवाहयोः'। इति हैमः। तया वहतीत्येवंशीलम्। ०कलकलेन कलिला गहना। ०कलिता व्याप्ता। विघटिता विश्लिष्टाः कुलपर्वता एव सन्धिबन्धा यस्याः। विधुरा विह्वलाः क्लिष्टा इत्यर्थः। तृणेति–तृणमयः प्राकारो यस्यैवंविधेन मन्दिरसहस्रेण सम्बाधां निरन्तरचिताम्। आवासभूमिं निवासस्थानम्। अतीति–अतिवाहितदिवसश्च यामिनीमपि जाग्रदेव निन्ये इति योजना। अन्यतश्चान्यपार्श्वे। अन्तरा मध्ये मध्ये। उत्सिञ्चन्–उत्सिक्तजला अल्पजला इत्यर्थः कुर्वन्। एवं रघौ–'नाव्याः सुप्रतरा नदीः।' इति। चूर्णयन्–वृक्षादीनां शातनात्। रघुवंशेपि 'विपिनानि प्रकाशानि शक्तिमत्वाच्चकार सः।' इति। पूरयन्निम्नानि बलसंक्षोभोत्थरजसेत्यर्थः। उन्नतानुद्धतान्। उन्नमयन् उच्चपदतां प्रापयन्। विटपकान् धूर्ताधिपान्। यद्वा शाखाभूतान् विपक्षाणा-

---

१ कलिता, ललिता. २ कलिला, कवलिता. ३ धरणिमपहाय गगनतलम्. ४ बलन्ति. ५ नातिदूरनिषण्णेन. ६ शयनसमीपे. ७ उपसिञ्चन्.

ण्वन्स्थानस्थानेषु राजपुत्रान्समर्जयन्रत्नानि प्रतीच्छन्नुपायनानि गृह्णन्करानादिश न्देशव्यवस्थाः स्थापयन्स्वचिह्नानि कुर्वन्कीर्तनानि लेखयञ्छासनानि पूजयन्नग्रजन्मनः प्रणमन्मुनीन्पालयन्नाश्रमाञ्जनयञ्जनानुरागं प्रकाशयन्विक्रममारोपयन्प्रतापमुपचिन्वन्यशो विस्तारयन्गुणान्प्रख्यापयन्सच्चरितमामृद्नंश्च वेलावनानि बलरेणुभिराधूसरीकृतसकलसागरसलिलः पृथिवीं विचचार । प्रथमं प्राचीं ततस्त्रिशङ्कुतिलकां ततो वरुणलाञ्छनामनन्तरं सप्तर्षिताराशबलां दिशं विजिग्ये । वर्षत्रयेण चात्मीकृताशेषद्वीपान्तरं सकलमेव चतुरम्भोधिखातवलयपरिखाप्रमाणं बभ्राम महीमण्डलम् । ततः क्रमेणावर्जितसकलभुवनतलः प्रदक्षिणीकृत्य वसुधां परिभ्रमन्कदाचित्कैलाससमीपचारिणां हेमकूटधाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानं नातिविप्रकृष्टं पूर्वजलनिधेर्जित्वा जग्राह । तत्र च निखिलधरणितलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत् ।

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतो विचरन्काननं शैलशिखरादवतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत् । अपूर्वदर्शनतया तु समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पिततुरंगः समुपसर्पन्नदृष्टपूर्वपुरुषदर्श-

मनुचरान् । कण्टकान् कण्टकतुल्यान् शत्रून् । प्रतीच्छन्नाददत् । स्वचिह्नानि स्वविजयदर्शकानि जयस्तम्भादीनि । शासनानि ग्रामपट्टकादीनि । अग्रजन्मनो ब्राह्मणान् । आमृद्नन् समन्तान्नाशयन् । त्रिशङ्कुतिलकां त्रिशङ्कुस्तिलको यस्यास्तां दक्षिणामित्यर्थः । त्रिशङ्कुनामनिरुक्तिर्हरिवंशे—'क्रुद्धस्तु भगवान् [वसिष्ठः] वाक्यमिदमाह नृपात्मजम् । पातयेयमहं क्रूर तव शङ्कुमसंशयम् । यदि ते द्वाविमौ शङ्कू न स्यातां वै पुनः कृतौ ॥ पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥ वैशम्पायन उवाच । एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः । त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः' ॥ इति । त्रिशङ्कुकथोक्ता-१७ पृष्ठे द्रष्टव्या । इन्द्रेण त्रिशङ्कावधःक्षिप्ते कुपितेन कौशिकेन दक्षिणस्यां दिश्यपरा 'नक्षत्रादिसृष्टिर्विरचिता । तत्कथा रा० आ० का० ६० अ० द्रष्टव्या । वरुणलाञ्छनां पश्चिमाम् । सप्तर्षिताराशबलामुत्तराशाम् । मरीच्यादय ऋषयो भोगसमाप्तौ नक्षत्ररूपेण गगनमण्डले उत्तरस्यां स्थिता बभ्रम्यन्ते । तदुक्तं बृ० सं०याम्—' एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम् । प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः ॥ ' इत्या० । चत्वारोम्भोधय एव खातवलयं तदेव परिखा प्रमाणं यस्य तम् । हेमकूटधाम्नां हेमकूटो धाम येषां हेमकूटनिवासिनाम् । हेमकूटो नाम हिमाद्रेरुत्तरस्थः पर्वतविशेषः । भानुचन्द्रस्तु हेमजकूटनाम्नामिति पठति । ०खिन्नस्य क्लान्तस्य एकदेति—मृगयार्थं निर्गतः । अदृष्टपूर्वो यः पुरुषो मानुषस्तस्य दर्शनेन यस्त्रासो भयं तेन

१ पूर्वाः प्रशस्तीः. २ प्रीणयन्. ३ ख्यापयन्. ४ रितमुद्योतयन् पौरुषम्. ५ आमर्दयंश्च, वेलाः. ६ एवं वर्षत्रयेण. ७ निर्जित, णावजित. ८ हेमज०, हेम—जट—नाम्नाम्. ९ विप्रकृतम्. १० शिखराद.

नत्रासप्रधावितं च तत्पलायमानमनवरतपार्ष्णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेनैकाकी निर्गत्य निजबलसमूहात्सुदूरमनुससार। अत्र गृह्यतेऽत्र गृह्यत इदं गृहीतमिदं गृहीतमित्यतिरभसाकृष्टचेता महाजवतया तुरंगमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानं किंनरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह।

आरूढे च तस्मिञ्छनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिमचलशिखरप्रस्तरप्रतिहतगतिप्रसरो विधृततुरंगमश्चन्द्रापीडस्तस्मिन्काले समारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य क्षणमिव विचार्य स्वयमेव विहस्याचिन्तयत्। किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किंनरयुगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्। अथ न गृहीतं ततोऽपि किम्। अहो मे मूर्खतायाः प्रकारः। अहो यत्किंचनकारितायामादरः। अहो निरर्थकव्यापारेष्वभिनिवेशः। अहो बालिशचरितेष्वासक्तिः। साधुफलं कर्म क्रियमाणं वृथा जातम्। अवश्यकर्तव्या क्रिया प्रस्तुता विफलीभूता। सुहृत्कार्यमुपपाद्यमानं नोपपन्नम्। राजधर्मः प्रवर्तितो न निष्पन्नः। गुर्वर्थः प्रारब्धो न परिसमाप्तः। विजिगीषुव्यापारप्रयत्नो न सिद्धः। कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं भूमिमायातः। कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयम्। इति विचार्यमाणे सत्यर्यमात्मैव मे पर इव हासमुपजनयति। न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि मे। महाजवो हीन्द्रायुधो निमेषमात्रेणातिदूरमतिक्रामति। न चागच्छता मया तुरगवेगवशात्किंनरमिथुने बद्धदृष्टिनास्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने निरन्तरपतितशुष्कपर्णो-

---

प्रधावितम्। अनवरतं यः पार्ष्णिप्रहारः पादमूलताडनम्। 'पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ।' इति रन्तिदेवः। तेन द्विगुणीकृतो जवो यस्य। अतिरभसेन हर्षेण वेगेन वा। 'रभसो हर्षवेगयोः' इति विश्वः। आकृष्टं चेतो यस्य। योजनम्—'स्याद्योजनं क्रोशचतुष्टयेन' इति लीला०। अनुबध्यमानमनुयास्यमानम्। **अचलेति**—अचलशिखरेषु ये प्रस्तरा ग्रावाणस्तैः प्रतिहतो रुद्धो गतिप्रसरो यस्य। समारूढो यः श्रमस्वेदस्तेनार्द्रं क्लिन्नं शरीरं यस्य। यत्किंचन निरर्थकं किमपि करोतीति यत्किंचनकारी तस्य भावस्तत्ता तस्याम्। आदरो बहुमानः। अभिनिवेशो हठः। प्रस्तुता आरब्धा। उपपन्नं निष्पन्नम्। गुर्वर्थः गुरुः श्रेष्ठश्चासौ अर्थश्च गुरोः पितुरर्थे वा। आविष्टः पिशाचादिगृहीतः। अश्वमुखद्वयं किंनरमिथुनम्। पर इवान्य इव। विच्छिन्नमन्तरितम्। **अविरलेति**—अविरला निबिडाः। अन्योन्यसंहतत्वादिति भावः। यास्तरुशत-

---

१ पलायमानमनुसरन्. २ पाणि. ३ प्रस्तरशकल. ४ समुपारूढ. ५ आलोक्य. ६ कर्तव्यक्रिया. ७ व्यापारः. ८ उत्सृज्य निजपरिवारम्. ९ यत्सत्यम्. १० निबद्ध.

वकीर्णतले महावने पन्था निरूपितो येन प्रतिनिवृत्त्य यास्यामि। न चास्मिन्प्रदेशे प्रयत्नेनापि परिभ्रमता मया मर्त्यधर्मा कश्चिदासाद्यते यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति। श्रुतं हि मया बहुशः कथ्यमानमुत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानां ततः परतो निर्मानुषमरण्यं तच्चातिक्रम्य कैलासगिरिरिति। अयं च कैलासः। तदिदानीं प्रतिनिवृत्त्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम्। आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव। इत्यवधार्य वामकरतलवलितरश्मिपाशस्तुरङ्गमं व्यावर्तयामास।

[1]व्यावर्तिततुरगश्च पुनश्चिन्तितवान्—अयमुद्भासितप्रभाभास्वरो भगवान् भानुरधुना दिवसश्रियो रशनामणिरिव मध्य[3]मलंकरोति। परिश्रान्तश्चायमिन्द्रायुधः। तदेनं तावदागृहीतकतिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयं च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्तमात्रं विश्रम्य ततो गमिष्यामि। इति चिन्तयित्वा सलिलमन्वेषयन्मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्यटन्नलिनीजलावगाहोत्थितस्याचिरादपक्रान्तस्य च महतो गिरिचरस्य वनगजयूथस्य चरणोत्थापितैः[4] पङ्कपटलैरार्द्रीकृतं कराव[5]कृष्टैश्च समृणालमूलनालैः कमलकलापैः कल्माषितमार्द्रार्द्रैश्च शैवलप्रवालैः श्यामलितोद्देशमुद्दलितैश्च कुमुद[6]कुवलयकह्लारकुड्मलैरन्तरान्तरा विच्छुरितमुत्खातैश्च सकर्दमैः शालूककन्दैराकीर्णं खण्डितैश्च[7] कुसुमस्तबकशारैर्वनपल्लवैराच्छादितमालूनाभिश्च कुसुमोपविष्टो[8]ल्लसत्षट्पदाभिर्वनलताभिराकुलितमभिनवकुसुम[9]परिमलवाहिना च तमालपल्लवरस[10]श्यामेन मदजलेन सर्वतः सिक्तं मार्गमद्राक्षीत्।

शाखा गुल्माः स्तम्बा लताश्च तासां संतानेनाविच्छिन्नपरम्परया गहनं तस्मिन्। **मर्त्यधर्मा** मनुष्यः। सीमान्तलेखा परमा मर्यादा। उत्प्रेक्ष्योत्प्रेक्ष्य विभाव्य विभाव्य। **वामेति**-वामकरतलेन सव्यपाणितलेन वलितो रश्मिपाशः खलीनं येन। **अयमिति**—उद्भासिता प्राबल्येन दीप्ता या प्रभा तया भास्वरो दीप्तिमान्। रशनामणिः काञ्चीदामरत्नम्। शिलाप्रस्रवणे शैलनिर्झरे। नलिनानि सन्त्यस्यामिति नलिनी सरस्तस्या इ०। **करा**-**वकृष्टैः** शुण्डया कर्षितैः। श्यामलितः कृष्णीकृत उद्देशः प्रान्तदेशो यस्य। उद्दलितैश्चूर्णितैः। विच्छुरितं व्याप्तम्। शालूककन्दैरुत्पलानां कन्दैः। 'शालूकमेषां कन्दः स्यात्' इत्यमरः। **कुसुमेति**। शारैः कर्बुरैः। कुसुमोपविष्टा उल्लसन्तः षट्पदा यासु। आकुलितं संकीर्णम्। **प्रतीपं**

१ चलित. २ निवर्तित. ३ नभस्तलमध्यम्. ४ उत्सारितैः, उत्तारितैः. ५ करिकलभकृष्टैः. ६ कमलकुमुद. ७ आखण्डितैः. ८ उपविष्टनिष्पिष्टो—च्छ्रसत्–द्भ्रमत्–च्छ्वसित. ९ बकुलकुसुम. १० सरसप.

उपजातजलाशयशङ्कश्च तं प्रतीपमनुसरन्नुद्ग्रीवदृश्यैरुपरिच्छत्रमण्डलाकारैः सरलसालसल्लकीप्रायैः अविरलैरपि निःशाखतया विरलैरिवोपलक्ष्यमाणैः पादपैः उपेतेन स्थूलकपिलवालुकेन शिलाबहुलतया विरलतृणोलपेन वनद्विपदशनदलितमनःशिलाधूलिकपिलेन आभङ्गिनीभिः उत्कीर्णाभिः इव पत्रभङ्गकुटिलाभिः पाषाणभेदकमञ्जरीभिः जटिलीकृतशिलान्तरालेन अनवरतगलद्गुग्गुलुद्रुमद्रवार्द्रीकृतदृषदा शिखरस्रुतशिलाजतुरसपिच्छिलोपलेन टंकनहयखुरखण्डितहरितालक्षोदपांशुलेन आखुनखरोत्खातबिलविप्रकीर्णकाञ्चनचूर्णेन सिकतानि-[illegible]कस्तूरिकामृगीखुरपङ्क्तिना संशीर्णरङ्कुरल्लकरोमप्रकरनिचितेन विषमशिलाच्छेदोपविष्टजीवञ्जीवकयुगलेन वनमानुषमिथुनाध्यासिततटगुहामुखेन गन्धपा-

---

प्रतिलोमम् । मूलदिशेत्यर्थः । उद्ग्रीवैः उत्कन्धरैः पुरुषैर्दृश्यैर्द्रष्टुं योग्यैः । सरलाः सालाः सल्लक्यश्च वृक्षविशेषाः प्रायो बाहुल्येन येषु तैः । स्थूला कपिला पिङ्गला वालुका सिकता यस्मिन् । विरलानि तृणानि उलपा वल्वजाख्यास्तृणविशेषाश्च यस्मिन् । ' उलपा वल्वजाः प्रोक्ताः ' इति हलायुधः । ' उलपा उशीरतृणानि ' इति क्षीरस्वामी । ब्राह्मणपरिव्राजकन्यायेनोलपानां पृथङ् निर्देशः । यद्वा उलपा लताः । **वनेति**–वनद्विपानां वन्यगजानां दशनैर्दन्तैर्दलिता चूर्णिता या मनःशिला नागजिह्विका तस्या धूल्या कपिलेन पिशङ्गेन । आ समन्ताद् भङ्गिनीभिर्भेदनशीलैः । पत्रभङ्गाः पत्रलतास्तद्वत्कुटिलाभिर्वक्राभिः । पाषाणं भिनत्तीति पाषाणभेदक ओषधिविशेषः । तदुक्तं भावप्रकाशे–' पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयोजनी । ' इत्या० । तस्य मञ्जरीभिरजटिलं जटिलं सम्पद्यमानं कृतमिति जटिलीकृतं शिलानामन्तरालमन्तरालप्रदेशो यस्मिन् । गुग्गुलुद्रुमाः पलङ्कषवृक्षाः । ०द्रवेण आर्द्रीकृता दृषदः प्रस्तरा यस्मिंस्तेन । शिखरेभ्यः स्रुतो गलितो यः शिलाजतुः गैरेयं तस्य रसस्तेन पिच्छिलाः स्निग्धा उपला यस्मिन् । **टङ्केति**–टङ्कनं पाषाणदारणः । ' टङ्कः पाषाणदारणः ' इत्यमरः । तद्वत्कठिनो योऽश्वखुरस्तेन खण्डितं चूर्णितं यद् हरितालं धातुविशेषस्तस्य क्षोदश्चूर्णं तेन पांशुलेन सिकतिलेन । आखवो मूषकास्तेषां नखरैर्नखैः इ० । संशीर्णा ये रङ्कवो मृगविशेषा रल्लकाः कम्बलमृगास्तेषां रोमप्रकरस्तेन निचितेन व्याप्तेन । **विषमेति**–विषमेषु निम्नोन्नतेषु शिलाच्छेदेषु उपविष्टानि जीवंजीवकयुगलानि यस्मिन् । जीवं जीवयति विषसंपर्कोद्भावनेनेति जीवंजीवः । चकोरः ' इति हैमः कोशः । मयूराकृतयः पक्षिविशेषा जीवंजीवाः । ते च दक्षिणदेशे एतन्नाम्नैव प्रसिद्धाः ' । इति भानु० । अत्र कौटिल्यः–' क्रौञ्चो विषाभ्याशे माद्यति । ग्लायति जीवंजीवकः । म्रियते मत्तकोकिलः । चकोरस्याक्षिणी विरज्येते ' । इति । वनमानुषा मनुष्याकृतयो वनचरविशेषा आद्यावस्थावर्तिनो मनुष्या वा । गन्धपाषाणः सुगन्धिद्रव्यविशेषः । वेत्रलताप्र-

---

१ उपजातजलाशयश्च. २ शिलानल. ३ पाषाणभङ्ग. ४ जीर्णरङ्कु.

घाणपरिमलामोदिना वेत्रलताप्रतानैप्ररूढवेणुना कैलासतलेन कञ्चिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागे जलभारालसं जलधरव्यूहमिव बहुलक्षपान्धकारमिव पुञ्जीकृतमत्यायतं तरुखण्डं ददर्श । तच्च संमुखादागतेन कुसुमरजःकषायामोदिना जलसंसर्गशिशिरेण सीकरिणा चन्दनरससमस्पर्शेनालिङ्ग्यमान इव जलतरंगमारुतेन कमलमधुपानमत्तानां च श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश ।

प्रविश्य च तस्य तरुखण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः स्फटिकभूमिगृहमिव वसुंधरादेव्याः, निर्गमनमार्गमिव सागराणां, निस्यन्दमिव दिशाम्, अंशावतारमिव गगनतलस्य, कैलासमिव द्रवतामापन्नं, तुषारगिरिमिव विलीनं, चन्द्रातपमिव रसतामुपेतं, हराट्टहासमिव जलीभूतं, त्रिभुवनपुण्यराशिमिव सरोरूपेणावस्थितं, वैदूर्यगिरिजालमिव सलिलाकारेण परिणतं, शरदभ्रवृन्दमिव द्रवीभूयैकत्र निस्यन्दितम्, आदर्शमिव प्रचेतसः, स्वच्छतया मुनिमनोभिरिव सज्जनगुणैरिव हरिणलोचनप्रभाभिरिव मुक्ताफलांशुभिरिव निर्मितम्, आपूर्णपर्यन्तमप्यन्तःस्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्, अनिलोद्धूतजलतरंगसीकरधूलिजन्मभिः सर्वतः समुपस्थितैः संरक्ष्यमाणमिवेन्द्रचापसहस्रैः,

तानेषु वेतसशाखापत्रसंचयेषु प्ररूढा उद्गता वेणवो वंशा यस्मिन् । एवंविधेन कैलासतलेन रजताद्र्यधोभागेन । पूर्वस्याश्चोत्तरस्याश्च दिशोन्तरालं पूर्वोत्तरस्तस्मिन् । जलभारेणालसं मन्थरं स्थिरमित्यर्थः । जलधरव्यूहो मेघसमूहः । तच्च तरुखण्डं प्रविवेशेत्यन्वयः । कुसुमरजसः पुष्पपरागस्य कषायस्तुवर आमोदोस्यास्तीति तेन । **प्रविश्येति**—प्रविश्य च तस्य तरुखण्डस्य मध्ये । मध्यवर्तीत्यर्थः । अच्छोदं नाम सरो दृष्टवानित्यन्वयः । निस्यन्दं सारम् । तुषारगिरिर्हिमाचलः । वैदूर्याणि बालवायजानि तेषां गिरीणां जालमिव । इमानि विदूरपर्वतभूमौ नवमेघशब्दजानीति कवयो वर्णयन्ति । तथाच कुमारसंभवे ' विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ' ( १-२४ ) इति । वैदूर्यं बालवायजम् ' इति विश्वः । ' विदूराञ्ञ्यः ' इति ञ्यप्रत्ययः । अत्र विदूरशब्दो बालवायस्यादेशः पर्यायो वा तेन बालवायाद्गिरेरसौ प्रभवति न विदूरान्नगरात् । तत्र तु संस्क्रियते इति शिशुपालवधे मल्लिनाथः । निस्यन्दितं गलितम् । प्रचेतसः वरुणस्य ' ' प्रचेता वरुणः पाशी ' इत्यमरः । आसमन्तात्पूर्णः पर्यंतः प्रान्तभागो यस्य तादृशमपि । अन्तः स्पष्टं यथा तथा दृष्टः सकलवृत्तान्तो वस्तुप्रकारो यस्य तस्य भावस्तत्ता तया । **अनिलेति**—अनिलेनोद्धूता ऊर्ध्वं क्षिप्ता ये जलतरङ्गास्तेषां शीकरधूल्यः पृषत्कणेभ्यो जन्म येषां तैः । जलबिन्दुप्रतिफलिता हि रविगभस्तयो शक्रधनुषाकारेण भान्ति । तस्मादियमुत्प्रेक्षा ।

१ प्रतानवता. २ विविधतरु. ३ कुमुद. ४ वसुधा. ५ अवतारमिव जलाकारम्. ६ आदर्शभवनं-भुवनम्. ७ संस्थितैः, समुत्थितैः.

प्रतिमानिभेनान्तःप्रविष्टं[1] सकाननशैलनक्षत्रग्रहचक्रवालं त्रिभुवनमुद्भिन्नपङ्कजेनोदरेण नारायणमिव बिभ्राणम्, आसन्नकैलासावतीर्णस्य च शतशो भगवतः खण्डपरशोर्मज्जनोन्मज्जनक्षोभचलितचूडामणिचन्द्रखण्डच्युतेनामृतरसेन जलक्षालितवामार्धकपोलगलितलावण्यप्रवाहानुकारिणा[2] संमिश्रितजलम्, उपकूलतमालवनप्रतिबिम्बान्धकारिताभ्यन्तरैर्दृश्यमानरसातलद्वारैरिव सलिलप्रदेशैर्गम्भीरितरं, दिवाप्युपजातनिशाशङ्कैश्चक्रवाकमिथुनैः परिह्रियमाणनीलोत्पलवनगहनम्, असकृत्पितामहपरिपूरितकमण्डलुपरिपूतजलम्, अनेकशो वालखिल्यकदम्बककृतसंध्योपासनं, बहुशः सलिलावतीर्णसावित्रीभग्नदेवतार्चनकमलसहस्रं[3] सहस्रशः सप्तर्षिमण्डल-

---

प्रतिमानिभेन प्रतिबिंबरूपेण। नारायणोदरेपि त्रिभुवनं निविष्टम्। **उद्भिन्नेति**—उद्भिन्नान्युन्निद्राणि कमलानि यस्मिन्नेवंविधमुदरं तस्मिन्। पक्षे उद्भिन्नं नाभिकमलं यस्मिन् इ०। भगवतः षड्गुणैश्वर्यसम्पन्नस्य। तदुक्तम्—ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ भगमस्यास्तीति भगवान्। यद्वा—उत्पत्तिं च विनाशं च भूतानामगतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ खण्डपरशुः—सर्वाञ्शत्रूनप्रतिहतः खण्डयतीति खण्डः तद्भूतः परशुरस्य शिवः। उक्तं च म० च० 'येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते' इत्या०। तस्य मज्जनोन्मज्जनैर्यः क्षोभस्तेन चालितः कम्पितो यश्चूडामणिभूतश्चन्द्रखण्डस्तस्माच्च्युतेन। अमृतरसेन संमिश्रितं जलं यस्य। अमृतरसं विशेषयति—जलक्षालितो यो वामार्धकपोलः पार्वत्याः कपोलः। वामार्धस्य पार्वतीमयत्वात्। तस्माद्गलन्यो लावण्यप्रवाहस्तस्यानुकारिणा। मुक्ताफलतरलच्छायस्य लावण्यस्य धावल्यातिशयात्तदुपमानम्। **उपकूलेति**—उपकूलं यत्तमालवनं तस्य प्रतिबिम्बेनान्धकारितान्यन्धकारवदाचरितानि अभ्यन्तराणि येषाम्। अत एव दृश्यमानेति पातालस्यान्धकारमयत्वात्। सलिलप्रदेशैः—तमालवावच्छिन्नजलभागैः। अत एवाह दिवापीति। परिह्रियमाणं नीलोत्पलवनगहनम्। निबिडं नीलोत्पलवनमित्यर्थः। यस्मिन्। पितामहो ब्रह्मा। **वालेति**—वालखिल्या नामाङ्गुष्ठपर्वमिताः षष्टिसहस्रसंख्या ऋषयः। तदुक्तं विष्णुपुराणे—षष्टिर्यानि सहस्राणि मुनीनामूर्ध्वरेतसाम्। अङ्गुष्ठपर्वमात्राणां ज्वलद्भास्करतेजसाम् ॥ इति। मार्कं० पु० च—'क्रतोश्च संततिर्भार्या वालखिल्यानसूयत। षष्टिर्यानि सहस्राणि ऋषीणामूर्ध्वरेतसाम्' ॥ इति। म० भा० च—'अथापश्यदृषीन्ह्रस्वानङ्गुष्ठोदरवर्ष्मणः। पलाशयष्टिकामेकां सहितान्वहतः पथि' ॥ इति। **सलिलेति**—सलिलेऽवतीर्णा सावित्री दुर्गा वा ब्रह्मपत्नी वा। 'त्रिदशैरर्चिता देवी वेदभागेषु पूजिता। भावशुद्धस्वरूपा तु सावित्री तेन सा स्मृता' ॥ इ. वि० पु०। 'ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्धमकरोदर्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री

---

1 अन्तःप्रविष्टसजलचरकानन०, 2 लावण्यानुका. 3 कमलम्.

स्नानपवित्रीकृतं, सर्वदा सिद्धवधूधौतकल्पलतावल्कलपुण्यीकृतोदकम्, उदकक्रीडादोहदागतानां च गुह्यकेश्वरान्तःपुरकामिनीनां मकरकेतुचापचक्राकृतिभिरतिविकटैरावर्तिभिर्नाभिमण्डलैरुपात्तसलिलं, क्वचिद्वरुणहंसोपात्तकमलवनमकरन्दं, क्वचिद्दिग्गजमज्जनजर्जरितजरन्मृणालदण्डं, क्वचित्त्र्यम्बकवृषभविषाणकोटिखण्डिततटशिलाखण्डं, क्वचिद्यममहिषशृङ्गशिखरविक्षिप्तफेनपिण्डं, क्वचिदैरावतदशनमुसलखण्डितकुमुदखण्डं, यौवनमिवोत्कलिकाबहुलम्, उत्कण्ठितमिव मृणालवलयालंकृतं, महापुरुषमिव मीनमकरकूर्मचक्रप्रकटलक्षणं, षण्मुखचरितमिव श्रूयमाण-

ब्रह्माणी च परन्तप ' ॥ इति म० पु० । ' हुताशनपत्नी ' इति भानु० । तया भग्नं देवतार्चनार्थं कमलसहस्रं यस्मिन् । सिद्धा देवयोनिविशेषा अणिमादिसिद्धा वा । ' उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ' ॥ इति कुमारे वर्णिताः । एतेषां लोकः चन्द्रमण्डलादधःस्थ इति सूर्यसिद्धान्त उक्तम्–मन्दामरज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोधःस्थाः सिद्धविद्याधरा घनाः । इति ॥ **उदकेति**–उदके क्रीडा तस्या दोहदोभिलाषस्तेनागतानाम् । अतिविकटैरतिपृथुभिः । आवर्तो विद्यते येषां तैः । आवर्तसदृशाकारैः इत्यर्थः । उपात्तो गृहीतः । जर्जरिता उन्मथिताः । खण्डिता द्विधाकृताः । **यौवनेति**–उत्कलिका उद्गताः कलिकाः कोरका बहवो यस्मिन् । पक्षे उत्कलिका उत्कण्ठा । कामादिजन्या स्मृतिरुत्कण्ठा । ' चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि ' ॥ इति शब्दार्णवः । उत्कण्ठानुभवा उक्ता भावप्रकाशिकायाम्–' अन्तःसंभोगसंकल्पस्तत्तदाशावलोकनम् । अङ्गम्लानिर्मनोरथैर्मनोरथविचिन्तनम् ॥ अधिजानुभुजालम्बिकपोलतलमासनम् । प्रसन्नमुखरागश्च स्वेदोष्मा गद्गदा च वाक् ॥ उत्कण्ठानुभवा भावाः कथ्यन्ते भावकोविदैः ' । इति । पूर्वोक्तोत्कण्ठास्य संजातासावुत्कण्ठितस्तमिव । सोपि मृणालवलयादिर्मनसिजसन्तापनिर्वापणं करोतीति तदलंकृतः स्यात् । **मीनेति**–चक्राश्चक्रवाकाः । उक्ताः पक्षिणः प्रकटानि लक्षणानि यस्य । " चक्रा जलचारिविशेषाः । प्रकटा बहिर्दृश्यमाना लक्षणाः सारसाः सारस्यश्च यस्मिन् । ननु ' सारस्यां लक्ष्मणा ना तु सौमित्रौ श्रीमति त्रिषु । ' इति रुद्रकोषादिदर्शनात्कथमत्र लक्षणाशब्दप्रयोग इति चेन्न । ' लक्षणश्चैव सारसे ' इत्यमरमालायां निर्मकारस्यापि दर्शनात् ' । इति भानु० । पक्षे मकरादीनि चक्रान्तानि प्रकटानि स्पष्टानि लक्षणानि सामुद्रिकोक्तानि । रेखाचिह्नानि यस्य । एतेषां फलं चोक्तम् । **श्रूयमाणेति**–क्रौञ्चाः पक्षिविशेषास्तेषां वनिताः स्त्रियः । पक्षे क्रौञ्चो मयासुरसुतः कार्तिकेयेन हतः । ' क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रोञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्ध्वा सुचिरं चित्रमायी सुमायिना ॥ इति मृगेन्द्रसंहितायाम् । तत्कथा हरि० ४७ अ०

१ हंसाक्रान्तविकचकमलवनखण्डम्, हंसघ्रात०, हंसाक्रान्तकमलमकरन्दम्. २ मृणालजाल. ३ विषाणकोदण्ड. ४ प्रकटमीनमकरकूर्मचक्रलक्षणम्; ' प्रकटमीनशङ्खलक्षणम् ' इत्यमरटीकाकर्तामुकुटेनोद्धृतः पाठः ।

क्रौञ्चवनिताप्रलापं, भारतमिव पाण्डुधार्तराष्ट्रकुलपक्षकृतक्षोभम्, अमृतमथनसमयमिव तीरावस्थितशितिकण्ठपीयमानविषं, कृष्णबालचरितमिव तटकदम्बशाखाधिरूढहरिकृतजलप्रपातक्रीडं, मदनध्वजमिव मकराधिष्ठितं, दिव्यमिवानिमिषलोचनरमणीयम्, अरण्यमिव विजृम्भमाणपुण्डरीकम्, उरगकुलमिवानन्तशतपत्रपद्मोद्भासितं, कंसबलमिव मधुकरकुलोपगीयमानकुवलयापीडं, कद्रुस्तनयुगलमिव नागसहस्रपीतपयोगण्डूषं, मलयमिव चन्दनशिशिरवनम्, असत्साधनमिवादृष्टान्तम्, अतिमनोहरम्, आह्लादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान् ।

---

द्रष्टव्या । श्रूयमाणः क्रौञ्चदैत्यस्य वनितायाः प्रलापो रुदनं यस्मिन् । **पाण्ड्विति**-पाण्डवः पाण्डुवर्णा धार्तराष्ट्राः कृष्णवर्णैश्चञ्चुचरणैरुपलक्षिता हंसाः । 'धार्तराष्ट्राः सितेतरैः' इत्यमरः । तेषां कुलं समूहस्तस्य पक्षैः कृतः क्षोभो यस्मिन् । पक्षे पाण्डुकुलं पाण्डवाः धार्तराष्ट्रकुलं दुर्योधनादयः । तेषां पक्षाः स्वजनास्तैः कृतः क्षोभः समररूपो यस्मिन् । **तीरेति**-शितिकण्ठो मयूरस्तेन पीयमानं विषं पानीयं यस्य । 'विषं तु गरले तोये' इति विश्वः । पक्षे शितिकण्ठेन शिवेन पीयमानं विषं कालकूटं यस्मिन् । **तटेति**-तटे तीरे ये कदम्बा नीपास्तेषां शाखासु अधिरूढा ये हरयः प्लवंगास्तैः कृता जलप्रपातक्रीडा यस्मिन् । पक्षे यमुनातटे यः कदम्बः । हरिः कृष्णः । शेषं पूर्ववत् । कदम्बमारुह्य किल कृष्णो यमुनायां निपपात । तदुक्तं विष्णुपुराणे-तदेतं नातिदूरस्थं कदम्बमुरुशाखिनम् । अधिरुह्योत्पतिष्यामि ह्रदेस्मिन्ननिलाशिनः ॥ इति । दिव्यं दिवि भवम् । अनिमिषा मत्स्याः । पक्षे अनिमिषे निमेषरहिते लोचने ताभ्यां रमणीयम् । देवानां ह्यक्षिस्पन्दो न जायते । विजृम्भमाणानि प्रबुध्यमानानि पुण्डरीकाणि श्वेतकमलानि यस्मिन् । पक्षे विजृम्भमाणा मुखविकासं कुर्वन्तः पुण्डरीका व्याघ्रा यस्मिन् । 'पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रे' इति मेदिनी । **अनन्तेति**-अनन्तान्यसंख्यानि यानि शतपत्रपद्मानि कमलभेदास्तैरुद्भासितं शोभितम् । पक्षे अनन्तः शेषः शतपत्रपद्मौ नागविशेषौ । कंसः उग्रसेनपुत्रो दैत्यभेदो मथुराधिपश्च । **मधुकरेति**-मधुकरकुलैः उपगीयमानानि कुवलयान्यैवापीडो लक्ष्म यस्य । पक्षे मधुवने करो येषां ते मधुकराः कंसादयः । कुवलयापीडः कंसासुरस्य हस्तिरूपधारी दैत्यविशेषः । 'नागं कुवलयापीडं चाणूरं मुष्टिकं तथा । कंसं च बलिनां श्रेष्ठं सगणं देवकीसुतः । न्यहनद्गोपवेषेण क्रीडासक्तो हि केशवः ॥' इति ह० वं० १०६ अध्याये । कद्रुः कश्यपपत्नी नागमाता । नागा गजाः । पक्षे सर्पाः । पयः दुग्धम् । **चन्दनेति**-वनमुदकम् । पक्षे अरण्यम् । 'वने सलिलकानने' इत्यमरः । असत्साधनं असद्धेतुः । असतः हेत्वाभासादिदोषदुष्टस्य साधनमनुमानमिति वा । अदृष्टः अन्तः सीमा यस्य । पक्षे अविद्यमानः दृष्टान्तः निश्चितसाध्यवान् न्यायावयवविशेषः यस्मिन् । यथा पर्वतो वह्निमान् धूमात् । यत्र यत्र धूमस्तत्र वह्निः यथा महानसे इत्यत्र । दृष्टान्ताभावादसद्धेतुत्वम् ।

---

१ बालकृष्ण.

आलोकमात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत्[1] । अहो निष्फलमपि मे तुरगमुखमिथुनानुसरणमेतदालोकयतः सरः सफलतामुपगतम् । अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम् । आलोकितः खलु रमणीयानामन्तः । दृष्ट आह्लादनीयानामवधिः । वीक्षिता मनोहराणां सीमान्तलेखा । प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः । विलोकिता दर्शनीयानामवसानभूमिः । इदमुत्पाद्य सरः सलिलममृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः । इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थम्—अतिविमलतया चक्षुषः प्रीतिमुपजनयति । शिशिरतया स्पर्शसुखमुपोहरति[2] । कमलसुगन्धितया घ्राणमाप्याययति । हंसमुखरतया श्रुतिमानन्दयति । स्वादुतया रसनामाह्लादयति । नियतं चास्यैव दर्शनतृष्णया न परित्यजति भगवान् कैलासनिवासव्यसनमुमापतिः । न खलु सांप्रतमाचरति जलशयनदोहदं देवो रथाङ्गपाणिर्यदिदममृतरससुरभिसलिलमपहाय लवणरसपरुषपयस्युदन्वति स्वपिति । नूनं चेदं न प्रथममासीत्सरो येन प्रलयवराहघोणाभिघात[3]भीता भूतधात्री कलशयोनिपानपरिकलितसकलसलिलं सागरमवतीर्णा ।

---

विशेषस्तु 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः' इति गौतमसूत्रस्थे वात्स्यायनभाष्ये द्रष्टव्यः । द्रष्टव्यस्य दर्शनं तदेव फलम् । रमणीयानामन्तः परमावधिः । **कमलेति**-कमलानां शोभनो गन्धोऽस्यास्तीति तस्य भावस्तत्ता तया । अत्र ०सुगन्धतयेति पाठ एव साधीयान् । सरसः स्वाभाविकगन्धाभावे 'गन्धस्येत्वे तदेकान्तग्रहणम्' इति वार्तिकेन समासान्तेकारस्याप्राप्तेः । 'न कर्मधारयान्मत्वर्थीयः' इति निषेधादिनिप्रत्ययपक्षोपि जघन्य एव । आप्याययति तर्पयति । रथाङ्गपाणिः रथाङ्गं चक्रं पाणौ यस्य स विष्णुः । दोहदमत्युत्कटमभिलाषम् । दोहमाकर्षं ददातीति दोहदः । अयमिच्छामात्रवाच्यपि विशेषेण गर्भिणीच्छायां प्रयुज्यते इति अमरटीकायां भानुजीदी० । न खलु सांप्रतं युक्ततया आचरति । यतोमृतस्येव रसो यस्य तच्च सुरभि च सलिलं यस्य तादृशमिदं सरो विहाय लवणरसेन परुषं रूक्षं पयो यस्य तस्मिन्नुदधौ शेते । प्रलये जगत्संहारकाले यो वराहो यज्ञवराहो विष्णोरवतारभेदस्तस्य घोणा नासिका लक्षणया पोत्रं तेन योऽभिघातः तस्या उद्धरणार्थं प्रहारस्तस्माद्भीता । पुरा किल लोकहितार्थं प्रवृत्तो भगवान् यज्ञवराहो भूत्वा रसातलात्पृथिवीमुद्दधार । तदुक्तं हरिवंशे—भूत्वा यज्ञवराहोसौ द्रागधः प्राविशद्गुरुः । अद्भिः संच्छादितामुर्वीं स तामार्च्छत्प्रजापतिः । रसातलतले मग्नां रसातलतलं गतः । प्रभुर्लोकहितार्थाय दंष्ट्राग्रेणोज्जहार गाम् ॥ इति । कलशयोनिरगस्त्यः । तस्य कुम्भोत्पत्तिस्तूक्ता । तस्य पानेन परिकलितमाकलितम् । परिच्छेदं प्रापितमिति यावत् । सकलं सलिलं यस्य । यद्वा कलशयोनिना पानाय परिकलितं

---

१ मनस्यकरोत्. २ उपहरति. ३ अभिभूता.

अन्यथा यद्यत्रागाधानेकपातालगम्भीराम्भसि निमग्ना भवेन्महासरसि किमेकेन महावराहसहस्रैरपि नासादिता भवेत्। नूनं चास्मादेव सलिललेशमादाय महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारितदिशः प्लावयन्ति भुवनान्तराणि। मन्ये च यत्सृष्टेरर्वाक्सलिलमयं ब्रह्माण्डरूपमादौ भुवनमभूत्तदिदं पिण्डीभूय सरोव्यपदेशेनावस्थितम्।

इति विचारयन्नेव तस्य शिलाशकलकर्कशवालुकाप्रायं विद्याधरोद्धृतसनालकुमुदकलापार्चितानेकचारुसैकतलिङ्गम्, अरुन्धतीदत्तदिनकरार्घ्यपयःपर्यस्तरक्तकमलशोभितम्, उपकूलशिलातलोपविष्टजलमानुषनिषेव्यमाणातपम्, अभ्यर्णतया च कैलासस्य स्नानागतमातृमण्डलपदपङ्क्तिमुद्राङ्कितम्, अवकीर्णभस्मसूचितमग्नोत्थितगणवृन्दोद्धूलनम्, अवगाहावतीर्णगणपतिगण्डस्थलगलितमदप्रस्रवणसिक्तम्, अतिप्रमाणपादानुमीयमानतृषितकात्यायनीसिंहावतारमार्गं दक्षिणं तीरमासाद्य तुरगादवततार। अवतीर्य च व्यपनीतपर्याणमिन्द्रायुधमकरोत्। क्षितितललुठितोत्थितं च गृहीतकतिपययवसग्रासं सरोवतार्य पीतसलिलमिच्छया स्नातं चोत्थाप्यान्यतमस्य समीपवर्तिनस्तरोर्मूलशाखायामपगतखलीनं हस्तपाशशृङ्खलया-

---

चिन्तितं सकलं सलिलं यस्य। अनेनास्य पुरतः सागरस्य तुच्छत्वं सूचितम्। **अन्यथेति**–अगाधानि यान्यनेकानि पातालानि तद्वद्गम्भीराणि अम्भांसि यस्मिन्। 'एतेन कल्पान्तेप्येतस्यावस्थानं सूचितम्' इति भानु०। प्रलये दुर्दिनं तेनान्धकारिता दश दिशो यैस्ते। भुवनान्तराणि भुवनविवराणि। सृष्टेरर्वाक्। वनस्पतिप्राण्यादिरूपेण जगतो व्याकृतेः प्रागित्यर्थः। तथाहि मनुः–'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमवासृजत्॥ एवं मत्स्यपुराणेपि–यः शरीरादभिध्याय सिसृक्षुर्विविधं जगत्। अप एवे त्या०। तदेवाण्डं समभवद्धेमरूपमयं महत्॥ इत्या०। **शिलेति**–कर्कशा परुषा वालुका तत्प्रचुरम्। विद्याधरा देवयोनिविशेषास्तैरुद्धृतानि यानि सनालानि कुमुदानि तेषां कलापैरर्चितान्यनेकानि चारूणि सैकतानि सिकतामयानि सैकते वा लिङ्गानि शिवलिङ्गानि यस्मिन्। अरुन्धत्या दत्तं दिनकरायार्घ्यम्। अर्घः पूजाविधिस्तदर्थं द्रव्यमर्घ्यम्। तत्सम्बन्धिपयस्तस्मात्पर्यस्तै रक्तकमलैः। अभ्यर्णतया सामीप्याद्धेतोः स्नानार्थमागतानां मातॄणां ब्राह्मीप्रभृतीनामुक्तपूर्वाणां मण्डलं तस्य पदपंक्तिश्चरणवीथी मुद्रा न्यासचिह्नानि ताभिरङ्कितम्। ०उद्धूलनं–भस्मनो मर्दनमुत्क्षेपणं वा। ०मदप्रस्रवणं दानस्रुतिः। अतिप्रमाणैरतिपृथुलैः पादैरनुमीयमानः। कात्यायनी पार्वती तस्याः सिंहः। 'मनस्तालाभिधः' इति भानु०। तस्यावतारमार्गो यत्र। यवसं तृणम्। अपगतः खलीनो यस्य। खं मुखबिले लीनः खलीनः। **हस्तेति**–हस्ते यः

---

१ पिण्डीभूतम्. २ पर्यस्तारक्त. ३ मण्डलमुद्राङ्कितम् ४ कदम्बको. ५ अखलीनम्.

कनकमय्या चरणे[1] बद्ध्वा कृपाणिकावलूनान्क्षिप्त्वा चाग्रतः कतिचित्सरस्तीरदूर्वा-प्रवालकवलान्पुनरपि सलिलमवततार । ततश्च प्रक्षालितकरयुगलश्चातक इव कृत्वा जलमयमाहारं चक्राह्व इवास्वाद्य मृणालशकलानि शिशिरांशुरिव कराग्रैः स्पृष्ट्वा कुमुदानि फणीवाभिनन्द्य ज[illegible]रङ्गवातानन[illegible]हारातुर इवोरसि निधाय नलिनीदलोत्तरीयमरण्यगज इव सीकरार्द्रपुष्करोपशोभितकरः सरसः[4]सलिलादुदगात् । प्रत्यग्रभग्नशिशिरैश्च [illegible]जलकणिकाचितैः कमलिनीपलाशैर्लतामण्डपपरि-क्षिप्ते शिलातले [illegible]तीर्णे[5] निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद । मुहूर्तं विश्रान्तश्च तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तमुन्मुक्तकवलेन निश्चल-श्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं श्रुतिसुभगं वीणातन्त्री-झङ्कारमिश्रममानुषं गीतं[7]शब्दमशृणोत् । श्रुत्वा च कुतोऽत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः संभूतिरिति समुपजातकौतुकः कमलिनीपत्रस्रस्तरादुत्थाय[8] तामेव गीतसंपातसूचितां दिशं चक्षुः प्राहिणोत् । अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोपि विलोकयन्न किंचिद्ददर्श । तमेव केवलमनवरतं गीतशब्दं शुश्राव । कुतूहलवशाच्च गीतध्वनिप्रभवजिज्ञासया कृतगमनबुद्धिर्दत्त-पर्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथमप्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमा-नवर्त्मा [illegible]लवलीलतालोलकुसुमसुरभिपरिमलयाऽलिकुलविरु-तिमुखरितया तमालनीलया दिङ्नागमदवीथ्येव पश्चिमया सरस्तीरवनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ।

क्रमेण च संमुखागतैः, अच्छनिर्झरजलकणजालजनितजाडिमाभिः, जर्जरितभू-

---

पाशो बन्धनरज्जुस्तदर्थं शृङ्खला तया । कृपाणिका छुरिका तयावलूनान् कृत्तान् । चक्र इत्याह्वा यस्य स चक्राह्वः चक्रनामा चक्रवाक इत्यर्थः । कराग्रैः—करौ हस्तौ पक्षे कराः किरणाः । सीकरैरम्बुकणैरार्द्रं पुष्करं कमलं शुण्डाग्रं च तेनोपशोभितः करो हस्तः शुण्डा च यस्य । ॰चितै-र्व्याप्तैः । स्रस्तरमास्तरणम् । निषसाद शिश्ये । वीणा वल्लकी तस्यास्तन्त्रीणां झङ्कारो युगप-दास्फालनशब्दस्तन्मिश्रम् । विगतो मर्त्यानां संपातः संचारो यस्मात् । गीतसम्पा-तेन गानशब्दागमनेन सूचिताम् । अतिशयेनातिदूरोऽतिदवीयांस्तस्य भावस्तत्ता तया । प्रयत्नेन व्यापृते व्यापारिते लोचने येन । गीतध्वनेः प्रभव उद्भवस्थानं तस्य जिज्ञासया पश्चि-मया सरस्तीरवनलेखया तं गीतध्वनिं निमित्तीकृत्योद्दिश्य प्रतस्थे इत्यन्वयः । **[illegible]ति**–॰लतानां लोलानि मन्दवायुना नुन्नानि कुसुमानि तेषां सुरभिः परिमलो यस्याम् । विरुतिर्विरावः । तमालैर्नीलत्वात एव दिङ्नागानां मदवीथ्या साम्यम् । **क्रमेणेति**–पुण्यैः कैलासमारुतैरभिन-

---

१ चरणौ. २ तीरप्ररूढ. ३ करचरण. ४ सलिलात्. ५ मण्डलपरिक्षिप्तशिलातले. ६सं–प्र–स्तरम्. ७ गीतम्. ८ दलसंस्तरात्. ९ प्रभावात्.

जैवरहकलैः, धूर्जटिवृषरोमन्थफेनबिन्दुवाहिभिः, षण्मुखशिखण्डिशिखाचुम्बिभिः, अम्बिकाकर्णपूरपल्लवोल्लासनदुर्ललितैः, उत्तरकुरुकामिनीकर्णोत्पलप्रेङ्खोलनदोहदिभिः, आकम्पितकक्कोलैः, नमेरुकुसुमपांशुपातिभिः पशुपतिजटाबन्धार्तवासुकिपरिपीतशपैराह्लादिभिः पुण्यैः कैलासमारुतैरभिनन्द्यमानो गत्वा च तं प्रदेशं सर्वतो मरकतहरितैः, हारिहारीतरुतिरमणीयैः भ्रमद्भृङ्गराजनखरजर्जरितजरठकुड्मलैः, उन्मदकोकिलकुलकवलीकृतसहकारकोमलाग्रपल्लवैः, उन्मदषट्चरणचक्रवालवाचालितविकचचूतकलिकैः, अचकितचकोरचुम्बितमरिचाङ्कुरैः, चम्पकपरागपुञ्जपिञ्जरकपिञ्जलजग्धपिप्पलीफलैः, फलभरनिपीडितनिबिडदाडिमनीडप्रसूतकलविङ्कैः, प्रक्रीडितचपलकपिकुलकरतलताडनतरलितताडीपुटैः, अन्योन्यकलहकुपितकपोत-

---

न्द्यमानस्तं प्रदेशं गत्वा पादपैः परिवृतं भगवतः शूलपाणेः शून्यं सिद्धायतनं चैत्यमपश्यदिति सम्बन्धः। अथ वातविशेषणानि-संमुखागतैरभिमुखं वहद्भिः। अच्छं निर्मलं यन्निर्झरजलं प्रस्रवणोदकं तस्य कणजालैः पृषन्तिसमूहैर्जनितो जडिमा येषां तैः। जर्जरितानि शिथिलीकृतानि। षट् मुखानि यस्य स षण्मुखः कार्तिकेयस्तस्य शिखण्डी वाहनभूतो मयूरस्तस्य शिखां चुम्बन्तीति तैः। **अम्बिकेति**। अम्बिकोमा तस्याः कर्णपूरः कर्णाभरणभूतः पल्लवस्तस्योल्लासनमूर्ध्वं विधूननं तत्र दुर्ललितमाग्रहो येषां तैः। कर्णपूरपल्लवोल्लासकारिभिरित्यर्थः। **उत्तरकुरु०**—नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदः। म. भा. उ. अ. ७ तद्वर्षं वर्णितम्। यथा—'दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे। उत्तराः कुरवो राजन् पुण्याः सिद्धनिषेविताः' ॥ इत्यादि। 'भारतवर्षमिदं हि उदगस्मात्किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च 'तथा कुरु (वर्षम्)' इति सि. चि.। विशेषस्तु तत्रैव द्रष्टव्यः। आकम्पिताः कक्कोलाः कोषफलवृक्षा यैः। नमेरवः सुरपुन्नागास्तेषां कुसुमपांशुं पुष्पपरागं पातयन्तीत्येवंशीलैः। आर्तः पीडितः। **सर्वतः** इत्यारभ्य पादपविशेषणानि। हारिणो दृष्टिविलोभनीया हारीताः पक्षिविशेषाः। मृदङ्कुरा इति भानु०। तेषां रुतैर्भिर्विरावै रमणीयैः। भ्रमन्तो ये भृङ्गराजा धूम्याटाः पक्षिणस्तेषां नखरैर्नखैर्जर्जरितानि दारितानि कुड्मलानि येषाम्। कवलीकृता जग्धाः। सहकारा आम्राः। चक्रवालं समूहः। अचकिता अत्रस्ताः चकोरा विषसूचकास्तैश्चुम्बिता दष्टा मरिचं कोलकं तस्याङ्कुराः प्ररोहा येषु तैः। चातकानामत्रस्तत्वेन तत्र विषवृक्षाभावः सूचितः। तदुक्तं कामन्दके—चकोरस्य विरज्येते नयने विषदर्शनात्। इति। **चम्पकेति**—कपिञ्जलास्तित्तिरास्तैर्जग्धानि भक्षितानि पिप्पल्या मागध्याः फलानि येषु तैः। ०दाडिमेषु करकेषु ये नीडाः कुलायास्तेषु प्रसूता जातप्रसवाः कलविङ्काः कुलिङ्गाश्चटका वा तेषां स्त्रियो येषु। 'कलविङ्कः पुमान्ग्रामचटकेऽपि कलिङ्गके।' इति मेदिनी। ०ताडनैस्तरलितानि ताडीपुटानि तालीपत्रविस्तरा

---

१ वृषभ. २ आकम्पितकमलैर्नवकुसुममालापांसुवाहिभिः,० कक्कोलैः. ३बन्धनवासुकि. ४ सहकारकोरकैः. ५ चकोरचञ्चु. ६ दाडिमी. ७ चपलकपिल. ८ कपोतपोतसंहतलोलपक्ष, कपोतपोतपक्ष.

पक्षपालीपातितकुसुमैः, कुसुमरजोराशिसारसारिकाश्रितशिखरैः, शुकशतमुखनखशिखरशकलितफलस्फीतैः, जलधरजलैलुब्धविप्रलब्धमुग्धचातकध्वानमुखरिततमालखण्डैः, इभकलभकोल्लुनपल्लववेल्लितलवलीवलयैः, आलीयमाननवयौवनमत्तपारावतपक्षक्षेपपर्यस्तस्तबकैः, तनुपवनकम्पितकोमलकदलीदलवीजितैः, अविरलफलनिकरावनतनालिकेरवनैः, अकठोरपत्रपुटपूगविटपिपरिवृतैः, अनिवारितविहंगतुण्डखण्डितपिण्डखर्जूरजालकैः, मदमुखरमयूरीमधुररवविरावितान्तरैः, आकलितकलिकाकलापदन्तुरैः, अन्तरान्तरा कैलासतरंगिणीतरंगितसिकतिलतलभूमिभागैः, वनदेवताकरतलनिवहनिभम् अलक्तकजललवसिक्तामिव किसलयनिकरमतिसुकुमारमुद्वहद्भिः, ग्रन्थिपर्णग्रासमुदितचमरीकुलनिषेवितमूलैः, कर्पूरागुरुप्रायैः, इन्द्रायुधैरिव घनावस्थानैः, कुमुदारवादत्तदिनकरकरप्रवेशशिशिराभ्यन्तरैः,

येषु । ०पक्षपालीभिः पक्षकोटिभिः पातितानि कुसुमानि येषाम् । कुसुमरजोराशिभिः पुष्पपरागसंहतिभिः साराः कर्बुराः सारिकास्ताभिराश्रितानि शिखराणि येषाम् । **शुकेति**– ०मुखनखकोटिभिः शकलितानि दलितानि यानि फलानि तैः । स्फीतैः समृद्धैः । जलधरजले लुब्धः । तदेकशरणत्वात् । उक्तं च–नदेभ्योपि ह्रदेभ्योपि पिबन्त्यन्ये तदा पयः । चातकस्य तु जीमूतस्वानेवावलम्बनम् ॥ अथ च तमालानां मेघान्यत्वाद्विप्रलब्धा वञ्चिता ये मुग्धाश्चातकास्तेषां ध्वानेन मुखरितानि वाचालितानि तमालानां तापिच्छानां खण्डानि येषु । इभकलभैर्हस्तिशावैर्लूनाः खण्डिताः पल्लवा येषामेवंविधानि वेल्लितान्यान्दोलितानि लवलीवलयानि लवलीलतामण्डपा येषु । **आलीयमानेति**– ०पक्षक्षेपैः पक्षताडनैः पर्यस्ताः परितः क्षिप्ताः स्तबकाः पुष्पगुच्छा येषां तैः । तनुपवनेन कम्पितानि यानि कदलीदलानि तैर्वीजितैः । अकठोराणि पत्रपुटानि येषामेवंविधैः पूगविटपिभिः क्रमुकवृक्षैः परिवृतैः परिवेष्टितैः । पिण्डखर्जूराः खर्जूरविशेषास्तेषां जालकैः पुञ्जैः । मदेन हर्षेण ऋतुविशेषजनितमदेन वा मुखराणां वाचालानां मयूरीणां मधुररवैः विरावितानि सशब्दानि अन्तराण्यन्तरालानि येषां तैः । आकलिताः समन्तादुत्पन्नाः कलिकास्तासां कलापेन दन्तुरैर्विषमितैः । कैलाससम्बन्धिन्यो यास्तरङ्गिण्यो नद्यस्तासां तरङ्गितेन तरङ्गाप्लावनेन सिकतिलः सिकतामयस्तलभूमिभागो येषाम् । **वनदेवतेति**– ०निवहनिभं समुदायसदृशम् । ग्रन्थिपर्णं शुकं तस्य ग्रासेन भक्षणेन मुदितं यच्चमर्यो मृगीविशेषास्तासां कुलं तेन निषेवितानि मूलानि येषाम् । ग्रन्थिपर्णानि तु कस्तूरिकामृगैर्भक्ष्यन्ते इति बिल्हणो वि० चरिते वर्णयति– 'न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ।' इति । कर्पूरा घनसारवृक्षाः, अगुरवश्च बाहुल्येन येषु । घनं निबिडमवस्थानं येषाम् । पक्षे घनो मेघस्तत्रावस्थानं येषां तैः । **अदत्तेति**·अदत्तो दिनकरस्य सूर्यस्य करेभ्यो यः प्रवेशस्तेन शिशिरं शीतलमभ्यन्तरं येषां तैः । **अञ्जनेति**–अञ्जनवन्नीलानि कृष्णवर्णानि यानि नलानि तदाख्य-

१ पतित. २ जललव. ३ कृतालीयमान. ४ मदमत्त. ५ अकलित. ६ दन्तुरितैः. ७ समुद्वित. ८ घनावलिस्थानैः.

दाशरथिबलैरिवाञ्जननीलनलपरिगतप्रान्तैः, प्रासादैरिव सपारावतैः, भवनतापसैरिव सन्निहितवेत्रासनैः, रुद्रैरिव नागलताबद्धपरिकरैः, उदधिकूलपुलिनैरिवनिरन्तरोद्भिन्नप्रवाललताङ्कुरजालकैः, अभिषेकसलिलैरिव सर्वौषधिकुसुमफलकिसलयसनाथैः, आलेख्यगृहैरिव बहुवर्णचित्रपत्रशकुनिशतसंशोभितैः, कुरुभिरिव भारद्वाजाद्विजोपसेवितैः, महासमरमुखैरिव पुंनागसमाकृष्टशिलीमुखैः, महाकरिभिरिव प्रलम्बबालपल्लवस्पृष्टभूतलैः, अप्रमत्तपार्थिवैरिव पर्यन्तावस्थितबहुगुल्मकैः, दंशितैरिव भ्रमरसंघातकवचावृतकायैः, प्रमाणाभिमुखैरिव वानरकराङ्गुलिस्पृष्टगुञ्जैः,

---

तृणानि तैः परिगतः प्रान्तो येषाम् । पक्षे आञ्जनो हनुमान्, नीलनलौ च कपिविशेषौ । सह पारावतैर्मर्कटैर्वर्तमानाः । पक्षे पारावताः कपोताः । 'पारावतः कलरवे गिरौ मर्कटतिन्दुके ।' इत्यनेकार्थः । संनिहिता वेत्रवृक्षा आसनवृक्षाश्च येषाम् । पक्षे सन्निहितानि वेत्रासनानि वेतसनिर्मितानि विष्टराणि येषाम् । नागलतास्ताम्बूल्यः ताभिर्बद्धो वेष्टितः परिकरो मध्यभागो येषाम् । पक्षे नागाः सर्पा एव लताः । निरन्तरमुद्भिन्नाः प्रवाला नवपल्लवा लताङ्कुराश्च तेषां जालकानि येषु । पक्षे प्रवाललता विद्रुमलताः । **अभिषेकेति**–सर्वाश्च ता ओषधयश्चेत्या० । पक्षे सर्वौषधयो राजनिघण्टूक्ताः–कुष्टमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराचम्पककर्पूरैर्मुस्ता सर्वौषधिः स्मृता ॥ इति । हेमाद्रौ छन्दोगपरिशिष्टे च–'कुष्टमांसी हरिद्रे द्वे मुराशैलेयचन्दनम् । वचाचम्पकमुस्तञ्च सर्वौषध्यो दश स्मृताः ॥' इति । बहुवर्णैश्चित्राणि कर्बुराणि पत्राणि पिच्छानि येषां तादृशां शकुनीनां शतैः संशोभितास्तैः । पक्षे बहुवर्णान्यनेकरागोपेतानि पत्राणि पत्रलताः शकुनयश्चालेख्यगतास्तैरित्या० । **कुरुभिरिति**–भारद्वाजा व्याघ्राटा ये द्विजा विहगास्तैरुपसेवितैः । पक्षे भारद्वाजो द्विजो द्रोणाचार्यः । समरमुखानि समरप्रारम्भाः । पुंनागा देववल्लभा वृक्षभेदास्तैः समाकृष्टाः शिलीमुखा भ्रमरा येषु । पक्षे पुमांसो नागा इव पुंनागा वीरपुरुषास्तैः समाकृष्टाः शिलीमुखा बाणा येषु । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥' इत्यमरः । **प्रलम्बेति**–प्रलम्बा ये बालपल्लवा ह्रीवेरप्रवालास्तैः स्पृष्टं भूतलं येषु । पक्षे प्रलम्बो यो वालो बालधिः । 'बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुन्नपुंसकम् ॥' इति मेदिनी । तस्य पल्लवैः कुन्तलैः इ० । गुल्मका लतागुच्छकाः । पक्षे पर्यन्ते घट्टदेशे अवस्थिता बहवो गुल्मकाः सेनानिवेशा येषाम् । ९ गजाः, ९ रथाः, २७, अश्वाः ४५ पदातयः, एतत्संख्यान्विता सैन्यसमुदाया वा । **दंशितैरिति**–दंशिता वर्मिताः । 'सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः' । इत्यमरः । भ्रमरसंघातः षट्पदवृन्दं स एव कवचं तेनावृताः काया येषाम् । पक्षे कृष्णत्वसाम्याद्भ्रमरसंघातवद्यानि कवचानि । यद्वा भ्रमं रान्ति गृह्णन्तीति भ्रमराः कटकान्यावर्ता वा तेषां संघातो येषु तादृशानि कवचानि । **प्रमाणेति**–प्रमाणं सुवर्णादिमापनं तस्याभिमुखैस्तत्र प्रवृत्तैः । गुञ्जा लताविशेषस्तत्फलानि वा । पक्षे वा विकल्पेन नरैः कराङ्गुलिभिः स्पृष्टा गुञ्जा येषु । सुवर्णप-

---

१ द्विजोत्तम. २ संपात. ३ प्रयाणा.

अवनिपालशयनैरिव सिंहपादाङ्कितलैः, आरब्धपञ्चतपःक्रियैरिवोच्छिखशिखिमण्डलपरिवृतैः, दीक्षितैरिव कृतकृष्णसारविषाणकण्डूयनैः, जरद्गृहमुनिभिरिव जटालवालकमण्डलधरैः, इन्द्रजालिकैरिव दृष्टिहारिभिः पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयन्तं प्रदेशं भूतलभागसंनिविष्टं भगवतः शूलपाणेः सिद्धायतनमपश्यत् ।

तच्च पवनोद्धूतैरितस्ततः समापतद्भिः केतकीगर्भधूलिभिर्धवलीक्रियमाणकायः पशुपतिदर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतमायतनप्रवेशपुण्यैरिव परिगृह्यमाणः प्रविश्याद्राक्षीच्चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अचिरोद्धृतैरार्द्रार्द्रैर्दलशिखरगलज्जलबिन्दुभिरूर्ध्वविपाटितचन्द्रबिम्बदलैरिव निजाट्टहासावयवैरिव शेषफणाशकलैरिव पाञ्चजन्यसहोदरैरिव क्षीरोदहृदयाकारैरुपपादितमौ-

रिमाणे हि गुञ्जानां ग्रहणं क्रियते । 'प्रयाणाभिमुखैः' इति क्वचित्पाठः । प्रयाणाभिमुखा अप्यंगुल्या गुञ्जां स्पृशन्तीति यात्राशास्त्रम् । सिंहपादैस्तत्पदचिह्नैरङ्कितानि तलानि येषाम् । पक्षे सिंहपादा धातुमय्यो सिंहपादाकृतयः । **आरब्धेति**—आरब्धा पञ्चतपःक्रिया पञ्चाग्निसाधनं यैः । 'ग्रीष्मे पञ्चाग्निमध्यस्थः' इति स्मरणात् पञ्चाग्निसाधनकर्माचरद्भिरिव । तत्र चतुःप्रान्तेषु प्रज्वलिताश्चत्वारोऽग्नयः । सविता च पञ्चमोऽग्निः । 'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात् । उच्छिखमूर्ध्वचूडं यच्छिखिमण्डलं मयूरसमूहस्तेन परिवृतैः । पक्षे उद्गताः **शिखा** यस्य तदुच्छिखमुद्गतज्वालं यच्छिखिमण्डलं चत्वारोऽग्नय **इत्यर्थस्तेन** परिवृतैः । दीक्षितैः—गृहीतयज्ञदीक्षैः । कृतं कृष्णसारैर्मृगभेदैर्विषाणानां कण्डूयनं यत्र । **पक्षे** कृतं कृष्णसारविषाणेन कण्डूयनं यैः । 'कृष्णविषाणया कण्डूयते' इति श्रुतेः । **उक्तं च** कात्यायनेन—'कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीत' तया **कण्डूयनम्** इति । **जरदिति** जरन्तो वृद्धा ये गृहमुनयः गृह एव मुनिवृत्तयः सदारा **वानप्रस्था वा तैरिव** । जटा वृक्षमूलं तत्र स्थितं यदालवालकमण्डलं तद्धरैः । पक्षे जटाला जटाधारिणो ये बवयोरभेदात् बालकास्तेषां मण्डलं तस्य धरैः । 'पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा ।' इतिमनुस्मरणादनिवृत्तरजस्कस्त्रीकस्य पत्न्या सहैव वनगमनात्तेषां तत्र बालकसंभवः । इन्द्रजालिका मायिकाः । दृष्टिहारिभिः दृष्टिं हरन्ति सौन्दर्यातिशयात् विलोभयन्ति यथारूपदर्शनाभावात् वञ्चयन्ते च तच्छीलैः । तस्य सरसः पश्चिमे तीरे चन्द्रप्रभनाम्नः कैलासपादस्य कैलासप्रत्यन्तपर्वतस्य भूतलभागसंनिविष्टमिति योजना । कैलासपादं विशेषयन्नाह—ज्योत्स्नेति । **तच्चेति**—तच्चायतनं प्रविश्य भगवन्तं त्र्यम्बकमद्राक्षीदित्यन्वयः । केतकीगर्भधूलिभिः केतकीपरागैः । भस्मव्रतं विभूतिचर्चारूपम् । मण्डपिका लघुमण्डपः । मन्दाकिनीपुण्डरीकैः कृतार्चनम् । पुण्डरीकाणि विशेषयन्नाह—अचिरोद्धृतैः प्रत्यग्रोद्धृतैः । धावल्यातिशयमाह—**ऊर्ध्वेति**—ऊर्ध्वं विपाटितं विदीर्णं यच्चन्द्रबिम्बं तस्य दलैः शकलैरिव । पाञ्चजन्यो हरेः शंखः । तस्य पञ्चजनाख्यदैत्यास्थिनिर्मितत्वात्पाञ्चजन्येति नाम । 'पञ्चजने पाताले भवः' इति **स्वामी** । **हृदयस्य** पुण्डरीकाकारत्वात्तत्साम्येनाह **क्षिरोदेति** । क्षीरोदः

१ दीर्घजटा. २ ० कमण्डलु. ३ समापतद्भिः. ४ ०रोद्धृतैः. ५ आर्द्रार्द्रदलशिखर.

क्तिकमुकुटविभ्रमैः शुचिभिर्मन्दाकिनीपुण्डरीकैः कृतार्चनम्, अमलमुक्ताशिलाघटितलिङ्गम्, अशेषत्रिभुवनवन्दितचरणं चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम्।

तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनाम्, उपरचितब्रह्मासनाम्, अतिविस्तारिणा सर्वदिङ्मुखप्लावकेन प्रलयविप्लुतक्षीरपयोधिपयःपूरपाण्डुरेणातिदीर्घकालसंचितेन तपोराशिनेव विसर्पता पादपान्तैस्त्रिस्रोतोजलनिभेन पिण्डीभूय वहतेव देहप्रभावितानेन सगिरिकाननं दन्तमयमिव तं प्रदेशं कुर्वतीम्, अन्यथैव धवलयन्तीं कैलासगिरिम्, अन्तर्द्रष्टुरपि लोचनपथप्रविष्टेन श्वेतिमानमिव मनो नयन्तीम्, अतिधवलप्रभापरिगतदेहतया स्फटिकगृहगतामिव दुग्धसलिलमग्नामिव विमलचीनांशुकान्तरितामिवादर्शतलसंक्रान्तामिव शरदभ्रपटलतिरस्कृतामिवापरिस्फुटविभाव्यमानावयवां, पञ्चमहाभूतमयमपहाय द्रव्यात्मकमङ्गनिष्पादनोपकरण-

---

क्षीरसागरः। उपपादितो मौक्तिकमुकुटस्य विभ्रमः शोभा भ्रान्तिर्वा यैः। मुकुटस्य पत्रभङ्गत्वात्तत्साम्यम्। चराचरस्य जङ्गमाजङ्गमस्य गुरुर्नियामकः परमेश्वरः पूज्यो वा। चतुर्मुखम्-'न च महादेवस्य पञ्चमुखत्वात्कथमत्र चतुर्मुखोपवर्णनमिति वाच्यम्। सामान्यतस्तन्निवासिनः प्रयोजनवशाच्चतुर्मुखत्वस्यापि संभवात्'। इति भानु०। अथवैकमुखमूर्तिचतुष्टयस्य दिग्व्यवस्थया सर्वेषां सर्वत्र समदर्शनलाभार्थं च प्रतिष्ठापनाच्चतुर्मुखत्वं ज्ञेयम्। आह चाग्रतस्तस्य च दक्षिणां मूर्तिमित्यादि। त्र्यम्बकं शिवम्। व्युत्पत्तिस्तूक्ता। केचित्तु त्रिषु लोकेषु कालेषु वा अम्बा वेदलक्षणः शब्दोऽस्यास्ति, त्रीणि पृथिव्यन्तरिक्षद्युलोकाख्यानि वा स्थानान्यस्य' इति व्युत्पत्तिमाहुः। **तस्येति**-तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनां प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्शेति विप्रकृष्टेनान्वयः। **उपेति**-उपरचितं ब्रह्मासनं ध्यानानुकूलमासनं यया। पुनः देहप्रभावितानेन शरीरकान्तिविस्तारेण सगिरिकाननं तं प्रदेशं दन्तमयं गजदन्तनिर्मितमिव कुर्वतीम्। प्रभावितानं विशेषयति-**अतीति**-०प्लावकेन पूरयता। विप्लुतः प्रवृद्धः। पादपान्तैर्विसर्पता तपोराशिनेव त्रिस्रोतोजलनिभेन गङ्गाजलसदृशेन पिण्डीभूय वहतेति योजना। धवलस्यापि कैलासस्य धावल्यातिशयाधानादाह-**अन्यथेति**-अन्यथान्येन प्रकारेण। द्रष्टुरपि मनः अन्तः लोचनपथेन नेत्रमार्गेण प्रविष्टेन देहप्रभावितानेन श्वेतिमानं नयन्तीम्। पुनः कीदृशीम्। **अतीति**-अतिशुभ्रदीप्तिव्याप्ततया अपरिस्फुटमव्यक्तं विभाव्यमाना ज्ञायमाना अवयवा यस्याः। तस्मादेवोत्प्रेक्षते **स्फटिकेति**-दुग्धसलिले क्षीरोदजले मग्नाम्। विमलं भासुरमिति यावत्। यत् चीनांशुकं श्लक्ष्णं वस्त्रं तेनान्तरितामाच्छादिताम्। तिरस्कृतां तिरोहिताम्। **अङ्गेति**-शरीरनिर्माणसामग्रीसमूहम्। धवलगुणेन न तु गुणाधिष्ठानेन द्रव्येणातोऽद्भुतमिदमिति भावः। अनेन तस्या धावल्यातिशयः सूचितः। 'केचिदपहायेत्यस्योभयत्र सम्बन्धमाहुः। तद्यथा-धवलगुणेनैवोत्पादितायास्तस्याः पृथिव्याद्यनात्मकत्वे द्रव्यत्वमेव न स्यादित्याह-द्रव्येति-द्रव्यात्मकं स्वरूपमप-

---

१ सर्वतोऽधिसर्पता. २ चन्द्र. ३ ०पथं प्रविश्य. ४ चेलांशुक.

कलापं धवलगुणेनेव केवलेनोत्पादितां, दक्षाध्वरक्रियामिवोद्धतगणकचग्रहभयोपसेवितत्र्यम्बकां, रतिमिव मदनदेहनिमित्तं हरप्रसादनार्थमागृहीतहराराधनां, क्षीरोदधिदेवतामिव सहवासपरिचितहरचन्द्रलेखोत्कण्ठाकृष्टाम्, इन्दुमूर्तिमिव स्वर्भानुभयकृतत्रिनयनशरणगमनाम्, ऐरावतदेहच्छविमिव गजाजिनावगुण्ठनोत्कण्ठितशितिकण्ठचिन्तितोपनतां, पशुपतिदक्षिणमुखहासच्छविमिव बहिर्निर्गत्य कृतावस्थानां, शरीरिणीमिव रुद्रोद्धूलनभूतिम्, आविर्भूतां ज्योत्स्नामिव हरकण्ठान्धकारविघट्टनोद्यमप्राप्तां, गौरीमनःशुद्धिमिव कृतदेहपरिग्रहां कार्तिकेयकौमारव्रत-

हाय । ननु द्रव्यत्वाभावेऽङ्गानि शरीरावयवाः तन्निष्पादने योपकरणसामग्र्यपेक्षिता सा न स्यात् । तस्याश्च द्रव्यात्मककार्ये जनने सामर्थ्यात् । अत आह—अङ्गेति । तदप्यपहाय न चाभाव एव दूषणमलौकिकप्रसिद्धेर्दूषणस्यैव भूषणत्वात्' इति भानु० । दक्षः प्रजापतिविशेषः । 'दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः । ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः' ॥ म० भा० आ० ६६ अ० । तस्याध्वरक्रिया यज्ञकर्म । उद्धतेति—उद्धता अविनीता ये गणाः पाखण्डादीनां समूहास्तैर्यः कचानां ग्रहो कचाकर्षणं तस्माद्भयं तेनोपसेवितस्त्र्यम्बको यया । पक्षे उद्धता दृप्ता ये गणाः प्रमथवीरभद्रादयस्तैर्यत्कचग्रहणमृत्विजादीनां तस्माद्यद्भयं तेनोपसेवितस्त्र्यम्बको यया ताम् । दक्षप्रजापतिना यज्ञे ईश्वरो नाहूतः । तेन कुपितः शिवः 'महावीरोऽपि रे भद्र मम सर्वगणेष्विह । वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज । कुरु मे सत्वरं कर्म दक्षयज्ञं क्षयं नय' ॥ इत्याद्युक्त्वा वीरभद्रादीन्गणान्प्रेषयामास । तैश्चाध्वरनाशो विहितः । विस्तरस्तु का० खं० ८९ अ० द्रष्टव्यः । मदनेति—मदनेन यो देहो लेपनं तज्जन्यसंताप इत्यर्थः । स एव निमित्तं यस्मिन्कर्मणि । यद्वा मदनेन युक्तो देह इति समासः । मदनसंतापनिवृत्त्यर्थमित्यर्थः । प्रसन्ने हि हरे मदनः पीडां न कुर्यादिति हेतोः । केचिन्मदनस्य देह इव देहो यस्य स पुण्डरीकमुनिस्तन्निमित्तमिति व्याख्यान्ति । किंतु तदप्रस्तुतत्वाच्चिन्त्यम् । पक्षे मदनस्य पत्युर्देहनिमित्तं पुनर्देहप्राप्त्यर्थम् । मदनदेहदाहकथा तु प्रसिद्धा । क्षीरोदधिदेवता तदधिष्ठात्री देवता लक्ष्मीर्वा । सहवासेति—मथनात्पूर्वं यः सहवास एकत्र वसतिर्लक्ष्मीचन्द्रयोरुभयोरपि क्षीरोदधिप्रभवत्वात् । तेन परिचिता संस्तुता या हरचन्द्रलेखा तस्यां योत्कण्ठा दर्शनौत्सुक्यं तयाकृष्टामिवेत्युत्प्रेक्षा । उपमायां सहवासात्तत्रायतने एकत्र निवसनात् परिचिता इ० । तस्या आह्लादकमूर्तित्वादुत्प्रेक्षान्तरमाह—इन्द्विति । स्वर्भानुर्विधुन्तुदस्तस्माद्यद्भयं तेन कृतं त्रिनयनशरणगमनं शंकरं प्रति रक्षणार्थं गमनं यया । उपमायां पक्षे स्वर्भानुः खस्थसूर्यस्तस्माद्भयमातपत्रासरूपं तेन कृतं त्रिनयनस्य शरण आयतने गमनं यया । तस्या धवलत्वादाह—ऐरावतस्य देहस्य च्छविः कान्तिस्तद्वत् । गजेति—गजाजिनं गजचर्म तस्यावगुण्ठनं परिधानं तत्रोत्कण्ठितो यः शितिकण्ठस्तेन चिन्तितोपनतां चिन्ताकाले एव प्राप्तां तस्य चिन्तितेन चिन्तयोपनतामिति वा । पशुपतीति—तस्या दक्षिणमूर्त्यभिमुखमवस्थानाद्दक्षिणग्रहणम् । रुद्रस्य शंभोरुद्धूलनमङ्ग-

१ निरन्तरभस्मोलुण्ठनसिताङ्गीं रतिम्. २ क्षारोदधि. ३ ०त्कण्ठाम्. ४ तपःसिद्धिम्.

क्रियामिव मूर्तिमतीं, गिरीशवृषभदेहद्युतिमिव पृथगवस्थिताम्, आयतनतरुकुसुमसमृद्धिमिव शंकराभ्यर्चनाय स्वयमुद्यतां, पितामहतपःसिद्धिमिव महीतलमवतीर्णाम्, आदियुगप्रजापतिकीर्तिमिव सप्तलोकभ्रमणखेदविश्रान्तां, त्रयीमिव कलियुगध्वस्तधर्मशोकगृहीतवनवासाम्, आगामिकृतयुगबीजकलामिव प्रमदारूपेणावस्थितां, देहवतीमिव मुनिजनध्यानसंपदम्, अमरगजवीथीमिवाभ्रगङ्गाभ्यागमवेगपतितां, कैलासश्रियमिव दशमुखोन्मूलनक्षोभनिपतितां, श्वेतद्वीपलक्ष्मीमिवान्यद्वीपावलोकनकुतूहलागतां, काशकुसुमविकासकान्तिमिव शरत्समयमुदीक्षमाणां, शेषशरीरच्छायामिव रसातलमपहाय निर्गतां, मुसलायुधदेहप्रभामिव मधुमदविघूर्णनायासविगलितां, शुक्लपक्षपरंपरामिव पुञ्जीकृतां, सर्वहंसैरिव धवलतया कृतसंविभागां, धर्महृदयादिव निर्गतां, शङ्खादिवोत्कीर्णां, मुक्ताफलादिवाकृष्टां, मृणालैरिव विरचितावयवां, दन्तदलैरिव घटिताम्, इन्दुकरकूर्चकैरिव प्रक्षालितां, वर्णसुधाच्छटाभिरिवाच्छुरिताम्, अमृतफेनपिण्डैरिव पाण्डुरीकृतां, पारदरसधाराभिरिव धौतां, रजतद्रवेणेव निर्मृष्टां, चन्द्रमण्डलादिवोत्कीर्णां, कुटजकुन्दसिन्दुवारकुसुमच्छविभिरिवोल्लासिताम्, इयत्तामिव धवलिम्नः, स्कन्धावलम्बिनीभिरुदयतटगतादर्कबिम्बादुद्धृत्य बालरश्मिप्रभाभिरिव निर्मिताभिरुन्मिषत्तडित्तरलतेजस्ताम्राभिरचि-

विलेपनं तदर्थं भूतिं भस्मेव। हरेति—हरकण्ठे योऽन्धकारो नीलत्वसाम्यात्तमस्तस्य विघट्टनमपसारणं तत्र य उद्यमस्तेन प्राप्ताम्। कार्तिकेयस्य या कौमारे बाल्य एव व्रतक्रिया तपश्चर्या तामिव। आयतनं शिवालयं तस्य तरवस्तेषां कुसुमसमृद्धिमिव। पितामहो ब्रह्मा। आदियुगे कृतयुगे ये प्रजापतयो मरीच्यादयः इ०। सप्तलोका भूर्भुवःस्वः महः जनस्तपो सत्यमिति तेषु भ्रमणं तेन खिन्नाम्। त्रयी—वेदत्रयसंघातः। तस्यास्तत्रागमनहेतुमुत्प्रेक्षते—कलियुगेन ध्वस्तो दूरोत्सारितो यो धर्मो वेदविहितकर्मरूपस्तेन यः शोकस्तेन गृहीतवनवासामङ्गीकृतारण्यनिवासाम्। आगामि अग्रेभावि यत्कृतयुगं तस्य बीजकलां सूक्ष्मरूपमात्राम्। अमरगजवीथिं देवानां ये गजास्तेषां समूहम्। काशस्तृणविशेषः। उदीक्षमाणां प्रतीक्षमाणाम्। मुसलायुधो बलभद्रः। मधुमदेन क्षीबतया यद्विघूर्णनं देहभ्रान्तिस्तस्या य आयासस्तेन विगलिताम्। 'हंसास्तु श्वेतगरुतः' इत्यमरः। कृतः संविभागः स्वधवलतांशार्पणं यस्याः। धर्मस्य विशुद्धस्वरूपत्वादाह धर्मेति—आकृष्टां कृताकर्षणाम्। यस्याः स्वरूपं मौक्तिकेभ्य आकृष्टमिवेत्यर्थः। दन्तदलैर्हस्तिरदच्छेदैः। इन्दुकरा एव कूर्चकास्तूलिकास्तैः। वर्णसुधा वर्णनार्थे सुधा धवलं लेपनद्रव्यं तस्याश्छटाभिः पृषद्भिराच्छुरितां सर्वतो लिप्ताम्। पारदो रसेन्द्रः। 'रसेन्द्रः पारदः' इति तारपालः। निर्मृष्टां निर्घृष्टाम्। उल्लासितामुद्भासिताम्। इयत्ताम्—इदं [illegible] तस्य भावस्तत्ता ताम्। परमावधिमित्यर्थः। पुनश्च जटाभिरुद्भासितः शोभितः शिरोभागो यस्यास्ताम्। जटा विशेषयन्नाह—स्कन्धेति। अर्कबिम्बाद्बालरश्मिप्रभा उद्धृत्य ताभिरिव निर्मिताभिरित्यर्थः। उन्मि-

१ द्वीपान्तर. २ उद्गताम्. ३ तडित्तन्तुतरल.

रस्नानावस्थितविरलवारिकणतया प्रणामलग्नपशुपतिचरणभस्मचूर्णाभिरिव जटाभि-रुद्भासितशिरोभागां, जटापाशग्रथितमुत्तमाङ्गेन मणिमयं नामाङ्कमीश्वरचरणद्वय-मुद्वहन्तीं, रविरथतुरगखुरक्षुण्णनक्षत्रक्षोदविशदेन भस्मनालंकृतललाटपट्टिकां, शिखरशिलाश्लिष्टशशाङ्ककलामिव शैलराजमेखलाम्, अतुलभक्तिप्रसाधितया लक्ष्मी-कृतलिङ्गया द्वितीययेव पुण्डरीकमालया दृष्ट्या संभावयन्तीं भूतनाथम्, अनव-रतगीतपरिस्फुरिताधरपुटवशादतिशुचिभिः शुद्धहृदयमयूखैरिव गीतगुणैरिव स्वरै-रिव स्तुतिवर्णैरिव मूर्तिमद्भिर्मुखान्निष्पतद्भिर्दशनांशुभिः पुनरिव स्नपयन्तीं गौरी-पतिम्, अतिविमलैश्च वेदार्थैरिव साक्षात्पितामहमुखादाकृष्टैर्गायत्रीवर्णैरिव ग्रथनत-मुपगतैर्नारायणनाभिपुण्डरीकबीजैरिवोद्धृतैः सप्तर्षिभिरिव करस्पर्शपूतमात्मान-मिच्छद्भिस्तारकारूपेणागतैरामलकीफलस्थूलैर्मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठि-तकण्ठभागां, परिवेषपरिगतचन्द्रमण्डलामिव पौर्णमासीनिशाम्, अधोमुखहरशिरः-कपालमण्डलाकारेण मोक्षद्वारकलशकान्तिना स्तनयुगलेनैकहंसमिथुनसनाथामिव-श्वेतगङ्गां, गौरीसिंहसटामयेनेव चामररुचिराकृतिना स्तनयुगलमध्यनिबद्धग्रन्थिना कल्पतरुलतावल्कलेन कृतोत्तरीयकृत्याम्, अयुग्मलोचनसकाशात्प्रसादलब्धेन

---

षन्तो विस्फुरन्ती या विद्युत्तस्यास्तरलं तेजस्तद्वत्ताम्राभिः । अचिरं यत्स्नानं तस्मादवस्थिता विरला अल्पा वारिकणास्तेषां भावस्तत्ता तया । उत्तमाङ्गेन शिरसा । नाम्नोऽर्थात् त्र्यम्बकस्याङ्कश्चिह्नं यस्मिन् । ० क्षोदवच्चूर्णवद्विशदेन शुभ्रेण । भस्मनालंकृतललाटपट्टिकामत एव शिखरेति । अत्र ललाटपट्टिकाया अष्टमीचन्द्रशकलाकारत्वादर्धचन्द्रसाम्यं कन्यकायाश्च धवलत्वाद्धिमगिरिमेखलासाम्यम् । ०प्रसाधितया अलंकृतया प्रसन्नया वा । संभावयन्तीमर्चयन्तीम् । **अनवरतेति** । अथ च अनवरतं यद्गीतं तेन परिस्फुरितं यदधरपुटं तद्वशान्मुखान्निष्पतद्भिर्दशनांशुभिर्दन्तकान्तिभिः गौरीपतिं पुनरिव एकदा पूजारम्भे स्नपितत्वात् स्नपयन्तीम् । अथ च मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठितकण्ठभागाम् । मुक्ताफलानि विशेषयन्नाह **अतीति**-वेदार्थैः ऋगाद्यभिधेयविषयैः । तेषामतिवैशद्यसूचनार्थं साक्षादिति । गायत्री मन्त्रभेदः । आमलकी धात्री तस्याः फलानि तद्वत्स्थूलैः । अधिष्ठितकण्ठभागामत एव परिवेषः परिधिस्तेन परिगतं परिवृतं चन्द्रमण्डलं यस्याम् । अत्र मौक्तिकाक्षवलयतत्स्थानीयपरिवेषयोः परस्परसाम्यं तस्या मुखस्य चन्द्रसाम्यं तस्याश्च पौर्णमासीसाम्यम् । अथ पुनस्तत्कुचयुगलं वर्णयन्नाह-**अधोमुखेति**-हरस्य शिरस्तत्र कपालं हरशिरःकपालं, अधोमुखं च तद् हरशिरःकपालं च

---

१ खुरमुख. २ भस्मनाकृत० ३ अपरयेव. ४ नाथम् ५ ग्रन्थनां, ग्रन्थितां, ग्रथनस्फीततां. ६ करतल. ७ ०मासीम्. ८ मोक्षपुर, ०द्वारनियुक्त.

चूडामणिचन्द्रमयूखजालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम् आप्रपदीनेन च स्वभावसितेनापि ब्रह्मासनबन्धोत्तानचरणतलप्रभापरिष्वङ्गा-ल्लोहितायमानेन दुकूलपटेन प्रावृतनितम्बां, यौवनेनापि स्वकालोपसर्पिणा निर्वि-कारविनीतेन शिष्येणेवोपास्यमानां, लावण्येनापि कृतपुण्येनेव स्वच्छात्मना परिगृ-हीतां, रूपेणापि रुचिरलोचनेन विगतचापलेनायतनमृगेणेव निषेविताम्, उत्स-ङ्गगतां च स्वसुतामिव सूक्ष्मशङ्खखण्डिकाङ्गुलीयकपूरिताङ्गुलिना त्रिपुण्ड्रकावशे-शेषभस्मपाण्डुरेण प्रकोष्ठबद्धशङ्खखण्डकेन नखमयूखदन्तुरतया गृहीतदन्तकोणे-नेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्यां मणि-मण्डपिकास्तम्भलग्नाभिरात्मानुरूपाभिः सहचरीभिरिव सवीणाभिः प्रतिमाभिरुपेतां, स्नपनार्द्रलिङ्गसंक्रान्तप्रतिबिम्बतयातिप्रबलभक्त्याराधितस्य हृदयमिव प्रविष्टां

---

तस्य मण्डलं तस्येवाकारो यस्य तेन । हरपददानेन स्तने पावित्र्यं द्योत्यते । **कृतेति**–कृतमुत्त-रीयस्योपसंव्यानस्य कृत्यं कार्यं यया सा ताम् । उत्तरीयस्थाने तदेव परिदधानामित्यर्थः । ब्रह्म-सूत्रेण यज्ञोपवीतेन । तस्या व्रतग्रहणाद्वल्कलयज्ञोपवीतादिधारणम् । पुनश्च दुकूलपटेन क्षौमपट्टेन प्रावृत आच्छादितो नितम्बो यस्याः । 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः । कटिभागो वा । दुकूलपटं वर्णयति-आप्रपदीनेन पदतलपर्यन्तव्यापकेन । पादस्याग्रं प्रपदं तन्मर्यादीकृत्याप्रपदं, आप्रपदं प्राप्नोती-त्याप्रपदीनम् । ' आप्रपदं प्राप्नोति ' पा. ५ । २ । ८ । ' स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् । ' इत्यमरः । **ब्रह्मेति**–ब्रह्मासनं ध्यानानुकूलासनं तस्य बन्धो रचना तेनोत्तानमूर्ध्वमुखं यत्पादतलं तस्य प्रभायाः परिष्वंगात्संश्लेषाल्लोहितायमानेन । ' ब्रह्मासनं तदा वक्ष्ये यत्कृत्वा ब्राह्मणो भवेत् । एकपादमुरौ दत्वा तिष्ठेद्दण्डाकृतिर्भवेत् ' ॥ इति रुद्रयामले ब्रह्मासनं वर्णितम् । किंतु तदत्राविवक्षितम् । योगशास्त्रोक्तं पद्मासनं स्वस्तिकासनं वा विवक्षितं स्यादिति भाति । स्वकाल उपसर्पतीत्येवंशीलेन स्वसमयप्रादुर्भूतेन स्वसेवावसरापस्थितेन च । निर्विकारं कामादि-विकाररहितं पक्षे क्रोधादिविकारहीनं यथा स्यात्तथा विनीतेन शिक्षितेन । रुचिरे लोचने यत्र यस्य च । विगतं चापलमविमृष्यकारितौद्धत्यं च । पुनः किं कुर्वतीम् । **स्वसुतामिवोत्सङ्गगतां** दन्तमयीं गजदन्तदलप्रचुरां वीणामास्फालयन्तीं वादयन्तीम् । केन दक्षिणकरेण । अथ दक्षिण-करं विशेषयति–सूक्ष्मा याः शङ्खखण्डिकाः शङ्खदलानि तेषां तद्विशिष्टानि वा यान्यङ्गुलीयान्य-ङ्गुलिभूषणानि तैरापूरिता व्याप्ता अङ्गुलयो यस्य । त्रिपुण्ड्रकादवशेषं शिष्टं यद्भस्म तेन पाण्डुर-स्तेन । गृहीतो दन्तमयकोणो वीणावादनसाधनं येन । गन्धर्वविद्यां गानसरस्वतीम् । ॰स्तम्भल-ग्नाभिः स्तम्भेषु संक्रान्ताभिः प्रतिमाभिः प्रतिबिम्बैरात्मानुरूपाभिः सहचरीभिरिवोपेताम् । पुनश्च विकृतरूपाण्यक्षीणि नेत्राणि यस्य स विरूपाक्षः शिवः । वैरूप्यं च त्रिनेत्रत्वादिति क्षीरस्वामी । विविधानि रविचन्द्राग्निरूपाण्यक्षीण्यस्येति भानुजीदीक्षिताः । तं देवं गीत्या गानेन उपवीणयन्तीं वीणयोप समीपे गानं कुर्वतीम् । 'सत्यापपाशरूपवीणातूल॰चुरादिभ्यो णिच् ।' इति वीणाशब्दा-

---

१ पवित्रनगीकृत. २ सर्पिनिर्विकार. ३ वृन्त, शङ्खघटित. ४ अवशिष्ट. ५ विलासवतीभिः [illegible]

हरस्य, हारलेखयेव प्राप्तकण्ठयोगया ग्रहपङ्क्त्येव ध्रुवप्रतिबद्धया क्रुद्धयेव रक्तमुखवर्णया मत्तयेव घूर्णितमन्द्रतारयोन्मत्तयेवानेककृततालया मीमांसयेवानेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, अतिमधुरगीतावकृष्टैर्ध्यानमिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृगवराहवानरवारणशरभसिंहप्रभृतिभिर्वनचरैराबद्धमण्डलैराकर्ण्यमानगीतानुविद्धविपञ्चीघोषाम्, अमरापगामिव नभसोवतीर्णां, दीक्षितवाचमिवाप्राकृतां, त्रिपुरारिशरशलाकामिव तेजोमयीं, पीतामृतामिव विगततृष्णाम्, ईशानशिरःशशिकलामिवानुपजातरागाम्, अमथितोदधिजलसंपदमिवान्तःप्रसन्नाम्, असमस्तपदवृत्तिमिवाद्वन्द्वां, बौद्धबुद्धिमिव निरालम्बनां, वैदेहीमिव प्राप्तज्योतिः–

---

दुपगानार्थे णिच् । ततः शतृप्रत्ययः । अथ गीतिं विशिनष्टि–**हारेति**–हारलेखया हारयष्ट्या । प्राप्तः कण्ठयोगः कण्ठेन ध्वनिजनकशिराभियोगः सम्बन्धो यया । ' कण्ठयोगो रागाणामवस्थानविशेषो गीतशास्त्रप्रसिद्धः इति भानु० । पक्षे गलसम्बन्धः । **ध्रुवेति**–ध्रुवो गानाङ्गविशेषः । तदुक्तं गीतशास्त्रे ' ध्रुवा हि नाट्यस्य प्राणाः ' इति तेन प्रतिबद्धया नियमितया । पक्षे ध्रुवो नक्षत्रभेदो यमवलम्ब्य सर्वग्रहकक्षास्थितिर्ज्योतिषे उक्ता । उक्तं च श्रीमद्भर्तृहरिणा ' श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् । ' इति । **रक्तेति**—रक्ताः श्रीरागादियुक्ता मुखवर्णा मुखोच्चारिता वर्णा यस्यां तया । पक्षे स्पष्टम् । **घूर्णितेति**—' घूर्णिता घोलनां प्राप्ता मन्द्रा उरःप्रदेशोद्भवाः ' [ मृदवः ] ताराः शिरःसमुद्भवाः [ उच्चाः ] स्वरा यस्याम् ' । इति भानु० । पक्षे घूर्णिता भ्रमिता मन्द्रा अलसा तारा कनीनिका यस्याम् । **अनेकेति**–अनेके कृतास्तालाः कालक्रियामानरूपा यस्याम् । पक्षे ताला हस्ततलसंयोगाः । मीमांसा तत्वनिर्णयार्थं विचारणा ' अनेका विविधप्रकारा या भावना घोलनाविशेषास्तैरनुबद्धया स्यूतया । पक्षे भावना शब्दनिष्ठाऽर्थनिष्ठा यागादिप्रवृत्त्यनुकूलाख्यातार्थरूपा ' । इ. भानु० । **ध्यानेति**—तेषामतिनिश्चलावस्थानाद्ध्यानं चित्तैकाग्र्यमभ्यस्यद्भिः । शरभः अष्टपादः सिंहघाती प्राणिविशेषः । **आकर्ण्येति**–आकर्ण्यमानो गीतानुविद्धो गानानुस्यूतो विपञ्च्या वीणाया घोषः शब्दो यस्याः । **दीक्षितेति**–अप्राकृतां दिव्याम् । पक्षे संस्कारवतीम् । ' नामभाषितवै ' इत्यादि श्रुत्या दीक्षितस्यापभ्रष्टवाङ्निषेधात् । विगता तृष्णा विषयलोभो यस्याः । पक्षे तृष्णोदन्या । अनुपजातो रागोऽनुरागो यस्याः सा तां विरक्तामित्यर्थः । पक्षे रागो लौहित्यम् । अन्तःप्रसन्ना अन्तःकरणे संतुष्टवृत्तिः । पक्षे अन्तर्मध्ये प्रसन्नां स्वच्छाम् । असमस्ता समासरहिता पदवृत्तिः पदरचना । अत्र नञा समासप्राचुर्याभावो गम्यते तेन वैदर्भीरीतिमिवेत्यर्थो लक्ष्यते । अद्वन्द्वां शीतोष्णादिद्वन्द्वबाधारहिताम् । पक्षे द्वंद्वः समासभेदः । बौद्धा अत्र माध्यमिका योगाचाराश्च तेषां बुद्धिं शास्त्रसमयमिव । निरालम्बाम्–निराश्रयां विषयेष्वनासक्तामिति वा । पक्षे निरधिष्ठानाम् । ते शून्यवादिनो विज्ञानातिरिक्तं वस्तु नाभ्युपगच्छन्ति । अतस्तन्मते घटपटादिज्ञानस्य विषयो नास्त्येव । तदुक्तम्–सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥ इ० । वैदेही सीता । प्राप्तो ज्योतिषि परब्रह्मणि प्रवेशो यया । पक्षे प्राप्तो ज्योतिषि परीक्षार्थं वह्नौ

---

१ हारलतया. २ रागरक्त. ३ मन्द्र. ४ उपवर्णयन्तीम्. ५ तपोमयीम्.

प्रवेशां, द्यूतकलाकुशलामिव वशीकृताक्षहृदयां, महीमिव जलभृतदेहां, हिमसमयदिनमुखलक्ष्मीमिव परिपीतभास्करातपाम्, आर्यामिव समुपात्तयतिगणोचितमात्राम्, आलिखितामिवाचलावस्थानाम्, अंशुमयीमिव तनुच्छायानुलिप्तभूतलां, निर्ममां, निरहंकारां, निर्मत्सराम्, अमानुषाकृतिं, दिव्यत्वादपरिज्ञायमानवयःप्रमाणामप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणां, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श।

ततोवतीर्य तरुशाखायां बद्ध्वा तुरङ्गमुपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय तामेव दिव्ययोषितमनिमेषपक्ष्मणा निश्चलनिबद्धलक्ष्येण चक्षुषा पुनर्निरूपयामास। उदपादि चास्य तस्या रूपसंपदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि। अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि। तथा हि। मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुखमिथुनमयमतिमनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वीक्षितः। अत्र च सलिलमन्वेषयता हृदयहारि सिद्धजनोपस्पृष्टजलं सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता। न हि मे संशीतिरस्या दिव्यतां प्रति। आकृतिरेवानुमापयत्यमानुषताम्।

---

प्रवेशो यया। **वशीति**—वशीकृतान्यक्षाणीन्द्रियाणि हृदयं च यया। पक्षे अक्षहृदयं अक्षविद्यारहस्यम्। जलेन भृतः पुष्टो देहो यस्याः। जलाहारामित्यर्थः। पक्षे जलेन भृतो देहो यस्यास्तस्या अम्मयत्वात। 'अद्भ्यः पृथ्वी' इति श्रुतेः। यद्वा जलेन भृताः पोषिता देहा यस्याम्'। तदुक्तम्—'वृष्टेरोषधयः। ओषधीभ्योन्नम्। तद्रसरूपेण शुक्रत्वमधिगच्छति। शुक्राद्धि जरायुजा देहाः'। इति भानु०। **परीति**—परिपीतो व्रतानुरोधाद् भास्करस्यातपो यया। 'तपस्विनां सूर्यातपग्रहणं महाफलाय' इति श्रुतेः। इति भानु०। पक्षे नीहारैः परिपीत आच्छादित इ०। **आर्यामिति**—आर्या छन्दोविशेषः। समुपात्ता गृहीता यतिगणस्तपस्विजनस्तस्योचिता योग्या मात्रा परिच्छदो यया। पक्षे यतिर्विश्रामस्थानं, गणा मगणादयस्तेषामुचिता मात्रा यस्याम्। अचले पर्वतेऽवस्थानं यस्यास्ताम्। पक्षे अचलं स्थिरमवस्थानं स्थितिर्यस्याः। तनुच्छाया देहकान्तिस्तया इ०। पक्षे तनुरल्पा छाया इ०। निर्ममां निर्गतो ममकारो ममत्वबुद्धिर्यस्यास्ताम्। यद्वा ममेत्यव्ययं ममतावाचि तद्रहितां निस्पृहामित्यर्थः। अष्टादशेति किंचिन्न्यूनाष्टादशवर्षीयाम्। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयर्प्रत्ययः। अविद्यमानो निमेषो यस्य तदनिमेषं, अनि० पक्ष्म यस्य तेन। निश्चलं यथा स्यात्तथा निबद्धं लक्ष्यं येन। रूपसम्पदा सौन्दर्यसमृद्ध्या। [illegible]पस्थितानि। वृत्तान्तान्तराणि विविधा वृत्तान्ताः॥ यदृच्छया स्वैरितया। [illegible]स्पृष्टं सेवितं जलं यस्य। संशीतिः संशयः। अनुमापयति

---

१ परिगृहीत. २ परिमाणाम्, ३ महाभक्त्या. ४ पार्वतीपतये. ५ वीक्षितः क्षितेः. ६ ०नोपस्पृष्ट.

कुतश्च मर्त्यलोके संभूतिरेवंविधानां गान्धर्वध्वनिविशेषाणाम्। तद्यदि मे सहसा दर्शनपथान्नापयाति नारोहति वा कैलासशिखरं नोत्पतति वा गगनतलं ततः का त्वं किमभिधाना वा किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतमिति सर्वमेतदेनामुपसृत्य पृच्छामि। अतिमहानयमवकाश आश्चर्याणाम्। इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ।

अथ गीतावसाने मूकीभूतवीणा प्रशान्तमधुकरमधुररुतेव कुमुदिनी सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया तपःप्रभावप्रगल्भया दृष्ट्या समाश्वासयन्तीव पुण्यैरिव स्पृशन्ती तीर्थजलैरिव प्रक्षालयन्ती तपोभिरिव पावयन्ती शुद्धिमिव कुर्वाणा वरप्रदानमिवोपपादयन्ती पवित्रतामिव नयन्ती चन्द्रापीडमावभाषे। स्वागतमतिथये कथमिमां भूमिमनुप्राप्तो महाभागस्तदुत्तिष्ठागम्यतामनुभूयतामतिथिसत्कार इति। एवमुक्तस्तु तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामो भगवति यथाज्ञापयसीत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज। व्रजंश्च समर्थयामास। हन्त तावन्नेयं मां दृष्ट्वा तिरोभूता। कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्। यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशयो प्रतिपत्तिरभिजाता विभाव्यते तथा संभावयामि नियतमियमखिलमात्मोदन्तमभ्यर्थ्यमाना मया कथयिष्यतीति। एवं च कृतमतिः पदशतमात्रमिव गत्वा निरन्तरैर्दिवापि रजनीसमयमिव दर्शय-

दिव्यतानुमितिं जनयति। गान्धर्वं गन्धर्वविद्या। गानमित्यर्थः। तस्य ध्वनिविशेषास्तेषाम्। प्रशान्तं मधुकराणां मधुरं रुतं यस्यां सा। प्रगता दक्षिणं प्रदक्षिणं न प्रदक्षिणमप्रदक्षिणम्। अप्र० प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य। हरमिति शेषः। **तप इति**—०प्रगल्भया प्रौढया। 'हन्त' हर्षे। कुतूहलेनेति करणे कर्तरि वा तृतीया। यथा यस्मात्। तपस्विजनेषु दुर्लभं दुष्प्राप्यं दिव्यं रूपं यस्याः। दाक्षिण्यं परच्छन्दानुवर्तनम्। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु।' इति शाश्वतः। तस्यातिशयः प्रकर्षो यस्याम्। प्रतिपत्तिः उचितकरणानुसंधानम्। अत्र आतिथ्यक्रियाप्रवृत्तिः। अभिजाताभिजनोचिता। विभाव्यते लक्ष्यते। आत्मोदन्तमात्मवृत्तान्तं कथयिष्यतीति संभावयामि। एवं च कृतमतिर्विहितनिश्चयः पदशतमात्रमिव गत्वा गुहामद्राक्षीदित्यन्वयः। अथ गुहां विशेषयन्नाह। **निरन्तरैरिति**

१ गन्धर्व. २ पाशुपतव्रतम्. ३ सर्वमेवैतत्. ४ अनुगम्यताम्. ५ अद्भुताकृतिसिरो०. ६ शयप्रति०.

द्भिस्तमालतरुभिरन्धकारितपुरोभागाम्, उत्फुल्लकुसुमेषु लतानिकुञ्जेषु कूजतां मन्द्रं मन्द्रं मदमत्तमधुलिहां विरुतिभिर्मुखरीकृतपर्यन्ताम् अतिदूरपातिनीनां च धवलशिलातलप्रतिघातोत्पतनफेनिलानामपां प्रस्रवणैरुत्कोटिग्रावविटङ्कविपाट्यमानैरुच्चरद्ध्वनिभिरवशीर्यमाणतुषारशिशिरसीकरासारैराबध्यमाननीहारां हिमहारहरहासधवलैश्चोभयतःक्षरद्भिर्निर्झरैर्द्वारावलम्बितचलच्चामरकलापामिवोपलक्ष्यमाणाम्, अन्तःस्थापितमणिकमण्डलुमण्डलाम्, एकान्तावलम्बितयोगपट्टिकां, विशाखिकाशिखरनिबद्धनालिकेरीफलवल्कलमयधौतोपानद्युगोपेताम्, अवशीर्णाङ्गभस्मधूसरवल्कलशयनीयसनाथैकदेशाम्, इन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षाकपालेनाधिष्ठितां, संनिहितभस्मालाबुकां गुहामद्राक्षीत्। तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घसलिलमादाय तां कन्यकां समुपस्थिताम्, अलमतियन्त्रणया कृतमतिप्रसादेन भगवति प्रसीद विमुच्यतामयमत्यादरः, त्वदीयमालोकनमपि सर्वपापप्रशमनमघमर्षणमिव पवित्रीकरणायालम्, आस्यताम्, इत्यब्रवीत्। अनुबध्यमानश्च तया तां सर्वामतिथिसपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह।

---

मन्द्रं मञ्जु कूजताम्। ०तलेषु यः प्रतिघातः स्खलनं तस्मादुत्पतनं तेन फेनिलानां फेनवताम्। उदिति–उत्कोटय ऊर्ध्वाग्रा ये ग्रावाणस्तेषां विटङ्काः शिरोभागास्तैर्विपाट्यमानैर्दीर्यमाणैः। अवशीर्यमाणो दलनां प्राप्यमाणो यस्तुषारो हिमं तस्य शिशिराः शीकरा वातप्रेरितकणास्तेषामासारो वेगवान् वर्षो येषु। एतादृशैः प्रस्रवणैराबध्यमानो नीहारो मिहिका यस्याम्। हिमं च हारो मुक्ताहारश्च हरहासश्च तद्वद्धवलैः स्फीतत्वार्थं हरहासग्रहणम्। एकान्ते एकप्रदेशे अवलम्बिता स्थापिता योगपट्टिका योगाभ्यासार्थं योगिधार्यपट्टविशेषो यस्याम्। तदुक्तं सिद्धान्तशेखरे-त्रिविधं योगपटकमाद्यं व्याघ्राजिनोद्भवम्॥ द्वितीयं मृगचर्माढ्यं तृतीयं तन्तुनिर्मितम्। चतुर्मात्रप्रविस्तारं दैर्घ्येण यज्ञसूत्रवत्॥ इति। विशाखिका शिक्यभेदः। 'भूमिशुद्ध्यर्थमादि'–यमाणा लोहयष्टिरूपा इति भानु०। तस्याः शिखरे निबद्धं नालिकेरीफलस्य वल्कलं त्वक् तन्मयं तन्निर्मितं धौतमुपानद्युगं तेनोपेताम्। अवशीर्णं गलितं यदङ्गभस्म तेन धूसरं यद्वल्कलशयनीयं तेन सनाथ एकदेशो यस्याः। संनिहिता भस्मालाबुका विभूतितुम्बिका यस्याम्। अतियन्त्रणयात्यनुरोधेनात्यायासेन वा। सर्वपापानां प्रशमनं विनाशकम्। अघमर्षणम् '–ऋतं च सत्यं च०' इत्यादि 'अपोहिष्ठा०' इत्यादि सूक्तं च। तच्चान्तर्जले जप्यम्। यथाह बौधायनः—' ऋतं च सत्यं चाद्यघमर्षणं त्रिरन्तर्जले जपन्सर्वस्मात्पापात्प्रमुच्यते ' इति। 'पातकोपपातकमहापातकानामेकतमसान्निपातेऽघमर्षणमेव जपेत्' इति हारीतः। अत्र बृहद्विष्णुस्तूक्तः ६८ तमे पृष्ठे अन्यस्मृतिवाक्यानि विस्तरभिया नोच्यन्ते। अनुबध्यमानः सनिर्बन्धं प्राथ्यमानः। सपर्यां पूजाम्।

---

१ गुञ्जतां. २ मधुमत्त. ३ चाञ्चरत्. ४ खिकानिब०. ५ अलमलम्. ६ अप्यत्र खलु. ७ अनुरुध्यमानः.

कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः सर्वमाचचक्षे । विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाकपालमादाय तेषामायतनतरूणां तलेषु विचचार । अचिरेण तस्याः स्वयं पतितैः फलैरपूर्यत भिक्षाभाजनम् । आगत्य च तेषां फलानामुपयोगाय नियुक्तवती चन्द्रापीडम् । आसीच्च तस्य चेतसि । नास्ति खल्वसाध्यं नाम तपसाम् । किमतः परमाश्चर्यं यदत्र व्यपैगतचेतना अपि सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः । चित्रमिदमालोकितमस्माभिरदृष्टपूर्वम् । इत्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीतपर्याणं नातिदूरे संयम्य निर्झरजलनिर्वर्तितैस्नानविधिस्तान्यमृतरसस्वादून्युपभुँज्य फलानि पीत्वा च तुषारशिशिरं प्रस्रवणजलमुपस्पृश्यैकान्ते तावदवतस्थे यावत्तयापि कन्यकया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः ।

इति परिसमापिताहारां निर्वर्तितसन्ध्योचिताचारां शिलातले विश्रब्धमुपविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत् । भगवति त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति । जैनयति हि प्रभुप्रसादलवोपि प्रागल्भ्यमधीरप्रकृतेः । स्वल्पाप्येकदेशावस्थाने कालकला परिचयमुत्पादयति । अणुरप्युपचारपरिग्रहः प्रणयमारोपयति । तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि । अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये । कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रह-

सप्रश्रयं सविनयम् । उपयोगायोपभोगाय । व्यपगतेति व्यपगता चेतना चैतन्यं येषां ते । समतिसृजन्तः सम्यग् वितरन्तः । आत्मनोनुग्रहमानुकूल्यं यद्वा तस्यानुग्रहात्साफल्यं कृतकृत्यत्वमिति यावत् । उपपादयन्ति प्रतिपादयन्ति । उपस्पृश्य भोजनान्त आचमनं कृत्वा । प्रणय आदरः । आहारः कृत इत्यर्थः । निर्वर्तितः समापितः सन्ध्योचिताचारः सायंकाल्योम्यो विधिर्यया । निभृतं निःशब्दम् । प्रागल्भ्यं धृष्टताम् । अधीरप्रकृतेश्चञ्चलस्वभावस्य । कालकला कालमात्रा । उपचारः सेवा पूजा वा तस्य परिग्रहः स्वीकारः । प्रणयं स्नेहम् । मरुतां देवताविशेषाणाम् । गुह्यकानां—निधिं रक्षन्ति ये यक्षास्ते वै गुह्यकसंज्ञकाः । इति व्याडिः ॥ कुसुमसुकुमारे

१ विगत. २ निवर्तितः ३ उपभुज्य. ४ उपजनयति. ५ एकावस्थाने, वस्थानकाल. ६ अनुगृह्यमाणम्.

णम् । केदं वयः । क्वेयमाकृतिः । क्व चायं लावण्यातिशयः । क्वेयमिन्द्रियाणामुपशान्तिः । तदद्भुतमिव मे प्रतिभाति । किं निमित्तं वानेकसिद्धसाध्यसंबाधानि सुरलोकसुलभान्यपहाय दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमधिवससि । कश्चायं प्रकारो यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशीं धवलतां धत्ते शरीरम् । नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वम् । अपनयतु नः कौतुकम् । आवेदयतु भवती सर्वम् । इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिमिवादाय निर्गच्छद्भिरिन्द्रियप्रसादमिव वर्षद्भिस्तपोरसनिस्यन्दमिव स्रवद्भिर्लोचनविषयं धवलिमानमिव द्रवीकृत्य पातयद्भिरच्छाच्छैरमलकपोलस्थलस्खलितैरवशीर्णहारमुक्ताफलतरलपातैरनुबद्धबिन्दुभिर्वल्कलावृतकुचशिखरजर्जरितसीकरैरश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे ।

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत् । अहो दुर्निवारता व्यसनोपनिपातानां यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति । सर्वथा न न कंचन स्पृशन्ति शरीरधर्माणमुपतापाः । बलवती हि द्वन्द्वानां प्रवृत्तिः । इदमपरमधिकतरमुपजनितमतिमहन्मनसि मे कौतुकमस्या बाष्पसलिलपातेन । न ह्यल्पीयसा शोककारणेन क्षेत्रीक्रियन्त एवंविधा मूर्तयः । न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा । इति संवर्धितकुतूहलश्चं

---

पुष्पवत्कोमले । नवे वयसि तारुण्ये । अनुरूपभावः शाकुन्तले—'कुसुममिव लोभनीयं यौवनम्' इति । क्वेति महदन्तरं सूचयति । ०संबाधानि संकुलानि । वनमधिवससि—'उपान्वध्याङ्वसः' इत्यधिकरणस्य कर्मसंज्ञायां द्वितीया । तैरेव प्रसिद्धैः पृथिव्यप्तेजोवाय्वाकाशैः । मुहूर्तमिव मुहूर्तमात्रम् । 'मुहूर्तसदृशम् । अत्र सदृशार्थे इवप्रयोगः' इति भानु० । स्थित्वा निश्वस्याश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे इत्यन्वयः । अधुनाश्रूणि विशेषयन्नाह । **स्थूलेति**—लोचनविषयं लोचनसम्बन्धिनम् । अच्छाच्छैरतिस्वच्छैः ०स्खलितैश्च्युतैः । ०मुक्ताफलवत्तरलः कम्प्रः पातो येषां तैः । ० शिखरयोजर्जरिता विशीर्णाः शीकराः कणा येषाम् । व्यसनानां विपदामुपनिपातानामुपनतीनाम् । अनभिभवनीयामधृष्याम् । उपतापाः संतापकारिणः क्लेशा न कंचन न स्पृशन्तीत्यन्वयः । नद्वयं प्रकृतार्थं गमयति । द्वन्द्वानां सुखदुःखादीनाम् । क्षेत्रीक्रियन्ते स्वविषयीक्रियन्ते । क्षुद्रो निर्घातः भूमावकस्मात्पवनपातेनाभिघातस्तेनाभिहता । वायुना निहतो वायुर्गगनाच्च पतत्यधः । प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते ॥ उक्तं च वराहमिहिरेण—अनिलोऽनिलेन निहतः क्षितौ पतन्स्वस्वनं करोत्येके । इ० ।

---

१ हारमुक्तमुक्ता. २ ०हलश्चास्याः.

शोकस्मरणहु[illegible]राधिनमिवात्मानमवगच्छन्नुत्थाय प्रस्रवणादञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये । सा तु तदनुरोधादविच्छिन्नबाष्पजलधारासंतानापि किंचित्कषायितोदरे प्रक्षाल्य लोचने वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैः प्रत्यवादीत् । राजपुत्र किमनेनातिनिर्घृणहृदयाया मम मन्दभाग्यायाः पापाया जन्मनः प्रभृति वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि । श्रूयताम् ।

एतत्प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयमापतितमेव यथा विबुधसद्म-न्यप्सरसो नाम कन्यकाः सन्ति । तासां चतुर्दश कुलानि । एकं भगवतः कम-लयोनेर्मनसः समुत्पन्नम् । अन्यद्वेदेभ्यः संभूतम् । अन्यदग्नेरुद्भूतम् । अन्यत्प-वनात्प्रसूतम् । अन्यदमृतान्मथ्यमानादुत्थितम् । अन्यज्जलाज्जातम् । अन्यदर्क-किरणेभ्यो निर्गतम् । अन्यत्सोमरश्मिभ्यो निष्पतितम् । अन्यद्भूमेरुद्भूतम् । अन्यत्सौदामनीभ्यः प्रवृत्तम् । अन्यन्मृत्युना निर्मितम् । अपरं मकरकेतुना समुत्पादितम् । अन्यत्तु दक्षस्य प्रजापतेररितिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् । एवमेतान्येकत्र चतुर्दश कुलानि । गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम् । अत्र मुनेस्तनयैश्चित्रसेनादीनां पञ्चदशानां भ्रातृणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः स किल सकलत्रिभुवनप्रख्यातपराक्रमो भगवता समस्तसुरमौ-लिमालालालितचरणनलिनेनाखण्डलेन सुहृच्छब्देनोपबृंहितप्रभाव. सर्वेषां गन्धर्वाणामाधिपत्यमसिलतामरीचिनिचयमेचकितेन बाहुना समुपार्जितं शैशव

---

तदनुरोधात्तद्वचनादरात् । अविच्छिन्नं बाष्पजलधारायाः संतानं यस्याः । किंचित्कषायितं रक्तमुदरं ययोः । अश्रवणीयेनानाकर्णनीयेन । एतद्–यथेत्यादिना वक्ष्यमाणम् । कल्याणे मङ्गल अभिनिवेश आग्रहो यस्य तस्य भवतः । विबुधसद्मनि–विशेषेण बुद्ध्यन्त इति विबुधास्तेषां सद्मनि स्वर्गे । अप्सरसः–' अप्सु निर्मथनादेव रसात्तस्माद्वरस्त्रियः । उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ' अद्भ्यः सरन्तीत्य ॥ इति रामायणे आसामुत्पत्तिर्वर्णिता । सौदामनीभ्यो विद्युद्भ्यः । सुदामाऽद्रिर्मेघो वा तत्र भवा सौदामनी । अत्रास्मिन्कुलद्वयमध्ये । गुणैरधिको वरीयान् । समस्तसुराणां मौलिमाला किरीटपरम्परा तया लालितमभ्यर्चितं चरणनलिनं पादपद्मं यस्य तेन । आखण्डलेनेन्द्रेण । उपबृंहितो वर्धितः प्रभावो यस्य । असिलतानां खड्गानां म[illegible] किरणजालेन

---

१ मिष्कुर. २ तत्र. ३ नमबः सेनादीनाम्. ४ अरविन्दजेन.

एवासवान् । इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किंपुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । तत्र च तद्भुजयुगपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम् । इदं चाच्छोदाभिधानमतिमहत्सरः खानितम् । अयं च भवानीपतिरुपरचितो भगवान् । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वस्तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः । यत्तु तत्सोममयूखसंभूतानामप्सरसां कुलं तस्मात्किरणजलानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता । तां च द्वितीयगन्धर्वकुलाधिपतिर्हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत् । सा तु भगवता मकरकेतनेनेव रतिः शरत्समयेनेव कमलिनी हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती । निखिलान्तःपुरस्वामिनी च तस्याभवत् ।

तयोश्च तादृशयोर्महात्मनोरहमिदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मज्जन्माभिनन्दितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्त्यविदितस्नेहशो-

मेचकितेन श्यामलितेन । भारतवर्षात्-'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र संततिः ॥ ' इत्युक्तात् । अनन्तरेऽव्यवहितान्तरे । कानयति दीपयति स्मरादि इति काननमुपवनम् । सोदर्याणां भ्रातॄणाम् । समाने उदरे शयितः सोदर्यः । 'समानोदरे शयितः' इति यत् । 'विभाषोदरे' इति समानस्य वा सः । तेन 'समानोदर्यः' इत्यपि । **किरणेति**-किरणा एव जलं तस्यानुसारस्तेन गलितं तेन । इति भानु० । हिमकरश्चन्द्रस्तस्य किरणवदवदातो गौरो वर्णो देहकान्तिर्यस्याः । **शरदिति**-शरदि हि कमलिन्यो कामपि सरोजलक्ष्मीं दधत इति प्रसिद्धम् । **विगतेति**-विगतानि लक्षणानि शुभचिह्नानि यस्याः । सुतजन्मातिरिक्तेन पुत्रजन्मातिशयानेन । समाचारः शास्त्रशिष्टाचारप्राप्तो विधिः । **कलेति**-अव्यक्तमनोहरं व्याहरन्ती शब्दायमाना चेत्युभयोर्विशेषणम् । अविदितः स्नेहः प्रीतिः शोको दुःखं तयोरायासः यस्मिन्नत एव मनोहरं

१ युगल. २ कुले द्वितीयेऽस्मिन्. ३ परिवारकस्य. ४ पीयूष, ०मयूखसंभवम्. ५ जाला०, ०अनुसरण. ६ केतुना. ७ महात्मनोर्महता क्लेशेनाभिलाषेण कालेन च केवलम्.

कायासमनोहरं शैशवमतिनीतवती । क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन मधुमास इव नवपल्लवेन नवपल्लव इव कुसुमेन कुसुम इव मधुकरेण मधुकर इव मदेन नवयौवनेन पदम् ।

अथ विजृम्भमाणनवनलिनवनेष्वकठोरचूतकलिकाकलापकृतकामुकोत्कलिकेषु, कोमलमलयमारुतावतारतरङ्गितानङ्गध्वजांशुकेषु, मदकलितकामिनीगण्डूषसीधुसेकपुलकितबकुलेषु, मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु, अशोकतरुताडनारणितरमणीमणिनूपुरझङ्कारसहस्रमुखरेषु विकसन्मुकुलपरिमलपुञ्जितालिजालमञ्जुसिञ्जितसुभगसहकारेषु, अविरलकुसुमधूलिवालुकापुलिनधवलितधरातलेषु, मधुमदविडम्बितमधुकरकदम्बकसंवाह्यमानलतादोलेषु, उत्फुल्लपल्लवलवलीलीयमानमत्तकोकिलोल्लासितमधुसीकरोद्दामदुर्दिनेषु,

रमणीयम् । **अथेति**–अथ मधुमासदिवसेषु एकदाम्बया सहेदमच्छोदं सरः स्नातुमभ्यागममित्यन्वयः । अथ मधुमासदिवसान्विशिनष्टि–०नलिनवनानि कमलखण्डानि । अकठोराः कोमला याश्चूतकालिकाः सहकारकोरकास्तासां कलापेन कृता जनिता कामुकानां कामिजनानामुत्कलिकोत्कण्ठा येषु । चूताङ्कुरस्य मदनबाणान्यतमत्वात्कामोद्दीपकत्वम् । तदुक्तम्–अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ इति । आह च कालिदासः–'अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ।' इति । 'नीते समाप्तिं नवचूतबाणे' इति च । कोमलो मन्दसंचारी आह्लादकारी वा यो मलयमारुतस्तस्यावतारेणागमनेन तरङ्गितान्यनङ्गध्वजांशुकानि येषु । वसन्ते मदनमहोत्सवे हि प्रतिगृहं कामिनोनङ्गध्वजारोपणं कुर्वन्तीति प्रसिद्धम् । मदेन कलिता व्याप्ता या कामिन्यस्तासां गण्डूषसीधुमुखचुलिकीकृत आसवः तस्य सेकेन पुलकिता उत्कलिका बकुलाः केसरवृक्षा येषु । तदुक्तम्–'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरबकः कुरुते विकासमालोडितास्तिलक उत्कलिको विभाति ।' इति । स्त्रीणां स्पर्शात्प्रियंगुर्विकसति बकुलः सीधुगण्डूषसेकात्–इत्यादि पद्यं ९९ पृष्ठे द्रष्टव्यम् । मधुकरकुलमेव कलङ्कः श्यामिका तेन कालीकृताः श्यामीकृताः कालेयकानां जायकानां कालीयचन्दनानां वा कुसुमकुड्मला येषु । अशोकतरुताडनेषु विकासार्थं पादाहतिषु रणितानि यानि मणिनूपुराणि इ० । **विकसदिति**–उन्मिषत्कुड्मलामोदेनैकत्रमिलितं यदलिजालं तस्य मञ्जुसिञ्जितेन मधुरगुञ्जारवेण सुभगा मनोहराः सहकारा येषु । अविरला निबिडा या कुसुमधूलिः पुष्पपरागः सैव धवलत्वसाम्याद्वालुकापुलिनं तेन धवलितं धरातलं येषु । **मधिवति**–मधुमदेन पुष्पासवमदेन विडम्बिता विह्वलीकृता ये मधुकरास्तेषां कदम्बकेन समूहेन संवाह्यमाना इतस्ततश्चालिता लता एव दोला येषु । उत्फुल्लपल्लवा उद्गतकिसलया या लवल्यस्तासु लीयमाना ये मत्तकोकिलास्तैरुल्लासिता ऊर्ध्वं विप्रकीर्णा ये मधुसीकराः पुष्परसकणास्तैरुद्दामात्युत्कटं दुर्दिनं येषु ।

१ कायासम. २ अतीतवती. ३ अनेक०. ४ काम्युत्क. ५ रमणीय. ६ असकृन्मधु. ७ वल्ली. ८ उद्गम.

प्रोषितजनजायाजीवोपहारहृष्टमन्मथास्फालितचापरवभयस्फुटितपथिकहृदयरुधिरा-र्द्रमार्गेषु, अविरतपतत्कुसुमशरपतत्रिपत्रसूत्कारबधिरीकृतदिङ्मुखेषु, दिवापि प्रवृत्तान्तर्मदनरागान्धाभिसारिकासार्थसंकुलेषु, उद्वेलरतिरससागरपूरप्लावितेषु सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेषु एकदाहमम्बया सह मधुमासविस्तारितशोभं प्रोत्फुल्लनवनलिनकुमुदकुवलयकह्लारमिदमच्छोदं सरः स्नातुमभ्यागमम्। अत्र च स्नानार्थमागतया भगवत्या पार्वत्या तटशिलातलेषु विलिखितानि सभृङ्गिरिटीनि पांशुनिमग्नकृशपदमण्डलानुमितमुनिजनप्रणामप्रदक्षिणानि त्र्यम्बकप्रतिबिम्बकानि वन्दमाना, भ्रमरभरभुग्नगर्भकेसरजर्जरकुसुमोपहाररम्योयं लतामण्डपः, परभृतनखकोटिपाटितकुड्मलनालविवरविगलितमधुनिकरधारः सुपुष्पितोयं सहकारतरुः, उन्मदमयूरकुलकलक-

प्रोषिताः प्रवासं गता ये जनास्तेषां जायानां जीवानां प्राणानामुपहारैरुपहरणैर्हृष्टो मुदितो यो मन्मथस्तेनास्फालितः परामृष्टो यश्चापस्तस्य रवाद्भयं तेन स्फुटितानि विदीर्णानि यानि पथिकानां पान्थजनानां हृदयानि तेषां रुधिरेणार्द्राः क्लिन्ना मार्गा येषु। वसन्तागमे हि प्रोषितभर्तृकाः कामिन्यो मदनाभिभूताः प्राणांस्त्यजन्ति। यथा माघे—'कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः। मरणमप्यपराः प्रतिपेदिरे (६०१९)' इति। पथिकाश्च कामिनीविरहातुरा विशीर्णहृदया भवन्तीति कविवर्णनम्। उक्तं च 'समवलोक्य विलासवनस्थलीं न पथिकैः पथि कैः पतितं भुवि। मलयजद्रुमसौरभमेदुरोदरसमीरसमीरितवल्लरीम्' ॥ इत्या० ॥ अविरतं पतन्तो ये कुसुमशरपतत्रिणो मदनमार्गणास्तेषां पत्राणां पक्षाणां सूत्कारैः फूत्कारैर्बधिरीकृतानि दिङ्मुखानि येषु। 'पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः।' इति मेदिनी। अविरतं निरन्तरं पतन्त उपविशन्त इत्यर्थः। कुसुमशरेषु पुष्पकाण्डेषु। 'शरः काण्डतेजनयोः' इत्यनेकार्थः ॥ ये पतत्रयस्तेषां पत्रसूत्कारेण पक्षाव्यक्तशब्देन बधिरीकृतमेडीकृतं दिङ्मुखं येषु'। इति तु भानु०। प्रवृत्तो विजृम्भितोन्तर्हृदये यो मदनरागस्तेनान्धा विवेकज्ञानशून्या या अभिसारिकास्तासां सार्थेन समूहेन संकुलेषु संकीर्णेषु। अभिसारिकालक्षणं वसन्तराजीये 'मदेन मदनेनापि प्रेरिता शिथिलत्रपा। योत्सुकाभिसरेत्कान्तं सा भवेदभिसारिका'। इति। 'अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका' ॥ इति सा० द. कारोपि। उद्गतो वेलामुद्वेलः। मधुमासेन वसन्तेन विस्तारिता गुणाधिक्यं नीता शोभा श्रीर्यस्य। भृङ्गिरिटी शिवगणभेदौ। त्र्यम्बकस्य प्रतिबिम्बकान्यालेख्यानि। भ्रमरभरेण भुग्नाः कुञ्चिता गर्भकेसरा अन्तःकिञ्जल्कास्तैर्जर्जरो यः कुसुमोपहारः पुष्पसमूहस्तेन रम्यः। परभृताः कोकिलास्तेषां नखकोटिभिर्नखराग्रैः पाटितानि यानि कुड्मलनालानि मुकुलकाण्डास्तेषां विवरेभ्यो विगलिता

---

१ आर्द्रीकृत० किंशुकसमाकीर्णेषु, रुधिरार्द्रमार्गेष्विव किंशुकसमाकीर्णमार्गेषु. २ पक्षबधिरीकृत, पत्रफूत्कारबधिरीकृत. ३ मधुसमय. ४ आनन्दकेषु. ५ अभ्यपतम्. ६ पक्ष्मय; भुग्न—भग्न. ७ शाखाभ्रमरनर्तकजर्जर. ८ मधुधारः. ९ सकलमयूर, मयूरकलकल.

लभीतभुजङ्गमुक्ततला शिशिरेयं चन्दन[1]वीथिका, विकचकुसुमपुञ्जपातसूचितवनदेवताप्रेङ्खोलनशोभनेयं लतादोला, बहलकुसुमरजःपटलमग्नकलहंसपदलेखमतिरमणीयमिदं तीरतरुतलम्, इति स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षिप्तहृदया सह सखीजनेन व्यचरम् ।

एक[2]स्मिंश्च प्रदेशे झटिति वनानिले[3]नापनीतं निर्भरविकसितेपि काननेऽभिभूतान्यकुसुमपरिमलं विसर्पन्तमतिसुरभितयानुलिम्पन्तमिव तर्पयन्तमिव पूरयन्तमिव घ्राणेन्द्रियमहमहमिकया मधुकरकुलैरनुबध्यमानमनाघ्रातपूर्वममानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् । कुतोयमित्युपारूढकुतूहला चाहं मुकुलितलोचना तेन कुसुमगन्धेन मधुकरीवाकृष्यमाणा कौतुकतरलाभ्यधिकतरोपजातमणिनूपुरझङ्काराकृष्टसरःकलहंसानि कतिचित्पदानि गत्वा हर[4]हुताशनेन्धनीकृतमदनशोकविधुरं वसन्तमिव तपस्यन्तम्, अखिलमण्डलप्राप्त्यर्थमीशानशिरःशशाङ्कमिव धृतव्रतम्, अयुग्मलोचनं वशीकर्तुकामं काममिव सनियमम्, अतितेजस्वितया प्रचलत्[5]तडिल्लतापञ्जरमध्यगतमिव ग्रीष्मदिवसदिवस[6]करमण्डलोदरप्रविष्टमिव ज्वलनज्वालाकलापमध्यस्थितमिव विभाव्यमानम्, उन्मिषन्त्या बहुलबहुलया दीपिकालोकपिङ्गलया देहप्रभया कपिलीकृतकाननं कनकमयमिव तं प्रदेशं कुर्वाणं रोचनारसलुलितप्रतिसरसमानसुकुमार[7]-

मधुनिकरधारा रससमूहततिर्यस्मिन् । विकचानि कुसुमानि तेषां पुञ्जस्य पातेन सूचितं वनदेवतानां प्रेङ्खोलनमान्दोलनं तेन शोभना मनोज्ञा । बहलं यत्कुसुमरजःपटलं तस्मिन्मग्ना कलहंसपदलेखा यस्मिन् । स्निग्धो मधुरो मनोहरतरोऽतिशयेन चित्ताकर्षी य उद्देशः प्रदेशस्तस्य दर्शनलोभेनाक्षिप्तं बलवद् गृहीतं हृदयं यस्याः । अहमहमिकयाहंपूर्विकया । **कुत इति**—कुतोऽयं गन्ध इत्युपारूढकुतूहलाहं स्नानार्थमागतं मुनिकुमारकमपश्यमित्यन्वयः । मुकुलितलोचनाऽर्धनिमीलिताक्षी । कौतुकेन तरलानि कम्प्राण्यत एवाधिकतरोपजातमणिनूपुरझङ्कारेणाकृष्टसरःकलहंसानि । अथ कुमारकविशेषणानि—**हरेति** न इन्धनमनिन्धनं, अनिन्धनमिन्धनं सम्पद्यमानः कृतः इन्धनीकृतः । हरेण हुताशनस्य तृतीयनेत्राग्नेरिन्धनीकृतः इ. । वसन्तमिव तस्य तत्सखत्वात् । ' इयं च सुरभिगन्धसाम्यादुत्प्रेक्षा इति भानु० । अखिलमण्डलं षोडशकलात्मकम् । शशिकलासाम्येन तस्य स्निग्धमधुरत्वं सूचितम् । रूपातिशयसाम्येनाह । **अयुग्मेति**—अयुग्मलोचनं त्रिनेत्रं शिवम् । सनियमं व्रतं चरन्तम् । **ग्रीष्मेति**—ग्रीष्मादिवसेषु यद् दिवसकरमण्डलं इ० । उन्मिषन्त्यास्फुरन्त्या बहुलबहुलया अत्र वीप्सयोत्तरोत्तरं स्फारीभावः सूचितः । कपिलीकृतं पिशङ्गीकृतं काननं येन अत एव कनकेति । रोचनारसेन गोरोचनाद्रवेण लुलितो भावितो यः प्रतिसरो हस्तसूत्रं तत्समाना सुकुमारा पिङ्गला च जटा यस्य ।

१ चन्दनवनवीथिका २ अथैकस्मिन्. ३ निलोप० नूपुरमणि. ४ हरनयन. ५ प्रचलितताडिल्लतापञ्जरगतम्. ६ दिनकर. ७ ०मारजटम्.

पिङ्गलजटं, पुण्यपताकायमानया सरस्वतीसमागमोत्कण्ठाकृतचन्दनलेखयेव भस्मललाटिकया बालपुलिनलेखयेव गङ्गाप्रवाहमुद्भा[1]समानम्, अनेकशापभ्रुकुटिभवनतोरणेन भ्रूलताद्वयेन विराजितम्, अत्यायततया लोचनमयीं मालामिव ग्रथितामुद्वहन्तं, सर्वहरिणैरिव दत्तलोचनशोभासंविभागम्, आयतोत्तुङ्गघ्राणवंशम्, अप्राप्तहृदयप्रवेशेन नवयौवनरागेणेव सर्वात्मना पाटलीकृताधररुचकम्, अनुद्भि[2]न्नश्मश्रुत्वादनासादितमधुकरावलीवलयपरिक्षेपविलासमिव बालकमलमाननं दधानम्, अनङ्गकार्मुकगुणेनेव कुण्डलीकृतेन तपस्तडागकमलिनीमृणालेनेव यज्ञोपवीतेनालंकृतम्, एकेन सनालबकुलफलाकारं कमण्डलुमपरेण मकरकेतुविनाशशोकरुदितायाः रतेरिव बाष्पजलबिन्दुभिरारचितां स्फटिकाक्ष[3]मालिकां करेण कलयन्तम्, अनेकविद्यापगासंगमावर्तनिभया नाभिमुद्रयोपशोभमानम्, अन्तर्ज्ञाननिराकृतस्य मोहान्धकारस्या[4]पयानपदवीमिवाञ्जनरजोलेखाश्यामलां रोमराजिमुदरेण तनी[5]यसीं बिभ्राणम् आत्मतेजसा विजित्य सवितारमागृ[6]हीतेन परिवेषमण्डलेनेव मौञ्जमेखलागुणेन परि-

---

पुण्यस्य पताका वैजयन्ती तद्वदाचरन्त्या । कर्तुः क्यङ् सलोपश्च इत्याचारार्थे क्यङ् । **सरस्वतीति**–सरस्वत्याः समागमाय या उत्कण्ठा तया । तज्जनिततापशान्त्यर्थमिति यावत् । कृता या चन्दनलेखा तयेव । भस्मललाटिकया विभूतिपुण्ड्रकेण । अनेका याः शापभ्रुकुटयस्तत्तच्छापावसरे भ्रूविकारास्तासां भवनं गृहं तस्य तोरणेन बहिर्द्वारोपरिभागेन धनुराकृतिरूपेणेव स्थितेन । दत्तो लोचनशोभायाः संविभागो यस्मै । घ्राणं वंश इव घ्राणवंशः । पाटलीकृतं रक्तीकृतमधरो रुचकं बीजपूर इवाधररुचकं यस्य । 'रुचकं बीजपूरे स्यात्' इति मेदिनी । **अनुद्भिन्नेति**–अनुद्भिन्नानि श्मश्रूणि मुखलोमानि यस्य तस्य भावस्तस्मादनासादितोऽप्राप्तो मधुकरावली एव वलयं तस्य परिक्षेपरूपो विलासो येन तत् । तप एव तडागः कासारस्तस्य या कमलिनी तस्या मृणालेन । एकेन करेण सनालं सवृन्तं यद्बकुलफलं तस्येवाकारो यस्य तम् । कस्योदकस्य मण्डं लुनातीति कमण्डलुर्जलकरङ्कः । अत्र मनुः–वैणवीं धारयेत् । [ब्रह्मचारी] यष्टिं सोदकश्च कमण्डलुम्' । इति । कलयन्तं धारयन्तम् । अनेकाश्चतस्रश्चतुर्दश वा या विद्यास्ता एवापगाः सरितस्तासां संगमेनैकत्रसंपातेन य आवर्तोऽम्भसां भ्रमस्तन्निभया तत्सदृश्या । अन्तर्ज्ञानेन तत्त्वज्ञानेन निराकृतस्य मोहोऽज्ञानमेवान्धकारस्तस्यापयानपदवीं बहिर्निर्गममार्गम् । परिवेष उपसूर्यकमण्डलम् । तस्मिन्सूर्यस्येव स्वत्वात्तं विजित्य गृहीतेनेवेत्युत्प्रेक्षा । **मौञ्जीति**–अत्र मनुः–'मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।'

---

१ उद्भाव्यमानम्. २ अनुद्भूत, ०श्मश्रुराजित्वात्. ३ स्फटिकग्रलिकाक्ष. ४ अपनयन. ५ तनीयसा तनीयसीम्. ६ परिगृहीतेन.

क्षिप्तजघनभागम्, अभ्रगङ्गास्रोतोजलप्रक्षालितेन जरच्चकोरलोचनपुटपाटल-कान्तिना मन्दारवल्कलेनोपपादिताम्बरप्रयोजनम्, अलंकारमिव ब्रह्मचर्यस्य, यौवनमिव धर्मस्य, विलासमिव सरस्वत्याः, स्वयंवरपतिमिव सर्वविद्यानां, संकेतस्थानमिव सर्वश्रु[1]तीनां, निदाघकालमिव साषाढं, हिमसमयकाननमिव स्फुटितप्रियङ्गुमञ्जरीगौरं, मधुमासमिव कुसुमधवलतिलकभूतिभूषितमुखम्, आत्मानुरूपेण सवयसापरेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणानुगतम्, अतिमनोहरं स्नानार्थमागतं मुनिकुमारकमपश्यम् ।

तेन च कर्णावतंसीकृतां वसन्तदर्शनानन्दितायाः स्मितप्रभामिव वनश्रियः, मलयमारुतागमनार्थ[2]लाजाञ्जलिमिव मधुमासस्य, यौवनलीलामिव कुसुमलक्ष्म्याः, सुरतपरिश्रमस्वेदजकणजालकावलीमिव रतेः, ध्वजचिह्नचामरपिच्छिकामिव मनोभवगजस्य, मधुकरकामुकाभिसारिकां, कृत्तिकातारास्तबकानुकारिणीम्, अमृतबिन्दुनिस्यन्दिनीम्, अदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम् । अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमल इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम् । अहो रूपातिशयनिष्पादनोपकरणकोष[3]स्याक्षीणता विधातुः । यत्त्रिभुवनाद्भुतरूपसंभारं भगवन्तं कुसुमायु-

इति । मन्दारः कल्पवृक्षः । स्वयंवरेति—अनेनास्य स्वाभाविकी सर्वविद्योपस्थितिः सूचिता । आषाढः पालाशदण्डः । पक्षे तन्नामा मासः । स्फुटितेति—स्फुटितोद्भिन्ना या प्रियङ्गुमञ्जरी तद्वद्गौरं तया गौरं च । कुसुमवद्धवला या तिलकभूतिः तयेत्या० । पक्षे कुसुमधवला ये तिलकवृक्षाः । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । तेषां भूत्या समृद्ध्या भूषितमुखम् । वसन्तसमय एव तिलकानां पुष्पोद्गमात् । समानं वयो यस्य तेन । तेन च कर्णावतंसीकृतां श्रवणशेखरतां नीतां कुसुममञ्जरीमद्राक्षम् । तामेव वर्णयति । ध्वजेति—ध्वजस्य वैजयन्त्याश्चिह्नभूता चामरपिच्छिका तामिव । मनोभव एव गजस्तस्य । तस्या भ्रमरैरनुबध्यमानत्वादाह—मधुकरा एव कामुकास्तानभिसारयते असावभिसारिका ताम् । कृत्तिका षट्तारात्मकं नक्षत्रम् । तस्यास्तारास्तासां स्तबकस्तदनुकारिणीम् । कृत्तिकानां क्षुरतुल्याकारत्वं केचिदाहुः । अन्ये तु शकटाकारत्वं वर्णयन्ति । 'ननु' अवधारणे । 'ननु प्रश्नेप्यनुनयेनुज्ञाने व्यवधारणे ।' इति विश्वः । रूपेति—उपकरणकोषस्य सामग्रीसमूहस्य । अक्षीणताऽक्षयत्वम् । 'कौशलस्य' इति पाठे रूपनिष्पादने उपकरणं सहायभूतं कौशलं तस्य । रूपसंभारो रूपसम्पत् । तदाकारात्

१ सर्वश्रुतानाम्. २ आगमनार्थम्. ३ कौशलस्य.

धमुत्पाद्य तदाकारातिरिक्तरू[१]राशिरयमपरो मुनि[२]मायामयो मकरकेतुरुत्पादितः । मन्ये च सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता लक्ष्मीलीलावासभवनानि कमलानि सृजता [३]प्रजापतिना प्रथममेतदाननाकारकरणकौशलाभ्यास एव कृतः । अन्यथा किमिव हि सदृशवस्तुविरचनायां कारणम् । अलीकं चेदं यथा किल सकलाः कलाः कलावतो बहुलपक्षे क्षीयमाणस्य सुषुम्णनाम्ना रश्मिना रविरापिबतीति । ताः खल्वस्य गभस्तयः समस्ता वपुरिदमाविशन्तीति । कुतोऽन्यथा रूपापहारिणि क्लेशबहुले तपसि वर्तमानस्येदं लावण्यम् । इति विचिन्तयन्तीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः कुसुमस[४]मयमद इव मधुकरीं परवशामकरोत् ।

उच्छ्वसितैः सह विस्मृतनिमेषेण किंचिदामुकुलितपक्ष्मणा जिह्मिततरलतर-तारासारोदरेण दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव किमपि याचमानेव त्वदायत्तास्मीति वदन्तीवाभिमुखं हृदयमर्पयन्तीव सर्वात्मनानुप्रविशन्तीव तन्मयतामिव गन्तुमीहमाना मनोभवाभिभूतां त्रायस्वेति शरणमिवोपयान्ती देहि हृदयेवकाशमित्यर्थितामिव दर्शयन्ती हा हा किमिदमसांप्रतमतिह्रेपण-मकुलकुमारीजनोचितमिदं मया प्रस्तुतमिति जानानाप्यप्रभवन्ती करणानां

---

कुसुमायुधाकारादतिरिक्तमधिकं रूपं तस्य राशिः । मुनिमायामयो मुनिछद्मवेषधारी । **मन्य इति**-एतस्याननस्याकारकरणे कौशलं तस्याभ्यासः तद वाप्त्यर्थं पुनः पुनः करणम् । अलीकं मिथ्यावादः । कलावतश्चन्द्रस्य । बहुलपक्षे कृष्णपक्षे । सुषुम्णो रश्मिविशेषः । तदुक्तं विष्णुपुराणे-सूर्यरश्मिः सुषुम्नो (म्णो) यस्तर्पितस्तेन चन्द्रमाः । कृष्णपक्षेऽमरैः शश्वत्पीयते वै सुधा-मयः ॥ इति । सुषुम्णा-म्ना इत्यपि क्वचित् । तर्हि किं सत्यमित्याकाङ्क्षायामाह ता इति । अवि-चारितः सम्यगनालोचितो गुणदोषयोः विशेषस्तारतम्यभावो येन । पक्षे पातः पक्षपातः । रूपमेवैकं मुख्यं तस्मिन् पक्षपातो यस्य । एतादृशः कुसुमायुधो मां परवशामकरोत् । **उच्छ्वसितैरिति**-निरुद्धनिश्वासा निमेषशून्येन चक्षुषात्यादरेण विलोकयन्तीत्यर्थः । **जिह्मितेति**-जिह्मिता वक्रा तरलतरातिचञ्चला या ताराऽक्षिपुत्तलिका तया सारं श्वेतकृष्णमिश्रभावात्कर्बुरमुदरं यस्य तेन । सस्पृहं साभिलाषं पिबन्त्यत्यादरेण पश्यन्ती । असाम्प्रतमयुक्तम् । युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । **अकुलेति**-कुले स्वकुलाचारे स्थिता कुमारी कुलकुमारी तस्या उचितं न

---

१ रूपातिशयराशिः. २ मुनिर्माया. ३ ब्रह्मणेतद्दान. ४ कुसुमासवमदः.

स्तम्भितेव लिखितेवोत्कीर्णेव संयतेव मूर्छितेव केनापि विधृतेव निष्पन्दसकलावयवा तत्कालाविर्भूतेनावष्टम्भेनाकथिताशिक्षितेनानाख्येयेन स्वसंवेद्येन केवलं न विभाव्यते किं तद्रूपसंपदा किं मनसा किं मनसिजेन किमभिनवयौवनेन किमनुरागेणेवोपदिश्यमाना किमन्येनैव केनापि प्रकारेणाहमपि न जानामि कथं कथमिति तमतिचिरं व्यलोकयम् । उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः पुरस्तादाकृष्यमाणेव हृदयेन पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना कथमपि मुक्तप्रयत्नमप्यात्मानमधारयम् । अनन्तरं च मेऽन्तर्मदनावकाशमिव दातुमाहितसंताना निरीयुः श्वासमरुतः । साभिलाषं हृदयमाख्यातुकाममिव स्फुरितमुखमभूत्कुचयुगलम् । स्वेद[3]सलिललवलेखाक्षालितेवागलल्लज्जा । मकरध्वजनिशितशरनिकरनिपातत्रस्तेवाकम्पत गात्रयष्टिः । तद्रूपातिशयं द्रष्टुमिव कुतूहलादालिङ्गनलालसेभ्योऽङ्गेभ्यो निरगाद्रोमाञ्चजालकम् । अशोषत स्वेदाम्भसा धौतश्चरणयुगलादिव हृदयमविशद्रागः ।

---

भवतीति तथा । प्रस्तुतमारब्धम् । करणानामिन्द्रियाणां । स्तम्भिता जडीकृता । निष्पन्दा निश्चेष्टाः सकला अवयवा यस्याः सा । अवष्टम्भेन निश्चेष्टताप्रयोजकेन सात्त्विकविकारविशेषेण । 'स्तम्भः प्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता ॥' इति दशरूपकम् । अवष्टम्भं विशेषयति अकथितेति—स्वयमेवोपस्थितेनेत्यर्थः । अनाख्येयेनानिर्वचनीयेन । स्वसंवेद्येन स्वेनैव ज्ञातुं शक्येन । स्वमात्रसाक्षिकेणेति वा । पुनश्च कथंभूता । उपदिश्यमाना । केन न विभाव्यते निश्चीयते किं तद्रूपसम्पदा इ० । **कथं कथमिति**—कथं तमतिचिरं व्यलोकयमिति न जानामि किंतु तं व्यलोकयमिति सत्यमिति भावः । अथ तस्यास्तदर्थं पर्युत्सुकत्वमाह उत्क्षिप्येति । मुक्तप्रयत्नं मुक्तः प्रयत्नः शरीरावयवव्यापाररूपो येन तम् । अधारयम्—अनेन धृतिर्नाम व्यभिचारिभाव उक्तः । अवकाशं वसतिस्थानम् । कुचयुगलं कर्तृ । साभिलाषं हृदयमाख्यातुमिच्छदिव । अनेनाभिलाष उक्तः । **स्वेदेति** अनेन स्वेदो नाम सात्त्विकभाव उक्तः । अगलल्लज्जा—अनेन उन्मादो ध्वनितः । अथ वेपथुं नाम सात्त्विकभावान्तरमाह—मकरध्वजेति । रोमाञ्चमाह तद्रूपेति । लालसेभ्यः—अनेनौत्सुक्यमुक्तम् । अथ शृङ्गारस्य स्थायिभावं रत्याख्यं प्रदर्शयन्नाह -**अशोषत इति** । अत्र स्थायिनोऽभिलाषादयोऽनुभावाः । श्वासस्फुरणादयो विभावाश्चेति ज्ञेयम् । स्थायिलक्षणमाह दशरूपककृत्—विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान्स स्थायी लवणाकरः ॥ इति । 'विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।'

---

१ कान्त्या. २ तन्मदनेन, अन्तर्मदनेन. ३ स्वेदलव.

आसीच्च मम मनसि शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन । एवं च नामातिमूढं हृदयमङ्गनाजनस्य यदनुरागविषययोग्यतामपि विचारयितुं नालम् । क्वेदमतिभास्वरं धाम तेजसां तपसां च । क्व च प्राकृतजनाभिनन्दितानि मन्मथपरिस्पन्दितानि । नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा । चित्रं चेदं यदहमेवमवगच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्तुम् । अन्या अपि कन्यकास्त्रपामपहाय स्वयमुपयाताः पतीन् । अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्यः । न पुनरहमेका यथा । कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्वतन्त्रतामुपैत्यन्तःकरणम् । कालो हि गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा । यावदेव सचेतनास्मि यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्तावदेवास्मात्प्रदेशादपसर्पणं श्रेयः । कदाचिदनभिमतस्मरविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति माम् । अदूरकोपा हि मुनिजनप्रकृतिः । इत्यवधार्यापसर्पणाभिलाषिण्यहमभवम् । अशेषजनपूजनीया चेयं जातिरिति कृत्वा तद्वदनाकृष्टदृष्टिप्रसरमचलितपक्ष्ममालमदृष्टभूतलमीषदुल्लसितकर्णपल्लवोन्मुक्तकपोलमण्डलमालोलालकलतालसत्कुसुमावतंसमंसदेशदोलायितमणिकुण्डलमस्मै प्रणाममकरवम् ।

---

इति काव्यप्रकाशः । **आसीदिति**-दूरीकृतः सुरतव्यतिकरो विषयसेवनवृत्तान्तो येन । निक्षिपतातएव अनार्येण असभ्येन धृष्टेनेत्यर्थः । 'नाम' इति प्राकाश्ये कोमलामन्त्रणे वा । अतिमूढमत्यन्तं विचाराक्षमम् । क्वशब्दोऽत्यन्तासङ्गतिवाचकः । **प्राकृतेति**-नीचजनादृतानि । ०परिस्पन्दितानि चेष्टाः । विडम्ब्यमानां विह्वलीक्रियमाणाम् । उपसंहर्तुं निग्रहीतुम् । अस्वतन्त्रतां परवशताम् । कालः परिचयावधिर्विवेककालो वा । गुणा आभिजात्यविद्यासौन्दर्यादयः । अनभिमतो यः स्मरविकारः कामविकृतिस्तस्य दर्शनेन कुपितः । शापाभिज्ञां शापस्याभिज्ञामाद्यज्ञानविषयाम् । 'अभिज्ञा ज्ञानमाद्यं स्यादिति कोषः' । इयं जातिः मुनिजातिः । तद्वदनादकृष्टोऽनिवर्तितो दृष्टिप्रसरो दृग्व्यापारो यस्मिन् । यथास्यात्तथेति वा । उल्लसितैरूर्ध्वं क्षिप्तैः कर्णपल्लवैरुन्मुक्तं कपोलमण्डलं यस्मिन्, यस्मिन्कर्मणि वा । आलोलास्तरलाः केशलताः कबरीभारस्तासु लसञ्शोभायमानः कुसुमावतंसो यस्मिन् ।

---

१ परस्पन्दितानि. २ विहाय. ३ ईषदिति नास्ति पुस्तकान्तरे.

अथ कृतप्रणामायां मयि दुर्लङ्घ्यशासनतया भगवतो मनोभुवः, मदजननतया च मधुमासस्य, अतिरमणीयतया च तस्य प्रदेशस्य, अविनयबहुलतया चाभिनवयौवनस्य, चञ्चलप्रकृतितया चेन्द्रियाणां, दुर्निवारतया च विषयाभिलाषाणां, चपलतया च मनोवृत्तेः, तथा भवितव्यतया च तस्य तस्य वस्तुनः, किं बहुना मम मन्दभाग्यदौरात्म्यादस्य चेदृशस्य क्लेशस्य विहितत्वात्, तमपि मद्विकारदर्शमापहृतधैर्यं प्रदीपमिव पवनस्तरलतामनयदनङ्गः । तदा तस्याप्यभिनवागतं मदनं प्रत्युद्गच्छन्निव रोमोद्गमः प्रादुरभवत् । मत्सकाशमभिप्रास्थितस्य मनसो मार्गमिवोपदिशद्भिः पुरः प्रवृत्तं श्वासैः । वेपथुगृहीता[1] व्रतभङ्गभीतेवाकम्पत[2] करतलगताक्षमाला । द्वितीयेव कर्णावसक्तकुसुममञ्जरी कपोलतलासङ्गिनी समदृश्यत स्वेदसलिलसीकरजालिका । मद्दर्शनप्रीतिविस्तारितस्य चोत्तानतारकस्य पुण्डरीकमयमिव तमुद्देशमुपदर्शयतो लोचनयुगलस्य विसर्पिभिरंशुसंतानैर्यदृच्छयाच्छोदसलिलमपहाय विकचकुवलयवनैरिव गगनतलसमुत्पतितैररुध्यन्त दश दिशः । तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा तत्क्षणमहमैवर्णनयोग्यां[3] कामप्यवस्थामन्वभवम् । इदं च मनस्यकरवम् । अनेकसुरतसमाग-

---

अथेति—अथ कृतप्रणामायां मय्यनङ्गो मद्विकारदर्शनेनापहृतं धैर्यं यस्यैवंभूतं तमपि तरलतां चञ्चलतामनयत् इत्यन्वयः । धैर्यं यथा—चापलेनानुपहता सर्वार्थेष्वविकत्थना । स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते । दुर्लङ्घ्येति—अनुरूपभावो मालतीमाधवे— 'भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ।' इति । मदजननतया मदोत्पादनसामर्थ्यात् । अविनयबहुलतया दुश्चेष्टितप्रचुरतया । तस्य तस्य वस्तुनस्तत्तदर्थस्य । मन्दभाग्यस्य दौरात्म्यात्कुटिलत्वात् । विहितत्वात्-भवितव्यतया निश्चितत्वात् । अधुना तस्यापि सात्त्विकभावाविर्भावं वर्णयन्नाह तदेति—प्रत्युद्गच्छन् संमानयितुमभिमुखं व्रजन । वेपथुः कम्पः । व्रतभङ्गः—कामेन विकृतचित्तत्वात् । मद्दर्शनात्प्रीतिर्हर्षस्तेन विस्तारितस्य । उत्तानोर्ध्वं विस्तृता तारका यस्य । अंशुसंतानैः किरणसमूहैः । तस्मिन्प्रदेशे लोचनधवलभागस्यैव प्राधान्येन स्फुरणात्पुण्डरीकमयमिति । विदूरे त्वक्षिगोलस्य चाञ्चल्याद्विद्योतनात्कुवलयवनैरिति । विकृत्या मदनविकारेण । अवर्णनयोग्यां वर्णयितुमशक्याम् । अनेकेति-अनेका याः सुरतसमागमार्थं लास्यलीला अन्तर्गतभावावबोध

1 वेपथुना. 2 अकम्पत गात्रयष्टिः ०माला च. 3 तारानाथस्तु 'अश्मवर्णनयोग्याम्' इति पठित्वा 'अश्मनः प्रस्तरस्येव वर्णनयोग्यां निश्चेष्टताम्' इति व्याचष्ट ।

मलास्यलीलोपदेशोपाध्यायो मकरकेतुरेव विलासानुपदिशति । अन्यथा विविधरसासङ्गललितेष्वीदृशेषु व्यतिकरेष्वप्रविष्टबुद्धेरस्य जनस्य कुत इयमनभ्यस्ताकृती रतिरसनिस्यन्दमिव क्षरन्त्यमृतमिव वर्षन्ती मदमुकुलितेव खेदालसेव निद्राजडेवानन्दभरमन्थरतरत्तारसंचारिण्यनिभृतभ्रूलतोल्लासिनी दृष्टिः। कुतश्चेदमतिनैपुण्यं यच्चक्षुषैवानक्षरमेवमन्तर्गतो हृदयाभिलाषः कथ्यते।

प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्। भगवन्किमभिधानः कस्य चायं तपोधनैर्युवा। किंनाम्नस्तरोरियमनेनावतंसीकृता कुसुममञ्जरी। जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोयमनाघ्रातपूर्वो गन्ध इति। स तु मामीषद्विहस्याब्रवीत्। बाले किमनेन पृष्टेन प्रयोजनम्। अथ कौतुकमावेदयामि। श्रूयताम्।

अस्ति खलु सकलत्रिभुवनप्रख्यातकीर्तिरत्युदारतपाः सुरासुरसिद्धवृन्दवन्दितचरणयुगलो महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य भगवतः सुरासुरलोकसुन्दरीहृदयानन्दकरमशेषत्रिभुवनसुन्दरमतिशयितनलकूबरं रूपमासीत्। स कदाचिद्देवतार्चनकमलान्युद्धर्तुमैरावतमदजलबिन्दुबद्धचन्द्रकशतखचितजलां हरहसितसितस्रोतसं मन्दाकिनीमवततार। अवतरन्तं तं च तदा कमलवनेषु संततसंनिहिता विकचसहस्रपत्रपुण्डरीकोपविष्टा देवी लक्ष्मीर्ददर्श। तस्यास्तु तमवलोकयन्त्याः प्रेममदमुकुलितेनानन्दबाष्पभरत-

---

क्षेपणादयस्तासामुपदेशस्तत्रोपाध्यायः शिक्षकः। विलासशब्दो व्याख्यातः। विविधा अनेकप्रकारा रस्यन्ते आस्वाद्यन्त इति रसा विषयास्वादास्तेषामासङ्गेनाश्लेषेण ललितेषु रमणीयेषु। अनभ्यस्ताऽशिक्षिता आकृतिः शृङ्गारानुकूलाकारो यया तादृशी सती। आनन्दभरेण प्रमोदातिशयेन मन्थरं स्तिमितं यथा तथा तरन्ती तारा यस्मिंस्तादृशः संचारो विद्यते यस्याः। अनिभृतः प्रकटो भ्रूलताया उल्लासो विभ्रमो विद्यते यस्याः। अनक्षरमुच्चारणमन्तरेण। प्राप्तप्रसरा लब्धावकाशा। असाधारणमनन्यसामान्यं सौरभं यस्य। अथ कौतुकं—कुतूहलं चेत्। ०सिद्धानां वृन्दं समूहस्तेन इ०। अशेषं च तत् त्रिभुवनं तस्मिन् सुन्दरम्। अतिशयितो नलकूबरः कुबेरपुत्रो येन। अतुलरूपान्नलकूबरादप्युत्कृष्टगुणमित्यर्थः। **ऐरावतेति**—० बिन्दुभिर्बद्धानि चन्द्रकशतानि स्निग्धद्रव्यपाते झटित्युन्मिषद्वर्तुलानि चन्द्रकाणि तेषां शतानि तैः खचितं व्याप्तं जलं यस्याः। मन्दाकिनीं वियद्गङ्गाम्। विकचानि प्रफुल्लानि सहस्रं पत्राणि यस्य तादृशं पुण्डरीकं तस्मिन्नुपविष्टा। प्रेम-

---

१ नरलतर. २ ०लतालासिनी. ३ लब्ध. ४ तपोधनस्य युवा. ५ तया. ६ मौलिलालित. ७ सुरलोक. ८ ०हसिततोयाम्.

रङ्गतरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भमन्थरमुखविन्यस्तहस्तपल्लवाया मन्मथविकृतं मन आसीत्। आलोकनमात्रेण च समासादितसुरतसमागमसुखायास्तस्मिन्नेवासनीकृते पुण्डरीके कृतार्थतासीत्। तस्माच्च कुमारः समुदपादि। ततस्तमुत्सङ्गेनादाय सा भगवन्गृहाण तवायमात्मज इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनोचिताः सर्वाः क्रियाः कृत्वा तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इति नाम चक्रे। प्रतिपादितव्रतं च तमागृहीतसकलविद्याकलापमकार्षीत्। सोयम्।

इयं च सुरासुरैर्मथ्यमानात्क्षीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्गमासादितवती तदपि कथयामि। अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्निर्गत्य साक्षान्मधुमासलक्ष्मीदत्तललितहस्तावलम्बया बकुलमालिकामेखलया कुसुमपल्लवग्रथिताभिराजानुलम्बिनीभिः कण्ठमालिकाभिर्निरन्तराच्छादितविग्रहया नवचूताङ्कुरकर्णपूरया पुष्पासवपानमत्तया नन्दनवनदेवतया पारिजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः। भगवन्सकलत्रिभुवनदर्शनाभिरामायास्तवाकृतेरस्याः सदृशोयमलंकारः प्रसीद क्रियताम्। इयमवतंसविलासदुर्ललिता समारोप्यतां श्रवणशिखरम्। व्रजतु सफलतां जन्म पारिजातस्य। इत्येवमभिदधानां चायमात्मरूपस्तुतिवादत्रपावनमितावलोचनस्तामनादृत्यैव गन्तुं प्रवृत्तः। मया तु तामनुयान्तीमालोक्य को दोषः सखे क्रियतामस्याः प्रणयपरिग्रह

---

प्रीतिस्तस्य मदेन मुकुलितेन संकुचितेन। आनन्देन यो बाष्पभरो नयनाम्बुसमूहस्तस्य तरङ्गेण तरला तारा यस्य तेन। जृम्भिका जृम्भणं तस्या आरम्भेण मन्थरमलसं यन्मुखं तत्र विन्यस्तो हस्तपल्लवो यया तस्याः। प्रतिपादितव्रतं दत्तब्रह्मचर्यदीक्षं कृतोपनयनमित्यर्थः। व्रतं ब्रह्मचर्यरूपं तस्य विरुद्धम्। **अद्येति**—नन्दनवनसमीपेनानुसरन्नयं नन्दनवनदेवतया साक्षात् निर्गत्य। स्वस्थानादिति शेषः। प्रणम्याभिहित इत्यन्वयः। मधुमासलक्ष्म्या वसन्तश्रिया दत्तो ललितो यो हस्तस्तस्यावलम्बो यस्याः। बकुलमालिका केसरपुष्पस्रग् मेखला रशना यस्याः। भगवन् प्रसीद अस्याः ... तवाकृतेः सदृशोयमलंकारः क्रियताम्। **अवतंसेति**—अवतंसत्वेन धारणरूपो यो विलासो विभ्रमस्तत्र दुर्ललितं यस्याः। आत्मनो रूपस्य स्तुतिवादेन या त्रपा लज्जा तयावनमिते विलोचने येन। अनादृत्य विगणय्य। प्रणयो याच्ञा प्रीतिदानं वा तस्य परिग्रहः स्वीकारः।

---

१ उत्सङ्गे. २ पारिजातकुसुम. ३ सुसदृशः. ४ प्रसादीक्रियताम्. ५ शिखरे.

इत्यभिधाय बलादियमनिच्छतोऽप्यस्य कर्णपूरीकृता । तदेतत्कार्त्स्न्येन योयं या चेयं यथा चास्य श्रवणशिखरं समारूढा तत्सर्वमावेदितम् ।

इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मामवादीत् । अयि कुतूहलिनि किमनेन प्रश्नायासेन । यदि रुचितसुरभिपरिमला गृह्यतामियम् । इत्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय कलैरलिकुलक्वणितैः प्रारब्धरतिसमागमप्रार्थनामिव मदीये श्रवणपुटे तामकरोत् । मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिजातकुसुममवतंसस्थाने पुलकमासीत् । स च मत्कपोलस्पर्शसुखेन तरलीकृताङ्गुलिजालकात्करतलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत् । अथाहं तामसंप्राप्तामेव भूतलमक्षमालां गृहीत्वा सलीलं तद्भुजपाशसंदानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीलां कण्ठाभरणतामनयम् ।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत् । भर्तृदारिके स्नाता देवी प्रत्यासीदति गृहगमनकालः । तत्क्रियतां मज्जनविधिरिति । अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमाङ्कुशपातेनानिच्छया कथं कथमपि समाकृष्यमाणा तन्मुखाल्लावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकजालकलग्नामिव मदनशरशलाकाकीलितामिव सौभाग्यगुणस्यूतामिवातिकृच्छ्रेण दृष्टिमाकृष्य स्नातुमुदचलम् । उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत् ।

सखे पुण्डरीक नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यः कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवंकृतः । क्व ते तद्धैर्यम् क्वासाविन्द्रिय-

कार्त्स्न्येन साकल्येन । कृत्स्नस्य भावः कार्त्स्न्यम् । रुचितेति—रुचितोऽभिलषितः सुरभिपरिमलो यस्याः सा तथा । कलैर्मधुरैर्भ्रमरझङ्कारैः । स्पर्शलोभेन स्पर्शतृष्णया । लाभेन इति साधीयान्पाठो भवेत् । अथेति—सलीलं कण्ठाभरण[illegible]न्वयः । तद्भुजपाशेन संदानितस्य संयतस्य कण्ठस्य ग्रह आलिङ्गनं तत्सुखमिव । "अत्र इवशब्दः सादृश्यार्थः तदुक्तमलंकारशेखरे—'भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये ।'" इति भानु० । दर्शिता अपूर्वहारलतायाः लीलाविभ्रमो यया ताम् । व्यतिकरे वृत्तान्ते । प्रत्यासीदत्यासन्ना भवति विलम्ब्यते वा । कपोलेति—तस्य कपोलयोः ये पुलकास्त एव कण्टकास्तेषां जालं तत्र लग्नाम् । ०कीलितां दृढं निखाताम् । सौभाग्यमेव गुणस्तेन स्यूतां कृतसीवनाम् । क्षुद्रजनैः प्राकृतजनैः क्षुण्ण आचरितः । विक्लवीभवन्तं विह्वलीभवन्तम् । अपूर्वोऽभूतपूर्वः । इन्द्रियोपप्लव इन्द्रियपर्याकुलीभावः ।

१ हृदयम. २ नग्नामिव. ३ क एष.

जयः । क्व तद्वशित्वं चेतसः । क्व सा प्रशान्तिः । क्व तत्कुलक्रमागतं ब्रह्मचर्यम् । क्व सा सर्वविषयनिरुत्सुकता । क्व ते गुरूपदेशाः । क्व तानि श्रुतानि क्व ता वैराग्यबुद्धयः । क्व तदुपभोगविद्वेषित्वम् । क्व सा सुखपराङ्मुखता । क्वासौ तपस्यभिनिवेशः । क्वै भोगानामुपर्यरुचिः । क्व तद्यौवनानुशासनम् । सर्वथा निष्फला प्रज्ञा । निर्गुणो धर्मशास्त्राभ्यासः । निरर्थकः संस्कारः । निरुपकारको गुरूपदेशविवेकः । निष्प्रयोजना प्रबुद्धता । निष्कारणं ज्ञानम् । यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते प्रमादैश्चाभिभूयन्ते । कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । अहो विगतचेतनत्वम् । अपहृता नामेयम् । इदमपि तावदपह्रियमाणमनयानार्यया निवार्यतां हृदयम् ।

इत्येवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवादीत् । सखे कपिञ्जल किं मामन्यथा संभावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम् । इत्यभिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रुकुटिभूषणेन चुम्बनाभिलाषस्फुरिताधरेण मुखेन्दुना मामवदत् । चञ्चले प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गन्तव्यमिति । तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्य मकरध्वजलास्यारम्भलीलापुष्पाञ्जलिमेकावलीं भगवन्गृह्यतामक्षमालेति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ

---

एवं कृतः विह्वलीकृतः । इन्द्रियाणां जयो निरोधः । वशित्वं स्वाधीनत्वम् । सर्वविषयेषु निरुत्सुकताऽभिलाषराहित्यम् । ते प्रसिद्धा गुरूपदेशाः । उपभोगेषु स्रक्चन्दनस्त्र्यादीनां सेवनेषु विद्वेषित्वं तिरस्कारः । भोगानां विषयाणाम् । यौवनस्य तारुण्यस्यानुशासनं विनयनम् । निर्गुणोऽभिमतफलानुत्पादनाद्गुणशून्यः । संस्कारो विनयशिक्षा शास्त्राभ्यासजन्या अन्तःकरणशुद्धिर्वा । गुरूपदेशाद्विवेकः सदसद्विचारक्षमता । प्रबुद्धता बुद्धेः प्रगल्भता पाण्डित्यमित्यर्थः । रागो विषयाभिलाषस्तत्राभिषङ्ग आसक्तिः । प्रमादैः—स्वकर्तव्याच्च्युतिरूपैः । 'प्रमादोऽनवधानता' इत्यमरः । 'अपहृता नामेयम्' इत्यत्र 'अपहृतानामेवम्' इति भानुचन्द्रः पठति 'अपहृतानां कामपीडितानाम्' इति व्याख्याति च । अनार्ययाऽविनीतया । अलीको मिथ्या न तु पारमार्थिको यः कोपस्तेन कान्तेन । मनोहारिणा । प्रयत्नेन वास्तवकोपाभावात् विरचिता भीषणा भ्रुकुटिर्भूषणं यस्मिन् । चञ्चले अविमृश्यकारिणि । मकरध्वजस्य लास्यारम्भो लीलानृत्यप्रारम्भक्रीडा तत्र पुष्पाञ्जलिमिव । एकावलीमेकयष्टिकं हारम् । शून्यं स्वविषयग्रहणाक्षमं हृदयं यस्य ।

---

१ आर्ये०. २ क्केन. ३ क्व सा सर्यमिता क्व. ४ सक्ताभाग्र. ५ ०चेतनत्वमपहृतानामेवम्. ६ चपले.

निधाय स्वेदसलिलस्नातापि पुनः स्नातुमवातरम् । उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम् । गत्वा च प्रविश्य कन्यान्तःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि किं तत्रैव स्थितास्मि किमेकाकिन्यस्मि किं परिवृत्तास्मि किं तूष्णीमस्मि किं प्रस्तुतालापास्मि किं जागर्मि किं सुप्तास्मि किं रोदिमि किं न रोदिमि किं दुःखमिदं किं सुखमिदं किमुत्कण्ठेयं किं व्याधिरयं किं व्यसनमिदं किमुत्सवोऽयं किं दिवस एष किं निशेयं कानि रम्याणि कान्यरम्याणीति सर्वं नावागच्छम् । अविज्ञातमदनवृत्तान्ता च क्व गच्छामि किं शृणोमि किं पश्यामि किमालपामि कस्य कथयामि कोऽस्य प्रतीकार इति सर्वं च नाज्ञासिषम् । केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिताशेषपरिजनप्रवेशा, सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी तामेव दिशं तत्सनाथतया प्रसाधितामिव कुसुमितामिव महारत्ननिधानाधिष्ठितामिवामृतरससागरपूरप्लावितामिव पूर्णचन्द्रोदयालंकृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनिमपि तद्वार्तां प्रष्टुमीहमाना, तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती तत्प्रीत्येव गृहीतमौनव्रता स्मरजनितपक्षपाता च तत्परिग्रहान्मुनिवेषस्याग्राम्यतां तदास्पदतया यौवनस्य चारुतां तच्छ्रवणसंपर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रम्यतां तद्रूपसंपदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती दूरस्थस्यापि कमलिनीव सवितुः सागर-

निम्नगा नदी । प्रतीपं विपरीतम् । विरहविधुरा विरहपर्याकुला । चित्तपर्याकुलीभावमेवाह किमिति । प्रस्तुत आरब्ध आलापः संलापो यया । अथ विप्रलम्भं वर्णयन्नाह । **केवलमिति**— कुमारीपुरप्रासादं कुमारीणामवरोधगृहम् । मणीनां जालं यस्मिंस्तादृशे गवाक्षे वातायने निक्षिप्तं मुखं यया । तत्सनाथतया तदधिष्ठिततया । प्रसाधितामलंकृताम् । कुसुमितां कुसुमान्यस्याः संजातान्यसौ कुसुमिता तामिव । तारकादित्वादितच् । महान्ति रत्नानि यस्मिन्नेवंविधेन निधानेन निधिनाधिष्ठितां सहिताम् । दर्शनसुभगामालोकरमणीयाम् । अनिलमपि इ०—वार्तां तदुदन्तं प्रष्टुमीहमानेच्छन्ती । 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।' इति भावः । तत्प्रीत्या तत्स्नेहात् । स्मरेण जनितः पक्षपातो यस्याः । तेन यः परिग्रहः स्वीकारस्तस्माद्धेतोः । अग्राम्यतां सुन्दरतामित्यर्थः । स एवास्पदमधिष्ठानं यस्य तस्य भावस्तत्ता तया । अध्यारोपयन्ती स्थाप-

१ प्रयत्ना. २ स्नानम्. ३ रससार. ४ स्थितस्य, दूरस्था.

वेलेव चन्द्रमसो मयूरीव जलधरस्य तस्यैवाभिमुखी तथैव तां तद्विरहातुरजीवितोद्गमररक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती तथैव च तया प्रस्तुततद्रहस्यालापयेव कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निस्पन्दमतिष्ठम् ।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सह गता स्नातुमासीत् । सा च पश्चाच्चिरादिवागत्य तथावस्थितां शनैर्मामवादीत् । भर्तृदारिके यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ तयोरेको येन भर्तृदुहितुरियमवतंसीकृता सुरतरुकुसुममञ्जरी स तस्माद्द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः कुसुमितलतासंतानगहनान्तरेणोपसृत्य मामागच्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत् । बालिके केयं कन्यका कस्य वापत्यं किमभिधाना क्व गच्छतीति । मयोक्तम्—एषा खलु भगवतः श्वेतभानोरंशु[1]संभूतायामप्सरसि गौर्यां समुत्पन्ना देवस्य सकलगन्धर्वमुकुटमणिशलाकाशिखरोल्लेखमसृणितचरणनखचक्रस्य प्रणयप्रसुप्तगन्धर्वकामिनीकपोलपत्रलतालाञ्छितभुजतरुशिखरस्य पादपीठीकृतलक्ष्मीकरकमलस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवासं हेमकूटा[2]चलमभिप्रस्थिता । इति कथिते च मया किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमिषेण चक्षुषा चिरमभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुनराह—बालिके कल्याणिनी तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम् ।

---

यन्ती । तद्विरहेणातुरं व्याकुलं यज्जीवितं तस्योद्गमो निर्गमस्तस्य रक्षावलीम् । कदम्बस्य नीपस्य मुकुलानि तेषां कर्णपूरं तद्वदाचरता । कण्टकितं सञ्जातकण्टकमिवैककपोलफलकं यस्याः । निस्पन्दं निश्चेष्टम् । तस्माद्द्वितीयात्कपिञ्जलादात्मनो दर्शनं रक्षन् परिहरन् । अतिनिभृतानि निःशब्दानि पदानि यस्य । कुसुमितानां लतानां संतानं परम्परा तस्य गहनं काननं तस्यान्तरेण । आगच्छन्तीं मां पृष्ठत उपसृत्य । श्वेतभानोः सोमस्य । सकलगन्धर्वाणां मुकुटेषु या मणिशलाकास्तासां शिखरैरग्रैर्य उल्लेखो घर्षणं तेन मसृणितं चरणनखचक्रं ०समूहो यस्य । प्रणयेन प्रसुप्ता या गन्धर्वकामिन्यस्तासां कपोलेषु याः पत्रलताः पत्रावलीरचनास्ताभिर्लाञ्छिते भुजौ तरू इव तयोः शिखरे यस्य । सानुनयं सप्रणयम् । कल्याणं श्रेयो विद्यते यस्याः सा कल्याणिनी । अविसंवादिन्यव्यभिचारिणी । यथार्थगुणानुमापिकेत्यर्थः । न ह्याकृतिः सुसदृशं विजहाति वृत्तम् । इति मृच्छकटिके । अचपला गम्भीरा । उपरचितं बद्धमञ्जलिपुटं यया । निखिलं

---

१ अंशु–अंश–भूतायाम्. २ हेमकूटमचलम्.

तत्करोषि मे वचनमेकमभ्यर्थ्यमानेति । ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः । भगवन्कस्मादेवमभिधत्से । काहम् । महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति किं पुनराज्ञाम् । तद्विश्रब्धमादिश्यतां कर्तव्यम् । अनुगृह्यतामयं जनः । इत्येवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामाभिनन्द्य निकटवर्तिनस्तमालपादपात्पल्लवमादाय निष्पीड्य शिलातले तेन गन्धगजपदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्य इयं पत्रिका त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देयेत्यभिधायार्पितवान् । इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शयत् । अहं तु तेन तत्संबन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपट्टिकां तस्यामिमामभिलिखितामार्यामपश्यम् ।

दूरं मुक्तालतया बिससिततया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥

अनया च मे दृष्ट्या, दिङ्मोहभ्रान्त्येव प्रनष्टवर्त्मनो बहुलनिशयेवान्धस्य जिह्वोच्छित्त्येव मूकस्येन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनो ज्वरप्रलापप्रवृत्त्येवासंबद्धभाषिणो दुष्टनिद्रयेव विषविह्वलस्य लोकायतिकविद्ययेवाधर्मरु-

---

यत्कल्मषं दुरितं तदपहरणशीलाम् । विश्रब्धं सविश्वासम् । सस्नेहया प्रेमपूर्णया दृष्ट्या इ० । प्रच्छन्नं सुगुप्तम् । **स्पर्शेति**—स्पर्शसदृशं सुखं जनयता । रोमोद्गमाद्रोमाञ्चप्रादुर्भावादनुमितः सर्वाङ्गेषु प्रवेशो यस्येत्युभयविशेषणम् । मदनस्यावेशोऽनुप्रवेशस्तदर्थो मन्त्रस्तेन । आवेश्यमानान्तःप्रविश्यमाना । **दूरमिति**—मे मम मानसे जन्म यस्य स मानसजन्मा कामः । त्वत्संगमाभिलाष इत्यर्थः । बिससितया मृणालधवलया मुक्तालतयैकावल्या विप्रलोभ्यमानः प्रतार्यमाणः । दर्शिता आशा फलप्राप्त्याशा यस्यैवंभूतस्त्वया दूरं परां काष्ठां नीतः । मानसे तदाख्यसरोवरे जन्म यस्यैवंभूतो हंसो बिससितया मुक्तालतया विप्रलोभ्यमानो दर्शिताशो यथा दूरं विप्रकृष्टं नीयते तद्वत् । अनया पत्रिकया च मे मया दृष्ट्या सत्या स्मरातुरस्य मे मनसः सुतरां दोषविकारोपचयो मदनविकारवृद्धिरक्रियत इत्यन्वयः । केन कस्येवेत्याह—प्रनष्टवर्त्मनः प्रनष्टं वर्त्म यस्य उत्पथगामिन इत्यर्थः । दिग्विषयाज्ञानेन यथा दोषविकारोपक्रमः क्रियते तथा । दोषोऽत्र मार्गोत्परिभ्रंशरूपः । एवं सर्वत्र योज्यम् । जिह्वोच्छित्त्या रसनाकर्तनेन । इन्द्रजालिकपिच्छिकया दृग्बन्धहेतुभूतया । अतत्त्वदर्शिनो वस्तून्ययथावत्पश्यतः । दुष्टनिद्रया दोषजनकस्वापेन । लोकायतिकविद्या चार्वाकादिनास्तिकप्रणीतं शास्त्रं तथा । ते हि वदन्ति—यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ इति ॥

---

१ निपातयन्ति. २ दृष्टया.

चेर्मदिरयेवोन्मत्तस्य दुष्टावेशक्रिययेव पिशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः । येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलताम्यगमम् । तां च द्वितीयदर्शनेन कृतमहापुण्यामिवानुभूतसुरलोकवासामिव देवताधिष्ठितामिव लब्धवरामिव पीतामृतामिव समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना सततसंनिहितामपि दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा पार्श्वावस्थितामपि सर्वलोकस्योपर्यवस्थितामिव पश्यन्ती कपोलयोरलककलताभङ्गेषु च सोपग्रहं स्पृशन्ती विपरीतमिव परिजनस्वामिसंबन्धमुपदर्शयन्ती तरलिके कथय कथं स त्वया दृष्टः किं किमभिहितासि तेन कियन्तं कालमवस्थितासि तत्र कियदनुसरन्नस्मानसावागत इति पुनः पुनः पर्यपृच्छम् । अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ।

अथ मदीयेनेव हृदयेन कृतरागसंविभागे लोहितायति गगनतलोपान्तावलम्बिनि रविबिम्बे, सरागदिवसकरदर्शनानुरक्तायां कृतकमलशयनायामनङ्गातुरायामिव पाण्डुतां व्रजन्त्यामातपलक्ष्म्यां, गैरिकगिरिसलिलप्रपातपाटलेषु कमलवनेभ्यः समुत्थाय वनगजयूथेष्विव पुञ्जीभवत्सु भास्करकिरणेषु, गगनावतारविश्रामलालसानां रविरथवाजिनां हर्षहेषारवप्रतिशब्दकेन सह विशति मेरुगिरिगह्वरे वासरे, मुकुलितरक्तपङ्कजपुटप्रविष्टमधुकरावलीषु रवि-

---

दुष्टानां पापग्रहादीनामावेशोनुप्रवेशस्तदर्था क्रिया तया । येन दोषोपचयेन । तां च तरलिकां पुनः पुनः पर्यपृच्छमित्यन्वयः । कीदृश्यहम् । तां द्वितीयदर्शनेन पुण्डरीकस्य पुनर्दर्शनेन कृतमहापुण्यामित्या० मन्यमाना । अलककलताभङ्गेषु प्रलम्बकेशखण्डेषु । कर्मणोधिकरणविवक्षया सप्तमी । सोपग्रहं सानुकूलम् । परिजनस्वामिसम्बन्धं सेव्यसेवकसम्बन्धम् । विपरीतं तस्याः सानुनयं प्रार्थनात् । **अथेति**—अथानन्तरं सा छत्रग्राहिणी समागत्याकथयदिति सम्बन्धः । अथ सायंसमयं वर्णयन्नाह **मदीयेनेति**—रागोनुरागो लौहित्यं च । लोहितायति लोहितवदाचरति । सरागो रक्तः सानुरागश्च । गैरिको धातुविशेषः । तन्मयो गिरिर्गैरिकगिरिस्तस्य सलिलेषु यः प्रपातस्तेन पाटलेषु श्वेतरक्तेषु । गगनावतार आकाशमार्गभ्रमणं तस्माद्यो विश्रामस्तत्र लालसानां स्पृहावताम् । **हर्षेति**—विश्रामलाभापेक्षया हर्षः । **मेर्विति**—मिनोति क्षिपत्युच्चत्वाज्ज्योतींषि इति मेरुः सर्वद्वीपमध्यवर्ती पर्वतविशेषः । तदुक्तं विष्णुपुराणे—तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः । चतुरशीतिसाहस्रो योजनैरस्य चोच्छ्रयः । भूपद्मस्यास्य शैलोसौ कर्णिकाकारसंस्थितः । मात्स्ये च—मेरुस्तु शुशुभे दिव्यो राजवत्समधिष्ठितः । योजनानां सहस्राणि चतुरशीतिरुच्छ्रितः ॥ प्रविष्टः षोडशाधस्ताद् इ० । मुकुलितानि संकोचमितानि

---

१ दुरावेशक्रियया. २ अगमम्. ३ सङ्गेषु ४ मधुकरावलीषु.

विरहमूर्च्छान्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, ग्रासीकृतसामान्यमृणाललताविवरसंक्रामितानीव परस्परहृदयान्यादाय विघटमानेषु रथाङ्गनाम्नां युगलेषु सा छत्रग्राहिणी समागत्याकथयत् । भर्तृदारिके तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति कथयति चाक्षमालामुपयाचितुमागतोस्मीति ।

अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनं गच्छ प्रवेश्यतामित्यादिश्य प्राहिणवम् । अथ मुहूर्तादिव तं तस्य, रूपस्येव यौवनं यौवनस्येव मकरकेतनं मकरकेतनस्येव वसन्तसमयं वसन्तसमयस्येव दक्षिणानिलम्, अनुरूपं सखायमृषिकुमारकं कपिञ्जलनामानं जराधवलस्य कञ्चुकिनोनुमार्गेण चन्द्रातपस्येव बालातपमागच्छन्तमपश्यम् । अन्तिकमुपगतस्य चास्य पर्याकुलमिव सविषादमिव शून्यमिवार्थिनमिवान्तर्गताकूतमाकारमलक्षयम् । उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम् । उपविष्टस्य च बलादनिच्छतोपि प्रक्षाल्य चरणावुपमृज्योत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम् । अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया दृष्टैव भगवन्नव्यतिरिक्तेयमस्मच्छरीरादशङ्कितमभिधीयतामित्यवोचम् ।

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत् । राजपुत्रि किं ब्रवीमि । वागेव मे नाभिधेयविषयमवतरति त्रपया । क्व कन्दमूलफलाशी शान्तो वनेनिरतो मुनिजनः । क्वायमनुपशान्तजनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविधविलाससंकटो रागप्रायः प्रपञ्चः । सर्वमेवानुपपन्नमालोकय किमारब्धं दैवेन । अयत्नेनैव

यानि रक्तपङ्कजानि तेषां पुटेषु प्रविष्टा मधुकरावल्यो यासु । अत एव कृष्णत्वसाम्यात् **रवीति** । ग्रासीकृता या सामान्या समाना मृणाललता बिसलता तस्या विवरेभ्यः संक्रामितानीव । जराधवलस्य जराकृतपलितादिना शुभ्रस्य । पर्याकुलं व्याकुलम् । शून्यं विगतचेतनम् । अन्तर्गतमाकूतमभिप्रायो यस्य । अनुपरताभिप्रेतमिति पाठे अनुपरतमविच्छिन्नमभिप्रेतमभिप्रायो यस्य । उत्तरीयांशुकस्य पल्लवेनाञ्चलेनोपमृज्य मार्जनं कृत्वा । अव्यवधानायामास्तरणादिरहितायाम् । दृष्टैव दृशैव विदितोऽभिप्रायो यया तादृशी । **वागिति**—अभिधेयविषयं नावतरति अभिप्रेतं वक्तुं न प्रवर्तते । वननिरतोऽनेन कामादिव्यतिकराभावः सूचितः । अनुपशान्तोऽनिवृत्तविषयतृष्णो जनस्तस्योचितः । ०कलुषो मलिनः । मन्मथस्य कामस्य ये विविधविलासा अनेकप्रकाराणि विलसितानि तैः संकटः संकीर्णः । रागप्रायो रतिबहुलः प्रपञ्चो

१ मुनि. २ धवलितस्य. ३ अनुयायिनम्. ४ अनुपरताभिप्रेतम्. ५ वनवास.

खलूपहासास्पदतामीश्वरो नयति जनम् । न जाने किमिदं वल्कलानां सदृशमुताहो जटानां समुचितम् । किं तपसोनुरूपमाहोस्विद्धर्मोपदेशाङ्गमिदम् । अपूर्वेयं विडम्बना । केवलमवश्यकथनीयमिदम् । अपर उपायो न दृश्यते । अन्या प्रतिक्रिया नोपलभ्यते । अन्यच्छरणं नालोक्यते । अन्या गतिर्नास्ति । अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि । अस्ति भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शितकोपेनाभिहितः । तथा चाभिधाय परित्यज्य तं तस्मात्प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयोऽन्यं प्रदेशमगमम् । अपयातायां भवत्यां मुहूर्तमिव स्थित्वैकाकी किमयमिदानीमाचरतीति संजातवितर्कः प्रतिनिवृत्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षमासीच्च मे मनस्येवं किं नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन्गन्तो भवेत्, गतायां च तस्यां लब्धचेतनो लज्जमानो[1] न शक्नोति मे दर्शनपथमुपगन्तुमाहोस्वित्कुपितः परित्यज्य मां गत उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः स्यात्—इत्येवं विकल्पयन्कंचित्कालमतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमानः पुनरचिन्तयम् । स कदाचिद्धैर्यस्खलनविलक्षः किंचिदनिष्टमपि समाचरेत् । न हि किंचिन्न क्रियते ह्रिया । तन्न युक्तमेनमेकाकिनं कर्तुम् । इत्यवधार्यान्वेष्टुमादरमकरवम् । अन्वेषयंश्च यथा यथा नापश्यं तं तथा तथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशङ्कमानस्तरुलतागहनानि चन्दनवीथिकालतामण्डपान्सरःकूलानि च वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम् ।

---

मायाविस्तरः । किमेतदनिर्वचनीयस्वरूपं सर्वमेवानुपपन्नं विरुद्धत्वादयुक्तं दैवेनारब्धमालोकय पश्येति योजना । आहोस्विदथवा । धर्मोपदेशाङ्गं धर्मोपदेशप्रकारविशेष इत्यर्थः । अनर्थोपनिपातोरिष्टापातः । निष्ठुरं परुषमभिहित उक्तः । उपजातमन्युः सञ्जातक्रोधः । उत्सृष्टेति—पुष्पग्रहणव्यापारं त्यक्त्वा । सञ्जातवितर्के उपजातविकल्पः । विटपैर्वृक्षैरन्तरितास्तिरोहितो विग्रहः शरीरं यस्य । यावत्तं नाद्राक्षं तावत्तस्मिन्काले । मदनेन परायत्ताऽस्वाधीना चित्तवृत्तिर्यस्य तादृशः सन् । यद्वा मदन एव परस्तस्यायत्ता कामैकाधीना चित्तवृत्तिर्यस्य । गतायां तस्यां लब्धा पुनः प्राप्ता चेतना ज्ञानम् । विचारसामर्थ्यमिति यावत् । ्येन स तथोक्तः । दूयमानः क्लिश्यमानः । धैर्यस्य स्खलनं च्युतिस्तेन विलक्षो

---

1 लज्जया.

अथैकस्मिन्सरःसमीपवर्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृतमय इव मयूरमय इवातिमनोहरे वसन्तजन्मभूमिभूते लतागहने कृतावस्थानमुत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव, निश्चलमपि स्ववृत्ताच्चलितम्, एकाकिनमपि मन्मथाधिष्ठितं, सानुरागमपि पाण्डुतामावहन्तं, शून्यान्तःकरणमपि हृदयनिवासिदयितं, तूष्णीकमपि कथितमदनवेदनातिशयं, शिलातलोपविष्टमपि मरणे व्यवस्थितं, शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन संतप्यमानम्, अतिनिस्पन्दतया हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यसंतापसंत्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिवोन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरं, निस्पन्दनिमीलितेनान्तर्ज्वलन्मदनदहनधूमाकुलिताभ्यन्तरेणेवपक्ष्मान्तरविवरवान्तानेकधारमनवरतमीक्षणयुगलेन बाष्पजलदुर्दिनमुत्सृजन्तम्,आलोहिनीमधरप्रभामनङ्गाग्नेः प्रदहतो हृदयमूर्ध्वसंसर्पिणीं शिखामिवादाय निष्पतद्भिरुच्छ्वासैस्तरलीकृतासन्नलताकुसुमकेसरं वामकपोलशयनीकृतकरतलतयासमुत्सर्पद्भिरमलैर्नखांशुभिर्विमलीकृतमच्छाच्छचन्दनरसरचितललाटिकमिव

---

लज्जितः सुहृदिति—सुहृदि स्नेहः तेन कातरम् । प्रेम पश्यति भयान्यपदेपि इति भावः । अशोभनमनिष्टम् । निपुणमेकतानेन मनसा वीक्षमाणः । निरन्तरतया निबिडतया । कुसुममय इव पुष्पाणामविरलसंनिवेशात्तद्घटित इव । एवमन्यत्र । परभृतमये-' एतेन सहकारोद्रेकः सूचितः' इ. भानु० । वसन्तेति-अनेन वसन्तश्रीसमृद्धिः सूचिता । उपरतं मृतम् । पुनस्तमेव विरोधाभासेन वर्णयति निश्चलेत्यादिना-निश्चलत्वचलनयोर्विरोधः । परिहारस्तु चलितं प्रभ्रष्टमित्यर्थात् । एकाकिनमसहायमपि मन्मथेनाधिष्ठितं युक्तमिति विरोधः । परिहारपक्षे कामोपहतम् । रक्तमपि पाण्डुवर्णमिति विरोधः । अनुरागवत्त्वात्तत्परिहारः । रिक्तान्तःकरणत्वेपि प्रियाक्रान्तहृदयत्वाद्विरोधः । कस्यचित्सद्भावे शून्यत्वाभावात् । परिहारस्तु प्रियैकचिन्तनाद्विषयान्तरग्रहणाभावात् । तूष्णीकं मौनावलम्बिनम् । एवं मौनकथनयोर्विरोधे कथित इत्यस्य सूचित इत्यर्थात्परिहारः । मरणे व्यवस्थितं कृतनिश्चयमिति परिहारपक्षेर्थः । विरोधस्तु स्फुट एव । पुनः प्रकारान्तरेण वर्णयति शापेति । इन्द्रियाणां स्वस्वकार्याकरणादुत्प्रेक्षते—निस्पन्दतया निश्चलाङ्गतया । प्रलीनैर्विनष्टैः । मनःक्षोभश्चित्तस्य पर्याकुलत्वम् । पुनश्चेक्षणयुगलेन बाष्पौघं विसृजन्तम् । पक्ष्मान्तरेषु नेत्ररोमान्तरेषु यानि विवराणि तेभ्यो वान्ता उद्गीर्णा अनेका धारा यस्मिन् । हृदयं प्रदहतोनङ्गाग्नेः ऊर्ध्वसंसर्पिणीं शिखामिवालोहिनीमधरप्रभामादायेति योजना । तरलीकृतेत्यादिना उच्छ्वासस्यौल्यं ध्वनितम् ॥ विमलीकृतमत एवाच्छ-

---

१ स्ववृत्तात्.

ललाटमुद्वहन्तम्, अचिरापनीतपारिजातकुसुमकर्णपूरतया सशेषपरिमलामोदलोभोपसर्पिणा कलविरुतच्छलेन मदनसंमोहनमन्त्रमिव जपता मधुकरकुलेन सनीलोत्पलमिव सतमालपल्लवमिव श्रवणदेशं दधानम्, उत्कण्ठाज्वररोमाञ्चव्याजेन प्रतिरोमकूपनिपतितानां मदनशराणां कुसुमशरशल्यशकलनिकरमिवाङ्गलग्नं बिभ्राणं, दक्षिणकरेण च स्फुरित[१]नखकिरणनिकरां करतलस्पर्शसुखकण्ठकितामिव मुक्तावलीमविनयपताकामुरसि धारयन्तं, मदनवशीकरणचूर्णेनेव कुसुमरेणुना तरुभिराहन्यमानम्, आत्मरागमिव संक्रामयद्भिरासन्नैरनिलचलितैरशोकपल्लवैः स्पृश्यमानं, सुरताभिषेकसलिलैरिवाभिनवपुष्पस्तबकमधुसीकरैर्वनश्रियाभिषिच्यमानम्, अलिनिवहनिपीयमानपरिमलैरुपरि पतद्भिश्चम्पककुड्मलैस्तप्तशरशल्यकैरिव सधूमैः कुसुमशरेण ताड्यमानम्, अतिबहलवनामोदमत्तमधुकरझंकारनिस्वनैर्हुंकारैरिव दक्षिणानिलेन निर्भर्त्स्यमानं, मदकलकोकिलकुलकोलाहलैर्वसन्तजय[२]कलकलैरिव मधुमासेनाकुलीक्रियमाण, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतं, निदाघगङ्गाप्रवाहमिव कृशिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिवादृष्टपूर्वमिवापरिचितमिव जन्मान्तरमिवोपगतं रूपान्तरेणेव परिणतमाविष्टमिव महाभूताधिष्ठितमिव ग्रहगृहीतमिवोन्मत्तमिव छलितमिवान्धमिव बधिरमिव मूकमिव विलासमयमिव मदनमयमिव परायत्तचित्तवृत्तिं परां कोटिमधिरूढं मन्मथावेशस्यानभिज्ञेयपूर्वाकारं तमहमद्राक्षम् ।

---

च्छोतिस्वच्छो यश्चन्दनरसस्तेन रचिता ललाटिका तिलकविशेषो यस्मिन् । **अचिरेति**–अचिरादपनीतः पारिजातकुसुममेव कर्णपूरो यस्य तस्य भावस्तत्ता तया । सशेषोवशिष्टो यः परिमलस्तस्यामोदस्य लोभस्तेनोपसर्पिणा । विमर्दोत्थो गन्धः परिमलः स एवातिमनोहर आमोद इत्यनयोर्भेदः । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' । 'आमोदः सातिनिर्हारी' इत्यमरः । मदनस्य संमोहनमन्त्रो वशीकरणमन्त्रस्तमिव । शल्यशकलानिकरं बाणाग्रसमूहम् । स्फुरितो नखकिरणानां निकरो यस्यास्ताम् । अविनयः स्वधर्मच्युतिरूपस्तस्य पताकां वैजयन्तिकाम् । मदनस्य वशीकरणचूर्णं कार्मणचूर्णं तेन । **सुरतेति**–'सुरतलक्षणं यद्राज्यं तदर्थमभिषेकसलिलैरिव' इ० भानु० । उपरि पतद्भिः पुण्डरीकस्येत्यर्थात् । अलीनां नीलत्वाच्चम्पककुड्मलानां पीतत्वाच्चोत्प्रेक्षते तप्तेति । शल्यान्ययोमयानि बाणाग्राणि । निर्भर्त्स्यमानमधिक्षिप्यमाणम् । 'शब्दत्वसाम्यादाह–हुंकारैरिव मादृशे उद्दीपके विद्यमानेपि तव किं सुरतप्रारम्भो न भविष्यत्येवेति साभिमानैरित्यर्थः' इ. भानु० । पाण्डुतया पाण्डुरवर्णेन निस्तेजस्कतया च । कृशिमानं कृशतां स्रोतस्तनूभावं च । आविष्टं डाकिन्यादिभिरन्तः प्रविष्टम् । छलितं छलनां प्राप्तं प्रतारितमित्यर्थः । मन्मथावेशस्य मदनाभिनिवेशस्य परां कोटिमधिरूढं काष्ठां गतम् । अनभिज्ञेयो प्रत्यभिज्ञातुमशक्यः पूर्वा-

---

१ नखेति नास्ति पुस्तकान्तरे. २ मदना०.

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुजातविषादो वेपमानेन हृद-येनाचिन्तयम् । एवं नामायमतिदुर्विषहवेगो मकरकेतुः । येनानेन क्षणेनायमी-दृशमवस्थान्तरमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो बत महच्चित्रम् । तथा नामायमा शैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयचरित आसीत् । अद्य त्वितर इव परिभूय ज्ञानमविगणय्य तपःप्रभावमुन्मूल्य गाम्भीर्यं मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितमिति । उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसद-शावसक्तपाणिस्तमनुन्मीलितलोचनमेव सखे पुण्डरीक कथय किमिदमित्यपृच्छम् । अथ सुचिरसंमीलनाल्लग्नमिव कथमपि प्रयत्नेनानवरतरोदनवशादुपजातारुणभाव-मश्रुजलपटलपरिप्लावितमत्कुपितमिव सवेदनमिव स्वच्छांशुकान्तरितरक्तकमलवन-च्छायं चक्षुरुन्मील्य मन्थरया दृष्ट्या सुचिरं विलोक्य मामायततरं निश्वस्य लज्जाविशीर्यमाणाविरलाक्षरं सखे कपिञ्जल विदितवृत्तान्तोऽपि किं मां पृच्छसीति कृच्छ्रेण शनैः शनैरवदत् । अहं तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयं तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रवम् ।

सखे पुण्डरीक सुविदितमेतन्मम । केवलमिदमेव पृच्छामि । यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम् । उत धर्मशास्त्रेषु पठितम् । उत धर्मार्जनोपा-योयम् । उतापरस्तपसां प्रकारः । उत स्वर्गगमनमार्गोऽयम् । उत व्रतरहस्य-

---

कारो यस्य । अतिदुर्विषहोऽतिशयेन सोढुमशक्यो वेगो जवो यस्य । अप्रतीकारमचिकित्स्यम् । उक्तविपर्यये दोषमाह । कथमिति—अन्यथा एवंविधो ज्ञानराशिः पुण्डरीकरूप एकपदे सपद्येव । अहो इत्याश्चर्ये । बतेति खेदे । धीरा आवेगादिभिरबाध्या प्रकृतिः स्वभावो यस्य । अस्खलि-तवृत्तिरखण्डितचरित्रः । इतर इव प्राकृत इव । जडीकृतो मूढतां नीतः । नास्ति स्खलितं स्वधर्मा-त्प्रच्युतिर्यस्मिंस्तादृग्यौवनं दुर्लभम् । प्राप्ते यौवने सर्वस्य हि प्रायः स्खलितं जायत इति भावः । अंसदेशे स्कन्धप्रदेशे अवसक्तो निहितः पाणिर्यस्याः सुचिरं यत्संमीलनं निमीलनं तेना-स्रमं संपृक्तमिव । उत्कुपितं कुपितदोषमिव । स्वच्छांशुकेन धवलवाससा अन्तरितं व्यवहितं कमलवनं तस्यच्छायेव च्छाया शोभा यस्य । मन्थरया स्तिमितया । आयततरमतिदीर्घम् । लज्जेति—लज्जया विशीर्यमाणानि दीर्यमाणानि विरलानि च अक्षराणि यस्मिन्कर्मणि तद्यथा तथा । अप्रतीकारः प्रतिक्रियारहितो विकारो यस्य । नियमप्रकारो व्रतचर्याभेदः । अप्रवृत्ते

---

१ अनुन्मीलित. २ पर्व. ३ उत्कम्पितम्. ४. [illegible] रमन्थरया. ५ पिरलेति नास्ति पुस्तकान्तरे.

मिदम् । उत मोक्ष[illegible] । आहोस्विदन्यो [illegible] । कथमेत-
द्युक्तं भवतो मनसापि चिन्तयितुं किं पुनराख्यातुमीक्षितुं वा । किमप्रबुद्ध इवा-
नेन मन्मथ[illegible]तकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे । मूढो हि मद-
नेनायास्यते । का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजन[illegible]मतेषु
विषयेषु भवतः । स खलु धर्मबुद्ध्या विषलतावनं सिञ्चति कुवलयमालेति
निस्त्रिंशलतामालिङ्गति कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते रत्नमिति ज्वल-
न्तमङ्गारमभिस्पृशति मृणालमिति दुष्टवारणदन्तमुसलमुन्मूलयति मूढो विषयो-
पभोगेष्वनिष्टानुबन्धिषु यः सु[illegible]रोपयति । अधिगतविषयतत्त्वोपि कस्मा-
त्खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहसि । यतो न निवारयासि प्रबलरजः-
प्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि न नियमयसि च क्षुभितं
मनः । कोयमनङ्गो नाम । धैर्यवलम्ब्य निर्भर्त्स्यतामयं दुराचारः । इत्येवं
वदत एव मे वचनमाक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः
करतलेन पाणौ मामवलम्ब्यावोचत् । सखे किं बहुनोक्तेन । सर्वथा स्वस्थोसि ।
आशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकाना पतितोसि न गोचरे । सुख-
मुपदिश्यते परस्य । यस्य चेन्द्रियाणि सन्ति मनो वा विद्यते यः पश्यति वा

मूढः । स खल्विति—यः अनिष्टानुबन्धिषु दुःखपरिणामेषु विषयोपभोगेषु सुखबुद्धिं सुखदा-
यकताधियमारोपयति स मूढो हिताहितविवेकशून्यः खलु ध्रुवं धर्मबुद्धया धर्मो मे स्यादिति
मन्यमानः इति सम्बन्धः । निस्त्रिंशलतां खड्गलताम् । निर्गतस्त्रिंशतोङ्गुलिभ्यो निस्त्रिंशः ।
'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । स इव । निर्वीर्यम्—मनोविकारनियमनासमर्थम् ।
'निवार्यम्' इति बहुषु पुस्तकेषु पाठः । किं तु सोर्थतया न सम्यक्संगच्छते । अस्यार्थः-
निवार्यं प्रबलमनोविकारविनाश्यं न तु तेषां निवारकम् । यथा खद्योततेजोन्यतेजसोपह-
तमेव भवति न तु तदभिभवति तथा । अस्य भानुचन्द्रव्याख्या तु चिन्त्या । प्रब-
लेति—प्रबलो यो रजःप्रसरो रजोगुणविजृम्भणं तेन कलुषितानि दूषितानि । पक्षे रजः-
प्रसरो धूलिविस्तारस्तेन कलुषितान्याविलानि । प्रतिपक्ष्मान्तरालं प्रवृत्ता बाष्पवेणिकाऽश्रु-
प्रवाहो यस्मिन् । स्वस्थोऽविकृतमनाः । सुस्थ इतिपाठे सुखावस्थितः । आशिषि दंष्ट्रायां
विषमस्याशीविषः सर्पः [illegible]स्साधुः । तस्य विषं तस्य वेगः प्रसरस्तद्वद्विषमाणां
दुःसहानाम् । सुखमिति—परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणामिति भावः । इन्द्रियाणि
सन्ति इन्द्रियशक्तिरनुपहतातिष्ठति । अवष्टम्भो मनोनिरोधः स्थैर्यं वा । आरम्भ इति

१ विषलताम्. २ महारत्नम्. ३ बन्धेषु. ४ यः परिणतिविरसेषु. ५ बहुनोक्तेन. ६ सुस्थोसि. ७ वर्तते.

शृणोति वा श्रुतमवधारयति वा यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदूरापेतम् । अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा । कथमप्येवमेवायत्नविधृतास्तिष्ठन्त्यसवः । दूरातीतः खलूपदेशकालः । समतिक्रान्तो धैर्यावसरः । गता प्रतिसंख्यानवेला । अतीतो ज्ञानावष्टम्भसमयः । केन वान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्यमुन्मार्गप्रवृत्तिनिवारणं वा करणीयम् । कस्यान्यस्य वा वचसि मया स्थातव्यम् । को वापरस्त्वत्समो मे जगति बन्धुः । किं करोमि । यन्न शक्नोमि निवारयितुमात्मानम् । इयमनेनैव क्षणेन भवता दृष्टा[1] दुष्टावस्था । तद्गत इदानीमुपदेशकालः । यावत्प्राणिमि तावदस्य कल्पान्तोदितद्वादशदिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि । पच्यन्त इव मेऽङ्गानि । उत्क्वथ्यत इव हृदयम् । प्लुष्यत इव दृष्टिः ज्वलतीव शरीरम् । अत्र यत्प्राप्तकालं तत्करोतु भवान् । इत्यभिधाय तूष्णीमभवत् ।

एवमुक्तोप्यहमेनं प्राबोधयं पुनः पुनः । यदा शास्त्रोपदेशविशदैः सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपग्रहं चाभिधीयमानोपि नाकरोत्कर्णे तदाहमचिन्तयम् । अतिभूमिमयं गतो न शक्यते निवर्तयितुम् । इदानीं निरर्थकाः खलूपदेशाः । तत्प्राणपरिरक्षणेपि तावदस्य यत्नमाचरामि इति कृतमतिरुत्थाय गत्वा तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशानि जललवलाञ्छितान्योदाय[2] गर्भधूलिकषायपरिमलमनोहराणि च कुमुदकुवलयकमलानि गृहीत्वागत्य तस्मिन्नेव लतागृहशिलातले शयनम-

केचित् । प्रतिसंख्यानमध्यात्मज्ञानं विवेको वा अस्तमितैषा कथा सर्वमेतदतिदूरापेतमित्यर्थः । अयत्नविधृताः स्वयमेव । प्रतिसंख्यानवेला शुभाशुभविवेककालः । ज्ञानावष्टम्भो ज्ञानेन चित्तस्य धारणम् । कल्पान्त उदिता ये द्वादश दिनकरास्तेषां किरणातप इव तीव्रो दुःसह इत्यर्थस्तस्य । तीव्रतापसंपर्के हि पाकक्वाथज्वलनादिकार्याणि सम्भवन्तीति तान्येव दर्शयन्नाह पच्यन्त इति । प्लुष्यते दह्यते । प्राप्तः कालो यस्य तत्प्राप्तकालमेतत्कालोचितम् । एवमिति—शास्त्रोपदेशेन विशदैर्निर्मलैः । सनिदर्शनैः सदृष्टान्तैः । सानुनयं सानुनीति । सोपग्रहं सानुकूलनम् । अतिभूमिं परां कोटिं कामस्यान्त्यावस्थामित्यर्थः । सरसा रसपूर्णाः । गर्भधूलिरन्तःपरागस्तेन कषायः सुरभिः

१. दृष्टावस्था. २. चादाय.

स्याकल्पयम् । तत्र च सुखनिषण्णस्य प्रत्यासन्नवर्तिनां चन्दनविटपिनां[1] मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयम् । आ चरणतलादङ्गचर्चां चारचयम् । अभ्यर्णपादपस्फुटितवल्कलविवरशीर्णेन च करसंचूर्णितेन कर्पूररेणुना स्वेदप्रतीकारमकरवम्[2] । उरोनिहितचन्दनद्रवार्द्रवल्कलस्य स्वच्छसलिलसीकरनिकरस्राविणा कदलीदलेन व्यजनक्रियामन्वतिष्ठम् । एवं च मुहुर्मुहुरन्यदन्यन्नलिनीदलशयनमुपकल्पयतो मुहुर्मुहुश्चन्दनचर्चामारचयतो मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः कदलीदलेनानवरतं वीजयतः समुद्भून्मे मनसि चिन्ता । नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः । क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो[3] जनः । क्व च विविधविलासरसराशिर्गन्धर्वराजपुत्री महाश्वेता । सर्वथा न हि किंचिदस्य दुर्घटं दुष्करमनायत्तमकर्तव्यं वा जगति । दुरुपपादेष्वर्थेष्वयमवज्ञया विचरति । नायं केनापि प्रतिकूलयितुं शक्यते । का वा गणना सचेतनेषु । अपगतचेतनान्यपि संघटयितुमलं यद्यस्मै रोचते । तत्कुमुदिन्यपि दिनकरकरानुरागिणी भवति । कमलिन्यपि शशिकरद्वेषमु-

परिमलस्तेन मनोहराणि । तुषारशिशिरेण नीहारवच्छीतलेन । ललाटिकां ललाटचर्चाम् । अभ्यर्णपादपा आसन्नवर्तिवृक्षास्तेषां स्फुटितानि विभिन्नानि यानि वल्कलानि त्वचस्तेषां विवरेभ्यः शीर्णेन गलितेन । उरसि निहितं चन्दनद्रवेणार्द्रं वल्कलं यस्य । व्यजनक्रियां तालवृन्तकृत्यम् । स्वभावेन निसर्गतो मुग्धोऽविदग्धः । दुरुपपादेषु दुर्घटेषु अवज्ञया स्वसामर्थ्यं जानंस्तद्घटनाविषये वीतचिन्तस्तिष्ठतीति भावः । प्रतिकूलयितुं विरोद्धुम् । तत्—तथा हि । दिनकरकरानुरागिणी दिनकरकिरणेषु बद्धभावा । एवमस्य कामस्य दुर्घटघटनासामर्थ्ये यच्छशिकरप्रणयिन्यपि कुमुदिनी दिनकरकिरणे भावं बध्नीयात् । एवमन्यत्र । अत्र भानुचन्द्रटीका यथा—"**दिनकरेति** । दिनकरस्य सूर्यस्य कराः किरणाः तत्कार्यकारित्वाद्दिनकरत्वं चन्द्रस्य । तस्मिन्ननुरागो विद्यते यस्या एवंविधा भवति । तदुक्तम्—"चन्द्रश्चण्डकरायते मलयजो लेपः स्फुलिङ्गायते माल्यं सूचिकरायते मृदुगतिर्वातोऽपि वज्रायते" इति । **कमलिनीति** । कमलिन्यपि पद्मिन्यपि । शशिकरकार्यकारित्वात्सूर्यकिरणानां शशिकरत्वम् । तेषु यो द्वेषस्तमुज्झति त्यजति । तदुक्तम्—"आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन । सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥" इति । **निशेति** । निशापि रात्रिरपि दिवसकार्यकारित्वाद्वासरेण मिश्रतामैक्यतामेति गच्छति । यथा—'चित्रन्यस्तादपि विषधराद्भीतिभाजो निशायां किं तद् ब्रूमस्त्वदभिसरणे साहसं

१. विटपानाम्. २. प्रतिक्रियाम्. ३ स्वभावविषयविमुखः.

व्रजति। निशापि वासरेण सह मिश्रतामेति। ज्योत्स्नाप्यन्धकारमनुवर्तते छायापि प्रदीपाभिमुखमवतिष्ठते। तडिदपि जलदे स्थिरतां व्रजति। जरापि यौवनेन संचारिणी भवति। किं वा तस्य दुःसाध्यमपरम्। एवंविधो येनायमगाधगाम्भीर्यसागरस्तृणलघुतामुपनीतः। क तत्तपः। केयमवस्था। सर्वथा निष्प्रतीकारेयमापदुपस्थिता। किमिदानीं कर्तव्यम्। किं वा चेष्टितव्यम्। कां दिशं गन्तव्यम्। किं शरणम्। को वोपायः। कः सहायः। कः प्रकारः। का युक्तिः। कः समाश्रयः। येनास्यासवः संधार्यन्ते। केन वा कौशलेन कतमया वा युक्त्या कतरेण वा प्रकारेण केन वावष्टम्भेन कया वा प्रज्ञया कतमेन वा समाश्वासनेनायं जीवेत्। इत्येते चान्ये च मे विषण्णहृदयस्य संकल्पाः प्रादुरासन्। पुनश्चाचिन्तयम् किमेनया ध्यातया निष्प्रयोजनया चिन्तया। प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः। तेषां च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः। बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहास्यमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमेन पूरयति मनोरथम्। अकालान्तरक्षमश्चायमस्य मदनविकारः। सततमतिगर्हितेनाकृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधवः।

---

नाथ तस्याः।" इति। **ज्योत्स्नेति**। ज्योत्स्नापि कौमुद्यप्यन्धकारकार्यकारित्वात्तमोनुवर्तते। तद्रूपतां भजतीत्यर्थः। यथा—"ज्योत्स्ना श्यामलतामुपेत्ययम्" इति। **छायेति**। छायापि प्रदीपस्य गृहमणेरभिमुखमवतिष्ठते संतिष्ठति। अत्र प्रदीपाधोभागे छायायाः सत्त्वान्न चित्रमित्यभिमुखग्रहणम्। तदुक्तम्—"आलोकस्तिमिरायते विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमये किं किं न दुःखायते"। **तडिदिति**। तडिदपि विद्युदपि जलदे स्थिरतां स्थैर्यं व्रजति गच्छति। अत्र तडित उद्दीपकत्वाद्विरहकुक्षितस्य तस्या निमेषावस्थानमपि कल्पकल्पमित्यभिसंधिः। **जरेति**। जरापि विस्रसापि यौवनेन तारुण्येन सह सार्धं संचारिणी संचरणशीला स्यात्। जराया अपि तत्कार्यकारित्वात्तदनुगामित्वमित्यर्थः। अत्रापिशब्दः सर्वत्र विरोधद्योतकः। चेष्टितव्यमाचरितव्यम्। अवष्टम्भेन प्रारम्भेण। 'अवष्टम्भः सुवर्णेऽपि प्रारम्भस्तम्भयोरपि' इति विश्वः। यद्वालम्बनेन। विषण्णचेतसः खिन्नमानसस्य। ध्यातया चेतसि परिवर्तितया। तत्समागमं तस्या महाश्वेतायाः समागमम्। एक उच्छ्वासोऽवशेषो यस्य तदेको॰ जीवितं यस्य। न कालान्तरस्य क्षमः अकालक्षम। एवं शाकुन्तले—'दूरगतमन्मथा अक्षमेयं कालहरणस्य'। इति। अनुचितव्यापारेऽकार्ये प्रवृत्तम्। सव्याजं सापदेशम्। अवसरप्राप्तं

---

१ तृणलवलघुताम्. २ कं देशम्. ३ अनयास्यायतया-स्यन्नायतया. ४ अनुचितमुपगतम्,

तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम् । किं चान्यत्क्रियते ! का चान्या गतिः । सर्वथा प्रयामि तस्याः सकाशम् । आवेदयाम्येतामवस्थाम् । इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्रदेशात्सव्याजमुत्थायागतोऽहम् । तदेवमवस्थिते यदत्रावसरप्राप्तमीदृशस्य चानुरागस्य सदृशमस्मदागमनस्य चानुरूपमात्मनो वा समुचितं तत्र प्रभवति भवती । इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत् ।

अहं तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना रतिरसमयमुदधिमिवावतीर्णा सर्वानन्दानामुपरि वर्तमाना सर्वमनोरथानामग्रमिवाधिरूढा सर्वोत्सवानामतिभूमिमिवाधिशयाना तत्कालोपजातया लज्जया किंचिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैर्ग्रथितैरिवोपर्युपरिपतनानुबन्धदर्शितमालाक्रमैरपाङ्गपक्ष्मसंश्लेषतयोपजातप्रथिमभरैरमलैरानन्दजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसङ्गा तत्क्षणमचिन्तयम् । दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति । यत्सत्यमेतेन मे संतापयताप्यंशेन दर्शितानुकूलता । यदि च सत्यमेव तस्येदृशी दशा वर्तते ततः किमिव नोपकृतमनेन । किं वा नोपपादितम् । को वानेनापरः समानो बन्धुः । कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति । इत्थंभूते किं मयापि प्रतिपत्तव्यम् । तस्य वा पुरः किमभिधातव्यम् । इत्येवं विचारयन्त्या एव प्रविश्य ससंभ्रमा प्रतीहारी मामकथयत् । भर्तृदारिके त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्तेति । तच्च श्रुत्वा कपिञ्जलो महाजनसंमर्दभीरुः सत्वरमुत्थाय राजपुत्रि महानयमुपस्थितः कालातिपातो भगवांश्च भु-

प्राप्तकालक्रम् । **तत्कालेति**—अस्पृष्टं कपोलयोरुदरं मध्यभागो यैः । उपर्युपरि पतनस्य योऽनुबन्धोऽविच्छिन्नपरम्परा तेन दर्शितो मालाक्रमः स्रग्विभ्रमो यैः । आवेद्यमानः प्रहर्षस्य प्रसङ्गः प्राप्तिः प्रस्तावो वा यस्याः । दिष्ट्या भाग्येन । यद्वा ' दिष्ट्या ' इत्यव्ययमानन्दे । अनुबध्नात्यविरतं पीडयति । **यत्सत्यमिति**—मां संतापयताप्येतेन तमपि संतापयता मदनेन मे ममानुकूलता दर्शिता । अंशेन भागेन न त्वद्यापि साकल्येन संगमघटनाभावात् । वितथा असत्या । प्रतिपत्तव्यमङ्गीकर्तव्यम् । महान्यो जनानां संमर्दः परस्परसंघर्षस्तस्माद्भीरुः । कालातिपातो

१ ०प्रसरा २ किंचत्ताप्यंशेन ३ दशा ततः. ४ निष्पतेत्.

वनत्रयचूडामणिरस्तमुपगच्छति दिवसकरस्तद्गच्छामि सर्वथाभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचितोञ्जलिरेष मे परमो विभव इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिनाम्बायाः प्रविशता कनकवेत्रलताकरेण प्रतीहारीजनेन, कञ्चुकिलोकेन गृहीतताम्बूलकुसुमपटवासाङ्गरागेण, चामरव्यग्रपाणिना कुब्जकिरातबधिरवामनवर्षवरकलमूकानुगतेन परिजनेन, सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ। अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत्। तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृदया सर्वं नालक्षयम्।

गतायां च तस्यामस्तमुपगते भगवति हारीतहरितवाजिनि सरोजिनीजीवितेश्वरे चक्रवाकसुहृदि सवितरि लोहितायमाने पश्चिमाशामुखे हरितायमानेषु कमलवनेषु नीलायमाने पूर्वदिग्भागे पातालपङ्ककलुषेण महाप्रलयजलधिपयःपूरेणेव तिमिरेणावष्टभ्यमाने जीवलोके किंकर्तव्यतामूढा तरलिकामपृच्छम्। अयि तरलिके, कथं न पश्यसि दृढमाकुलं मे हृदयमप्रतिपत्तिविह्वलानि चेन्द्रियाणि। न स्वयमण्वपि कर्तव्यमलमस्मि ज्ञातुम्। उपदिशतु मे भवती यदत्र सांप्रतम्। अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः। यदि तावदितरकन्यकेव विहाय लज्जामुत्सृज्य धैर्यमवमुच्य विनयमचिन्तयित्वा जनापवादमतिक्रम्य सदाचारमुल्लङ्घ्य शीलमवगणय्य कुलमङ्गीकृत्यायशो रागान्धवृत्तिरननुज्ञाता पित्रानानु-

---

वेलातिक्रमः। अभिमतसुहृदः प्राणास्तेषां रक्षा सैव दक्षिणा तस्या इति तदर्थम्। एषोञ्जलिबन्धरूपो मे परमो विभवः प्रकृष्टं सामर्थ्यम्। नातः परं किमपि कर्तुं शक्नोमीति भावः। कनकवेत्रलता करे यस्य। 'पद्मपाणिरित्यादिप्रयोगदर्शनात्। न सप्तम्यन्तस्य बहुव्रीहौ' इत्यनेन पूर्वनिपातः।" इति भानु०। गृहीतास्ताम्बूलं नागवल्लीदलवीटिका कुसुमानि पटवासः पिष्टातकोङ्गरागो विलेपनं च येन। चामरैर्व्यग्र आकुलः पाणिर्यस्य तेन। कुब्जेति—एते शब्दा व्याख्यातचराः। हारीतः पक्षिविशेषः स इव हरिता वाजिनोश्वा यस्य। पश्चिमाशामुखे पश्चिमदिङ्मुखे। हरितायमानेषु नीलायमानेषु। अवष्टभ्यमाने व्याप्यमाने। किंकर्तव्यतामूढा प्रतिपत्तिशून्या। अप्रतिपत्तिः कर्तव्यतानिश्चयशून्यता तया विह्वलानि व्याकुलानि। सांप्रतं युक्तम्। इतरकन्यका इतरा नीचकुलोत्पन्ना कन्यका। रागान्धवृत्तिः—रागेण विषयाभिलाषेणान्धा वृत्तिर्वर्तनं

---

१ बर्बरविकलमूक. २ अनुयायिनेन. ३ शून्यानि.

मोदिता मात्रा स्वयमुपगम्य ग्राहयामि पाणिमेवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोम्येवमपि प्रथमं तावत्स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः । पुनरपरं यदि कदाचित्तस्य जनस्य मत्कृतादाशाभङ्गात्प्राणविपत्तिरुपजायते तदपि मुनिजनवधजनितं महदेनो भवेत् । इत्येवमुच्चारयन्त्यामेव मय्यासन्नचन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरता वासवी दिगयासीत् ।

ततः शशिकेसरिकरविदार्यमाणतमःकरिकुम्भसंभवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमानमुदयगिरिसिद्धसुन्दरीकुचच्युतेन चन्दनचूर्णराशिनेव पाण्डुरीक्रियमाणं चलितजलधिजलकल्लोलानिलोल्लासितेन वेलापुलिनसिकतोद्गमेनेव पाण्डुतामापाद्यमानं पश्चिमेतरदिन्दुधाम्ना दिगन्तरमदृश्यत । शनैः शनैश्चन्द्रदर्शनान्मन्दस्मिताया दशनप्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत् । तदनुरसातलादवनीमवदीर्योद्गच्छता शेषफणमण्डलेनेव

यस्याः । गुरुजनः पूज्यो मातृपित्रादिस्तस्यातिक्रमान्मर्यादोल्लङ्घनात् । इतरपक्षोऽनभिसरणरूपस्तदाश्रयणद्वारेण । प्रथमः प्रणयो याच्ञा यस्य । 'आद्यस्नेहवतः' इ० भानु० । एनः पातकम् । आसन्नो निकटो यश्चन्द्रोदयस्तस्माज्जन्म यस्य । धूसरतामीषत्पाण्डुताम् । 'ईषत्पाण्डुस्तु धूसरः' इत्यमरः । वासवी दिक् प्राची । **तत इति**–तत इन्दुधाम्ना पश्चिमेतरत् पौर्वं दिगन्तरमदृश्यत । कथमित्याकांक्षायामाह–**शशीति**–शश्येव विदारणकर्तृत्वसाम्यात् केसरी सिंहस्तेन विदार्यमाणौ नीलत्वसाम्यात्तम एव करी तस्य कुम्भौ ताभ्यां संभवो यस्य तेन । मुक्ताफलक्षोदेन मौक्तिकचूर्णेन । उत्तमजातिगजा हि मुक्ताकरा इति गजशास्त्रकारा मन्यन्ते । तदुक्तम्–करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥ **उदयेति**–उदयगिरौ या सिद्धसुन्दर्यः सिद्धा देवयोनिविशेषास्तेषामङ्गनास्तासां कुचेभ्यश्च्यूतेन गलितेन । **चलितेति**–चलितं वेल्लितं यज्जलधिजलं तस्य कल्लोलानिलेन तरङ्गवातेनोल्लासितेनोल्लासं प्रापितेन । वेलापुलिनस्य सिकता वालुका तस्या उद्गमेनोर्ध्वं गमनेन । चन्द्रदर्शनान्नायकनिरीक्षणान्मन्दं मन्दं स्मितं यस्यास्तस्या निशावध्वाः । **तदन्विति**–अत्र भानुचन्द्रः–'अत्र रजनिकरबिम्बमात्रग्रहणेन चन्द्रस्य बालभावप्रकटीकरणात्समुपारूढातिरागेणेति पूरणीयम् । ततश्च चन्द्रोदयकालेऽतीवारुण्यं बालत्वात् । तदनन्तरं च तरुणावस्थायामारुण्यमात्रम् । अत एव समुपारूढरागेणेत्येवाग्रे विशेषणम् । तथा शेषफणेत्यत्रानवरतकमलाकरकमलतल-

१ करेति नास्ति क्वचित्. २ अवदीर्य.

रजनीकरबिम्बेनाराजत रजनी। क्रमेण च सकलजीवलोकानन्दकेन कामिनीजनवल्लभेन किंचिदुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेण सुरतोत्सवोपभोगैकयोग्येनामृतमयेन यौवनेनेवारोहता शशिना रमणीयताम-नीयत यामिनी।

अथ तं प्रत्यासन्नसमुद्रविद्रुमप्रभापाटलितमिवोदयगिरिसिंहकरतलाहतहरिणशोणितशोणीकृतमिव रतिकलहकुपितरोहिणीचरणालक्तकरसलाञ्छितमिवाभिनवोदयरागलोहितं रजनिकरमुदितं विलोक्यान्तर्ज्वलितमदनानलाप्यन्धकारितहृदया तरलिकोत्सङ्गविधृतशरीरापि मन्मथहस्तवर्तिनी चन्द्रगतनयनापि मृत्युमालोकयन्ती तत्क्षणमचिन्तयम्। एकत्र खलु मदनमधुमासमलयमारुतप्रभृतयः समस्ताः। एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम्। इदमतिदुर्विषहमदनवेदनातुरं च मे हृदयम्। अस्य चोद्गमनमिदं सदाहज्वरग्रस्तस्याङ्गारवर्षः शीतार्तस्य तुषारपातो विषस्फोटमूर्च्छितस्य कृष्णसर्पदंशः। इत्येवं विचिन्तयन्तीमेव चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत्। अचिरेण च संभ्रान्ततरलिकोपनीताभिश्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्तेनेवाधिष्ठिता विषादेन मल्ललाटविधृतस्रवच्चन्द्रकान्तमणिशलाकामविच्छिन्नबाष्पजलधारान्धकारितमुखीं रुदतीं तरलिकामपश्यम्। उन्मीलितलोचनां च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण

ललितहरिपदाम्बुजप्रभारुणेनेति पूरणीयम्। तेन सर्वं साम्यमुपपद्यते"। इति। **सकलेति**—आनन्दकेन शशिना यौवनेन च। सुरतोत्सवो रतिक्षणस्तस्योपभोग एकयोग्येन सर्वथोचितेन यौवनेन शशिना च। **अथेति**—अथाभिनवः प्रत्यग्रो यो रागस्तेन लोहितं रक्तमत एव प्रत्यासन्नः समीपवर्ती यः समुद्रस्तस्मिन्ये विद्रुमाः प्रवालास्तेषां प्रभया पाटलितमिव। उदयगिरौ यः सिंहस्तस्य करतलेनाहतो यो हरिणः स्वमण्डलवर्ती तस्य शोणितेन रुधिरेण शोणीकृतं रक्तीकृतमिव। अन्धकारितहृदया मोहेनेति शेषः। अत्र सर्वत्रापिशब्दो विरोधालंकारद्योतकः। समस्ताः संहताः। एकत्र—अनेन चन्द्रस्य कामादीनामपेक्षयोद्दीपकत्वप्रकर्षः सूचितः। अतिदुर्विषहाश्च ता मदानवेदनाश्च ताभिः आतुरं विह्वलम्। अङ्गारवर्षोऽग्निस्फुलिङ्गवृष्टिः। विषं गरलं तस्य स्फोटस्तज्जनितो विस्फोटस्तेन मूर्च्छितस्य। कमलवनस्य म्लानिः संकोचः सैव निद्रा। मूर्तेन मूर्तिमता विषादेन। मल्ललाटे ममालीके विधृता स्रवन्ती जलं क्षरन्ती च[illegible]कान्तमणिशलाका यया ताम्। अविच्छिन्ना संतता बाष्पजलधारा तयान्धकारितं

१ निजहरिण. २ विस्फोट. ३ म्लानि.

करयुगलेन बद्धाञ्जलिरवादीत्। भर्तृदारिके किं लज्जया गुरुजनापेक्षया वा। प्रसीद प्रेषय माम्। आनयामि ते हृदयदयितं जनम्। उत्तिष्ठ स्वयं वा तत्र गम्यताम्। अतः परमसमर्थासि सोढुमिमं प्रबलचन्द्रोदयविजृम्भमाणोत्कलिका-शतमुदधिमिव मकरचिह्नम्। इत्येवंवादिनीं तामवोचम्। उन्मत्ते किं मन्मथेन। नन्वयं सर्वविकल्पानपहरन्सर्वोपायदर्शनान्युत्सारयन्सर्वानन्तरायानन्तरयन्सर्वसंदेहा-नपनयन्सर्वशङ्कास्तिरस्कुर्वल्लँज्जामुन्मूलयन्स्वयमभिगमनलाघवदोषमावृण्वन्काला-तिपातं परिहरन्नागत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः। तदुत्तिष्ठ यथाकथंचिदनुगमनेन जीविता संभावयामि हृदयदयितमायासकारिणं जनम्। इत्यभिदधाना मदनमूर्च्छाखेदविह्वलैरङ्गैः कथंचिदवलम्ब्य तामेवोदति-ष्ठम्। उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम्। उपजा-तशङ्का चाचिन्तयमिदमपरं किमप्युपक्षिप्तं दैवेनेति।

अथ नातिदूरोद्गतेन त्रिभुवनप्रासादमहाप्रणालानुकारिणा सुधासलिलप्लवा-निव वहता चन्दनरसनिर्झरनिकरानिव क्षरता श्वेतगङ्गाप्रवाहसहस्राणीव वम-तामृतसागरपूरानिवोद्गिरता चन्द्रमण्डलेन प्लाव्यमाने ज्योत्स्नया भुवनान्तराले,

विच्छायितं मुखं यस्याः। **प्रबलेति**—प्रबलचन्द्रोदयेन प्रौढचन्द्रोदयेन विजृम्भमाणा उत्कलिका उत्कण्ठास्तरङ्गाश्च तासां शतं यस्मिन्। मकरः चिह्नं ध्वजो लक्षणं च यस्य तं काम-मुदधिं च। उदधेर्मकरालयत्वात्तथात्वम्। उन्मत्ते उन्मादवति। उन्मादश्चित्तविभ्रमः। अथोद्दीपकचन्द्रोदयसंधुक्षितोत्कण्ठातिशयं व्यञ्जयन्नाह-सर्वविकल्पान् सर्वान् विकल्पान् विविध-कल्पना अपहरन्दूरीकुर्वन्। अन्तरायान्विघ्नान्। अन्तरयन् तिरयन्। संदेहान् संशयान्। शङ्का वितर्कान्। कालातिपातं कालयापनम्। कुमुदबान्धवश्चन्द्रः। विरहोत्कण्ठिताया मम तमभिगमनं मरणं वैकं शरणमिति भावः। **यथेति**—जीविता यावन्न म्रिये तावद्यथा कथं-चिदनुगमनेन संभावयामि इ०। यद्वा अनुगमनेन हेतुना यथाकथंचिज्जीविता प्राणान्धारयन्ती अगमने मरणमिति भावः। दुर्निमित्तनिवेदकमशुभसूचकमित्यर्थः। स्त्रीणां दक्षिणाक्षिस्पन्दोऽशु-भसूचक इति शकुनशास्त्रज्ञाः। उपक्षिप्तं प्रस्तुतम्। **अथेति**—अथ प्रदोषसमय एव तस्मात्प्रा-सादशिखराद्रक्तांशुकेन कृतशिरोवगुण्ठना तस्मात्प्रासादशिखरादवातरमित्यन्वयः। कस्मिन्सति। चन्द्रमण्डलेन ज्योत्स्नया भुवनान्तराले प्लाव्यमाने पूर्यमाणे सति। **त्रिभुवनेति**—त्रिभुवनमेव प्रासादस्तस्य महाप्रणालो विशालनिर्गममार्गस्तस्यानुकारिणा सदृशेन। अनेनास्य ज्योत्स्नास-लिलेन त्रिभुवनप्लवनसामर्थ्यं सूचितम्। ज्योत्स्नायाः त्रिभुवनाह्लादकत्वादिसाम्यादाह **सुधेति**—०प्लवान् पूरान्। सन्तापनिर्वापणसाम्यादाह चन्दनेति। ०निर्झरनिकरान्प्रवाह०

१ तामहम्. २ अनुगमनजीविता-यथा, अनुद्रुतजीविता. ३ स्वेद. ४ पूरान्. ५ आप्लाव्यमाने.

श्वेतद्वीपनिवासमिव सोमलोकदर्शनसुखमिवानुभवति जने, महावराहदंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्ध्रियमाणे महीमण्डले, प्रतिभवनमङ्गलनाजनेन विकचकुमुदगन्धैश्चन्दनोदकैरुपह्रियमाणेषु चन्द्रोदयार्घेषु कामिनीप्रहितसुरतदूतीसहस्रसंकुलेषु राजमार्गेषु, नीलांशुकरचितावगुण्ठनासु चन्द्रालोकभयचकितासु कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितास्वितस्ततः पलायमानास्वभिसारिकासु, प्रतिकुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु, स्फुटितकुमुदवनबहलधूलिधवलितोदरे निशानदीपुलिनायमानेन्तरिक्षे, चन्द्रोदयानन्दनिर्भरे महोदधाविव रतिरसमय इवोत्सवमय इव विलासमय इव प्रीतिमय इव जीवलोके, शशिमणिप्रणालनिर्झरे प्रमोदमुखरमयूरवरम्ये प्रदोषसमये गृहीतविविधकुसुमताम्बूलाङ्गरागपटवासचूर्णया तरलिकयानुगम्यमाना तेनैव मूर्च्छानिहितेन किंचिदाश्यानचन्दनललाटिकालग्नधूसराकुलालकेन चन्दनरसचर्चाङ्गरागवेषेणार्द्रेण तथैव च तया कण्ठस्थितया अक्षमालया श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्या पद्मरागरत्नरश्मिनिर्मितेनेव रक्तांशुकेन कृतशिरोवगुण्ठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशिखरादवातरम् ।

अवतीर्य च पारिजातकुसुममञ्जरीपरिमलाकृष्टेन रिक्तीकृतोपवनेन कुमुदवनान्यपहाय धावता मधुकरजालेन नीलपटावगुण्ठनविभ्रममिव संपादयता

---

समूहान् । उद्गिरता वमता । **श्वेतेति**–सुधासितया चन्द्रिकया प्लावितत्वादिदम् । उपह्रियमाणेषु प्रतिपाद्यमानेषु । नीलांशुकेन श्यामवस्त्रेण रचितमवगुण्ठनं शिरोवेष्टनं याभिः । तदुक्तं विश्वनाथेन 'संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा । अवगुण्ठनसंवीता कुलजाभिसरेद्यदि' ॥ इति । ० चकितासु त्रस्तासु । प्रबुद्ध्यमानासु विकासं प्राप्यमाणासु । स्फुटितानि विकसितानि यानि कुमुदवनानि कैरवखण्डानि तेषां धूलिः परागस्तया धवलितमुदरं यस्य तस्मिन् । निशा एव नदी तस्याः पुलिनायमाने तोयोत्थितप्रदेशायमाने । चन्द्रोदयरूपश्चन्द्रोदयेन वा य आनन्दस्तस्य निर्भरोतिशयो यस्मिन् । शशिमणयश्चन्द्रकान्ता एव जलस्राविलात्प्रणाला जलमार्गास्तेषां निर्झराः स्रुतयो यस्मिन् । मूर्च्छायां निहितेन । **किंचिदिति**–किंचिदाश्याना शुष्का या चन्दनललाटिका तस्यां लग्ना अत एव धूसरा किंचित्पाण्डुरा आकुला विकीर्णा अलका यस्मिन् । **चन्दनेति**–मलयजरसविलेपनमेवाङ्गरागो यस्मिन्नेवंविधो वेषो नेपथ्यं तेन । **अवतीर्येति**–रिक्तीकृतमुपवनं येन सर्वेषां तत्र गमनात् । नीलपटेन यदवगुण्ठनं तस्य विभ्रमं भ्रान्तिम् । तरलिका

---

१ सनीलोत्पलप्रभासु. २ प्रीतिमय इव मदनमय इव विलासमय इव.

नुबध्यमानाना प्रमदवनपक्षद्वारेण निर्गत्य तत्समीपमुदचलम् । प्रयान्ती च तरलिकाद्वितीयमपरिजनमात्मानमवलोक्याचिन्तयम् । प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव कृत्यं बाह्येन परिजनेन । नन्वेत एव परिजनलीलामुपदर्शयन्ति । तथा हि समारोपितशरासनासक्तसायकोनुसरति कुसुमायुधः । दूरप्रसारितकरः कर्षति शशी । प्रस्खलनभयात्पदे पदेवलम्बते रागः । लज्जां पृष्ठतः कृत्वा पुरः सहेन्द्रियैर्धावति हृदयम् । निश्चयमारोप्य नयत्युत्कण्ठेति । प्रकाशं चावदम् । अयि तरलिके अपि नाम मामिवायमिन्दुहतकस्तमपि किरणकचग्रहाकृष्टमभिमुखमानयेत् । इत्येवंवादिनीं च मां मा विहस्याब्रवीत् । भर्तृदारिके मुग्धासि । किमस्य तेन जनेन । अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकायां तास्ताश्चेष्टाः करोति । तथा हि । प्रतिबिम्बच्छलेन स्वेदसलिलकणिकाचितं चुम्बति कपोलयुगलम् । लावण्यवति पयोधरभारे निपतति प्रस्फुरितकरः । स्पृशति रशनामणीन् । निर्मलनखलग्नमूर्तिः पादयोः पतति । किं चास्य मदनातुरस्येव वपुस्तापाच्छुष्कचन्दनानुलेपपाण्डुतामुद्वहति । मृणालवलयधवलान्करान्धत्ते । प्रतिमाव्याजेन स्फटिकमणिकुट्टिमेषु निपतति । केतकीगर्भकेसरधूसरपादः कुमुदसरांस्यवगाहते । सलिलसीकरार्द्रांञ्छशिमणीन्करैरामृशति । द्वेष्टि विघटितचक्रवाकमिथुनानि कमलवनानि । एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमुपागमम् । तत्र च मार्गलताकुसुमरजोधूसरं चरणयुगलं कैलासतटः [illegible]तचन्द्रकान्तमणिप्रस्रवणे प्रक्षालयन्ती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं

---

द्वितीया यस्य तम् । ननु ध्रुवमेते अग्रे वक्ष्यमाणाः कामादयः । समारोपितमाततज्यीकृतं यच्छरासनं तत्रासक्तो निहितः सायको येन । कर्षति गमनाय प्रोत्साहयतीत्यर्थः । निश्चयमारोप्य ध्रुवं प्रियसमागमो भावीति निश्चयम् । किरणैर्यः कचग्रहस्तेनाकृष्टम् । **किमस्येति**–अस्य तेन मुनिकुमारेण पीडितेन किम् । अयं चन्द्रहतको भर्तृदारिकायां तास्ताश्चेष्टाः कामिजनोचिताः करोति । स्वस्यैव त्वयि साभिलाषत्वादिति भावः । **स्वेदेति**–०चितं व्याप्तम् । प्रस्फुरितः कम्पितः करो यस्य । पक्षे कराः किरणाः । तापान्मदनज्वराच्छुष्को यश्चन्दनानुलेपस्तद्वत्पाण्डुताम् । **प्रतिमेति**–निपतति तापनिवृत्तिहेतोरिति शेषः । आमृशति परामृशति । विघटितानि वियोजितानि भूतानि चक्रवाकमिथुनानि यैः । चन्द्रोदयेन प्रस्नुता ये चन्द्रकान्तमणयस्तेषां

---

१ द्वितीयपरिजनम्. २ करः करमिवः ३ करेण. ४ भर्तृदारिकायाः ५ काङ्क्षितम्, ६ चन्दनालेप. ७ प्रस्नुत.

विप्रकर्षान्नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहित-शङ्का तेन सुतरामवदीर्णहृदयेव किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तरात्मना तरलिके किमिदमिति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखमतित्वरितम-गच्छम् ।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादं हा हतोस्मि हा दग्धोस्मि हा वञ्चितोस्मि हा किमिदमापतितं किं वृत्तमुत्सन्नोस्मि दुरात्मन्मदनपिशाच पाप निर्घृण किमिदमकृत्यमनुष्ठितम्, आः पापे दुष्कृतकारिणि दुर्विनीते महाश्वेते किमनेन तेऽपकृतम्, आः पाप दुश्चरित चन्द्रचाण्डाल कृतार्थोसीदानीम्, अपगत-दाक्षिण्य दक्षिणानिलहतक पूर्णास्ते मनोरथाः कृतं कर्तव्यं वहेदानी यथेष्टं, हा भगवञ्श्वेतकेतो पुत्रवत्सल न वेत्सि मुषितमात्मानं, हा धर्म निष्परिग्रहोसि हा तपो निराश्रयमसि हा सरस्वति विधवासि हा सत्यमनाथमसि हा सुरलोक शून्योसि सखे प्रतिपालय मामहमपि भवन्तमनु-यास्यामि न शक्नोमि भवता विना क्षणमप्यवस्थातुमेकाकी, कथमपरिचित इवा-दृष्टपूर्व इवाद्य मामेकपद उत्सृज्य प्रयासि, कुतस्तवेयमतिनिष्ठुरता कथय त्वदृते क्व गच्छामि कं याचे कं शरणमुपैम्यन्धोस्मि संवृत्तः शून्या मे दिशो जाता निरर्थकं जीवितमप्रयोजनं तपो निःसुखाश्च लोकाः केन सह परिभ्रमामि कमालपाम्युत्तिष्ठ देहि ते प्रतिवचनं क्व तन्ममोपरि सुहृत्प्रेम क्व सा स्मितपूर्वा-भिभाषिता चेत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् ।

तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा सरस्तीरलतासक्ति-

प्रस्रवणं जलनिर्झरस्तस्मिन् । विप्रकर्षाद्दूरात् । उपालक्षयमुपलक्षितवती । **अथेति**–निशीथोर्ध-रात्रस्तस्य प्रभावात् । तस्य प्रशान्तत्वात् । विभाव्यमानो ज्ञायमानः स्वरो यस्य । उत्सन्नः छिन्नमूलः सर्वथा विनष्ट इत्यर्थः । अपगतं दाक्षिण्यमनुकूलाचारो यस्य । पक्षं दक्षिणदिग्भावि-त्वम् । निष्परिग्रहो निष्परिवारो निर्मूलो निराधार इति वा । 'परिग्रहः कलत्रेपि मूलस्वीकार-योरपि । शपथे परिवारे च' इत्यजयः । **तच्च श्रुत्वेति**–मुक्त एकस्तारोत्युच्च आक्रन्दः क्रन्दनशब्दो यया । सरस्तीरे या लतास्तास्वासक्त्या परिलग्नतया त्रुट्यमानं पात्यमानमंशुकं परिधानमुत्तरीयं च यस्याः । 'अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोः' इति शब्दार्णवः ।

१ विदीर्ण. २ उच्छिन्नः. ३ आलपामि केन सह वार्ता करोमि. ४ लताभञ्ज्यमान.

त्रुट्यमानांशुकोत्तरीया यथाशक्ति त्वरितैरज्ञातसमविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शिशिरसीकरासारस्राविणि शशिमणिशिलातले विरचितं कुमुदकुवलयकमलविविधवनकुसुमसुकुमारमालामयमिव मृणालमयं कुसुमशरसायकमयमिव शयनमधिशयानम्, अतिनिष्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्; अन्तःकोपशमितमदनसंतापतया तत्क्षणलब्धसुखप्रसुप्तमिव मनःक्षोभप्रायश्चित्तप्राणायामावस्थितमिव, अतिप्रस्फुरितप्रभेण त्वत्कृते ममेयमवस्थेति कथयन्तमिवाधरेण, इन्दुद्वेषपरिवर्तितदेहतया पृष्ठभागनिपतितैर्मदनदहनविह्वलहृदयन्यस्तहस्तनखमयूखच्छलेन च्छिद्रितमिव शशिकिरणैः, उच्छुष्कपाण्डुरया स्वविनाशोत्पातोत्पन्नया मदनचन्द्रकलयेव चन्दनलेखिकया रचितललाटिकम्, मत्तः प्रियतरस्तवापरो जनो जात इति कुपितेनेव जीवितेन परित्यक्तं, मन्मथव्यथया सहैतानसून्स्वयमिवोत्सृज्य निश्चलतामुपगतवन्तम्, अनङ्गयोगविद्यामिव ध्यायन्तम्, अपूर्वप्राणायाममिवाभ्यस्यन्तम्, उ-

---

अज्ञातो यः समविषमभूमिभागस्तत्र विन्यस्तैः। **कुसुमेति**—सन्तापशान्त्यर्थं विरचितस्य तस्योद्दीपकत्वादिदम्। अभिलषितशब्दश्रवणोत्सुको हि निरुद्धेतरव्यापारो भवतीत्याह अतिनिष्पन्दतयेति। अन्तःकोपेन मदनागमनकृतेन शमितो मदनसन्तापो यस्य तस्य भावस्तत्ता तया। उष्णेन हि उष्णं शाम्यतीति वैद्यकम्। सुखेन प्रसुप्तमिव। मनःक्षोभस्य मुनेरनुचितस्य प्रायश्चित्तरूपः प्राणायामस्तत्रावस्थितमिव। इन्दुद्वेषात्परिवर्तितोऽधोमुखीकृतो देहो येन तस्य भावस्तत्ता तया। पृष्ठभागनिपतितैः शशिकिरणैः छिद्रितामिव। कृतरन्ध्रमिव। पृष्ठं भित्त्वा शरीरपुरोभागगमनाभावे कथमित्याशङ्क्याह—मदनदहनेन विह्वलं यद्धृदयं तत्र न्यस्तो यो हस्तस्तस्य नखमयूखमिषेण। उच्छुष्का चासौ पाण्डुरा च तया। स्वविनाशलक्षण उत्पातस्तदर्थमुत्पन्नया। **अनङ्गेति**—अनङ्गसम्बन्धिनी योगविद्या तद्वशीकरणविद्येत्यर्थः। यद्वा अनङ्गम यो योगस्तद्विद्या ताम्। **अपूर्वम्**—श्वासोच्छ्वासयोरसत्त्वात्पूरकरेचकान्यतरत्वाकान्यतरत्वाभावादपूर्वत्वम्। उपपादितं

---

१ सीकरस्राविणि. २ ०सुकुमारं मालामयम्. ३ अन्तः कृतात्मापेशामित; अन्तःक्रोधक्षोभशमित. ४ मुनिक्षोभ. ५ स्व—स्वदेह—विनाशोत्पन्नया. ६ भानुचन्द्रस्त्वस्मात्परं—ईषद्वालक्ष्यपरिवृत्ततारकेणानवरतरोदनाताम्रेण प्राणोत्सर्गोपजाताश्रुक्षयतया रुधिरमिव क्षरता मदनशरशल्य वेदनाकुणितार्धभागेन नातिमीलितेन लोचनयुगलेन, इति ग्रन्थमाधिकं पठति। लोचनयुगलेनेत्यस्मात्परं 'मामसूययेव विलोकयन्त ' इत्याधिकं पुस्तकान्तरे. ७ अतिप्रियतरः. ८ मन्मथव्यथासमनु ९ निश्चलतामुपगतम्.

पपादितास्मदागमनेन प्रणयादिवापहृतप्राणपूर्णपात्रमनङ्गेन, रचितचन्दनललाटिकात्रिपुण्ड्रकं धृतसरसबिससूत्रयज्ञोपवीतम्, अंसावसक्तकदलीगर्भपत्रचारुचीरमेकावलीविशालाक्षमालमविरलामलकर्पूरक्षोदभस्मधवलमाबद्धमृणालरक्षाप्रतिसरमनोहरं मनोभवव्रतवेषमास्थाय मत्समागममन्त्रमिव साधयन्तं, [ ईषदालक्ष्यपरिवृत्ततारकेण ] अविरतरोदनाताम्रेण प्राणोत्सर्गोपजाताश्रुक्षयतयागतरुधिरेणेव मदनशरशल्यवेदनाकूणितत्रिभागेण 'कठिनहृदये दर्शनमात्रकेणापि न पुनरनुगृहीतोयमनुगतो जनः' इति सप्रणयं मामुपालभमानमिव चक्षुषा, किंचिद्विवृताधरतया जीवितमपहर्तुमन्तःप्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागं, मन्मथव्यथाविघटमानहृदयनिहितेन वामेन पाणिना प्रसीद प्राणैः समं प्राणसमे न गन्तव्यमिति हृदयस्थितां मामिव धारयन्तम्, इतरेण च नखमयूखदन्तुरतया चन्दनमिव स्रवतोत्तानीकृतेन चन्द्रातपमिव निवारयन्तम्, अन्तिकस्थितेन अचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तपःसुहृदा कमण्डलुना समुपेतं, कण्ठाभरणीकृतेन च मृणालवलयेन रजनिकरकिरणपाशेनेव संयम्य लोकान्तरमुपनीयमानं, कपिञ्जलेन मद्दर्शनादब्रह्मण्यमित्यत्यूर्ध्वहस्तेन द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तं तत्क्षणविर्गतजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम् ।

---

सम्पादितमस्मदागमनं येन । अपहृतं प्राणा एव पूर्णपात्रं व्याख्यातपूर्वं यस्य । रचितं चन्दनेन ललाटिकायां त्रिपुण्ड्रं येन । पूर्वमर्धचन्द्राकारललाटिकावर्णनम् । अधुना तदुपरि स्थितस्य त्रिपुण्ड्रस्येत्यपुनरुक्तिः । पुनश्च मनोभवव्रतवेषमास्थाय मत्समागममन्त्रमिव साधयन्तम् । वेषमेव विशिनष्टि धृतेत्यादिना । धृतं सरसं बिसमेव यज्ञोपवीतं यस्मिन् । अंसावसक्तं कदलीगर्भपत्रमेव चारु चीरं यस्मिन् । आबद्धो मृणालस्य रक्षार्थे प्रतिसरो हस्तसूत्रं तेन मनोहरम् । भानुचन्द्रस्त्वर्थसौष्ठवमपश्यन् धृतेत्यादीनि मृणालेत्यायन्तानि विशेषणानि 'महाभागम्' इतिविशेष्यपरतया योजयंति । [ **ईषदिति** ईषदालक्ष्या किंचिदृश्या परिवृत्ता घूर्णिता तारा यस्य तेन ] **प्राणेति**-प्राणोत्सर्गः प्राणपरित्यागस्तेन जातो योश्रुक्षयस्तस्य भावस्तत्ता तया अश्रुक्षयात्ताम्रताप्रकटदर्शनादाह आगतेति **मदनेति**-मदनशराणां शल्यान्यन्तः स्थितायोग्राणि तैर्या वेदना तया कूणित ईषत्संकुचितस्त्रिभागस्तृतीयो भागो यस्य । अनुगतोनुरक्तः । उपालंभमानं निर्भर्त्सयमानम् । पुनश्च दशनांशुभिर्धवलितपुरोभागम् । दशनांशूनुत्प्रेक्षते जीवितेति । प्राणैः समं सह न गन्तव्यमिति । इतरेण दक्षिणेन । दन्तुरतया विषमितितया । दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु इति । मेदिनी । अब्रह्मण्यम्-ब्रह्मणि साधु ब्रह्मण्यं । तत्र साधुः इति यत् । न ब्रह्मण्यमब्रह्मण्यम् । अब्रह्मण्यमवध्योक्तौ ( वधं नार्हतीत्युक्तौ ) इत्यमरः ।

१ रचितललाटिका. २ रक्षापरिसर, रतयातिम०. ३ रुधिरमिव स्रवता. ४ अपक्रान्त.

उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा क्वाहमगमं किमकरवं किं व्यलपमिति सर्वमेव नाज्ञासिषम् । असवश्च मे तस्मिन्क्षणे किमतिकठिनतयास्य मूढहृदयस्य किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य किं विहिततया दीर्घशोकस्य किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य किं दुःखदाननिपुणतया दग्धदैवस्य किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य केन हेतुना नोदगच्छन्ति स्म तदपि न ज्ञातवती । केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । अश्रद्दधाना चासंभावनीयं तत्तस्य मरणमात्मनश्च जीवितमुत्थाय हा हा किमिदमुपनतमिति मुक्तार्तनादा हा अम्ब हा तात हा सख्य इति व्याहरन्ती हा नाथ जीवितनिबन्धन आचक्ष्व क्व मामेकाकिनीमशरणामकरुण विमुच्य यासि पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः प्रसीद सकृदप्यालप दर्शय भक्तवत्सलतामीषदपि विलोकय पूरय मे मनोरथमार्तास्मि भक्तास्म्यनुरक्तास्म्यनाथास्मि बालास्म्यगतिकास्मि दुःखितास्म्यनन्यशरणास्मि मदनपरिभूतास्मि किमिति न करोषि दयां कथय किमपराद्धं किं वा नानुष्ठितं मया कस्यां वा नाज्ञायामादृतं कस्मिन्वा त्वदनुकूले नाभिरतं येन कुपितो दासजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात्, अलीकानुरागप्रतारणकुशलया किं वा मया वामया पापया याहमद्यापि प्राणिमि हा हतास्मि मन्दभागिनी कथं न त्वं जातो न विनयो न बन्धुवर्गो न परलोको धिग्मां

उद्भूतेति--उद्भूतः प्रादुर्भूतो मूर्च्छान्धकारो मोहकश्मलं यस्याः । मूढहृदयस्य स्वस्यैव संतापवितते र्मूढत्वम् । हतशरीरस्य दग्धदेहस्य । अत्र हतशब्दो निन्दावाची । विहिततया अवश्य भोक्तृत्वतया .जन्मान्तरोपात्तस्य भवान्तरार्जितस्य । एकान्तवामतया अत्यन्तप्रतिकूलतया । 'वामः कामे सव्ये पयोधरे । उमानाथे प्रतीकूले ' इति हैमः । विचेष्टमानं लुठन्तम् । मुक्त आर्तनाद आक्रन्दनशब्दो यया । जीवितनिबन्धन असुधारणकारण । अगतिका निरवलम्बा । **अनन्येति**-नास्त्यन्यत् शरणं त्राणं यस्याः सा । किमपराद्धं कोपराधः कृतः । भावे क्तः । नादृतमादरो न कृतः । नाभिरतं रागो न कृतः । कौलिनात् शरणागतपरित्यागजनितजनापवादात् । '**कौलीनं** पशुभिर्युद्धे कुलीनत्वापवादयोः' । इति धरणिः । पक्षान्तरमुपन्यस्यति । **अलीकेति**-अलीको मिथ्या योनुरागस्तेन प्रतारणं वञ्चनं तत्र कुशलया मया किं वा स्यात् । कथं मे त्वं

१ पातालमिव. २ अकरुणम्. ३ 'प्रकटया परमां कृपालुताम्' इत्यधिकं क्वचित्. ४ दासीजनम्. ५ कथं मे न त्वं न तातः.

दुष्कृतकारिणीं यस्याः कृते तत्रेयमीदृशी दशा वर्तते नास्ति मत्सदृशी नृशंसहृदया याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती किं मे गृहेण किमम्बया किं वा तातेन किं बन्धुभिः किं परिजनेन वा कमुपयामि शरणमयि दैव दर्शय दयां विज्ञापयामि त्वां देहि दयितदक्षिणां भगवति भवितव्यते कुरु कृपां पाहि वनितामनाथां भगवत्यो वनदेवता. प्रसीदत प्रयच्छतास्य प्राणानव वसुंधरे सकललोकानुग्रहजननि रजनि किमर्थं नानुकम्पसे तात कैलास शरणागतास्मि ते दर्शय दयालुतामित्येतानि चान्यानि च व्याक्रोशन्ती कियद्वा स्मरामि ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहृतेव व्यलपम् । उपर्युपरिपरिपतितनयनजलधारानिकरच्छलेन विलीयमानेव द्रवतामिव नीयमाना जलाकारेणेवात्मीक्रियमाणा प्रलापाक्षैरपि दशनमयूखशिखानुगततया साश्रुधारैरिव निष्पतद्भिः, शिरोरुहैरप्यविरलविगलितकुसुमतया मुक्तबाष्पजलबिन्दुभिरिव, आभरणैरपि प्रसृतविमलमणिकिरणाश्रुतया प्ररुदितैरिवोपेता तज्जीवितायेवात्ममरणाय स्पृहयन्ती मृतस्यापि सर्वात्मना हृदयं प्रवेष्टुमिवेच्छन्ती करतलेन कपोलयोराश्यानचन्दनश्वेतजटामूले च ललाटे निहितसरसबिसयोश्चांसयोर्मलयजरसलवलुलितकमलिनीपलाशावगुण्ठिते च हृदये परामृशन्ती पुण्डरीक निष्ठुरोस्येवमप्यार्तां न गणयसि मामित्युपालभमाना मुहुर्मुहुरेनमन्वनयं मुहुर्मुहुः पर्यचुम्बं मुहुर्मुहुः कण्ठे गृहीत्वा व्याक्रोशम् । आः पापे त्वयापि मत्प्रत्यागमनकालं यादवस्यासवो

---

न जातो विनष्ट इत्यर्थः । अभिसरणाद्विमयोपि न जातः । एकमन्यत्र । दयितः पुण्डरीक एव दक्षिणा तां पुनर्जीवितदानरूपाम् । हे सकललोकानुग्रहजननि वसुन्धरे अव रक्ष । पुनश्च शोकातिशयं व्यञ्जयितुमुत्प्रेक्षते । दशनेति—दशनांशूनां प्रथमं स्फुरणादक्षराणां तदनन्तरं बहिर्निष्क्रमणादनुगतत्वम् । दशनमयूखाश्रुधारयोर्धवलत्वसंततत्वसाम्यादुपमानोपमेयभावः । प्रसृता वितता ये विमलमणीनां किरणास्त एवाश्रूणि येषां तेषां भावस्तत्ता तया । तज्जीविताय स जीवितः स्यादिति हेतोः । पुनश्च करतलेन परामृशन्ती स्पृशन्ती । केत्याह कपोलयोः इ० । आश्यानं किंचिच्छुष्कं यच्चन्दनं तेन श्वेतं जटामूलं यस्मिन् । मलयजरसलवैश्चन्दनद्रवबिन्दुभिर्लुलितानि चारूणि युक्तानि वा कमलिनीपलाशानि तैरवगुण्ठिते व्याप्ते । न गणयसि मय्यनादरं करोषीत्यर्थः । उपालभमाना सोल्लुण्ठनं वदन्ती । अन्वनयमनुनीतवती । अगर्हयं निरमर्त्सये । अवि-

---

१ मङ्गल. २ जीवितायेव. ३ स्पृशन्ती.

न रक्षिता इति तामेकावलीमगर्हयम् । अयि भगवन्प्रसीद प्रत्युज्जीवयैनमिति मुहुर्मुहुः कपिञ्जलस्य पादयोरपतम् । मुहुर्मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम् । अद्यापि चिन्तयन्ती न जानामि तस्मिन्काले कुतस्तान्यचिन्तितान्यशिक्षितान्यनुपदिष्टान्यदृष्टपूर्वाणि मे हतपुण्यायाः कृपणानि चाटुसहस्राणि प्रादुरभवन्कुतस्ते संलापाः कुतस्तान्यतिकरुणानि वैक्लव्यरुदितानि । अन्य एव स प्रकारः । प्रलयोर्मय इवोदतिष्ठन्नन्तर्बाष्पवेगानाम् । जलयन्त्राणीवामुच्यन्ताश्रुप्रवाहाणाम् । प्ररोहा इव निरगच्छन्प्रलापानाम् । शिखरशतानीवावर्धन्त दुःखानाम् । प्रसूतय इवोदपाद्यन्त मूर्च्छानाम् ।

इत्येवमात्मवृत्तान्तमावेदयन्त्या एव[1] तस्याः समतिक्रान्तं कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार मूर्च्छा । वेगान्निष्पतन्तीं च शिलातले तां ससंभ्रमं प्रसारितकरः परिजन इव जातपीडश्चन्द्रापीडो विधृतवान् । अश्रुजलार्द्रेण च तदीयेनैवोत्तरीयवल्कलप्रान्तेन शनैःशनैर्वीजयन्संज्ञां ग्राहितवान् । उपजातकारुण्यश्च बाष्पसलिलोत्पीडेन[2] प्रक्षाल्यमानकपोलयुगलो[3] लब्धचेतनामवादीत् । भगवति मया पापेन तवायं पुनरभिनवतामुपनीतः[4] शोको येनेदृशीं दशामुपनीतासि । तदलमनया कथया । संह्रियतामियम् । अहमप्यसमर्थः श्रोतुम् । अतिक्रान्तान्यपि हि संकीर्त्यमानानि [ प्रियजनविश्वासवचनानि ] अनुभवसमां[5] वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि। तन्नार्हसि कथंकथमपि विधृतानिमानसुलभानसून्पुनः पुनः स्मरणशोकानलेन्धनतामुपनेतुम्[6] ।

---

न्तितान्यतर्कितानि । कृपणानि दीनानि करुणानि वा । चाटुसहस्राणि प्रियप्रायवचनसहस्राणि । विक्लवस्य भावो वैक्लव्यं व्याकुलता तस्मात् रुदितानि । अन्यो भिन्नः अपूर्व इत्यर्थः । एव स प्रकारः । तमेव वर्णयति—प्रलयकाल ऊर्मयः प्रलयोर्मयः । अन्तर्ये बाष्पवेगा अश्रुरयास्तेषाम् । जलयन्त्राणि जलोद्गारयन्त्राणि । अश्रुप्रवाहाणां नेत्रजलपूराणाम् । प्ररोहा अङ्कुरा लक्षणया नवनवौघाः । उत्पत्तयो वा । प्रसूतयः प्रसवाः । समतिक्रान्तमतीतम् । कथमपि प्रयत्नेन अनुभवन्त्याः पुनरप्यनुभवविषयीकुर्वन्त्याः । बाष्पसलिलोत्पीडेन नेत्रजलप्रवाहेण । संह्रियतां संक्षिप्यताम् । सुहृज्जनस्य दुःखानि संकीर्त्यमानानि पुनरप्यनुभूयमानानीव व्यथां जनयन्तीत्यर्थः । अत्र प्रियजनेत्यधिकं केचित्पठन्ति तस्यार्थः—प्रियजनस्येष्टजनस्य विश्वासवचनानि विश्रम्भालापा येषु । स्मरणाद्यः

---

१ एष च. २ ० लोत्पीडनेन. ३ कपोलः. ४ पुनरपि नवताम्. ५ अनुभवसम-य-वेदनाम्. ६ शोकानल इन्धनताम्.

इत्येवमुक्त्वा दीर्घमुष्णं च निश्वस्य बाष्पायमाणलोचना सनिर्वेदमवादीत् । राजपुत्र या तदा तस्यामतिदारुणायां हतनिशायामेभिरतिनृशंसैरसुभिर्न परित्यक्ता ते मामिदानीं परित्यजन्तीति दूरापेतम् । नूनमपुण्योपहतायाः पापाया मम भगवानन्तकोपि परिहरति दर्शनम् । कुतश्च मे कठिनहृदयायाः शोकः । सर्वमिदमलीकमस्य दुरात्मनः शठहृदयस्य । सर्वथाहमनेन त्यक्तत्रपेण निरपत्रपाणामग्रेसरीकृता । यया चाविष्कृतमदनया वज्रमय्येवेदमनुभूतं तस्याः का गणना कथनं प्रति । किं वा परमतः कष्टतरमाख्येयमन्यद्भविष्यति यन्न शक्यते श्रोतुमाख्यातुं वा । केवलमस्य वज्रपातस्यानन्तरमाश्चर्यं यदभूत्तदावेदयामि । आत्मनश्च प्राणधारणकारणलव इवाव्यक्तो यः समुत्पन्नस्तं च कथयामि यया दुराशामृगतृष्णिकया गृहीताहमिदमुपरतकल्पं परकीयमिव भारभूतमप्रयोजनमकृतज्ञं च हतशरीरं वहामि तदलं श्रूयताम् ।

ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया तत्तद्बहु विलप्य तरलिकामब्रवम् । अभ्युत्तिष्ठ निष्ठुरहृदये कियद्रोदिषि । काष्ठान्याहृत्य विरचय चिताम् । अनुसरामि जीवितेश्वरमिति । अत्रान्तरे झटिति चन्द्रमण्डलविनिर्गतो गगनादवतीर्य केयूरकोटिलग्नममृतफेनपिण्डपाण्डुरं पवनतरलमंशुकोत्तरीयमाकर्षन्नुभयकर्णान्दोलितकुण्डलमणिप्रभानुरक्तगण्डस्थलः स्थूलमुक्ताफलतया तारागणमिव ग्रथितमतितारं हारमुरसा दधानो धवलदुकूलपल्लवकल्पितोष्णीषग्रन्थिः । अलिकुलनीलकुटिलकुन्तलनिकरविकटमौलिरुत्फुल्लकुमुद-

---

शोकः सं एवानलोभिस्तस्मिन्निन्धनतामिध्मताम् । दूरापेतमत्यन्तासंभाव्यम् । निरपत्रपाणां निर्लज्जानाम् । मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः । इत्यमरः । दुराशा दुष्पुराशेव मृगतृष्णिका मरीचिका तया । उपरतकल्पं मृतप्रायम् । केयूरयोः कोटिषु लग्नम् । अमृतस्य [illegible] । **अंशुकेति**—उत्तरीयं च तदंशुकं चांशुकोत्तरीयम् । राजदन्तादिषु पाठात् पूर्वप्रयोगः । **उभयेति**—उभौ च तत्कर्णौ चोभयकर्णौ । 'उभादुदात्तो नित्यम्' इति सूत्रे नित्यमिति योगो विभज्यते तेन उभयशब्दाद् वृत्तिविषये स्वार्थे अयज् भवति । अत्र समासवृत्तेः सत्त्वादयज् बोध्यः । तयोरान्दोलिते प्रेङ्खिते कुण्डले कर्णभूषणे तयोर्मणिप्रभयानुरक्तं गण्डस्थलं कपोलभागो यस्य । अतितारमतिमनोहरं स्थूलमतिशुद्धं वा । 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः । **धवलेति**—धवलदुकूलपल्लवेन श्वेतक्षौमप्रान्तदेशेन कल्पितः कृत उष्णीषग्रन्थिः शिरोवेष्टनबन्धनं वेष्टनमिति यावत्तेन । अलिकुलवन्नीलाः कुटिला वक्राः कुन्तलाः केशास्तेषां

---

१ सेदानीं परित्यजयत इति. २ अधिगतमदनवेदनया. ३ अवस्थान्ते. ४ ०निश्चयात्. ५ रोदिमि. ६ अतितारहारम्. ७ विचित.

कर्णपूरः कामिनीकुचकुङ्कुमपत्रलतालाञ्छितांसदेशः । कुमुदधवलदेहो महाप्रमाणः पुरुषो महापुरुषलक्षणोपेतो दिव्याकृतिः स्वच्छवारिधवलेन देहप्रभावितानेन क्षालयन्निव दिगन्तराण्यामोदिना च शरीरतः क्षरता शिशिरेण शीतज्वरमिव जनयतामृतसीकरनिकरवर्षेण तुषारपटलेनेवानुलिम्पन्गोशीर्षचन्दनरसच्छटाभिरिवासिञ्चन्नैरावतकरपीवराभ्यां बाहुभ्यां मृणालधवलाङ्गुलिभ्यामतिशीतलस्पर्शाभ्यां तमुपरतमुत्क्षिपन्दुन्दुभिनादगम्भीरेण स्वरेण वत्से महाश्वेते न परित्याज्यास्त्वया प्राणाः पुनरपि तवानेन सह भविष्यति समागम इत्येवमादृतः पितेवाभिधाय सहैवानेन गगनतलमुदपतत् । अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी किमिदमिति कपिञ्जलमपृच्छम् । असौ तु ससंभ्रममदत्त्वैवोत्तरमुदष्ठितम् । दुरात्मन्क मे वयस्यमपहृत्य गच्छसीत्यभिधायोन्मुखः संजातकोपो बध्नन्सवेगमुत्तरीयवल्कलेन परिकरमुत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात् । पश्यन्त्या एव च मे सर्व एव ते तारागणमध्यमविशन् ।

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशोकायाः सुतरामदीर्यत हृदयम् । किंकर्तव्यतामूढा च तरलिकामब्रवम् । अयि न जानासि किमेतदिति । सा तु तदवलोक्य स्त्रीस्वभावकातरा तस्मिन्क्षणे शोकाभिभाविना भयेनाभिभूता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत् । भर्तृदारिके न जानामि पापकारिणी । किं तु महदिदमाश्चर्यम् । अमानुषाकृतिरेष पुरुषः । समाश्वसिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका । प्रायेण चैवंविधा दिव्याः स्वप्नेप्यविसंवादिन्यो भवन्त्याकृतयः । किमुत साक्षात् । न चाल्पमपि विचारयन्ती कारणमस्य मिथ्याभिधाने प-

---

निकरेण विकटः पृथुलो मौलिर्यस्य । उत्फुल्लं कुमुदमेव कर्णपूरो यस्य । कामिनीकुचयोः कुङ्कुमपत्रलता लोहितचन्दनपत्रभङ्गास्ताभिर्लाञ्छितोंसदेशो यस्य । ०वितानेन समन्तात्प्रसरणेन । शीतज्वरं शीतातिरेकम् । अत्र ज्वरशब्दोतिशयवाची यथा दर्पज्वरेत्यादिशब्देषु । गोशीर्षचन्दनमुत्पलगन्धिचन्दनं तस्य रसस्य छटाभिश्छुरणैः । ऐरावतः सुरगजस्तस्य करः शुण्डा तद्वत् पीवराभ्यां पुष्टाभ्याम् । आदृतो जातस्नेहः । आदरेण वा । परिकरं कटिभागम् । सुतरामधिकतरम् । शोकाभिभाविना शोकं प्रत्यादिशता । ततोऽप्यधिकबलेनेत्यर्थः । सानुकम्पं अनुकम्पया सहितं यथा स्यात्तथा ।

---

१ उत्क्षिप्य. २ दुरात्मन्नन्तक. ३ सावेगम्. ४ तारागणाधिपमध्यम्. ५ भारत्यः.

श्यामि। अतो युक्तं विचार्यात्मानमस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम्। अतिमहत्खल्विदमाश्वासस्थानमस्यामवस्थायाम्। अपि च तमनुसरन्गत एव कपिञ्जलः। तस्मात्कुतोयं को वायं किमर्थं वानेनायमपगतासुरुत्क्षिप्य-नीतः क्व वा नीतः कस्माच्चासंभवनीयेनामुना पुनःसमागमाशाप्रदानेन भर्तृदारिका समाश्वासितेति सर्वमनुपलभ्य[1] जीवितं वा मरणं वा समाचरिष्यसि। अदुर्लभं हि मरणमध्यवसितम्[2]। पश्चादप्येतद्भविष्यति। न च जीवन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति। तेन तत्प्रत्यागमनकालावधयोपि तावद्ध्रियन्ताममी प्राणाः। इत्यभिदधाना पादयोर्मे न्यपतत्। अहं तु सकललोकदुर्लङ्घ्यतया जीविततृष्णायाः क्षुद्रतया च स्त्रीस्वभावस्य तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया कपिञ्जलप्रत्यागमनकाङ्क्षया च तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवितम्। आशया हि किमिव न क्रियते। तां च पापैककारिणी[3] कालरात्रिप्रतिमां वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव नरकमयीमिवाग्निमयीमिवोत्सन्ननिद्रा तथैव क्षितितले विचेष्टमाना रेणुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्तव्याकुलैः शिरोरुहैरुपरुद्धमुखी निर्दयाक्रन्दजर्जरस्वरक्षयक्षामेण कण्ठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती।

प्रत्युषसि समुत्थाय तस्मिन्नेव[4] सरसि स्नात्वा कृतनिश्चया तत्प्रीत्या तमेव कमण्डलुमादाय तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा बुद्ध्वा निःसारतां संसारस्य, ज्ञात्वा च मन्दपुण्यतामात्मनः निरूप्य चाप्रतीकार-

धानेऽसत्यवदने। आश्वासस्थानं समाश्वासनकारणम्। अध्यवसितं निश्चितं सत्। तेनापि कारणेन तस्य कपिञ्जलस्य प्रत्यागमनकालोवधिः येषां ते इ०। कालरात्रिः कल्पान्तक्षयरात्रिस्तस्याः प्रतिमां तत्तुल्याम्। यातनामयीमत्यन्तक्लेशजनकत्वात्। दुःखमयीं शोकपूर्णत्वात्। नरकमयीं निन्दितशरीरधारणाद्यातनादुःखसान्तत्यात्। अग्निमयीं तीव्रसंतापज्वरोत्पादकत्वात्। उत्सन्ननिद्रोच्छिन्ननिद्रा। अश्रुजलेनार्द्रयोः कपोलयोः संदानितैः संसक्तैरित्यर्थः। विरहवशाद्विमुक्तैः स्रस्तैरत एव व्याकुलैर्विसंष्ठुलैः। उपरुद्धमुखी व्याप्तमुखी। निर्दयोत्थो य आक्रन्दो विलापस्तेन जर्जरः शिथिलो यः स्वरस्तस्य क्षयो ह्रासस्तेन क्षामः शुष्कस्तेन। प्रत्युषसीति– तत्प्रीत्या तस्मिन्या प्रीतिस्नेहस्तया हेतुभूतया। अप्रतीकारा अप्रतिविधेयाश्च ते दारुणाः कष्टप्र-

१ सर्वमिदम्. २ अध्यासितम्, ३ पापकारिणीं. ४ अस्मिन्.

दारुणतां व्यसनोपनिपातानाम्, आकलय्य दुर्निवारतां शोकस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुलदुःखतां[1] स्नेहस्य, भावयित्वा चानित्यतां सर्वभावानाम्, अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्बां च, परित्यज्य सह परिजनेन सकलबन्धुवर्गं, निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि गृहीतब्रह्मचर्या देवं त्रैलोक्यनाथमनाथशरणमिमं शरणार्थिनी स्थाणुमाश्रिता[2] । अपरेद्युश्च कुतोपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य सुचिरं कृताक्रन्दस्तैस्तैरुपायैरभ्यर्थनाभिश्च बहुभि[3]रुपदेशैश्चानेकप्रकारैः परिसान्त्वनैश्च नानाविधैर्गृहागमनाय[4] मे महान्तं यत्नमकरोत् । यदा[5] च नेयमस्माद्व्यवसायात्कथंचिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवांस्तदा निराशोपि दुस्त्यजतया[6] दुहितृस्नेहस्य पुनःपुनर्मया विसृज्यमानोपि बहून्दिवसान्स्थित्वा सशोक एवान्तर्दह्यमानहृदयो गृहानयासीत् । गते च ताते ततः प्रभृति तस्य जनस्याश्रुमोक्षमात्रेण किल कृतज्ञतां दर्शयन्ती तदनुरागकृशमिदमपुण्यबहुलमस्तामितलज्जममङ्गलभूतमनेकक्लेशायाससहस्रनिवासं दग्धशरीरकं बहुविधैर्नियमशतैः शोषयन्ती[7] वन्यैश्च फल[8]मूलवारिभिर्वर्तमाना जपव्याजेन तद्गुणगणानिव गणयन्ती त्रिसंध्यमत्र सरसि स्नानमुपस्पृशन्ती[9] प्रतिदिनमर्चयन्ती देवं त्र्यम्बकमस्यामेव गुहायां तरलिकया[10] सह दीर्घशोकमनुभवन्ती चिरमवसम् । साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा च निःस्नेहा च नृशंसा[11] च गर्हणीया निष्प्रयोजनोत्पन्ना निष्फलजीविता[12] निरवलम्बना निःसुखा च । किं मया

---

दाश्च तेषां भास्वस्तत्ता ताम् । व्यसनान्यापदस्तेषामुपनिपाता आपतनानि । सर्वभावानामखिलपदार्थानाम् । अकाण्डभङ्गुरतामाकस्मिकविनाशशालिताम् । अनाथानां शरणं रक्षितारम् । स्थाणुं शिवम् । अव्ययत्वात्स्थाणुवन्निश्चलावस्थानाद्वा स्थाणुः । ततः प्रभृति विश्वात्मा न प्रसूते शुभाः प्रजाः । स्थाणुवन्निश्चलो यस्मात्तस्मात्स्थाणुरिति स्मृतः ॥ इति पुराणम् । व्यवसायादध्यवसायान्निश्चयात् । तस्य जनस्य पुण्डरीकस्य । तस्मिन्योनुरागस्तेन कृशम् । अमङ्गलभूतं वैधव्यादशिवरूपम् । अनेके ये क्लेशायासा मानसशारीरीरव्यथास्तेषां सहस्रं तस्य निवासम् । वर्तमाना प्राणधारणं कुर्वन्ती । तिसृषु सन्ध्यासु इति त्रिसन्ध्यम् । उपस्पृशन्ती कुर्वती । उपस्पृशेः स्थानार्थत्वेपि स्नानस्य स्वशब्देनोपात्तत्वाकृत्यर्थत्वम् । निष्प्रयोजनं निष्कारणमुत्पन्ना निष्प्रयोजनोत्पन्ना । निरवलम्बना निराश्रया

---

१ दुःखबहुलताम्. २ आश्रितवत्यस्मि. ३ बह्वीभिः ४ गृहगमनाय. ५ यदा तु न कथंचिदप्यस्मादध्यवसायाद्व्यावर्तयितुं शक्यत इति. ६ दुरुच्छेदतया. ७ क्षपयन्ती. ८ कन्द. ९ स्नात्वोपस्पृशन्ती. १० तया तरलिकया. ११ अतिनृशंसा. १२ निरर्था इत्यधिकम्.

दृष्टया पृष्टया वा कृतब्राह्मणवधमहापातकया करोति महाभागः। इत्युक्त्वा पाण्डुना वल्कलोपान्तेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठमतिचिरमुच्चैः प्रारोदीत्।

चन्द्रापीडस्तु प्रथममेव तस्या रूपेण विनयेन दाक्षिण्येन मधुरालापतया निःसङ्गतया चातितपस्वितया च प्रशान्तत्वेन च निरभिमानतया च महानुभावत्वेन च शुचितया चोपारूढगौरवोऽभूत्। तदानीं तु तेनापरेण दर्शितसद्भावेन स्ववृत्तान्तकथनेन तया च कृतज्ञतया हृतहृदयः सुतरामारोपितप्रीतिरभवत्। आर्द्रीकृतहृदयश्च शनैःशनैरेनामभाषत। भगवति क्लेशभीरुरकृतज्ञः सुखासङ्गलुब्धो लोकः स्नेहसदृशं कर्मानुष्ठातुमशक्तो निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन् रोदिति। त्वया तु कर्मणैव सर्वमाचरन्त्या किमिव न प्रेमोचितमाचेष्टितं येन रोदिषि। तदर्थमा जन्मनः प्रभृति समुपचितपरिचयः प्रेयानसंस्तुत इव परित्यक्तो बान्धवजनः। संनिहिता अपि तृणावज्ञयावधीरिता विषयाः। मुक्तान्यतिशायितसुनासीरसमृद्धीन्यैश्वर्यसुखानि। मृणालिनीवातितनीयस्यपि नितरां तनिमानमनुचितैः संक्लेशैरुपनीता तनुः। गृहीतं ब्रह्मचर्यम्। आयोजितस्तपसि महत्यात्मा। वनिताजनदुष्करमप्यङ्गीकृतमरण्यावस्थानम्। अपि चानायासेनैवात्मा दुःखाभिहतैः परित्यज्यते। महीयसा तु यत्नेन गरीयसि क्लेशे निक्षिप्यते केवलम्। यदेतदनुमरणं नाम तदतिनिष्फलम्। अविद्वज्जनाचरित एष मार्गः। मोह-

कृतं ब्राह्मणवध एव महापातकं यया तया। तदुक्तं मनुना—ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमम्॥ अ० ११. ५५ वल्कलोपान्तेन वल्कलपल्लवेन। अपारयन्त्यसमर्था। निःसङ्गतयाऽनासक्ततया। निरभिमानतया निरहंकारतया। महानुभावत्वेन महाप्रभावत्वेन। उपारूढं वृद्धं गौरवमादरबुद्धिर्यस्य। दर्शितः सद्भावः साधुभावो येन। अथ तां सान्त्वयन्नाह। **भगवतीति**—कर्मणा क्लेशसहनसुखत्यागादिलक्षणेन। समुपचितः समुपारूढः परिचयः सौहृदं यस्य। अत एव प्रेयानतिशयेन प्रियः। असंस्तुतोऽपरिचितः। संनिहिताः सुलभ्या इत्यर्थः। तृणे याऽवज्ञाऽवगणना तया। अत्यन्ततुच्छतयेत्यर्थः। अवधीरितास्तिरस्कृताः। अतिशायिता सुनासीरस्येन्द्रस्य समृद्धिर्यैः। आयोजितः स्थापितः। **अपि चेति**—अनायासेन सौकर्येण। **महीयसेति**—प्रियजनवियोगे प्राणपरित्यागः सुकरः। अपरित्यागेन तु क्लेशाङ्गीकारो महायत्नासिद्धोऽत एव प्रथमापेक्षया स एव महीयानिति ध्वनितम्। उक्तमेव प्रपञ्चयति **यदेतदिति**—अनुमरणमन्वारोहणम्। मोहो विवेकशून्यता तस्य विलसितं

१ अतिकण्ठम्. २ आसीत्. ३ सुतरामतिदूरम्. ४ दुष्करमतिकष्टम्. ५ दुःखाभिभूतैः.

विलसितमेतदज्ञानपद्धतिरियं रभसाचरितमिदं क्षुद्रदृष्टिरेषातिप्रमादोयं मौर्ख्यस्खलितमिदं यदुपरते पितरि भ्रातरि सुहृदि भर्तरि वा प्राणाः परित्यज्यन्ते । स्वयं चेन्न जहति न परित्याज्याः । अत्र हि विचार्यमाणे स्वार्थ एव प्राणपरित्यागोयमसह्यशोकवेदनाप्रतीकारत्वादात्मनः । उपरतस्य तु न कमपि गुणमावहति । न तावत्तस्यायं प्रत्युज्जीवनोपायः । न धर्मोपचयकारणम् । न शुभलोकोपार्जनहेतुः । न निरयपातप्रतीकारः । न दर्शनोपायः । न परस्परसमागमनिमित्तम् । अन्यामेव स्वकर्मफलपरिपाकोपचितामसाववशो नीयते भूमिम् । असावप्यात्मघातिनः केवलमेनसा संयुज्यते । जीवंस्तु जलाञ्जलिदानादिना बहूपकरोत्युपरतस्यात्मनश्च । मृतस्तु नोभयस्यापि । स्मर तावत्प्रियामेकपत्नीं रतिं भगवति भर्तरि मकरकेतौ सकलाबलाजनहृदयहारिणि हरहुतभुग्दग्धेप्यविरहितामसुभिः पृथां च वार्ष्णेयीं शूरसेनसुतामभिरूपे सावज्ञाविजितसकलराजकमौलिकुसुमवासिताशेषपादपीठे पत्यावखिलभुवनबलिभागभुजि पाण्डौ किंदममुनिशापानलेन्धनतामुपागतेऽपि

---

चेष्टितम् । **अज्ञानेति**–अज्ञानस्य पद्धतिर्मार्गः । रभसोऽसमीक्ष्यकारिता तेनाचरितमनुष्ठितम् । आत्मनः असह्याः सोढुमशक्या याः शोकवेदनाः । असह्यः शोकस्तस्य वेदना इति वा । तस्य प्रतीकारः प्रतिक्रिया तस्य भावस्तत्त्वं तस्मात् । कमपि गुणमावहति किमप्युपकारकं भवति । तदेव स्पष्टयति–धर्मोपचयकारणं पुण्यसंचयनिमित्तम् । निरयपातो नरकपातः । असौ मृतोऽवशः पराधीनः स्वकर्म धर्माधर्मलक्षणं तस्य परिपाकः फलसिद्धिस्तेनोपचितां तदर्थं रक्षितामित्यर्थः । असावप्यनुमृत आत्मघातिन एनसा आत्मवधपातकेन केवलं युज्यते न किमप्यन्यल्लभत इत्यर्थः । उक्तं च ईशावास्योपनिषदि–असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ इति । **स्मरेति**–हरसम्बन्धी यो हुतभुगग्निस्तेन दग्धेपि भर्तरि असुभिरविरहितां प्रियां वल्लभाम् । एकः पतिर्यस्याः सा ताम् । पत्युर्नो यज्ञसंयोगे । नित्यं सपत्न्यादिषु इति नकारादेशः । वार्ष्णेयीं वृष्णेर्गोत्रापत्यं स्त्री वार्ष्णेयी ताम् । वृष्णिर्नाम यादववंशोत्पन्नस्य युधाजितो वंशकरः सुतः । ह वं. अ. ३८ द्रष्टव्यः । **शूरसेनेति**–शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् । तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ॥ अग्रजामथ तां कन्यां शूरोनुग्रहकांक्षिणे । प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥ इति म. भा । **सावज्ञेति**–सावज्ञमवगणनापूर्वम् । सुखेनेत्यर्थः विजितं यत्सकलं राजकं राज्ञां समूहस्तस्य मौलिषु यानि कुसुमानि तैर्वासितं सुरभीकृतमशेषं पादपीठं यस्य तस्मिन् । अत एवाखिलभुवनस्य यो बलिभागो राजदेयद्रव्यांशस्तं भुनक्तीति स तस्मिन् । **किंदमेति**–शाप एवानलस्तस्येन्धनमिध्म तस्य भावस्तत्ता ताम् । अत्र कथा–एकदा पाण्डुर्मृगयार्थं वने विचरन् मृगीरूपधारिण्या स्वस्त्रिया सह व्यवायधर्ममाचरन्तं मृगरूपधारिणं किंदमनामानमृषिं रुक्मपुङ्खैः पञ्चभिः पतत्रिभिर्बिभेद । स च विद्धः—अहं हि किंदमो नाम तपसा भावितो मुनिः । व्यपत्रपन्मनुष्याणां मृग्या मैथुनमाचरम् ॥ मृगरूपधरं हत्वा मामेवं

---

१ कुदृष्टिः. २ प्रेम. ३ योग. ४ नरकपतन. ५ कर्मभूमिम्. ६ आत्मघाती. ७ हरनयनहुतभुजा दग्धे. ८ सावज्ञावजित. ९ वलय.

तेप्यरित्यक्तजीविताम्, उत्तरां च विराटदुहितरं बाला बालशशिनाव न-यनानन्दहेतौ विनयवति विक्रान्ते च पञ्चत्वमभिमन्यावागतेपि धृतदेहां, दुःशलां च धृतराष्ट्रदुहितरं भ्रातृशतोत्सङ्गलालितामतिमनोहरे हरवरप्रदान-वर्धितमहिम्नि सिन्धुराजे जयद्रथेर्जुनेन लोकान्तरमुपनीतेप्यकृतप्राणपरित्या-गाम्। अन्याश्च रक्षःसुरासुरमुनिमनुजसिद्धगन्धर्वकन्यका भर्तृरहिताः श्रूयन्ते सहस्रशो विधृतजीविताः। प्रोन्मुच्येतापि जीवितं संदिग्धोप्यस्य समागमो यदि स्यात्। भगवत्या तु ततः पुनः स्वयमेव समागमसरस्वती समाक-र्णिता। अनुभवे च को विकल्पः। कथं च तादृशानामप्राकृताकृतीनां महा-त्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमास्पदं कुर्यात्। उपर-तेन च सह जीवन्त्याः कीदृशी समागतिः। अतो निःसंशयमसावुपजात-कारुण्यो महात्मा पुनः प्रत्युज्जीवनार्थमेवैनमुत्क्षिप्य सुरलोकं नीतवान्।

---

काममोहितम्। अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि॥ प्रियया सह संवासं प्राप्य काम-विमोहितः त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि'॥ इति पाण्डुं शशाप। विस्तरस्तु म. भा. आ. ११८ अध्याये द्रष्टव्यः। बालशशिनि नवोदितचन्द्रे। विक्रान्ते शूरे। पञ्चत्वमागत उपरते। भ्रातृणां दुर्योधनादीनां यच्छतं तस्योत्सङ्गे लालितां सादरं पालिताम्। **हरेति**-जयद्रथो नाम कश्चिद्राजा सिन्धुदेशाधिपः। स च द्रौपदीं हृत्वा पलायमानोपि भीमेन गृहीतोङ्गीकृतदासभावो युधिष्ठिराज्ञया मुक्तश्च। ततो निर्वेदमासाद्य तपसा तोषितान्म-हेश्वरात् वरं लेभे। यथा-जयद्रथ उवाच। 'समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान्। इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत्। महेश्वर उवाच। अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि। ऋतेऽर्जुनं महाबाहुं नरं नाम सुरेश्वरम्'॥ इति। विशेषस्तु महाभारते वन० २८२ अध्याये द्रष्टव्यः। **रक्ष इति**-रक्षांसि राक्षसाः सुरा देवा असुरा दैत्या इ०। पक्षान्तरमाह। **प्रोन्मुच्येतेति**-अपि च जीवितं प्रोन्मुच्येत त्यज्येत। कदा। यदाऽस्य मृतस्य समागमः सन्दिग्धोपि स्यात्। समागमस्य काप्याशा स्यादिति भावः। सैव नास्तिचे 'नानुमरणं सर्वथा कार्यमिति भावः। स समागमः प्राणपरित्यागमन्तरेण ध्रुवं भावी चेत्प्राणधारणमवश्यं कर्तव्यमिति किमु वक्तव्यमिति सूचयन्नाह। **भगवत्येति**-तु शब्दो पक्षान्तरबोधकः। भगवत्या पुनस्ततः पुण्डरीकमरणानन्तरं समागमसरस्वती 'पुनरप्यनेन तव भविष्यति समागमः' इति समागमसूचका सरस्वती। अनुभवे-स्वयमनुभूते वस्तुनि विकल्पाव-काशो नास्तीत्यर्थः। अप्राकृता अनन्यसाधारणा दिव्येत्यर्थः आकृतिर्येषाम्। अवितथगिर सत्यवाचाम्। वितथस्य भावो वैतथ्यमसत्यत्वम्। कीदृशी न समागमसंभावनापि

---

१ जननयना. २ दुःशल्यां, दुःशीलाम्. ३ संदिग्धो यदि. ४ स्वयमेव तत्पुनः समागमवचः स्मृतम्।

अचिन्त्यो हि महात्मनां प्रभावः । बहुप्रकाराश्च संसारवृत्तयः[1] । चित्रं च दैवम् । आश्चर्यातिशययुक्ताश्च तपःसिद्धयः । अनेकविधाश्च कर्मणां शक्तयः । अपि च सुनिपुणमपि विमृशद्भिः किमिवान्यत्तदपहरणे कारणमाशङ्क्येत जीवितप्रदानादृते । न चासंभाव्यमिदमवगन्तव्यं भगवत्या । चिरप्रवृत्त एष पन्थाः । तथा हि । विश्वावसुना गन्धर्वराजेन मेनकायामुत्पन्ना प्रमद्वरां नाम कन्यामाशीविषविलुप्तजीवितां स्थूलकेशाश्रमे भार्गवस्य च्यवनस्य[2] नप्ता प्रमतितनयो मुनिकुमारको रुरुर्नाम स्वायुषोऽर्धेन योजितवान् । अर्जुनं चाश्वमेधतुरगानुसारिणम्[3]आत्मजेन बभ्रुवाहनाम्ना समरशिरसि शरापहृतप्राणमुलूपी[4] नाम नागकन्यका सोच्छ्वासमकरोत् । अभिमन्युतनयं च परीक्षितमश्वत्थामास्त्रपावकपरिप्लुष्टमुदरादुपरतमेव निर्गतमुत्तराप्रलापोपजनितकृपो भगवान्वासुदेवो दुर्लभानसून्प्रापितवान्[5] । उज्जयिन्यां च सांदीपनिर्द्विजतनयमन्तकपुरादपहृत्य त्रिभुवनवन्दितचरणः स एवानीतवान् । अत्रापि कथंचिदेवमेव[6] भविष्यति । तथापि किं क्रियते । क उपालभ्यते । प्रभवति हि भगवान्विधिः । बलवती च नियतिः । आत्मेच्छया न शक्यमुच्छ्वसितुमपि । अतिपिशुनानि चास्यैकान्तनिष्ठुरस्य दैवहतकस्य विलसितानि ।

अचिन्त्योऽतर्क्यः । संसारवृत्तयः संसृतेः प्रवृत्तयः । विचित्रा हि संसारभावा इत्यर्थः । चित्रं बहुप्रकारं न तु सर्वेषामेकविधमिति भावः । यद्वा अद्भुतसामर्थ्यं, येन तत्किं न कुर्यादिति भावः । अनेकविधा बहुप्रकाराः । विमृशद्भिर्विचारयद्भिः । असंभाव्यमशक्यम् । एष मृतस्य पुनर्जीवदानलक्षणः । आशीविषेण सर्पेण विलुप्तं विनाशितं जीवितं यस्याः सा ताम् । एषा कथा म. भा. आ. प. ९ अध्याये द्रष्टव्या । अश्वो मेध्यते हिंस्यते अस्मिन् इति अश्वमेधस्तस्य तुरगस्तस्यानुसारिणम् । समरशिरसि संग्रामसंमर्दे । **उलूपीति**–उलूपी चिन्तयामास तदा संजीवनीं मणिम् । स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः । चिरसुप्त इवोत्तस्थौ मृष्टलोहितलोचनः ॥ इयं कथा म. भा. आश्वमेधिके पर्वणि ८० अध्याये दृश्या । अश्वस्य इव स्थाम बलमस्य अश्वत्थामा द्रोणाचार्यपुत्रः । तदुक्तं महाभारते अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोयं तस्मान्नाम्ना भविष्यति ॥ इति । तस्यास्त्रपावकः शस्त्राग्निस्तेन परिप्लुष्टं समन्ताद्दग्धम् । उदराद्गर्भाशयात् । उत्तरायास्तन्मातुः प्रलापैर्विलापैरुपजनिता कृपा यस्य । इयं कथा चाश्वमेधिके प. ६६ अ. द्रष्टव्या । सान्दीपनिर्नाम रामकृष्णयोराचार्यः । स च गुरुदक्षिणायै विज्ञापितः पञ्चज-

१ प्र–वृत्त–कृ–तयः. २ अयं शब्दो नास्ति क्वचित्. ३ गामिनम्. ४ उलूपा. ५ भगवांश्चराचरगुरुर्वासुदेवो दुर्लभैरसुभिर्योजितवान्. ६ कथंचित्तथाप्येवमेवेदं भविष्यति.

न क्षमन्ते दीर्घकालमव्याजरमणीयं प्रेम। प्रायेण च निसर्गत एवानायतस्वभावभङ्गुराणि सुखान्यायतस्वभावानि च दुःखानि। तथा हि[1]। कथमप्येकस्मिञ्जन्मनि समागमो जन्मान्तरसहस्राणि च विरहः प्राणिनाम्। अतो नार्हस्यनिन्द्यामात्मानं निन्दितुम्। आपतन्ति हि संसारपथमतिगहनमवतीर्णानामेते वृत्तान्ताः। धीरा हि तरन्त्यापदम्। इत्येवंविधैरन्यैश्च मृदुभिरुपसान्त्वनैः संस्थाप्य तां पुनरपि निर्झरजलेनाञ्जलिपुटोपनीतेनानिच्छन्तीमपि बलात्प्रक्षालितमुखीमकारयत्।

अत्रान्तरे च श्रुतमहाश्वेतावृत्तान्तोपजातशोक इव समुत्सृष्टदिवसव्यापारो रविरपि भगवानधोमुखतामयासीत्। अथ क्षीणे दिवसे, परिणतप्रियङ्गुमञ्जरीरजोनिभेन पिञ्जरिम्णा रज्यमाने विलम्बिनि ब्रध्नमण्डले, विरल[2]कुसुम्भकुसुमरसरक्तदुकूलकोमलेन चास्तातपेन मुच्यमानेषु दिङ्मुखेषु, चकोरनयनतारका[3]कान्तिना च पिङ्गलिम्ना विलिप्यमाने तिरोहितनीलिम्नि व्योम्नि, कोकिलविलोचनच्छविबभ्रूणि चारुणयति सांध्ये भुवनमर्चिषि, यथाप्रधानमुन्मिषत्सु च ग्रहग्रामेषु[4], वनमहिषमलीमसवपुषि च मुषिततारकापथप्रथिम्नि

नदैत्यापहृतस्य स्वपुत्रस्य निर्मोचनं ययाचे। ततो भगवान् कृष्णः सागरं गत्वा पञ्चजनं जघान। ततोऽलब्धगुरुपुत्रः सोऽन्तकपुरं गत्वा यमाद्गुरुपुत्रमानीयाचार्यायार्पितवानिति हरिवंशकथात्रानुसन्धेया। पिशुनानि क्रूराणि। अविद्यमानो व्याजो यस्मिन् तदव्याजं निष्कपटमकृत्रिममित्यर्थस्तेन रमणीयम्। निसर्गतः स्वभावत एव अनायतस्वभावान्यनुत्तरकालविस्तरणशीलानि भङ्गुराणि नश्वराणि च। आयतस्वभावान्युत्तरकालविसृतिशीलानि चिरस्थायिनीत्यर्थः। उक्तमेव विशदीकरोति तथाहीत्यादिना। संसारपथं संसृतिमार्गम्। अवतीर्णानां कृतावताराणां संसारिणामित्यर्थः। वृत्तान्ताः भावाः। मृदुभिः कोमलैः। उपसांत्वनैः समाश्वासनैः संस्थाप्य समाहितचित्ताम्। प्रकृतिस्थामित्यर्थः। कृत्वा। **अत्रेति**–अधोमुखतामवाङ्मुखताम्। अपरदिगन्तलम्बी बभूवेत्यर्थः। **अथेति**–अथ त्रियामामुखे महाश्वेता...वल्कलशयनीये निषसाद शयनमकरोदित्यन्वयः। कस्मिन्सतीत्याह क्षीणे इ०। परिणता परिपक्वा या प्रियङ्गुमञ्जरी तस्या रजोनिभेन परागसदृशेन। ब्रध्नमण्डले सूर्यबिम्बे। 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इत्यमरः। विरलो यः कुसुम्भकुसुमानां कमलोत्तरपुष्पाणां रसस्तेन रक्तं यद्दुकूलं तद्वत्कोमलेन मृदुना। अविरलेति बहुषु पुस्तकेषूपलभ्यमानः पाठस्तु हेयः। अविरलकुसुम्भरसरक्तस्य दुकूलस्य घनरक्तत्वात्कोमलत्वेन विरोधात्। **कोकिलेति** कोकिलविलोचनानां या छविः कान्तिस्तद्वद्बभ्रुणि पिङ्गले। सान्ध्ये सन्ध्याभवेऽर्चिषि ज्योतिषि भुवनमरुणयति रक्ततां नयति सति। यथाप्रधानं यथामुख्यम्। ग्रहग्रामेषूडुपुञ्जेषु। ०ग्रामणीष्विति पाठे मुख्यग्रहेषु। मलीमसं मलिनं वपुर्यस्य तस्मिन्। मुषितस्तिरोहितस्तारापथस्य नभोमण्डलस्य प्रथिमा विस्तारो येन तस्मिन्।

१ एकं जन्म समागमो बहूनि जन्मान्तरसहस्राणि तु विरहः। २ अविरलं. ३ चकोरतारकाकारकान्तिना. ४ ग्रहग्रामणीषु.

कालिमानमातन्वन्ति शार्वरे तमसि, अतनुतिमिरतिरोहितहरितासु च गहनतां यान्तीषु तरुराजिषु, रजनिजलबिन्दुजालजनितजडिम्नि बहलवनकुसुमपरिमलानुमितगमने चलितलताविटपगहने प्रवृत्ते च पवने, निद्रानिभृतपतत्रिणि त्रियामामुखे, महाश्वेता मन्दं मन्दमुत्थाय भगवतीमुपास्य पश्चिमां संध्यां कमण्डलुजलेन प्रक्षालितचरणा वल्कलशयनीये सखेदमुष्णं च निःश्वस्य निषसाद । चन्द्रापीडोप्युत्थाय सकुसुमं प्रस्रवणजलाञ्जलिमवकीर्य कृतसंध्याप्रणामस्तस्मिन्द्वितीये शिलातले मृदुभिर्लतापल्लवैः शय्यामकल्पयत् । उपविष्टश्च तस्यां पुनः पुनस्तमेव मनसा महाश्वेतावृत्तान्तमन्वभावयत् । आसीच्चास्य मनसि । एवं नामायमप्रतीकारदारुणो दुर्विषहवेगः कष्टः कुसुमायुधो यदनेनाभिभूता महान्तोप्येवमनपेक्षितकालक्रमाः समुत्सारितधैर्याः सद्यो जीवितं जहति । सर्वथा नमो भगवते त्रिभुवनाभ्यर्चितशासनाय मकरकेतनायेति । पुनः पप्रच्छ चैनाम् । भगवति सा तव परिचारिका वनवासव्यसनमित्रं दुःखसब्रह्मचारिणी तरलिका क्व गतेति ।

अथ साकथयत् । महाभाग यत्तन्मया कथितममृतसंभवमप्सरसां कुलं तस्मान्मदिरेति नाम्ना मदिरायतेक्षणा कन्यकाभूत् । तस्याश्चासौ सकलगन्धर्वकुलमुकुटकुड्मलपीठप्रतिष्ठितचरणो देवश्चित्ररथः पाणिमग्रहीत् । अपरिमितगुणगणाकृष्टहृदयश्चान्यवनितादुर्लभेनाधःकृताशेषान्तःपुरेण हेमपट्टलाञ्छनेन छत्रवेत्रचामरचिह्नेन महादेवीशब्देन परं प्रीतः प्रसादमकरोत् । अन्यो-

---

शार्वरे शर्वरी रात्रिस्तस्यां भवं शार्वरम् । तत्र भवः । इत्यण् । शार्वरं तम इत्यत्र च कालाट्ठञ् ( पा. ४-३-११ ) इति ठञ् दुर्धरः । इति काव्यालंकारसूत्रवृत्तिः । अनुतिमिरं ध्वान्ताविर्भावानन्तरं तिरोहिता हरितता यासां तासु । गहनतां निबिडताम् । रजनिजलं नीहारवारि । बहलो यो नवकुसुमपरिमलस्तेनानुमितं गमनं यस्य । चलितानि लताविटपानां वल्लीवृक्षाणां गहनानि खण्डा येन । निद्रया निभृता निश्चलाः पतत्रिणः पक्षिणो यस्मिन् । त्रियामा निशा । अन्वभावयत्पुनः पुनरचिन्तयत् । अप्रतीकारोत एव दारुणः । अनपेक्षितोऽवगणितः कालक्रम उचितदेहावसानकालो यैः । **वनेति**–वनवासलक्षणं यद्व्यसनमापत्तस्मिन्मित्रम् । दुःखसब्रह्मचारिणी दुःखसंविभागिनीत्यर्थः । 'एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः' इत्यमरः । समानं ब्रह्मचरतीति स० ॥ चरणे ब्रह्मचारिणीति समानस्य सभावः । **महाभागेति**–मदिरे मादयत्याभ्यामिति मदिरे मदजनके मदघूर्णिते वा आयते च ईक्षणे यस्याः । मुकुटकुड्मलानि मुकुटाग्राणि तान्येव पीठं पादपीठं तत्र स्थापितचरणः । अपरिमिता ये गुणा लज्जाविनयादयस्तेषां गणेनाकृष्टहृदयः । परं प्रीतो मुदितः सन् । हेमपट्टो लाञ्छनं चिह्नं यस्य ।

---

१ हरितभासु. २ वन. ३ सन्ध्यां प्रणनाम कृत० ४ समवधीरित. ५ सकलत्रिभुवन. ६. मदिरा यतेक्षणा इ. भानुचन्द्रसंमतः पाठः ७ ०गुणाकृष्ट.

न्यप्रेमसंवर्धनपरयोश्च तयोर्यौवनसुखानि सेवमानयोः[1] कालेनाश्चर्यभूतमेकजीवितमिव पित्रोरथवा सर्वस्यैव गन्धर्वकुलस्य जीवलोकस्य वा दुहितृरत्नमुदपादि कादम्बरीति नाम्ना । सा च मे जन्मनः प्रभृत्येकासनशयनपानाशना परं प्रेमस्थानमखिलविश्रम्भधाम द्वितीयमिव हृदयं बालमित्रम् । एकत्र तया मया च नृत्य[2]गीतादिकलासु कृताः परिचयाः । शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः । सा चामुनैव मदीयेन हतवृत्तान्तेन समुप[3]जातशोका निश्चयमकार्षीत् । नाहं कथंचिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामीति । सखीजनस्य पुरतः सशपथमभिहितवती च यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित्कस्मैचिद्दातुमिच्छति तदाहमनशनेन वा हुताशनेन रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामीति । सर्वं च तदात्मदुहितुः कृतनिश्च[4]यं निश्चलभाषितं कर्णपरंपरया परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत् । गच्छति काले समुपारूढनिर्भरयौवनामालोक्य स[5] तां बलवदुपतापपरवशः क्षणमपि न धृतिमलभत । एकापत्यतया चातिप्रियतया च न शक्तः किंचिदपि तामभिधातुम् । इत्यपश्यंश्चान्यदुपायान्तरम्, इदमत्र प्राप्तकालमिति मत्वा, तया महादेव्या मदिरया सहावधार्य क्षीरोदनामानं कञ्चुकिनं—वत्से महाश्वेते त्वद्व्य[6]तिकरेणेव दग्धहृदयानामिदमपरमस्माकमुपस्थितम्, इदानीं तु कादम्बरीमनुनेतुं त्वं शरणम्—इति संदिश्य[7] मत्समीपमद्यैव प्रत्यूषसि प्रेषितवान् । ततो मया गुरुवच-

---

अन्योन्यस्मिन्प्रेम तस्य संवर्धनपरयोः । सेवमानयोः ताच्छील्ये शानच् । एकमभिन्नं जीवितम् । समानो भाव उत्तररामचरिते—अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् । आनन्दग्रन्थिरेकोयमपत्यमिति बध्यते ॥ इति । एकमभिन्नं शयनं पानमशनं च यस्याः अखिलेति—सर्वविश्वासभूमिः । परिचया अभ्यासाः । अनियन्त्रणेन स्वैरवर्तनेन निर्भरं यथा स्यात्तथा । रज्ज्वा—रज्ज्वोद्बध्येत्यर्थः । उत्स्रक्ष्यामि जीवितं त्यक्ष्यामि । निश्चलं स्थिरम् । अव्यावर्तीत्यर्थः । भाषणमुक्तिः समुपारूढं निर्भरं पूर्णलक्षणं यौवनं यस्यास्ताम् । ०उपतापपरवशश्चिन्ताकुलः । धृतिं संतोषं मनःस्वास्थ्यमिति यावत् । इति उक्तप्रकारेणोपायान्तरं वक्ष्यमाणोपायादन्यत् । अवधार्य कर्तव्यं निश्चित्य । त्वद्व्यतिकरेण तव वृत्तान्तेन । व्यतिरेकेणेति पाठे वियोगेन । उपस्थितं व्यसनमिति शेषः । त्वं शरणम्—अस्मिन्कादम्बर्या अनुनयविषये त्वमेवा-

---

१ अनुभवतोः, अनुभवमानयोः २ गीतनृत्यादिकासु कलासु ३ समुत्पन्न ४ कृतनिश्चयनिश्चल. ५ सुताम्. ६ त्वद्व्यतिरेकेण. ७ संदिश्य तदनुनयार्थम्.

नगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका सखि कादम्बरि किं दुःखितमपि जनमतितरां दुःखयसि जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथमिति सन्दिश्य विसर्जिता । नातिचिरं गतायां च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः । इत्यभिधाय तूष्णीमभवत् ।

अत्रा[1]न्तरे लाञ्छनच्छलेन विडम्बयन्निव शोकानलदग्धमध्यं महाश्वेताहृदयम्, उद्वहन्निव कुमारवधमहापातकं, दर्शयन्निव चिरकाललग्नं दक्षशापानलदाहचिह्नम्, अविरलभस्माङ्गरागधवलः कृष्णमृगाजिनप्रावृतार्धो वामस्तन इवाम्बिकाया धूर्जटिजटामण्डलचूडामणि[illegible]राजः । क्रमेण चोद्गते गगनमहापयोधिपुलिने सप्तलोकनिद्रामङ्गलकलशे कुमुदबान्धवे विघटितकुमुदवने धवलितदशादिशि शङ्ख[2]श्वेते श्वेतिमान[3]मातन्वति मानिनीमान[4]शत्रौ [5]शशाङ्कमण्डले [7]शशिकरकलापकलितासु [8]व्रजन्तीषु कृशिमानमौडवीषु

स्माकमाश्रयः । त्वमेव तामनुनेतुं समर्थेत्याशयः । ०गौरवेणादरेण । अवितथं सार्थकम् । तत्करणेनेत्यर्थः । **अत्रेति**—चन्द्रोदयं वर्णयन्नाह—विडम्बयन्ननुकुर्वन् । कुमारो मुनिकुमारः पुण्डरीकस्तस्य वधस्य महापातकम् । **दक्षेति**—दक्षप्रजापतेर्यः शापानलः शापरूपोऽग्निस्तेन यो दाहस्तस्य चिह्नम् । दक्षशापकथा पाद्मे—'अश्विन्याद्यास्तु दक्षस्य उपयेमे सुता विधुः । रोहिण्यामेव सततं बद्धप्रेमा रराम ह ॥ दृष्ट्वा तदितरास्ता नु तप्ताः पितरमब्रुवन् । अस्माकं कामदस्तात जामाता तव रोहिणीम् ॥ रमयत्येव सततं तेन तप्ता वयं पितः । तत् श्रुत्वा चाप्रियं दक्षः सोममाह भजस्व भोः । प्रेम्णा समेन सर्वस्त्वं दुहितॄर्मम मानद ॥ जगृहे तद्वचो नैव सोमः सप्रेम रोहिणीम् । तथैव रमयामास श्रुत्वा दक्षश्चुकोप ह ॥ शशाप तेन भाविताऽपक्षीणोऽस्मद्वचोतिगः । यक्ष्मणा च परिग्रस्तो भव त्वं क्षीणरेतकः' ॥ इ० । अविरलो घनो यो भस्माङ्गरागस्तेन धवलः । कृष्णमृगाजिनेन कृष्णसारचर्मणा प्रावृतमर्धं यस्य । वामो दक्षिणेतरः स्तनः । शिवस्य वामार्धभूतायास्तस्या दक्षिणस्तनाभावाद्वामग्रहणम् । इममेवार्थं जगौ बिल्हणः—एकस्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम् । यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री' ॥ इति । धूर्जटिः—धूर्भारभूता जटा यस्य शिवः । गगन[illegible]न्महोदधिस्तस्य चन्द्रिकाया धावल्यात्सर्वत्र प्रसृतत्वाच्च पुलिनमिव स्थिते । सप्तलोकानां निद्रार्थं मङ्गलकलश इव स्थिते । विघटितान्युन्मीलितानि कुमुदवनानि येन स तस्मिन् । मानिन्या मानवत्याः स्त्रिया मानस्येर्ष्याकोपस्य तदपनयनात् शत्रौ । शशिकरकलापेन चन्द्रकिरणसमूहेन कलितासु व्याप्तासु । आच्छादितास्विति यावत् । अत एव औडवीषु उडु नक्षत्रं तत्सम्बन्धिनीषु प्रभासु कृशिमानं

१ अस्मिन्नन्तरे. २ शङ्खश्वेते श्वेतातपत्रायमाणे. ३ शङ्खश्वेतायमाने. ४ ०दस्यौ. ५ शुचि-शोचिषि शशाङ्कमण्डले, शशाङ्के. ६ रोचिष्णुशाशी. ७ कवलितासु. ८ आतन्वतीषु.

प्रभासु प्रस्रवत्सु च कैलासशशिमणिशिलानां सर्वतः स्रोतःस्राविषु प्रस्रवणेषु मृणालकन्दलिनि चावस्कन्दपतितचन्द्रकर इव विलुप्तकमलवनशोभे भात्यच्छोदसरःपयसि समुपोढमोहनिद्रे च द्राघीयोवीचिविचलितवपुषि विरुवति विरहिणि चक्रवाकचक्रवाले निर्वृत्ते च चन्द्रोदये विद्रुते हर्षनयनजलकणनीहारिणि वियद्विहारिणि मनोहारिणि विद्याधराभिसारिकाजने चन्द्रापीडः सुप्तामालोक्य महाश्वेता पल्लवशयने शनैःशनैः समुपाविशत्। अस्यां वेलायां किं नु खलु मामन्तरेण चिन्तयति वैशम्पायनः किं वा वराकी पत्रलेखा किं राजपुत्रलोक इति चिन्तयन्नेव निद्रां ययौ।

अथ क्षीणायां क्षपायामुषसि संध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायां निर्वर्तितप्राभातिकविधौ चन्द्रापीडे तरलिका षोडशवर्षवयसा सावष्टम्भाकृतिना मदखेदालसगजराजगमनगुरूणि पदानि निक्षिपता पर्युषितचन्दनाङ्गरागधूसरोरुदण्डद्वयेन कुङ्कुमरागपिञ्जरारुणेन चामीकरशृङ्खलाकलापनिबिडनियमितं कक्षाबन्धातिरिक्तप्रेङ्खत्पल्लवमधरवास एव केवलं वसानेन निरुदरतया विभक्तमध्येन विपुलवक्षसा दीर्घानुवृ-

---

मन्दतां व्रजन्तीषु। प्रबलतेजसा हि दुर्बलं तेज उपहतं भवति। स्रोतः स्रवन्तीति तच्छीलेषु। मृणालानां कन्दलान्यङ्कुरास्तद्वति। विलुप्ता लोपं प्राप्ता कमलवनस्य शोभा यस्य। अत एवोत्प्रेक्षते—अवस्कन्दार्थमभियोगार्थं पतिताश्चन्द्रकरा यस्मिन्। समुपोढा विरहवशान्मोहरूपा निद्रा यस्य। द्राघीयसीभिरतिदीर्घाभिर्वीचिभिर्विचलितानि वपूंषि यस्य। एवंविधे चक्रवाकसमूहे विरुवति सति। निवृत्ते संपूर्णे। हर्षोत्थं यन्नयनजलं तस्य कणा एव नीहारा यस्मिन्। तादृशे विद्याधराभिसारिकाजने विद्रुते जवेन कामिजनवसतिं याते। मामन्तरेण मामधिकृत्य। **अथेति**—अथ प्रत्यूषस्येव तरलिकाप्रादुरासीदित्यन्वयः। निर्वर्तितः विहितः प्राभातिको प्रातस्तनो विधिर्येन। षोडशवर्षाणि वयो यस्य तेन। अवष्टंभेन सहवर्तमाना सावष्टम्भा सानुभावा आकृतिर्यस्य मदखेदेनालसो यो गजराजस्तस्य गमनवद्गुरूणि मन्थराणीति यावत्। पर्युषितो यातयामो यश्चन्दनाङ्गरागस्तेन धूसरमूरुदण्डद्वयं यस्य। कुङ्कुमरागेन केसररागेण पिञ्जरश्चासावरुणश्च तेन। पुनश्च केवलमधरवास एव वसानेन। अधरवास एव विशिनष्टि— चमीकरे आकरे भवं चामीकरं सुवर्णं तस्य शृङ्खलाकलापेन शृङ्खलापाशेन निबिडं दृढं यथा स्यात्तथा नियमितं बद्धम्। कक्षाबन्धान्मध्यबन्धादतिरिक्तस्य प्रेङ्खन्तः पल्लवा यस्मिन्। 'कक्षा बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने।' इति विश्वः। पुनश्च केयूरकं विशिनष्टि। निरुदरतया शातोदरतया। विभक्तो विलग्नो मध्यो यस्य स तेन। विपु-

---

१ पवनवशात्समुपोढ. २ गजगमन. ३ विविक्त.

-तपीनबाहुना वामप्रकोष्ठदोलायमानमाणिक्यवलयेन कर्णाभरणमणेर्विप्रकीर्यमाणमधोमुखकिरणेन्द्रायुधजालं वर्णांशुकोत्तरीयमिवैकस्कन्धक्षिप्तमुद्वहता चूतपल्लवकोमलमनवरतताम्बूलबद्धरागान्धकारमधरं दधता कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचनयुगलस्य धवलयतेव दिगन्तराणि कुमुदवनानीव वर्षता पुण्डरीकमयमिव दिवसं कुर्वता कनकपट्टपृथुललाटेनालिकुलनीलसरलशिरसिजेनाग्राम्याकृतिना राजकुलसंपर्कचतुरेण गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना, प्रत्युषस्येव प्रादुरासीत् । आगत्य च कोयमित्युपजातकुतूहला चन्द्रापीडं सुचिरमालोक्य महाश्वेतायाः समीपमुपसृत्य कृतप्रणामा सविनयमुपाविशत् । अनन्तरं चातिदूराननतेनोत्तमाङ्गेन प्रणम्य केयूरकोपि महाश्वेतादृष्टिनिसृष्टं नातिसमीपवर्ति शिलातलं भेजे । समुपविष्टश्च तत्र तमदृष्टपूर्वमधःकृतकुसुमायुधमुपहसितसुरासुरगन्धर्वविद्याधररूपं रूपातिशयं चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे ।

परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम् । किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी । करिष्यति वा तदस्मद्वचनमिति । अथ सा तरलिका विनयावनतमौलिरीषदवलम्बितकर्णपाशमतिमधुरया गिरा व्यजिज्ञपत् । भर्तृदारिके दृष्टा खलु मया भर्तृदारिका कादम्बरी सर्वतः कुशलिनी विज्ञापिता च निखलं भर्तृदुहितुः संदेशम् । आकर्ण्य च यत्तया संततमु-

---

लवक्षसा बृहद्भुजान्तरेण । दीर्घावनुवृत्तौ क्रमशो वर्तुलाकारौ । शुण्डाकृती इत्यर्थः । पीनौ च बाहू यस्य । **कर्णेति**–कर्णाभरणमणेः कर्णभूषणरत्नस्य । विप्रकीर्यमाणं विसृमरम् । अधोमुखा ये किरणास्तेषामिन्द्रायुधजालमिन्द्रायुधवद्विविधवर्णजालम् । एकस्कन्धावक्षिप्तं वर्ण्यते रज्यत इति वर्णं रागवस्तुना रक्तं यदंशुकं तदेवोद्वहता । अनवरतं निरन्तरं ताम्बूलस्य बद्धो रागान्धकारो रागपटलं रागस्यान्धकार आवरणं वा यस्मिन् । **कर्णान्तायतेति**–कर्णान्तं यावदायतस्य लोचनयुगलस्य धवलिम्ना श्वेतत्वेन करणेन धवलयता दिगन्तराणि दिगन्तरालवर्तिप्रदेशमित्यर्थः । पुनश्च कनकपट्टवत्सुवर्णपट्टिकावत्पृथु विपुलं ललाटमलिकं यस्य । अलिकुलं भ्रमरसमूहस्तद्वन्नीलाः सरलाः शिरोरुहाः केशा यस्य । अग्राम्याकृतिना अग्राम्या मनोहरा नागरीया वाकृतिर्यस्य स तेन । उत्तमाङ्गेन शिरसा । महाश्वेतया दृष्ट्या निसृष्टं निर्दिष्टम् । अधःकृतो न्यक्कृतः कुसुमायुधो मकरकेतुर्येन । उपहसितमुपहास्यतां नीतम् । अतिशयितमित्यर्थः । सुरादीनां रूपं येन । रूपातिशयं सौन्दर्यप्रकर्षम् । ईषदवलम्बितः किंचिदवनतः कर्णपाशश्चारुकर्णौ यस्मिन्कर्मणि तद्यथा तथा । पाशस्तु मृगपश्वादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । इति

---

१ कुटिल. २ उपविष्टश्च तम्. ३ आलम्बित.

क्तस्थूलाश्रुबिन्दुवर्षं रुदित्वा प्रतिसंदिष्टं तदेष तयैव विसर्जितः। तस्या एव वीणावाहकः केयूरकः कथयिष्यति। इत्युक्त्वा विरराम। विरतवचसि तस्यां केयूरकोब्रवीत्। भर्तृदारिके महाश्वेते देवी कादम्बरी दृढदत्तकण्ठग्रहा त्वां विज्ञापयति। यदियमागत्य मामवदत्तरलिका तत्कथय किमयं गुरुजनवचनानुरोधः किमिदं मच्चित्तपरीक्षणं किं गृहनिवासापराधनिपुणोपालम्भः किं प्रेमविच्छेदाभिलाषः किं भक्तजनपरित्यागोपायः किं वा प्रकोपः। जानास्येव मे सहजप्रेमनिस्यन्दनिर्भरं हृदयम्। एवमतिनिष्ठुरं संदिशन्ती कथमसि न लज्जिता। तथा मधुरभाषिणी केनासि शिक्षिता वक्तुमप्रियम्। स्वस्थोपि तावत्क इव सहृदयः कनीयस्यवसानविरसे कर्मणीदृशे मतिमुपसर्पयेत्, किमुतातिदुःखाभिहतहृदयोस्मद्विधो जनः। सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा कैव निर्वृतिः कीदृशाः संभोगाः कानि वा हसितानि। येनेदृशीं दशामुपनीता प्रियसखी कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम्। दिवसकरास्तमयविधुरासु नलिनीषु सहवासपरिचया-च्चक्रवाकयुवतिरपि पतिसमागमसुखानि परित्यजति। किमुत नार्यः अपि च यत्र भर्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी कथमिव तन्मम हृदयमपरः प्रविशेज्जनः। यत्र च भर्तृविरहविधुरा तीव्रव्रतकर्षिताङ्गी प्रियसखी महत्कृच्छ्रमनुभवति तत्राहमवगणय्यैतत्कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि। कथं वा मम सुखं भविष्यति। त्वत्प्रेम्णा चास्मिन्वस्तुनि मया कुमारिकाजनविरुद्धं स्वातन्त्र्यमालम्ब्याङ्गीकृतम-

---

हैमः। सततं निरन्तरं मुक्तः स्थूलाश्रुबिन्दूनां वर्षो यस्मिंस्तद्यथास्यात्तथा। **गृहेति**–गृहे निवासः स एवापराधस्तस्मान्निपुणं चतुरमुपालम्भो निर्भर्त्सनम्। भक्तजनः स्निग्धो जनः। सहजमकृत्रिमं यत्प्रेम तस्य निस्यन्देन निर्भरं पूर्णम्। **स्वस्थोपीति**–स्वस्थोपि स्वस्थचित्तोपि क इव को नाम। 'इव' संभाव्ये। सहृदय ईदृशे कनीयसि तुच्छे अवसानविरसे दुःखोदर्के कर्मणि पाणिग्रहरूपे। स्वस्थचित्तोप्यमूढश्चेन्न मतिमुपसर्पयेत्। **किमुतेति**–सर्वथा न प्रसर्पयेदित्यर्थः। निर्वृतिः शान्तिः। तिर्यञ्चोपि परिचितदुःखसंविभागिनो भवन्ति किमुत मादृशा इत्याह चक्रेति। **अपि चेति**। अपरप्रवेशेहि प्रियसख्याः परपुरुषदर्शनं स्यादतो वार्य एव तस्य प्रवेश इति भावः। तीव्रेणोग्रेण व्रतेन कर्षितं क्षीणतां नीतं शरीरं यया तादृशी। महत्कृच्छ्रं महान्तं कष्टम्। अस्मिन्वस्तुन्यस्मिन्विषये। समवधीरितो विगणितः। सहजं स्वाभाविकम्। सा

---

१ वादकः. २ गुरुजनानुरोधः ३ ०लापः ४ अस्तमन. ५ तीव्रेति नास्ति पुस्तकान्तरे.

यशः समवधीरितो विनयो गुरुवचनमतिक्रामितं न गणितो लोकापवादो वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा । सा कथय कथमिव पुनरत्र प्रवर्तते । तदयमञ्जलिरुपरचितः प्रणामोऽयमिदं च पादग्रहणम् । अनुगृहाण माम् । वनमितो गतासि मे जीवितेन सह । इति मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि । इत्यभिधाय तूष्णीमभूत् ।

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामीत्युक्त्वा केयूरकं प्राहिणोत् । गते च केयूरके चन्द्रापीडमुवाच । राजपुत्र रमणीयो हेमकूटः । चित्रा च चित्ररथराजधानी । बहुकुतूहलः किंपुरुषविषयः । पेशलो गन्धर्वलोकः । सरलहृदय महानुभावा च कादम्बरी । यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरुप्रयोजनम्, अदृष्टचरविषयकुतूहलि वा चेतः, मद्वचनमनुरुध्यते वा भवन्मतिः[2], सुखदायि वाश्चर्यदर्शनम्[3], अर्हामि[4] वा प्रणयम्, इममप्रत्याख्यानयोग्यं वा जनं मन्यसे, समारूढो वा परिचयलेशोऽनुग्राह्यो वायं जनः, ततो नार्हसि निष्फलां कर्तुमभ्यर्थनामिमाम् । इतो मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानं तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीमपनीय तस्याः कुमतिमनोमोहविलसितमेकमहो[5] विश्रम्य श्वोभूते प्रत्यागमिष्यसि । मम हि निष्कारणबान्धवं भवन्तमालोक्यैव दुःखान्धकारभाराक्रान्तेन महतः कालादुच्छ्वसितमिव चेतसा श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः । दुःखितमपि जनं रमयन्ति

यथैतत्कृतं सा । यथार्हं यथोचितम् । चित्रा वैचित्र्ययुक्ता । किंपुरुषाः किंनरास्तेषां विषयो देशः । पेशलश्चतुरः सुन्दरो वा । 'चारौ दक्षे च पेशलः' इत्यमरः । कलयसि मन्यसे । अवसीदति विघ्नितं भवति । गुरु महत् । अदृष्टचरोऽनवलोकितपूर्वो अदृष्टः भूतपूर्वः अदृष्टचरः । भूतपूर्वे चरट् । यो विषयो देशस्तत्र कुतूहलं तद्दर्शने कौतुकं विद्यतेऽस्य । आश्चर्यदर्शनं सुखदायि चेत् । अर्हामि प्रणयं कर्तुं योग्यास्मि चेत् । प्रत्याख्यानं प्रार्थनानिराकृतिस्तस्य योग्यो न भवतीति तथा । मत्तो निर्गतो विशेषो यस्याः । मत्सदृशीमित्यर्थः । **कुमतीति**-कुमतिः कुत्सितो विचारो नाहमात्मनः पाणिं ग्राहयिष्यामीत्येवं रूपस्तेन यो मनोमोहः कर्तव्याकर्तव्यविषयकमज्ञानं तस्य विलसितं चेष्टितम् । अहो दिवसम् । निष्कारणबान्धवमकारणबन्धुम् । दुःखमेवान्धकारस्तिमिरं तस्य भारेणाक्रान्तं व्याप्तं तेन चेतसोच्छ्वसितं प्राणितम् । सह्यतां गतः शोकः । आह च कालिदासः स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवतीति । परेषां यत्सुखं तस्योपपादनं सम्पादनं तस्य पराधीनः । तदेकनिष्ठ इत्यर्थः । कर्तव्येषु कार्येषु यथेष्टं यथाभिलषितं

१ अपयशः २ भवान् अतिसुखादामि. ३ वाऽस्माभिरदर्शनम्. ४ अर्हसि. ५ कुमातामिमाम्.

सज्जनसमागमाः। परसुखोपपादनपराधीनश्च भवादृशां गुणोदयः। इत्युक्तवतीं चैनां चन्द्रापीडोऽब्रवीत्। भगवति दर्शनात्प्रभृति परवानयं जनः कर्तव्येषु यथेष्टमशङ्कितया नियुज्यताम्। इत्यभिधाय तया सहैवोदचलत्।

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्वराजकुलं समतीत्य काञ्चनतोरणानि सप्तकक्षान्तराणि कन्यान्तःपुरद्वारमवाप। महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन प्रतीहारजनेनोपदिश्यमानमार्गः, प्रविश्यासंख्येयनारीशतसहस्रसंबाधं, स्त्रीमयमपरमिव जीवलोकम्, इयत्तां ग्रहीतुमेकत्र त्रैलोक्यस्त्रैणमिव संहृतम्[1] अपुरुषमिव सर्गान्तरम्, अङ्गनाद्वीपमिवापूर्वमुत्पन्नः पञ्चममिव नारीयुगावतारम्, अपरमिव पुरुषद्वेषिप्रजापतिनिर्माणम् अनेककल्पकल्पनार्थमुत्पाद्य स्थापितमिवाङ्गनाकोषम्, अतिविस्तारिणा युवतिजनलावण्यप्रभापूरेण प्लावितदिगन्तरेण सिञ्चतेवामृतरसविसरेण दिवसमार्द्रीकुर्वतेव भुवनान्तरालं बहलप्रभावर्षिणा मरकतमणिमयेन भूषणेन च सर्वतःपरिगततया तेजोमयमिव चन्द्रमण्डलसहस्रैरिव निर्मितसंस्थानं, ज्योत्स्नयेव घटितसंनिवेशम्, आभरणप्रभाभिरिव निष्पादितदिगन्तरं, विभ्रमैरिव कृतसर्वोपकरणं,

---

नियुज्यतां—व्यादिश्यताम्। **क्रमेणेति**—काञ्चनस्य सुवर्णस्य तोरणानि येषु। **महाश्वेतेति**—तत्प्रविश्य कुमारः कुमारीपुराभ्यन्तरं ददर्शेत्यन्वयः। असंख्येयान्यगणनार्हाणि नारीणां शतसहस्राणि लक्षाणि तैः संबाधं संकटम्। इदं परिमाणमस्येयत् तस्य भाव इयत्ता संख्यापरिमाणं ताम्। स्त्रैणं स्त्रीणां समूहम्। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति नञ्। अन्यं सर्गं सर्गान्तरमपरां सृष्टिम्। पुरुषान्द्वेष्टीति तच्छीलो यः प्रजापतिस्तस्य निर्माणं सर्गम्। पुरुषद्वेषित्वात्स्त्रीमयसृष्टिनिर्माणमिति भावः। अनेककल्पेषु या कल्पना स्त्रीशरीररचना तदर्थम्। अथ चातिविस्तारिणातिविसृत्वरेण युवतिजनस्य लावण्यमाख्यातपूर्वं तस्य प्रभा तस्य पूरेण वितानेन सर्वतः परिगततया तेजोमयं तैजसमिव। लावण्यप्रभां विशेषयन्नाह—प्लावितानि पूरितानि दिगन्तराणि येन। अमृतरसस्य विसरेण निष्यन्देन दिवसमिव सिञ्चता। मरकतमणयोऽश्मगर्भास्तन्मयेन तत्प्रचुरेण। भूषणेन च सर्वतः परिगततया। अनेन सर्वासामेव मरकतप्रायभूषणधारणं व्यज्यते। मरकतप्रभाकलङ्कयोः श्यामत्वसाम्यात् लावण्यप्रभाज्योत्स्नयोश्च पाण्डुरत्वसाम्यादुत्प्रेक्षते—चन्द्रमण्डलसहस्रैरिव निर्मितं संस्थानं रचना यस्य। ज्योत्स्नया घटितः संनिवेशोऽवस्थानातिशेषो यस्य आभरणातिशयादाह **आभरणेति**। निष्पादितं घटितं दिगन्तरं दिशामवकाशो यस्य। **विभ्रमैः**—वाग्वस्त्रभूषणादीनां शृङ्गारात्स्थानविपर्यासो

---

१ संगृहीतम्.

यौवनविलासैरिवोत्पादितावयवं, रतिविलसितैरिव विरचितसंचयं, मन्मथचरितैरिव कल्पितावकाशम् अनुरागेणेवानुलिप्तसकलजनप्रदेशं, शृङ्गारमयमिव सौन्दर्यमयमिव सुरताधिदैवतमयमिव कुसुमशरमयमिव कुतूहलमयमिवाश्चर्यमयमिव सौकुमार्यमयमिव कुमारः कुमारीपुराभ्यन्तरं ददर्श ।

अतिबहलतया च तस्य कन्यकाजनस्य समन्तादाननद्युतिभिरिन्दुबिम्बवृष्टिमिव पतन्तीम्, अपाङ्गविक्षेपैश्चलितकुवलयवनमयीमिव क्रियमाणामवनीम्, अनिभृतभ्रूलताविभ्रमैः कामकार्मुकबलानीव प्रचलितानि शिरसिजकलापान्धकारैर्बहुलपक्षप्रदोषसार्थानिव संबध्नतः, स्मितप्रभाभिरुत्फुल्लकुसुमधवलानिव वसन्तदिवसान्संचरतः, श्वसितानिलपरिमलैर्मलयमारुतानिव परिभ्रमतः, कपोलमण्डलालोकैर्माणिक्यदर्पणसहस्राणीव स्फुरितानि, करतलरागेण रक्तकमलवनवर्षिणमिव जीवलोकं, कररुहकिरणस्फुरणेन कुसुमायुधशरसहस्रैरिव संछादितैमष्टदिगन्तरम्, आभरणकिरणेन्द्रायुधजालकैरुड्डीयमानानीव भवनमयूरवृन्दानि यौवनविकारैरुत्पाद्यमानानीव मन्मथसहस्राण्यद्राक्षीत् । उचितव्यापारव्यपदेशेन कुमारिकाणां सखीहस्तावलम्बेषु पाणिग्रहणानि वेणुवाद्येषु चुम्बनव्यतिकरान्वीणासु कररुहव्यापारान्कन्दुकक्री-

विभ्रमः । तैःकृतानि सर्वाण्युपकरणानि परिच्छदो यस्य । यौवनविलासैः मुखनयनभ्रूप्रभृतीनां शृङ्गारजो विकारविशेषो विलासः । 'विलासोङ्गे विशेषो यः प्रियाप्तावासनादिषु । इति नाटकरत्नकोषः । रतिः कामपत्नी तस्या विलसितैर्विलासैः । विरचितः संचयः समूहो यस्मिन् । अनुलिप्ताः सकलजना यत्र तादृशः प्रदेशो यत्र । ततः कुमारीपुराभ्यन्तर एतान्यद्राक्षीत् । तान्येवाह **अतीति**—अपाङ्गविक्षेपैः कटाक्षक्षेपणैः । अनिभृताः स्फुटा ये भ्रूलतयोर्विभ्रमा विलासास्तैः शिरसिजकलापाः केशपाशा एवान्धकारास्तैः । संबध्नतः संहतान्बहुलपक्षाणां कृष्णपक्षाणां प्रदोषसार्थानिवापश्यत् । अनेन केशकलापानां घनत्वं श्यामतातिशयश्च सूचितः । स्मितोत्फुल्लकुसुमयोर्धवलत्वाह्लादकत्वादिसाम्यादाह स्मितेति । **माणिक्येति**—अनेन कपोलयो रक्तवर्णच्छटाच्छुरितत्वं स्वच्छतातिशयश्च ध्वनितः । कररुहकिरणानां नखांशूनां स्फुरणेन विद्योतनेन । **आभरणेति**—अनेनाभरणानां विविधरत्नप्राचुर्यं सूचितम् । यौवनेत्यादिना तत्रत्यस्त्रीणामुत्कटयौवनवत्त्वं सूचितम् । **उचितेति**—उचितो योग्यो यो व्यापारो नियोगानुष्ठानं तस्य व्यपदेशेन मिषेणातिरिक्तमद्भुतं सुरतमिवाभ्यस्यन्तीनां कुमारिकाणां तत्तदपश्यदित्यन्वयः । चुम्बनव्यतिकरान् चुम्बनव्यापारान् । कररुहाणां नखानां व्यापारानास्त्र-

१ प्रवेशम्. २ प्रेममयमिव कुमारः. ३ अतिनिभृत. ४ केश. ५ संच्छादितदिगन्तराणि. ६ किरणनिकरै.

डासु करतलप्रहारान्भवनलतासेककलशकण्ठेषु भुजलतापरिष्वङ्गाँल्लीलादोलासु नितम्बस्थलेप्रेङ्खितानि ताम्बूलवीटिकावखण्डनेषु दशनोपचारान्बकुलविटपेषु मधुगण्डूषप्रचारानशोकतरुताडनेषु चरणाभिघातानुपहारकुसुमस्खलनेषु सीत्कारानतिरिक्तं सुरतमिवाभ्यस्यन्तीनामपश्यत् ।

यत्र च कन्यकाजनस्य कपोलतलालोक एव मुखप्रक्षालनं, लोचनान्येव कर्णोत्पलानि, हसितच्छक्य एवाङ्गरागाः, निःश्वासा एवाधिवासगन्धयुक्तयः, अधरद्युतिरेव कुङ्कुमानुलेपनम्, आलापा एव तन्त्रीनिनादाः, भुजलता एव चम्पकमालाः, करतलान्येव लीलाकमलानि, स्तना एव दर्पणाः, निजदेहप्रभैवांशुकावगुण्ठनं, जघनस्थलान्येव विलासमणिशिलातलानि, कोमलाङ्गुलिरागएव चरणालक्तकरसः, नखमणिमरीचय एव कुट्टिमोपहारकुसुमप्रकराः । यत्र चालक्तकरसोपि चरणातिभारः, बकुलमालिकामेखलाकलनमपि गमनविघ्नकरम्, अङ्गरागगौ-

लनरूपान् । पक्षे क्षतदानरूपांश्च । नितम्बः कटिपश्चाद्भागः स एव पृथुत्वात्स्थलं तस्य प्रेङ्खितानि कम्पितानि । दशनोपचारान्दन्तक्षतानीत्यर्थः । मधुनो गण्डूषाश्चुलुकास्तेषां प्रचारान्व्यापरान् । उपहारार्थे देवतादिभ्यो ढौकनार्थे यानि कुसुमानि पुष्पाणि तेषु स्खलनेषु पतनेषु । वृत्ते ह्यनभिमते वस्तुनि सीत्कारशब्दः क्रियत इति प्रसिद्धम् । अथवोपहारकुसुमानां स्खलनानि कुमारीशरीरेषु पातास्तेषु सीत्कारान् । सीत्कारः पीडाद्योतको दृढदन्तसंयोगे वायुवशजन्यो ध्वनिविशेषः । अनेन कुमारीणां सौकुमार्यातिशयो व्यज्यते । **यत्र चेति**—कपोलकान्त्या निर्मलत्वात्प्रसरणशीलत्वाच्च यत्र कन्यकाजनस्य मुखानि सदा प्रक्षालनशोभां भजन्त इत्यर्थः । **लोचनेति**—अनेन नेत्रयोः कर्णान्तायतत्वं कमलसादृश्यं च ध्वनितम् । निश्वासा मुखमारुताः । अधिवासाय वस्त्रादीनां गन्धादिभिः संस्काराय गन्धयुक्तयः सुगन्धिद्रव्ययोगाः । संस्कारोगन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् । शब्दानां माधुर्यकोमलत्वादिसाम्यादाह;आलापा इ० । लीलार्थं कमलानि लीलाकमलानि । **विलासेति**—अनेन तेषां विस्तरातिशयः सूचितः । कोमला या अङ्गुल्यस्तासां रागो लौहित्यम् । नखा एव मणयो नखनिविष्टमणयो वा तेषां मरीचयः किरणाः कुट्टिमेषु निबद्धभूमिषु उपहारकुसुमानां प्रकराः शोभार्थं समूहाः । तासां सौकुमार्यातिशयं व्यञ्जयन्नाह । **यत्रेति**—बकुलमालिकैव मेखला रशना तयाकलनं कटिबन्धनमप्यायासकारित्वाद्गमनविघ्नकरम् । अङ्गरागेण विलेपनेन यद्गौरवं गुरुतापादनं तदप्यतिभारात्प्रश्वासजनकम् । ग्लानिकारणं क्लान्तिजनकम् । मङ्गलार्थं तत्प्रतिसरो हस्तसूत्रं तस्य वलयं

१ भुवन. २ स्तन. ३ बकुलकुसुमदोहदेषु सीधुगण्डूषप्रदानानि. ४ कुङ्कुममुखानु. ५ चम्पकबेकक्ष्यमाला.

रवमप्यधिकश्वासनिमित्तम्, अंशुकभारोपि ग्लानिकारणं, मङ्गलप्रतिसरवलयविधृतिरपि करतलविधुतिहेतुः, अवतंसकुसुमधारणमपि श्रमः कर्णपूरकमलतरलमधुकरपक्षपवनोप्यायासकरः । तथा च यत्र सखीदर्शनेषु अकृतहस्तावलम्बनमुत्थानमतिसाहसं, प्रसाधनेषु हारभारसहिष्णुता स्तनकार्कश्यप्रभावः, कुसुमावचयेषु द्वितीयकुसुमग्रहणमप्ययुवतिजनोचितं, कन्यकाविज्ञानेषु माल्यग्रथनमसुकुमारजनव्यापारः, देवताप्रणामेषु मध्यभागभङ्गो नातिविस्मयकरः ।

तस्य चैवंविधस्य किंचिदभ्यन्तरमतिक्रम्येतश्चेतश्च परिभ्रमतः कादम्बरीप्रत्यासन्नस्य परिजनस्य शुश्राव तांस्तानतिमनोहरानालापान् । तथा हि । लवलिके कल्पय केतकीधूलिभिर्लवलीलतालवालमण्डलानि । सागरिके गन्धोदककनकदीर्घिकासु विकिर रत्नवालुकाम् । मृणालिके कृत्रिमकमलिनीषु कुङ्कमरेणुमुष्टिभिश्छुरय यन्त्रचक्रवाकमिथुनानि । मकरिके कर्पूरपल्लवरसेनाधिवासय गन्धपात्राणि । रजनिके तमालवीथिकान्धकारेषु निधेहि मणिप्रदीपान् । कुमुदिके स्थगय शकुनिकुलरक्षणाय [illegible]डिमीफ-

---

तस्य विधृतिर्धारणम् । करतलस्य या विधुतिः कम्पनं तस्या हेतुः । कर्णपूरभूतानि यानि कमलानि तत्र तरलाश्चञ्चला ये मधुकरास्तेषां पक्षेभ्य उत्पन्नः पवनोपि खेदजनकः । **तथेति**—सखीदर्शनेषु अभिनवागतसखीषु दृष्टासु अकृतो हस्तावलम्बो यस्मिंस्तादृशमुत्थानमप्यातिसाहसम् । अनेन मार्दवातिशयो दाक्षिण्यातिशयश्च व्यज्यते । प्रसाधनेषु प्रतिकर्मसु मौक्तिकहारधारणक्षमत्वं स्तनयोः कार्कश्यं काठिन्यं तस्य प्रभावो माहात्म्यम् । अनेनेतरेषामवयवानां पेलवतातिशयः सूचितः । अयुवतिजनोचितं सौकुमार्यहानिकरमित्यर्थः । तादृशश्रमस्य पुरुषैरेव सोढुं शक्यत्वात् । प्रकारान्तरेण सौकुमार्यातिशयमेव द्योतयमान आह—कन्याविज्ञानेषु कुमारिकाजनोचितकलानां मध्ये माल्यग्रथनं मालागुम्फनमसुकुमारजनव्यापारो न तु माल्यापेक्षयापि पेलवाङ्गीनां तत्रत्यकन्यकानामिति भावः । मध्यभागस्यातिसूक्ष्मत्वाद्भङ्गो द्विधाभावो नातिविस्मयकरस्तस्यापूर्वत्वाभावात् । **तस्येति**—०प्रत्यासन्नस्य समीपवर्तिनः कल्पय रचय । गन्धोदकस्य सुगन्धजलस्य कनकदीर्घिकाः सुवर्णनिबद्धा वाप्यस्तासु । कार्येण निर्वर्तिताः कृत्रिमाः कमलिन्यस्तासु स्थितानि यन्त्रचक्रवाकमिथुनानि शिल्पशास्त्रयुक्त्या गत्यादिविशिष्टानि चक्रवाकमिथुनानि । छुरय रञ्जय । अधिवासय सुरभीकुरु । शकुनिकुलात् । पक्षिसमूहाद्रक्षणाय । शकुनि-

---

१ अभ्युत्थानम्. २ पुष्प. ३ अवक्रम्य. ४ सारसिके. ५ क्षौद. ६ युगलानि. ७ मन्दारिके. ८ भवनदीर्घिकातमाल.

लानि । निपुणिके लिख मणिशालभञ्जिकास्तनेषु कुङ्कुमरसपत्रभङ्गान् । उत्पलिके परामृश कनकसंमार्जनीभिः कदलीगृहमरकतवेदिकाम् । केसरिके सिञ्च मदिरारसेन बकुलकुसुममालागृहाणि । मालतिके पाटलय सिन्दूररेणुना कामदेवगृहदन्तवलभिकाम् । नलिनिके पायय कमलमधुरसं भवनकलहंसान् । कदलिके नय धारागृहं गृहमयूरान् । कमलिनिके प्रयच्छ चक्रवाकशावकेभ्यो मृणालक्षीररसम् । चूतलतिके देहि पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारम् । पल्लविके भोजय मरिचाग्रपल्लवदलानि भवनहारीतान् । लवङ्गिके विक्षिप चकोरपञ्जरेषु पिप्पलीतण्डुलशकलानि । मधुकरिके विरचय कुसुमाभरणकानि । मयूरिके संगीतशालायां विसर्जय किंनरमिथुनानि । कदलिके समारोहय क्रीडापर्वतशिखरं जीवंजीवमिथुनानि । हरिणिके देहि पञ्जरशुकसारिकाणामुपदेशम् ।

इत्येतान्यन्यानि च परिहासजल्पितान्यश्रौषीत् । तथा हि । चामरिके मिथ्या मुग्धतां प्रकटयन्ती कमभिसंधातुमिच्छसि । अयि यौवनविलासैरुन्मत्तीकृते विज्ञातासि या त्वं स्तनकलशभारावनम्यमानमूर्तिर्मणिस्तम्भमयूरानवलम्बसे । परिहासकाङ्क्षिणि रत्नभित्तिपतितमात्मप्रतिबिम्बमालपसि । पवनहृतोत्तरीयांशुके हारप्रभामायासितकरतला संकलयसि । मणिकुट्टिमेषूपहारकमलस्खलनभीते निजमुखप्रतिबिम्बकानि परिहरसि । निजसौकुमार्यगर्वखर्वितबिसप्रसूनसौभाग्ये जालवातायनपतितपद्मरागालोकं प्रति बालातपश-

कुलभ्रदक्षणायेति वा । स्थगय संवृणु । लिख विरचय । मणिशालभञ्जिका रत्नपुत्तलिकाः । परामृश संमार्जय । कनकसंमार्जनीभिः सुवर्णशोधनीभिः । कदलीगृहे या मरकतवेदिका ताम् । पाटलय श्वेतरक्तीकुरु । सिन्दूरस्य रक्तत्वाद्दन्तस्य धवलत्वात्तथा । दन्तवलभिका व्याख्याता । धारागृहं जलोद्गारयन्त्रसनाथं गृहम् । मृणालक्षीररसं बिसनिर्यासरसम् । मरीचस्य कोलकस्याग्रपल्लवाः कोमलकिसलयानि तेषां दलानि छेदान् । जीवंजीवः खगान्तरे । द्रुमभेदे चकोरे च । इति हैमः इत्येतान्यन्यानि चाग्रे वक्ष्यमाणानि परिहासजल्पितानि नर्मभाषणानि । अभिसंधातुं वशीकर्तुम् । 'मिलितुम्' इ. भानु० । अलीकमुग्धत्वं प्रकटयन्ती त्वं कस्मिन्नपि बद्धभावासीति भावः । आत्मप्रतिबिम्बमालपसि स्वस्यैव वचनानि परिहासविषयीकरोषीत्यहो ते शून्यहृदयत्वम् । पवनेन हृतमुत्तरीयांशुकं यस्यास्तत्सम्बुद्धिः । हारप्रभां मुक्तागुणकान्तिमेव संकलयसे उत्तरीयांशुकमिति मन्यसे । अत एव तद्व्यवस्थापनधिया हस्तं व्यापारयन्ती वृथात्मानमायासयसीति भावः । **मणीति**–अयि शून्यहृदये आत्मनो मुखप्रतिबिम्बान्येव उपहारकमलधिया परिहरसि । अतोऽस्थाने तव भीतिरिति भावः । निजेति–निजसौकुमार्यगर्वेण खर्वितमधरीकृतं बिसानां प्रसूनानां पुष्पाणां च सौभाग्यं सौकुमार्यं यया । जालयुक्तं वातायनं तत्र पतितं पद्मरागालोक-

१ मणिस्तम्भ. २ कुङ्कुमिकं. ३ चूतकलिके. ४ दल. ५ कन्दलिके. ६ वृथा. ७ मयूरवान्. ८ प्रतिमाम्.

ङ्कयाकरतलमातपत्रीकरोषि । खेदस्रस्तहस्तगलितचामरे नखमणिमयूखकलापमाधुनोषि । इत्येतान्यन्यानि च शृण्वन्नेव कादम्बरीभवनसमीपमुपययौ[3] ।

पुलिनायमानमुपवनलतागलितकुसुमरेणुपटलैः, दुर्दिनायमानमनिभृतपरभृतनखक्षताञ्जनसहकारफलरसवर्षैः, नीहारायमाणमनिलविप्रकीर्णैर्बकुलसेकसीधुधाराधूलिभिः, काञ्चनद्वीपायमानं चम्पकदलोपहारैः[4], नीलाशोकवनायमानं[5] कुसुमप्रकरपतितमधुकरवृन्दान्धकारैः, तथा च संचरतः स्त्रीजनस्य रागसागरायमाणं चरणालक्तकरसविसरैः, अमृतोत्पत्तिदिवसायमानमङ्गरागामोदैः, चन्द्रलोकायमानं दन्तपत्रमण्डलैः[6], प्रियङ्गुवनायमानं [ रोचनातिलकभक्तिभिः नीलायमानं ] कृष्णागुरुपत्रभङ्गैः, लोहितायमानं कर्णपूराशोकपल्लवैः, धवलायमानं चन्दनरसविलेपनैः हरितायमानं शिरीषकुसुमाभरणैः, अथ सेवार्थमागतेनोभयत ऊर्ध्वास्थितेन स्त्रीजनेन प्राकारेणेव लावण्यमयेन कृतदीर्घरथ्यामुखाकारं मार्गमद्राक्षीत् । तेन चान्तर्निपतितमाभरणकिरणालोकं[7] संपिण्डितं नदीवेणिकाजलप्रवाहमिव वहन्तमपश्यत् । तन्मध्ये च प्रतिस्रोत इव गत्वा प्रतिहारीमण्डलाधिष्ठितपुरोभागं श्रीमण्डपं ददर्श ।

---

लोहितमणि प्रकाशम् । खेदेन श्रमेण स्रस्तः शिथिलो यो हस्तस्तस्माद्गलितं चामरं यस्यास्तस्याः सम्बोधनम् । **नखेति**—चामरभ्रान्त्या नखकिरणजालमेव धुनोषि । **पुलिनेति**—अथ सेवार्थमागतेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन । अत एव लावण्यनिर्मितेन प्राकारेण वप्रेणेव । कृतो दीर्घाया रथ्याया मुखकारो यस्मिन्नेतादृशं मार्गमद्राक्षीदित्यन्वयः । इतो मार्गविशेषणानि—उपवनान्यारामास्तत्र या लतास्ताभ्य इ० । पुलिनवदाचरति पुलिनायते । कर्तुः क्यङ् सलोपश्च इति क्यङ् । पुलिनायमानं तोयोत्थिततटायमानम् । अनेन लतानां पुष्पसमृद्धिः परागातिशयश्च सूचितः । अनिभृताश्चञ्चलाः शब्दायमाना वा य परभृताः कोकिलास्तेषां नखैः क्षतानि । अञ्जनमजिरं तत्र ये सहकारा आम्रास्तेषां फलानि तेषां रसवर्षैर्दुर्दिनायमानम् । अत्र सर्वत्र तत्तदतिशयो व्यङ्ग्यः । धूलिभिः कणैः । श्वेतत्वसाम्यान्नीहारायमाण तुषारवदाचरमाणम् । चम्पकदलानि गन्धफलीपत्राणि तेषामुपहाराः प्रकारस्तैः । ०अन्धकारैरलिसमूहानां नीलिम्नेत्यर्थः । रागसागरायमाणं रक्तिमसमुद्रायमाणम् । **चरणेति**—चरणोपयुक्तयावकद्रवसमूहैः । दन्तपत्राणि कर्णाभरणविशेषास्तेषां मण्डलैः । प्रियङ्गुर्गन्धफली तस्या वनवदाचरमाणम् । रोचना गारोचना तस्यास्तिलकभक्तिभिर्बिन्दुरचनाभिः । प्रियङ्गोः श्यामत्वादनुपपन्नमेतत् तस्मात् वनायमानं कृष्णागुरुपत्रभङ्गैरितिपाठः साधीयान् । **तेनेति**—तेन च मार्गेण वहन्तमन्तर्निपतितं संपिण्डितं नानाभूषणप्रभामिश्रमाभरणप्रभालोकं नद्या वेणिका रयपथस्तत्र यो जलप्रवाहस्तमिवापश्यत् । प्रतिस्रोतः प्रतिप्रवाहः । 'अत्रालोकस्याभ्यन्तरावर्ति

---

१ ०नपाङ्काङ्किनी. २ कलित, ३ भवनमुपसृत्य ययौ. ४ चम्पकोपहारैः. ५ लीलाशोक. ६ दन्तपत्रप्रभा. ७ निपतन्तम्.

तत्र च मध्यभागे पर्यन्तरचितमण्डलोपविष्टेन चानेकसहस्रसंख्येन परिस्फुरदाभरणसमूहेन कल्पलतानिवहेनेव कन्यकाजनेन परिवृतां, नीलांशुकप्रच्छदपटप्रावृतस्य नातिमहतः पर्यङ्कस्योपाश्रये धवलोपधानन्यस्तद्विगुणभुजलतावष्टम्भेनावस्थितां महावराहदंष्ट्रावलम्बिनीमिव महीं, विस्तारिणि देहप्रभाजालजले भुजलताविक्षेपपरिभ्रमैः प्रतरन्तीभिरिव चामरग्राहिणीभिरुपवीज्यमानां, निपतितप्रतिबिम्बतयाधस्तान्मणिकुट्टिमेषु नागैरिवापह्रियमाणामुपान्ते च रत्नभित्तिषु दिक्पालैरिव नीयमानामुपरि मणिमण्डपेष्वमरैरिवोत्क्षिप्यमाणां, हृदयमिव प्रवेशितां महामणिस्तम्भैरापीतामिव भवनदर्पणैः, अधोमुखेन श्रीमण्डपमध्योत्कीर्णेन विद्याधरलोकेन गगनतलमिवारोप्यमाणां, चित्रकर्मच्छलेनावलोकनकुतूहलसंपुञ्जितेन त्रिभुवेनेनेव परिवृतां, भूषणरवप्रनृत्तशिखिशतविततचित्रचन्द्रकेण भवनेनापि कौतुकोत्पादितलोचनसहस्रेणेव दृश्यमानाम्, आत्मपरिजनेनापि दर्शनलोभादुपार्जितदिव्यचक्षुषेवानिमिषनयनेन निर्वर्ण्यमानां, लक्षणैरपि रागाविष्टैरिवाधिष्ठितसर्वाङ्गीम्, अकृतपुण्यमिव मुञ्चन्तीं बालभावम्, अदत्तामपि मन्मथावेशपरवशेनेव गृह्यमाणां यौवनेन, अविचलितचरणरागदीधितिभिरिव निर्गताभिरलक्तकरसपाटलितलावण्यजलवेणिकाभिरिव गलिताभिर्निवसितरक्तांशुकदशाशिखाभिरिवा-

---

निपतनादेतस्य प्रत्यभिमुखगमनाद्गमनमात्र एव दृष्टान्तस्तास्मिन्नेव दृष्टान्तस्योचितत्वान्नतु दर्शनक्रियायाम् इति भानु० । **तत्रेति**—तत्र श्रीमण्डपे मध्यभागे कादम्बरीं ददर्शेत्यतिदूरेणान्वयः । नीलांशुकस्य यः प्रच्छदपट उत्तरच्छदस्तेन प्रावृतस्य । उपाश्रेय मध्य इत्यर्थः । धवलं यदुपधानमुपबर्हस्तत्र न्यस्ता द्विगुणा द्विगुणिता या भुजलता तस्या अवष्टम्भेनाश्रयेणावस्थिताम् । अत एव धवलत्वसाम्याद् महेति । भुजलतानां विक्षेपा एव परिभ्रमास्तैः । निपतितप्रतिबिम्बतयेति सप्तम्यन्तैः सम्बध्यते । **दिग्पालैः**—इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥ इत्यमरोक्तेः । तत एवाह हृदयेति, आपीतामिवेति च । चित्रकर्मच्छलेनालेखनमिषेण । **भूषणेति**—भूषणरवेन प्रनृत्तमारब्धताण्डवं यच्छिखिशतं तस्य वितताश्चित्राश्चन्द्रका मेचका यस्मिन् । निर्वर्ण्यमानामालोक्यमानाम् । लक्षणैः सौभाग्यसूचकैश्चिह्नैः । 'कपोलद्युतिकुचकाठिण्यादिभिः' इ. भानु० । रागेण तच्छरीरनिवासप्रेम्णाविष्टैरभिनिविष्टैः । संपूर्णलक्षणत्वं व्यज्यते । मन्मथस्यावेशोन्तःप्रवेशस्तस्य परवशेन तदायत्तेन । पुनश्च चरणाभ्यां विद्रुमरसनदीं हेमकन्दलद्रवसरितामिव प्रवर्तयन्तीम् । अनेन चरणयोर्विद्रुमरागलौहित्यं सूचितम् । कीदृशाभ्यां चरणाभ्याम् । अङ्गुलिभिरुपेताभ्याम् । अथाङ्गुलीर्विशेषयन्नाह—अविचलितः स्थिरः । अलक्तकरसेन पाटलिताभी रक्तीकृताभिर्लावण्यजलस्य वेणिकाभिर्धाराभिरिव ।

---

१ मण्डलेनाथ उपविष्टेन. २ आश्रये, अपाश्रये. ३ सर्वाङ्गीम्, सर्वावयवाम्. ४ विनतं.

वलम्बिताभिः पादाभरणरत्नांशुलेखासंदेहदायिनीभिरतिकोमलतया नखविवरेण वर्मन्तीभिरिव रुधिरधारावर्षमङ्गुलिभिरुपेताभ्यां क्षितितलतारागणमिव नखमणिमण्डलमुद्वहद्भ्यां विद्रुमरसनदीमिव चरणाभ्यां प्रवर्तयन्तीं, नूपुरमणिकिरणचक्रवालेन गुरुनितम्बभरखिन्नोरुयुगलसहायतामिव कर्तुमुद्गच्छता स्पृश्यमानजघनभागां, प्रजापतिकरदृढनिष्पीडितमध्यभागगलितं जघनशिलातलप्रतिघाताल्लावण्यजलस्रोत इव द्विधागतमूरुद्वयं दधानां, सर्वतः प्रसारितदीर्घमयूखमण्डलेनेर्ष्यया परपुरुषदर्शनमिव निरुन्धता कुतूहलेन विस्तारमिव तन्वता स्पर्शसुखेन रोमाञ्चमिव मुञ्चता काञ्चीदाम्ना नितम्बबिम्बस्य विराचितपरिवेषां, निपतितसकललोकहृदयभरेणेवातिगुरुनितम्बाम्, उन्नतकुचान्तरितमुखदर्शनदुःखेनेव क्षीयमाणमध्यभागां, प्रजापतेः स्पृशतः सौकुमार्यादङ्गुलिमुद्रामिव निमग्नां नाभिमण्डलीमावर्तिनीमुद्वहन्तीं, त्रिभुवनविजयप्रशस्तिवर्णावलीमिव लिखितां मन्मथेन रोमराजिमञ्जरीं बिभ्राणाम्, अन्तःप्रविष्टकर्णपल्लवप्रतिबिम्बेनातिभरखिद्यमानहृदयकरतलप्रेर्यमाणेनेव निष्पतता मकरकेतुपादपीठेन स्तनभरेण भूषिताम्, अधोमुखकर्णाभरणमयूखाभ्यामिव प्रसृताभ्याममललावण्यजलमृणालकाण्डाभ्यां बाहुभ्यां नखकिर-

---

निवसितं परिधानीकृतम् । वमन्तीभिर्निर्यातयन्तीभिः । वान्तादयः शब्दा अमुख्यवृत्त्या प्रयुक्ता एव गुणवन्तो भवन्ति । तदुक्तं दण्डिना—निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ इति । चक्रवालेन मण्डलेन । गुर्व्यौ नितम्बस्तस्य भरेण खिन्नं श्रान्तं यदुरुयुगलं तस्य सहायताम् । जघनमेव शिलातलं तत्र यः प्रतिघातः सवेगपतनं तस्मात् । अत्र मध्यभागस्य कार्श्यं जघनस्थलस्य काठिण्यं सूचितम् । ऊर्वोश्च तेजस्विता सूचिता । निरुन्धता प्रतिषेधं कुर्वता । मयूखमण्डलेन परपुरुषस्य व्यवधानात् । विरचितः कृतः परिवेषो परिधिर्यस्यास्ताम् । हृदयंगमत्वादाह निपतितेति । उन्नताभ्यामुच्चाभ्यां कुचाभ्यामन्तरितं स्वोन्नत्या व्यवहितं यन्मुखदर्शनं तस्माज्जातेन दुःखेनेव । उन्नतकुचाभ्यां दृष्टिप्रतिरोधान्मुखदर्शनाभावदुःखेनेव क्षीयमाणकटिभागामिति भावः । सौकुमार्यादङ्गमार्दवात् । आवर्तिनीं प्रशस्तगर्तोयुक्ताम् । मन्मथेन कादम्बरीरूपसहायेन कृतो यस्त्रिभुवविजयस्तस्य प्रशस्तिवर्णावलीं प्रशंसाक्षरपंक्तिम् । **अन्तरिति**—अन्तर्हृदयमध्ये स्वच्छत्वात्प्रविष्टं यत्कर्णपल्लवप्रतिबिम्बं तेन करतलस्थानीयेन । अतिभरेण कामपादाक्रान्तपादपीठभरेण खिद्यमानं यद्धृदयं तेन कर्त्रा करतलेन करणेन प्रेर्यमाणेन नोद्यमानेनेव । अत एव निष्पतता । पादपीठेनेव स्थितेन । **अधोमुखेति**—अनेन स्वच्छत्वं मृणालेत्यनेन कोमलत्वं चोक्तम् । माणिक्यवलयाना गौरवं गुरुता तेन यः

---

२ वर्षन्तीभिः. २ सहायम्. ३ लावण्यस्रोतः. ४ मण्डलम्, स्थलीम्. ५ मृणालकाभ्याम्.

च माणिक्यवलयगौरवैश्रमवशात्स्वेदजलधाराजालकमिव मुञ्चता करयुगलेन समुद्भासिताम्, स्तनभारावनम्यमानमाननमिवोन्नमयता हारेणोच्चैः[2] करैर्गृहीतचिबुकदेशाम्, अभिनवयौवनपवनक्षोभितस्य रागसागरस्य तरङ्गाभ्यामिवोद्गताभ्यां विद्रुमलतालोहिताभ्यामधराभ्यां रक्तावदातस्वच्छकान्तिना च मदिरारसपूर्णमाणिक्यशुक्तिसंपुटच्छविना कपोलयुगलेन रतिपरिवादिनीरत्नकोणचारुणा नासावंशेन च विराजमानाम्, गतिप्रसरनिरोधिश्रवणकोपादिव किंचिदारक्तापाङ्गेन निजमुखलक्ष्मीनिवासदुग्धोदधिना लोचनयुगलेन लोचनमयमिव जीवलोकं कर्तुमुद्यताम्, उन्मदयौवनकुञ्जरमदराजिभ्यां भ्रूलताभ्यां मनःशिलापङ्कलिखितेन च रागाविष्टमन्मथहृदयेनेव[3] वदनलग्नेन तिलकबिन्दुना विद्योतितललाटपट्टाम्, उत्कृष्टहेमतालीपट्टाभरणमयमामुक्तकर्णोत्पलच्युतमधुधारासंदेहकारिणं कर्णपाशं दोलायमानपत्रमरकतमाणिक्यकुण्डलं दधतीम्, पाटलीकृतललाटेन सीमन्तचुम्बिनश्चूडामणेः क्षरतांशुजालेन मदिरारसेनेव प्रक्षाल्यमानदीर्घकेशकलापाम्, देहार्धप्रविष्टहरगर्वितगौरीविजिगीषयेव सर्वाङ्गानुप्रविष्टमन्मथदर्शितसौभाग्यविशेषाम्, उरःसमारोपितैकलक्ष्मी-

---

श्रमस्तद्वशात् । अनेन सौकुमार्यं ध्वनितम् । उच्चैः करैः स्फीतैः किरणैः । ऊर्ध्वं प्रसृतैर्हस्तैश्च । गृहीतश्चिबुकदेशोऽधराधोभागो यस्याः । रक्ता चासाववदाता धवला च रक्तावदाता पाटला स्वच्छा निर्मला च कान्तिर्यस्य । रतेः परिवादिनी सप्तभिस्तन्त्रीभिर्वादिनी वीणा । रत्नमयः कोणो वीणावादनं धनुराकारः पदार्थभेदस्तद्वच्चारुणा । नासा वंशो वेणुरिव तेन । गतिप्रसरस्य गमनविस्तारस्य निरोधिनः प्रतिबन्धकस्य श्रवणस्य कोपात् । गतिप्रसरनिरोधजनितो यः श्रवणोपरि कोपस्तस्मादित्यर्थः । अनेन कर्णान्तायतत्वं व्यज्यते । आरक्तौ अपाङ्गे अन्तौ यस्य । **उन्मदेति**–यौवनमेव कुञ्जरः यौ० उन्मदो यो यौवनकुञ्जरस्तस्य मदस्य राजिभ्याम् । रागाविष्टोऽनुरागपरवशः । पक्षे रागस्तिलकाख्यम् । विद्योतितमुद्भासितं ललाटपट्टमालिकपट्टिका यस्यास्ताम् । रागाविष्टेनेतिपाठे–' केचित्तु मन्मथो हृदये यस्मात् । तिलकं दृष्ट्वा यूनां हृदये मन्मथावेशः । एवं विधेनेवेति व्याख्यानयन्ति ' इ. भानु० । **उत्कृष्टेति**–उत्कृष्टं यद्धेमस्तालीपत्रवत्पट्टाभरणमाभरणविशेषस्तत्प्रचुरम् । अत एवामुक्तमासञ्जितं यत्कर्णोत्पलं तस्मात् च्युतानां मधुधाराणां संदेहकारिणं भ्रान्तिजनकम् । दोलायमानं पत्राणि सौवर्णानि तैः मरकतमाणिक्यैश्च निर्मितं कुण्डलं यस्मिन् । एतादृशं कर्णपाशं चारुकर्णं दधतीम् । सीमन्तः केशवेशः । **देहेति**–देहार्धे प्रविष्टो यो हरस्तेन गर्विता सञ्जातदर्पा या गौरी तस्या विजिगीषया विजेतुमिच्छया । सर्वाङ्गानुप्रविष्टो यो हरविरोधी मन्मथः कामस्तेनेत्या० । अनेन गौर्यपेक्षयास्याः कोपि सौभाग्यातिशयो व्यज्यते ।

---

१ वहनभ्रमात्. २ ऊर्ध्वैः. ३ रागाविष्टेन. ४ एकमाश्लिष्टहेमताडीपुटाभरणमपरम्. ५ रागेण. ६ समारोपितलक्ष्मी.

मुदितनारायणावलेपहरणाय प्रतिबिम्बकैर्निजरूपतो लक्ष्मीशतानीव सृजन्तीम्, उत्तमाङ्गनिहितैकचन्द्रविस्मितहराभिमाननाशाय विलासस्मितैश्चन्द्रसहस्राणीव दिक्षु क्षिपन्तीम्, निर्दयदग्धैकमन्मथप्रमथनाथरोषेणेव प्रतिहृदयं मन्मथायुतान्युत्पादयन्तीम्, रजनिजागरखिन्नस्य[1] परिचितचक्रवाकमिथुनस्य स्वप्तुं क्रीडानदिकासु कमलधूलिवालुकाभिर्बालपुलिनानि कारयन्तीम्, परिजननूपुररवप्रस्थितं वल्लभं[2] च हंसमिथुनं मृणालनिगडकेन बध्द्वानयेति हंसपालीमादिशन्तीम्, आभरणमरकतमयूखालिहते[3] भवनहरिणशावकाय सखीश्रवणादपनीय यवाङ्कुरप्रसवं प्रयच्छन्तीम्, आत्मसंवर्धितलताप्रथमकुसुमनिर्गमनिवेदनागतामुद्यानपालीमशेषाभरणदानेन संमानयन्तीम्, उपनीतविविधवनकुसुमफलपूर्णपत्र[4]पुटामविज्ञायमानालापतया हासहेतुं पुनःपुनः क्रीडापर्वतकपात्रीं शबरीमालापयन्तीम्, करतलविनिहतैर्मुहुर्मुहुरुत्पतद्भिश्च[5] मुखपरिमलान्धैर्नीलकन्दुकैरिव[6] मधुकरैः क्रीडन्तीम्, पञ्जरहारीतकरुत[7]श्रवणकृतदुष्टस्मितां चामरग्राहिणीं विहस्य लीलाकमलेन शिरसि विघट्टयन्तीम्, मुक्ताफलखचितचन्द्रलेखिकासंक्रान्तप्रतिमां[8] स्वेदजलबिन्दुजालचित[9]नखपदाभिप्रायेण ताम्बूलकरङ्क-

---

**निर्दयेति**-निर्दयं क्रूरं दग्ध एको मन्मथो येन तादृशो यः प्रमथनाथः शिवस्तस्मिन्यो रोषः कोपस्तेनेव । **परिचितेति**-मिथुनस्येति कर्तुः सम्बन्धविवक्षया षष्ठी न तु कृद्योगे स्वप्तुमिति । तुमुन्योगे तन्निषेधात् । स्वप्तुं स्वप्नायेत्यर्थः बालपुलिनानि लघुसैकतानि । 'अत्र पूर्वोक्तेषु वक्ष्यमाणेषु वा यत्र यत्र द्रव्यगुणक्रियाभिः प्रस्तुतप्रशंसा तत्र सर्वत्र यथोचितं तत्तदतिशया एव व्यङ्ग्याः स्वयं बोद्धव्याः । यथा निजरूपतः प्रतिबिम्बैरित्यत्र रूपातिशयः । यथा 'वा रजनीष्वत्र कमलातिशयः पुलिनक्रियातिशयश्च ' इति भानु० । **परिजनेति**-सेवकजननूपुरशब्दानुसारप्रवृत्तमित्यर्थः । मृणालं बिससूत्रमेव निगडकमन्दुकस्तेन । ' अन्दुको निगडोऽस्त्रीस्यात् ' इत्यमरः । यवाङ्कुरप्रसवो यवाङ्कुरप्ररोहः । आत्मसंवर्धिता या लता तस्याः प्रथमकुसुमनिर्गमः प्रथमपुष्पप्रादुर्भावस्तस्य निवेदनायागताम् । उद्यानपाली उपवनरक्षणे नियुक्ता स्त्री । **उपनीतेति**-उपनीतं विविधवनकुसुमफलैः पूर्णं पत्रनिर्मितं पात्रं यया ताम् । अविज्ञायमानोऽर्थविषये संकेताभावात्सम्यग्गृह्यमाणार्थ आलापो भाषणं यस्या अत एव हासहेतुं परिहासपात्रमस्फुटार्थकत्वात्तत्कथनस्य । क्रीडापर्वतकस्य पात्री रक्षित्री शबरी पुलिन्दपत्नी ताम् । पत्रशबरीतिपाठे स एवार्थः । ' पुलिन्दः पत्रशबरः ' इति रत्नकोषः । पञ्जरे यो हारीतो मृदङ्कुरस्तस्य रुतश्रवणेन कृतं दुष्टं निन्दाव्यञ्जकं स्मितं यया ताम् । विघट्टयन्तीं ताडयन्तीम् । मुक्ताफलैः खचिता या चन्द्रलेखिका चन्द्रलेखाकृतिराभरणविशेषस्तस्याः संक्रान्ता प्रतिमा यस्यां सैवंविधां ताम्बूलकरङ्कवाहिनीं स्वेदबिन्दुजालेन चितं व्याप्तं यन्नखपदं नखक्षतचिह्नं तस्याभिप्रायेणाशङ्कया ।

---

१ खिन्नस्य. २ दुर्लभम्. ३ लिहने हारततृणसूचीलोभेन. ४ पत्र. ५ विनिहतैः अभिहतैर्मुहुरपसर्पद्भिरुपसर्पद्भिश्च. ६ कञ्चुकैः. ७ कलरुत. ८ लेखिकाप्रतिम-. ९ जालाञ्चित.

वाहिनीं पयोधरे पटवासमुष्टिना ताडयन्तीम्, रत्नकुण्डलप्रतिबिम्बसान्द्रदत्तनवनखपदमण्डलाशङ्कया चामरग्राहिणीं विहस्य कपोले प्रसादव्याजेन दत्तेनात्मकर्णपूरपल्लवेनाच्छादयन्तीम्, पृथिवीमिव समुत्सारितमहाकुलभूभृद्व्यतिकरां शेषभोगेषु निषण्णाम्, मधुमासलक्ष्मीमिव षट्पदपटलापह्रियमाणकुसुमरजोधूसरपादपरागाम्, शरदमिवोत्पादितमानसजन्मपक्षिरवापनीतनीलकण्ठमदाम्,

---

पटवासमुष्टिना पयोधरे ताडयन्तीम्। अयं भावः--मुक्ताफलानां स्वेदजलबिन्द्वनुकारित्वाच्चन्द्रलेखायाश्च नखक्षतानुकारित्वात्ताम्बूलकरङ्कवाहिन्या अतिगौरे वक्षस्थले मुक्ताफलखचितचन्द्रलेखिकायाः प्रतिबिम्बसंक्रान्त्या चौर्यरतव्यञ्जकस्वेदबिन्दुचितनखक्षतस्य जातशङ्कया अविनीतैषा अस्या रतगोपनमवश्यं कर्तव्यमित्यभिसन्धिमत्या यत्र तद्दर्शनं तत्रैव चूर्णेन ताडनम्। पुनश्च चामरग्राहिण्याः कपोलस्थलप्रतिफलितस्य रत्नकुण्डलस्य वक्रत्वलोहितत्वाभ्यां नखपदसाम्यात्पूर्वोक्ताभिप्रायेणाह। **रत्नेति**--रत्नकुण्डलस्य यत्प्रतिबिम्बं तेन कारणेन सान्द्रं स्निग्धं दत्तं यन्नवनखपदमण्डलं तस्याशङ्का संशयस्तया। तस्या अपि प्रसादमिषेण कपोलावरकं कर्णपूरपल्लवं दत्वा गूढरतपिशुनं नखपदमाच्छादयन्तीमित्यर्थः। **पृथिवीमिति**--समुत्सारितो दूरीकृतो महाकुलानामुदारवंशानां भूभृतां राज्ञां वरेण श्रेष्ठेण व्यतिकरो भर्तृसम्बन्धो यया। वरव्यतिकर इति वा पदच्छेदः। 'नाहमात्मनः पाणिं ग्राहयिष्यमीति निश्चयादितिभावः। शेषभोगेषु वैवाहिकावशिष्टसुखेषु निषण्णां स्थिताम्। 'भूभृद्व्यतिकराम्' इति पाठे भूभृता व्यतिकर इति पूर्ववत्। 'व्यतिकरो वृत्तान्तः। यया। वैभवप्रकारः इत्यर्थः। तस्याः पितुरपेक्षयान्येषां राज्ञां न्यूनत्वादिति भावः'। इ. भा॰। पक्षे समुत्सारिता महाकुलभूभृतां कुलाचलानां वराणां श्रेष्ठानां मन्दरादीनां व्यतिकरोऽवरोधो यया तां शेषभोगेष्वनन्तफणासु स्थितां च 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। **मधुमासेति**--वसन्तश्रीरिव। श्लेषेणोभयोः साम्यमाह षट्पदेति--षट्पदपटलैर्भृङ्गसार्थैरपह्रियमाणं यत्कुसुमरजस्तेन धूसरः किंचित्पाण्डुः पादयोः परागो गन्धचूर्णविशेष उपरागो वा यस्याः। पक्षे पादपानां वृक्षाणां रागो यस्याम्। **उत्पादितेति**--उत्पादितः स्वलावण्यातिशयदर्शनेन पुनर्जीवितो यो मानसजन्मा मनोभवः कन्दर्पस्तस्य पक्षिणः शरास्तेषां रवेण शब्देनापनीतो निराकृतो नीलकण्ठस्य मदो मदनदाहजनितगर्वो यया ताम्। मदनसहस्रोत्पादकत्वस्य पूर्वमुक्तत्वात्सर्वतो मदनधनुष्टंकारं शृण्वतः शंकरस्य गर्वः खर्वोभूदिति भावः। 'उत्पादितो जनितो मानसं मनस्तस्माज्जन्म यस्य स मानसजन्मा कन्दर्पस्तस्य पक्षो विद्यते येषां मानसजन्मपक्षिणां रव उपभोगानुकूलः शब्दो यया सा। कामिनामुपभोगविषयकालाप उद्दीपकत्वात्कादम्बर्यैवोत्पादित इत्यर्थः। अतोपनीतो दूरीकृतो नीलकण्ठस्य मदो यया। ततः कर्मधारयः' इ. भानु॰। पक्षे उत्पादितेन मानसजन्मपक्षिणां हंसानां रवेणापनीतो नीलकण्ठानां

---

१ ॰प्रतिबिम्बमार्द्रदन्तव्रणमण्डल. २ ॰व्याजदत्तेन. ३ भूभृद्व्यतिकरा. ४ सखीम्.

गौरीमिव श्वेतांशुकरचितोत्तमाङ्गाभरणाम्, उदधिवेलावनलेखामिव मधुकराकुलनीलतमालकाननाम्, इन्दुमूर्तिमिवोद्दाममन्मथविलासगृहीतगुरुकलत्राम्, वनराजिमिव पाण्डुश्यामलवलीलतालंकृतमध्याम्, दिनमुखलक्ष्मीमिव भास्वन्मुक्तांशुभिन्नपद्मरागप्रसाधनाम्, आकाशकमलिनीमिव स्वच्छाम्बरदृश्यमानमृणालकोमलोरुमूलाम्, मयूरावलीमिव नितम्बचुम्बिशिखण्डभारविस्फुरच्चन्द्रकान्ताम्, कल्पतरुलतामिव कामफलप्रदाम्, पुरः [1]समीपे संमुखोपविष्टं कोसौ कस्य वापत्यं किमभिधानो वा कीदृशमस्य रूपं कियद्वा वयः किमभिधत्ते

मदः कण्ठमधुरतागर्वो यस्याम् । **श्वेतेति**–श्वेतांशुकेन धवलवस्त्रेण रचितमुत्तमाङ्गाभरणं शिरोभूषणं यस्याः सा । यद्वा श्वेतमंशुकं यस्याः सा श्वेतांशुका विरचितानि उत्तमाङ्गे आभरणानि यया सा श्वेतांशुका चरीसौ विरचिताणा च ताम् । पक्षे श्वेतांशोः शिवशिरस्थचन्द्रस्य करैश्चितं व्याप्तमुत्तमाङ्गाभरणं यस्यास्तां यदा व्याप्तमुत्तमांगमेव भूषणं यस्याः । **मधुकरेति**–मधुकरकुलवन्नीलतमा अतिनीला अलका यत्र तादृशमाननं यस्याः । पक्षे मधुकरकुलवन्नीलं तमालकाननं यत्र । **उद्दामेति**–उद्दाम उत्कटो यो मन्मथविलासः कामविभ्रमस्तेन गृहीतमाक्रान्तं गुरु महत्कलत्रं नितम्बो यस्याः । पक्षे उद्दाममन्मथविलासेन प्रबलकामविकारेण गृहीतमपहृतं गुरोर्बृहस्पतेः कलत्रं भार्या यया । 'कलत्रं श्रोणिभार्ययोः' इत्यमररभसौ । काममोहितेन चन्द्रेण गुरुदारहरणकथा म. भा० शा. प. २ अध्याये; हरिवं २५ अ. वा दृश्या । **पाण्ड्विति**-पाण्डुर्गौराभिनवयौवनत्वाच्छ्यामला कृष्णवर्णा च या वलीलता त्रिवलीलता तयालंकृतो मध्यो यस्याः । पक्षे पाण्डुः श्यामा च लवलीलता तयेत्या० । **भास्वदिति**–भास्वन्ति दीप्तिमन्ति यानि मुक्तानि तेषामंशुभिः किरणैर्भिन्नानि मिश्राणि पद्मरागाणां प्रसाधनान्यलङ्कारा यस्याः । पक्षे भास्वता सूर्येण मुक्ता येंशवः किरणास्तैर्भिन्नानि विकसितानि यानि पद्मानि कमलानि तेषां राग एव प्रसाधनमलंकरो यस्याः । स्वच्छं यदम्बरं वस्त्रं तेन दृश्यमानो मृणालकोमलमूरुमूलं सक्थिमूलं यस्याः । **स्वच्छेति**–स्वच्छाम्बरे निर्मलाकाशे दृश्यमानं मृणालकोमलं मृणालश्वेतमुरुलयोर्डलयोश्चाभेदादुडु नक्षत्रं मूलं मूलाख्यं यस्याम् । नितम्बः कटिप्रदेशस्तच्चुम्बी शिखण्डभारः केशकलापो यस्याः । विस्फुरच्चन्द्रवत्कान्ता मनोहरा । नितम्बचुम्बिशिखण्डभाराः चासौ विस्फुरच्चन्द्रकान्ता च सा तथोक्ता ताम् । 'नितम्बः कटकस्तच्चुम्बिन्यथाद्रेस्त्र शिखण्डभारवत्कलापिपिच्छसमूहवच्चन्द्रकाश्चन्द्राकृतयो बिन्दवोऽन्ते प्रान्ते यस्याः सा ताम्' । इति भानु० । पक्षे नितम्बचुम्बी यः शिखण्डभारः पिच्छसमूहस्तस्मिन्विस्फुरन्तो देदीप्यमानाः चन्द्रकाणामन्ता यस्याः । यद्वा चन्द्रका मेचकास्तैरन्ता रम्या । 'समौ चन्द्रकमेचकौ' इत्यमरः । 'मृतावववसिते रम्ये समाप्तावन्त इष्यते' । इति शब्दार्णवः । कामो मदनविकारस्तस्य फलप्रदामुत्कृष्टफलदाम् । पक्षे कामोऽभिलषितपदार्थः । पुरोग्रे समीपे संमुखोपविष्टं केयूरकं असौ चन्द्रापीडः कः कस्य वापत्यमित्यादि मुहुर्मुहुः पृच्छन्तीम् चन्द्रापीडसम्बद्धश्चन्द्रापीडविषयक आलापो यस्य तम् । तस्य चन्द्रापीडस्य

[1] पुरःशयनसमीपे.

भवता किमभिहितः कियच्चिरं दृष्टस्त्वया कथं चास्य महाश्वेतया सह परिचय उपजातः किमयमत्रागमिष्यतीति मुहुर्मुहुश्चन्द्रापीडसंबद्धालापं तद्रूपवर्णनामुखरं केयूरकं पृच्छन्तीं कादम्बरीं ददर्श ।

तस्य तु दृष्टकादम्बरीवदनचन्द्रलेखालक्ष्मीकस्य सागरस्येवामृतमुल्ललास हृदयम् । आसीच्चास्य मनसि । शेषेन्द्रियाण्यपि मे वेधसा किमिति लोचनमयान्येव न कृतानि । किं वाऽनेन कृतमवदातं कर्म चक्षुषा यदनिवारितमेनां पश्यति । अहो चित्रमेतदुत्पादितं वेधसा सर्वरमणीयानामेकं धाम । कुत एते रूपातिशयपरमाणवः समासादिताः । तन्नूनमेनामुत्पादयतो विधेः करतलपरामर्शक्लेशेन ये विगलिता लोचनयुगलादश्रुबिन्दवस्तेभ्य एतानि कुमुदकमलकुवलयसौगन्धिकवनान्युत्पन्नानि । इत्येवं चिन्तयत एवास्य तस्या नयनयुगले[1] निपतात चक्षुः । तदा तस्या अपि नूनमयं स केयूरकेणावेदित इति चिन्तयन्त्या रूपातिशयविलोकनविस्मयस्मेरं निश्चलनिबद्धलक्षं चक्षुस्तस्मिन्सुचिरं पपात । लोचनप्रभाधवलितस्तु कादम्बरीदर्शनविह्वलोचल इव तत्क्षणमराजत[2] चन्द्रापीडः । दृष्ट्वा च तं प्रथमं रोमोद्गमस्ततो भूषणरवस्तदनु कादम्बरी समुत्तस्थौ । अथ तस्याः कुसुमायुध एव स्वेदमजनयत, ससंभ्रमोत्थानश्रमो व्यपदेशोऽभवत्[3] । ऊरुकम्प एव गतिं रुरोध, नूपुररवाकृष्टहंसम-

लापो यस्य तम् । तस्य चन्द्रापीडस्य रूपं तस्य वर्णना प्रशंसा तत्र मुखरं वावदूकम् । **तस्येति**-तस्य चन्द्रापीडस्य । अमृतं जलम् । 'पयः कीलालममृतम्' इत्यमरः । उल्लासोच्छ्वसितं बभूव । चित्रमद्भुतं धामाश्रयस्थानम् । **रूपेति**-परमाणुभ्यो हि द्व्यणुकत्र्यणुकादिक्रमेण शरीरोत्पत्तिरिति न्यायशास्त्रकाराः । करतलेन यः परामर्शोऽङ्गस्पर्शनं तेन यः क्लेशः पीडनं तेन । अनेनातिसौकुमार्यं सूचितम् । सौगन्धिकं कल्हारम् । **रूपेति**-रूपातिशयविलोकनेन यो विस्मय आश्चर्यं तेन स्मेरं विकसितम् । निश्चलं यथा स्यात्तथा निबद्धं लक्षं लक्ष्यं येन तत् । कादम्बर्या दर्शनेन विह्वलो विक्लवः । मदनाकुलचित्त इत्यर्थः । अचल इव निश्चलत्वात्पर्वतसाम्यम् । एवं परस्परं दृष्टवतोरुभयोर्विप्रलम्भशृङ्गारं विवर्णयिषुः विशेषोक्त्या विभावनया वा तदङ्गभूतान्सात्त्विकव्यभिचारिभावान्वर्णयितुमुपक्रमते । **दृष्ट्वेति**-रोमोद्गमो रोमाञ्चप्रादुर्भावः । कादम्बर्या उत्कण्ठातिशयं प्रतिपादयन्नाह-ससंभ्रमं सरभसं यदुत्थानं तस्माच्छ्रमः । व्यपदेशो मिषम् । अयं भावः-कादम्बरी तु मदनविकारेणैव स्विन्नगात्री बभूव । किं तु सत्वरोत्थानश्रमादेव मम स्वेदोऽभूदिति व्याजं कृतवती । **ऊर्विति**-ऊरुस्तम्भादेव तस्या गति-

१ आनने. २ क्षणम्. ३ व्यपदेशेन.

ण्डलमपयशो लेभे। निश्वासप्रवृत्तिरेवांशुकं चलं चकार, चामरानिलो निमित्ततां ययौ। अन्तःप्रविष्टचन्द्रापीडस्पर्शलोभेनैव निपपात हृदये हस्तः, स एव स्तनावरणव्याजो बभूव। आनन्द एवाश्रुजलमपातयत्, चलितकर्णावतंसकुसुमरजो व्याज आसीत्। लज्जैव वक्तुं न ददौ, मुखकमलपरिमलागतालिवृन्दं द्वारतामगात्। मदनशरप्रथमप्रहारखेदेनैव सीत्कारमकरोत्, कुसुमप्रकरकेतकीकण्टकक्षतिः साधारणतामवाप। वेपथुरेव करतलमकम्पयत्, निवेदनोद्यतप्रतीहारीनिवारणं कष्टमभूत्। तदा च कादम्बरीं विशतो मन्मथस्यापि मन्मथ इवाभूद् द्वितीयस्तया सह यो विवेश चन्द्रापीडहृदयम्। तथा हि। असावपि तस्या रत्नाभरणद्युतिमपि तिरोभानममंस्त। हृदयप्रवेशमपि परिग्रहमगणयत्। भूषणरवमपि संभाषणममन्यत। सर्वेन्द्रियाहरणमपि प्रसादमचिन्तयत्, देहप्रभासंपर्कमपि सुरतसमागमसुखमकल्पयत्।

कादम्बरी तु कृच्छ्रादिव दत्तकतिपयपदा महाश्वेतां स्नेहनिर्भरं चिरदर्शनजातोत्कण्ठा[3] सोत्कण्ठं कण्ठे जग्राह। महाश्वेतापि दृढतरदत्तकण्ठग्रहा

---

निरोधो जातः। नूपुररवाकृष्टेन हंसमण्डलेन मद्गतिर्निरुद्धेति सखीपुरतश्चेष्टयापह्नवं कृतवतीत्यर्थः। निर्भर्त्सनाद्धंसमण्डलस्यापयशः। एवमग्रेप्यूह्यम्। **चलितेति**-चलितं कम्पितं यत्कर्णावतंसकुसुमं तद्रजसा मेश्रुपातो जात इत्यन्येषां ज्ञापितवतीति भावः। द्वारतामगादपह्नवसाधनमभूत्। यद्वा वचननिरोधसाधनताममात्। कुसुमप्रकरेषु कुट्टिमगतेषु यः केतकीकण्टकस्तेन या क्षतिर्वेधः सा साधारणता निमित्ततामवाप भेजे। कण्टकविद्धचरणत्वादनया सीत्कारो विहित इति सखीभिरज्ञायि कपटं व्याजः। अनया प्रतीहारीनिवेद्यार्थप्रतिषेधार्थमेव हस्तकम्पनेन संज्ञादायीति सख्यो मेनिरे। एवं नायिकागतभावाविर्भावमुक्त्वा नायकविषयकमाह। **तदेति**-एको मदनः कादम्बरीहृदयं प्रविवेश। अतः कोपि तत्प्रतिस्पर्ध्यन्यो मदनः स यः कादम्बर्या सह चन्द्रापीडहृदयं प्रविवेश। यथा चन्द्रापीडदर्शनक्षण एव तद्विषयको मन्मथः कादम्बरीं प्रविष्टस्तथा कादम्बरीदर्शनमनु चन्द्रापीडमपि तत्सम्बन्धी मन्मथ आविवेशेति भावः। चन्द्रापीडस्याप्युत्कण्ठातिशयं व्यञ्जयन्नाह। **तथेति**-रत्नेति-रत्नाभरणकान्त्या व्याप्तत्वात्सकलावयवाना साकल्येनानवलोकनात्तामपि तिरोधानं व्यवधानममंस्तेत्यर्थः। द्युतेः प्रकाशरूपत्वेन विषयान्तरेष्विन्द्रियाच्छादकत्वेन तिरोधानरूपत्वमनुचितमिति विरोधध्वनिः। चिरदर्शनाज्जातोत्कण्ठौत्सुक्यं यस्याः।

---

१ निश्वास एव, ०प्रवृद्धिरेव. २ व्यपदेशतामयासीत्. ३ ०त्कण्ठा.

तामवादीत् । सखि कादम्बरि भारते वर्षे राजानेकवरतुरगखुरमुखोल्लेखदत्तचतुःसमुद्रमुद्रो रक्षितप्रजापीडस्तारापीडो नाम । तस्यायं निजभुजशिलास्तम्भविश्रान्तविश्वविश्वंभरापीडश्चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेनानुगतो भूमिमिमाम् । एष च दर्शनात्प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः । परित्यक्तसकलसङ्गनिष्ठुरामपि मे सविशेषैः[1] स्वभावसरलैर्गुणैराकृष्य चित्तवृत्तिं वर्तते । दुर्लभो हि दाक्षिण्यपरवशो निर्निमित्तमित्रमकृत्रिमहृदयो विदग्धजनो यतो दृष्ट्वेममहमिव त्वमपि निर्माणकौशलं प्रजापतेर्निःसपत्नतां च रूपस्य स्थानाभिनिवेशित्वं च लक्ष्म्याः सद्वृत्ततासुखं च पृथिव्याः सुरलोकातिरिक्ततां च मर्त्यलोकस्य सफलतां च मानुषीलोचनानामेकस्थानसमागमं च सर्वकलानामैश्वर्यं च सौभाग्यस्याग्राम्यतां च मानुष्याणां ज्ञास्यसीति बलादानीतोयम् । कथिता चास्य मया बहुप्रकारं[2] प्रियसखी । तदपूर्वदर्शनोयमिति विमुच्य लज्जामनुपजातपरिचय इत्युत्सृज्याविश्रम्भतामविज्ञातशील इत्यपहाय शङ्कां यथा मयि तथाऽत्रापि वर्तितव्यम् । एष ते मित्रं च बान्धवश्च परिजनश्च । इत्यावेदिते तया चन्द्रापीडः प्रणाममकरोत् । कृतप्रणामं च तं तदा कादम्बर्यास्तिर्यग्विलोकयन्त्याः सस्नेहमतिदीर्घलोचनापाङ्गभागं गच्छतस्तारकस्य[3] श्रमसलिललवविसर इवानन्दबाष्पजलबिन्दुनिकरो निपपात । त्वरितमभिप्रस्थितस्य हृदयस्य धूलिरिव सुधाधवला स्मित-

---

**अनेकेति**-अनेके ये वरा उत्तमास्तुरगा अश्वास्तेषां खुरमुखोल्लेखवर्णैर्दत्ता चतुर्षु समुद्रेषु मुद्रा येन । रक्षिता निवारिता प्रजानां पीडा येन । **निजेति**-निजौ यौ दृढत्वायतत्वादिसाम्याद्भुजावेव शिलास्तम्भौ तत्र विश्रान्ता या विश्वाऽखिला विश्वंभरा वसुधा सैवापीडो लक्ष्म यस्य । सविशेषैर्विशेषयुक्तैर्लोकातिगैरित्यर्थः । **स्वभाव-सरलैः** प्रकृत्या ऋजुभिः । दाक्षिण्यपरवश एकान्ततोऽनुकूलाचारवानित्यर्थः । **निर्निमित्त-मित्रं** निष्कारणबन्धुः अकृत्रिमं मायया हीनं हृदयं यस्य । निर्माणकौशलमिष्टवस्तुरचनापाटवम् । निःसपत्नतां रूपस्याद्वितीयं रूपम् । स्थाने योग्यस्थले अभिनिवेशो वस्तुमाग्रहो यस्याः । अनेन शोभातिशय उक्तः । **सुरेति**-अनेन महेन्द्रापेक्षयाप्यस्य श्रेष्ठत्वं ध्वनितम् । सौभाग्यस्यैश्वर्यमुत्कर्षः । अग्राम्यतामुचिताचारविदग्धताम् । अविश्रम्भतामविश्वासताम् । **कृतेति**-तं सस्नेहं सप्रेम विलोकयन्त्याः कादम्बर्याः आनन्दबाष्पजलबिन्दूनां निकरः समूहो निपपात । अतिदीर्घो यो लोचनयोरपाङ्गभागः प्रान्तदेशस्तं गच्छतस्तारकस्य कनीनिकाया गमनश्रमात्सलिललवानां स्वेदबिन्दूनां विसरः

---

१ सविशेषस्वभाव. २ बहुधारम्. ३ तारतारकस्य लोचनस्य.

ज्योत्स्ना विससार । संमान्यतामयं हृदयरुचिरो जनः प्रतिप्रणामेनेति शिरो वक्तुमिवैका भ्रूलता समुन्ननाम । अङ्गुलिविवरविनिःसृतमरकताङ्गुलीयकमयूखलेखो विभ्रमगृहीतताम्बूलवीटिक इव करो जृम्भारम्भमन्थरं मुखमुत्ससर्प । स्रवत्स्वेदजलधौतलावण्यनिर्मलेषु चास्याः संक्रान्तप्रतिबिम्बतया संचरन्मूर्तिर्मकरकेतुरिवावयवेष्वदृश्यत चन्द्रापीडः । तथा हि । सिञ्जन्मणिनूपुरपुटेन मणिभुवमालिखताङ्गुष्ठेनाहूत इव चरणनखेषु निपपात । दर्शनातिरभसप्रधावितेन गत्वा हृदयेनानीत इव स्तनाभ्यन्तरे समदृश्यत । विकचकुवलयदामदीर्घया च दृष्ट्या निपीत इव कपोलतले समलक्ष्यत । सर्वासामेव च तदा तासां कन्यकानां तिर्यक्पश्यन्तीनां तं कुतूहलादपाङ्गचुम्बिन्यो निर्गन्तुकामा इव कर्णपूरमधुकरैः समं बभ्रमुस्तरलास्तारकाः ।

कादम्बरी तु सविभ्रमकृतप्रणामा महाश्वेतया सह पर्यङ्के निषसाद । ससंभ्रमं परिजनोपनीतायां च शयनशिरोभागनिवेशितायां धवलांशुकप्रच्छदपटायां हेमपादाङ्कितायां पीठिकायां चन्द्रापीडः समुपाविशत् । महाश्वेतानुरोधेन च विदितकादम्बरीचित्ताभिप्रायाः संवृतमुखन्यस्तहस्तदत्तशब्दनिवारणसंज्ञाः प्रतीहार्यो वेणुरवान्वीणाघोषान्गीतध्वनीन्मागधीजयशब्दांश्च सर्वतो निवारयांचक्रुः । त्वरितपरिजनोपनीतेन च सलिलेन कादम्बरी स्वयमुत्थाय महाश्वेतायाश्चरणौ प्रक्षाल्योत्तरीयांशुकेनापमृज्य पुनः पर्यङ्क-

समूह इव । धूलिः पादरज इव । शिरो वक्तुं शिरसे कथयितुम् । अङ्गुलिविवरेभ्यो विनिर्गता मरकताङ्गुलीयकस्य मयूखलेखाः किरणवितयो यस्मात्सः । अत एव नीलत्वसाम्याद् विभ्रमेण विलासेन गृहीता ताम्बूलवीटिका येनैवंविधः । स्रवदिति—स्रवता क्षरता स्वेदजलेनाङ्गनिष्यन्दवारिणा धौतं यल्लावण्यं तेन निर्मलेषु स्वच्छेष्ववयवेषु संक्रान्तप्रतिबिम्बतया चन्द्रापीडः संचरन्मूर्तिर्मकरकेतुरिवादृश्यत जनैरिति शेषः । तदेव स्पष्टयति तथाहीति । सिञ्जत् शब्दं कुर्वत् । दर्शनार्थे योऽतिरभसोऽतिवेगस्तेन प्रधावितेन । विकचानि विकस्वराणि यानि कुवलयानि तेषां दामवद्दीर्घया । अविरतकटाक्षपातेन दामसाम्यम् । कुतूहलात् तिर्यक् साचीकृतलोचनाभ्यां तं पश्यन्तीनां तासां तरलास्तारका अपाङ्गचुम्बिन्योऽपाङ्गं यावत्प्राप्ता निर्गन्तुकामाश्चन्द्रापीडं प्रति गमनोत्सुका इव इ० । शयनस्य पर्यङ्कस्य शिरोभागे निवेशितायां स्थापितायाम् । धवलांशुकस्य प्रच्छदपटो यस्याम् । अङ्किता चिह्निता । महाश्वेतेति—महाश्वेताया अनुरोधेनानुवर्तनेच्छया विदितः कादम्बरीचित्ताभिप्रायो याभिस्ताः प्रतीहार्यः संपिहितं यन्मुखं तत्र न्यस्तो यो हस्तस्तेन दत्ता शब्दनिवारणाय संज्ञा याभिस्तादृ०.

१ लीयकलेख. २ माणिक्य. ३ •चुम्बिन्या दृष्ट्या. ४ ससंभ्रम.

मारुरोह । चन्द्रापीडस्यापि कादम्बर्याः सखी रूपानुरूपा जीवितनिर्विशेषा सर्वविश्रम्भभूमिर्मदलेखेति नाम्ना बलादनिच्छतोपि प्रक्षालितवती चरणौ । महाश्वेता तु कर्णाभरणप्रभावर्षिण्यंसदेशे सप्रेम पाणिना स्पृशन्ती मधुकरभरपर्यस्तं च कर्णावतंसमुत्क्षिपन्ती चामरपवनविधुतिपर्यस्तां चालकवल्लरीमनुष्वजमाना कादम्बरीमनामयं पप्रच्छ । सा तु सखीप्रेम्णा गृहनिवासेन कृतापराधेवानामयेनैव लज्जमाना कृच्छ्रादिव कुशलमाचचक्षे । समुपजातशोकापि च तस्मिन्काले महाश्वेतामुखनिरीक्षणतत्परापि मुहुर्मुहुरपाङ्गविक्षेपप्रचलिततरलतरतारसारोदरं चक्षुर्मण्डलितचापेन भगवता कुसुमधन्वना बलान्नीयमानं चन्द्रापीडेपीडनायेव न शशाक निवारयितुम् । तेनैव क्षणेन तेनासन्नसखीकपोलसंक्रान्तेनेर्ष्यां रोमाञ्चभिद्यमानकुचतटनश्यत्प्रतिबिम्बेन विरहव्यथां स्वेदार्द्रवक्षःस्थलघटितशालभञ्जिकाप्रतिमेन सपत्नीरोषं निमिषता दौर्भाग्यशोकमानन्दजलतिरोहितेनान्धतादुःखमभजत सा । मुहूर्तापगमे च ताम्बूलदानोद्यतां महाश्वेता तामभाषत । सखि कादम्बरि संप्रतिपन्नमेव सर्वाभिरस्माभिरयमभिनवागतश्चन्द्रापीड आराधनीयः । तदस्मै तावद्दीयताम् । इत्युक्ता च किंचिद्विवर्तितावनमितमुखी शनैरव्यक्तमिव

---

रूपानुरूपा रूपेणानुरूपा सदृशी । **महाश्वेतेति**–कर्णाभरणप्रभाया वर्षोऽस्यास्तीति तस्मिन्नंसदेशे । अर्थात्कादम्बर्याः । प्रेम्णा सहितं यथा तथा सप्रेम । मधुकरभरेण पर्यस्तं विस्खलितम् । अलकवल्लरीं केशमञ्जरीम् । अनुष्वजमाना स्थाने प्रापयन्तीत्यर्थः । अनामयेनैव लज्जमान सखीदुःखदुःखिन्यपि कुशलिन्येवास्मीति लज्जमानेत्यर्थः । **समुपेति**–अपाङ्गयोर्विक्षेपस्तेन प्रचलिता अत एव तरलतरात्यन्तचञ्चला तारा यस्य तत्तथा अत एव सारं शबलमुदरं यस्य तादृक् । पुनश्च मण्डलितचापेनाकृष्टकोदण्डेन कुसुमधन्वना चन्द्रापीडपीडनाय बलात्तं प्रति नीयमानम् । **तेनैवेति**–तेनैव क्षणेन तस्मिन्नेव क्षणे तेन चन्द्रापीडेनासन्ना याः सख्यस्तासां कपोलसंक्रान्तेन सता ईर्ष्यामभजत । स्त्र्यन्तरप्रवेशादीर्ष्या । रोमाञ्चेन भिद्यमानकुचतटे नश्यद्रोमाञ्चप्रतिबन्धवशात्तिरोभवत्प्रतिबिम्बं यस्य । अत एव विरहसम्भवः । स्वेदेनार्द्रं यद्वक्षस्थलं तत्र घटिता शालभञ्जिकायाश्चित्रपुत्तलिकायाः प्रतिमा प्रतिच्छाया यस्मिन् । शालभञ्जिकायाः स्त्रीभावात्तस्याश्च तत्र संक्रमात्सपत्नीरोषः । स्वेदार्द्रेत्यनेन वक्षस्थलस्य प्रतिबिम्बग्राहकता सूचिता । निमिषता नेत्रनिमीलनं कुर्वता । निमेषसूचितौत्सुक्याभावाद्दौर्भाग्यम् । **सखीति**–संप्रतिपन्नं प्राप्तम् । अकृतोपचारा अपि वयं परिचितत्वात्कृतोपचारा इव । अपूर्वत्वादयं चन्द्रापीडः

---

१ अपाङ्ग. २ विधूतिपर्यस्तालक. ३ चन्द्रापीडं प्रति, ० पीडनयेव. ४ ईर्ष्यया. ५ 'विरहव्यथास्वेद–' इति भानु०. ६ 'सपत्नीरोषान्निमिषता दौर्भाग्यम्' इ. भानु०. ७ दीयतां ताम्बूलम्.

प्रियसखि लज्जेहमनुपजातपरिचया प्रागल्भ्येनानेन गृहाण त्वमेवास्मै प्रयच्छे-त्युवाच सा ताम् । पुनःपुनरभिधीयमाना च तया कथमपि ग्राम्येव चिराद्दाना-भिमुखं मनश्चक्रे । महाश्वेतामुखादनाकृष्टदृष्टिरेव वेपमानाङ्गयष्टिराकुलितलो-चना स्थूलं स्थूलं निश्वसती निजशरप्रहारमूर्छिता मन्मथेन स्नपितेव स्वेदजलवि-सरैः स्वेदजलविसरनिमज्जनभयेन च हस्तावलम्बनमिव याचमाना साध्वसपर-वशा पतामीति लगितुमिव कृतप्रयत्ना प्रसारयामास ताम्बूलगर्भं हस्तपल्लवम् । चन्द्रापीडस्तु जयकुञ्जरकुम्भस्थलास्फालनसंक्रान्तसिन्दूरमिव स्वभावपाटलं, धनु-र्गुणाकर्षणकृतकिणश्यामलं, कचग्रहाकृष्टिरुदितारिलक्ष्मीलोचनपरामर्शलग्नाञ्जन-बिन्दुमिव, विसर्पन्नखकिरणतयातिरभसेन प्रधाविताभिरिव विवर्धिताभिरिव प्रह-सिताभिरिवाङ्गुलीभिरुपेतं, स्पर्शलोभाच्च तत्कालकृतसंनिवेशाः सरागाः पञ्चापीन्द्रि-यवृत्तीरपरा इवाङ्गुलीरुद्वहन्तं प्रसारितवान्पाणिम् । तत्र च सा तत्कालसुलभविलास-दर्शनकुतूहलिभिरिव कुतोप्यागत्य सर्वरसैरधिष्ठितौ तेनानिबद्धलक्षशून्यप्रसारितेन चन्द्रापीडहस्तान्वेषणायेव पुरःप्रवर्तितनखांशुनिवहेन वेपथुचलितवलयावलीवा-

आराधनीय इति भावः । यद्वा संप्रतिपन्नमभ्युपगतम् । अनेन प्रागल्भ्येन ताम्बूलदानरूपेण ग्राम्या ग्रामीणा इव । सा ह्यज्ञातनागरिकव्यवहारत्वादुचितेषु व्याकुलमतिर्भवति । आकुलिते व्याकुले लोचने यस्याः सा । निजशरप्रहारेण मूर्च्छिता मोहं गता । अत एव तस्मान्मु-क्त्यर्थं मन्मथेन स्वेदजलस्य विसरैः समूहैः स्नपितेव । साध्वसं भयं तस्य परवशाधीना । लगितुमवलम्बनं कर्तुम् । चन्द्रेति—चन्द्रापीडस्तु पाणिं प्रसारितवान् । पाणिं विशेषयन्नाह— स्वभावपाटलं निसर्गतः श्वेतरक्तमत एव जयकुञ्जरकुम्भस्थलस्यास्फालनेन प्रोत्साहनार्थं परामर्शे-नेन संक्रान्तं सिन्दूरं यस्मिन् तादृशमिव । धनुर्गुणेन धनुर्ज्यया आकर्षणेन कृतो यः किणश्चिह्नं तेन श्यामलं कृष्णम् । अत एवोत्प्रेक्षते—कचग्रहेण या कृष्टिः कर्षणं तेन रुदिता याऽरिलक्ष्मी-स्तस्या नयनजलमार्जनार्थं यो लोचनपरामर्शो हस्तेन स्पर्शनं तेन लग्ना अञ्जनबिन्दवो यस्मि-न्नेवंविधमिव । किणस्य कृष्णत्वसाम्यात्तदुपमानम् । विसर्पन्तः प्रसरन्तो ये नखकिरणास्तेषां भावस्तत्ता तया हेतुनातिरभसेनातिवेगेन इ० । तत्काले कृतः संनिवेश उपस्थितिः याभिः । तत्रेति—तत्र तस्मिन्काले सा कादम्बरी चन्द्रापीडाय ताम्बूलमदात् । कीदृशी सतीत्याह तादिति—कुतोप्यागत्य तत्काले सुलभा सुखप्राप्या ये विलासास्तेषां दर्शने कुतूहलं विद्यते येषां तादृशैः सर्वरसैरधिष्ठिताश्रिता । पुनश्च हस्तेन स्वेदसलिलपातपूर्वकं यथा स्यात्तथात्मा-नमिव प्रतिग्राहयन्ती भवतो हस्ते मम जीवितं वर्तते इति तस्य हस्ते जीवितं स्थाप-

१ अनाकर्षित. २ आमुकुलित. ३ प्रसारिताभिः. ४ अधिष्ठितेनान्यानिबद्ध०.

लेन संभाषणामिव कुर्वता हस्तेन स्वेदसलिलपातपूर्वकं गृह्यतामयं मन्मथेन दत्तो दासजन इत्यात्मानमिव प्रतिग्राहयन्त्यद्य प्रभृति भवतो हस्ते वर्तत इति जीवितमिव स्थापयन्ती ताम्बूलमदात् । आकर्षन्ती च करकिसलयं भुजलतानुसारेण स्पर्शतृष्णागतमनङ्गशरभिन्नमध्यं हृदयमिव पतितमपि रत्नवलयं नाज्ञासीत् । गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत् ।

अथ सहसैव त्वरितगतिस्त्रिवर्णरागमिन्द्रायुधमिव कुण्डलीकृतं कण्ठेन वहता विद्रुमाङ्कुरानुकारि[1]चञ्चुपुटेन मरकतद्युतिपक्षतिना मन्थरगतेन शुकेनानुबध्यमाना कुमुदकेसरपिञ्जरतया चरणयुगलस्य चम्पककलिकाकारतया च मुखस्य कुवलयदलनीलतया च पक्षद्युतीनां कुसुममयीवागत्य सारिका सक्रोधमवादीत् । भर्तृदारिके कादम्बरि कस्मान्न निवारयस्येनमलीकसुभगाभिमानिनमतिदुर्विनीतं मामनुबध्नन्तं विहङ्गापसदम् । यदि मामनेन परिभूयमानामुपेक्षसे ततोऽहं नियतमात्मानमुत्सृजामि । सत्यं शपामि ते पादपङ्कजस्पर्शेन । इत्येवमभिहिता च तया कादम्बरी स्मितमकरोत् । अविदितवृत्तान्ता तु महाश्वेता किमियं वदतीति मदलेखां पप्रच्छ । सा चाकथयत् । एषा भर्तृदुहितुः सखी कादम्बर्याः कालिन्दीति नाम्ना सारिका । इयमस्य च परिहासनाम्नः शुकस्य भर्तृदारिकयैव पाणिग्रहणपूर्वकं जायापदं ग्राहिता । अद्य चायमनया प्रत्युषसि कादम्बर्यास्ताम्बूलकर[2]वाहिनीमिमां समालिकामेकाकिनीं किमपि पाठयन्दृष्टो यतस्ततः प्रभृति संजातेर्ष्या कोपपराङ्मुखी नैनमुपसर्पति नालपति न स्पृ-

---

यन्तीव । हस्तं विशेषयन्नाह अनिबद्धं न लोचनविषयीकृतं लक्ष्यं वेध्यं तेन शून्यं यथा तथा प्रसारितेन । वेपथुना कम्पेन चलिता या वलयावली पारिहार्यश्रेणी तया वाचालेन मुखरेण । अत एव संभाषणं कुर्वतेव । भुजेति—भुजलतानुसारेण बाहुलतामार्गेण स्पर्शतृष्णया गतम् । अथेति—अथेत्यानन्तर्ये ताम्बूलदानानन्तरं सारिका पीतपादा सहसैवागत्य सक्रोधमवादीत् । कीदृशी । त्वरिता शीघ्रा गतिर्यस्याः । पुनः कीदृशी । [illegible] शक्रधनुरिव कुण्डलीकृतं कण्ठेन वहता । मरकतस्य [illegible] पक्षती पक्षमूले यस्य तेन । शुकेन कीरेणानुबध्यमानानुगम्यमाना । पुनश्च कुमुदानां केसराणि किञ्जल्कास्तद्वत्पिञ्जरं तस्य भावस्तत्ता तया । पक्षद्युतीनां छदकिरणानाम् । कुसुममयी पुष्पघटितेव । अलीकेति—अलीको मिथ्या सुभगस्य सौभाग्यस्याभिमानोऽहंकारो विद्यतेऽस्य तम् । यद्वा अलीकं सुभगमात्मानमभिमन्यतेऽसौ अलीकसुभगाभिमानी तम् । मनः इतिं णिनिः । विहंगेष्वपसदो नीचो विहं-

---

१ अनुकारिणा. २ त्व.

शति न विलोकयति सर्वाभिरस्माभिः प्रसाद्यमानापि न प्रसीदतीति । एतदाकर्ण्य स्फुटस्फुरितकपोलोदरश्चन्द्रापीडो मन्दं मन्दं विहस्याब्रवीत् । अस्त्येषा कथा, श्रूयत एवैतद्राजकुले कर्णपरंपरया, परिजनोप्येवमामन्त्रयते[1], बहिरपि जनाः कथयन्त्येवं, दिगन्तरेष्वप्ययमालापो वर्तत एव, अस्माभिरप्येतदाकर्णितमेव यथा किल देव्याः कादम्बर्यास्ताम्बूलवाहिनीं[2] तमालिकां कामयमानः परिहासनामा शुको मदनपरवशो गतान्यपि दिनानि न वेत्तीति । तदयमास्तां तावद्वामाचारः परित्यक्तनिजकलत्रो निस्त्रपोनया[3] सह । देव्यास्तु कादम्बर्याः कथमेतद्युक्तं यन्न निवारयतीमां चपलां दुष्टदासीम् । अथवा देव्यापि कथितैव निःस्नेहता प्रथममेव वराकीमिमां कालिन्दीमीदृशाय दुर्विनीताय विहंगाय प्रयच्छन्त्या । किमिदानीमियं[4] करोतु । यदेतत्सापत्न्यकरणं नारीणां प्रधानं कोपकारणमग्रणीर्विरागहेतुः परं परिभवस्थानम् । इयमेव केवलमतिधीरा यदनयानेन दौर्भाग्यगरिम्णा जातवैराग्यया विषं वा नास्वादितमनलो वा नासादितोनशनं वा नाङ्गीकृतम् । न ह्येवंविधमपरमस्ति[5] योषितां लघिम्नः कारणम् । यदि चेयमीदृशेप्यपराधेनुनीयमानानेन प्रत्यासत्तिमेष्यति तदा धिगिमामलमनया दूरतो वर्जनीयेयमभिभवनिरस्या । क एनां पुनरालापयिष्यति को वावलोकयिष्यति को वास्या नाम ग्रहीष्यति । इत्येवमभिहितवति तस्मिन्सर्वास्ताः सह कादम्बर्या क्रीडालापभाविता[6] जहसुरङ्गनाः । परिहासस्तु तस्य नर्मभाषितमाकर्ण्य जगाद । धूर्त राजपुत्र निपुणेयं

गापसदस्त्यक्ष्यामीत्यर्थः । पाठयन्वदन् । **स्फुटेति**-स्फुटं स्पष्टं स्फुरितं स्पन्दितं कपोलयोरुदरं यस्य । **तदिति**-वामो विरुद्ध आचारो वृत्तिर्यस्य । निस्त्रपो निर्लज्जः । अनया तमालिकया सह आस्तां तावन्न विचारणार्हः । न तथोपालम्भार्ह इत्यर्थः । यथा कादम्बरीति सूचयन्नाह । **देव्या इति**-चपलां पुंश्चलीम् । **किमिति**-इयं वराकीदानीं किं करोतु न किमपि कर्तुं समर्था । सपत्न्या भावः सापत्न्यं तस्य करणं प्रधानं मुख्यं कोपकारणम् । अग्रणीः प्रधानो विरागहेतुर्निर्वेदकारणम् । परिभवस्यावमाननायाः स्थानं भूमिः । दौर्भाग्यस्य गरिम्णा गुरुतया । अनशनं प्रायोपवेशनमित्यर्थः । प्रत्यासत्तिमेष्यति प्रसन्ना भविष्यति । अभिभवेन तिरस्कारेण निरस्या दूरीकरणीया । **इतीति**-एतत्सर्वं वचः सोत्प्रासमवगन्तव्यम् । क्रीडालापो नर्मभाषितं भावितश्चिन्तितो याभिः । 'भूश्चिन्तायाम्' इति चौरादिकस्य कर्मणि क्तः । निष्ठान्तस्य परनिपातः । परिहास

1 मन्त्रयति. 2 वाहिनीं. 3 निस्त्रपया. 4 इयं तपस्विनी. 5 नह्येकमपरम्. 6 भाषिता.

न त्वयान्येन वा लोलापि प्रतारयितुं शक्यते । एषापि बुध्यत एवैतावतीर्वक्रोक्तीः । इयमपि जानात्येव परिहासजल्पितानि । अस्या अपि राजकुलसंपर्कचतुरा मतिः । विरम्यताम् । अभूमिरेषा भुजङ्गभङ्गिभाषितानाम् । इयमेव हि वेत्ति मञ्जुभाषिणी कालं च कारणं च प्रमाणं च विषयं च प्रस्तावं च कोपप्रसादयोरिति ।

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत् । आयुष्मति देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयते । इत्येवमभिहिता च गन्तुकामा सखि चन्द्रापीडः क्वास्तामिति कादम्बरीमपृच्छत् । असौ तु न पर्याप्तमनेकस्त्रीहृदयसहस्रावस्थानेनेति मनसा विहस्य प्रकाशमवदत् । सखि महाश्वेते किं त्वमेवमभिदधासि । दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः किमुत भवनस्य विभवस्य परिजनस्य वा । यत्रास्मै रोचते प्रियसखीहृदयाय वा तत्रायमास्तामिति । तच्छ्रुत्वा महाश्वेता तदत्रैव त्वत्प्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्तामित्यभिधाय गन्धर्वराजं द्रष्टुं ययौ । चन्द्रापीडोपि तयैव सह निर्गत्य विनोदार्थं वीणावादिनीभिश्च वेणुवाद्यनिपुणाभिश्च गीतकलाकुशलाभिश्च दुरोदरक्रीडारागिणीभिश्चाष्टापदपरिचयचतुराभिश्च चित्रकर्मकृतश्रमाभिश्च सुभाषितपाठिकाभिश्च कादम्बरीसमादिष्टप्रतीहारीप्रेषिताभिः कन्याभिरनुगम्यमानः पूर्वदृष्टेन केयूरकेणोपदिश्यमानमार्गः क्रीडापर्वतमणिमन्दिरमगात् । गते च तस्मिन्गन्धर्वराजपुत्री विसर्ज्य सकलं सखीजनं परिजनं च परिमितपरिचारिकाभिरनुगम्यमाना प्रासादमारुरोह ।

---

एतत् शुकस्य नाम । धूर्त व्याजोक्तिचतुर । लोला चपला । वक्रोक्तीः श्लिष्टा वाचः । राजकुलेन संपर्कः सम्बन्धस्तेन चतुरा विदग्धा । अभूमिरस्थानं भुजङ्गा नागरिकास्तेषां भङ्गिभाषितानां चतुरभाषणानाम् । प्रमाणमवधिम् । प्रस्तावमवसरम् । **न पर्याप्तेति**—अनेकस्त्रीहृदयसहस्ररूपं यदवस्थानं निवासयोग्यं स्थानं तेनास्य किं न पर्याप्तं येनान्यस्थानचिन्ता क्रियते । इति मनसा विहस्य इ० । पाठान्तरे अनेकस्त्रीहृदयसहस्रावस्थानमनेन पर्याप्तं परित आप्तं लब्धमेव । शेषं पूर्ववत् । शरीरस्यापीत्यनेन शरीरधारणमपि मेऽधुना दुष्करमिति ध्वनितम् । क्रीडापर्वतस्य मणिवेश्म रत्ननिर्मितं गृहं तस्मिन् । दुष्टमासमन्तादुदरं यस्य तद्दुरोदरं द्यूतं तस्य क्रीडा तत्र यो रागोभिरुचिः स विद्यते यासां ताभिः । अष्टापदं शारिफलं तत्र यः परिचयस्तस्मिंश्चतुराभिः शारिफलक्रीडानिपुणाभिरित्यर्थः । कादम्बर्याः पर्याकुलत्वं व्यञ्जयन्नाह । **गते चेति** । विनयेन

---

१ ननु. पर्याप्तमेवानेकस्त्रीसहस्रावस्थानमनेन. २ ०प्यहं न विभुः. ३ गृहम्.

तत्र च शयनीये निपत्य दूरस्थिताभिर्विनयनिभृताभिः परिचारिकाभिर्विनोद्यमाना कुतोपि प्रत्यागतचेतना चैकाकिनी तस्मिन्काले चपले किमिदमारब्धमिति निगृहीतेव लज्जया, गन्धर्वराजपुत्रि कथमेतद्युक्तमित्युपालब्धेव विनयेन, अयमसावव्युत्पन्नो बालभावः क गत इत्युपहसितेव मुग्धतया, स्वैरिणि मा कुरु यथेष्टमेकाकिन्यविनयमित्यामन्त्रितेव कुमारभावेन, भीरु नायं कुलकन्यकानां क्रम इति गर्हितेव महत्त्वेन, दुर्विनीते रक्षाविनयमिति तर्जितेवाचारेण, मूढे मदनेन लघुतां नीतासीत्यनुशासितेवाभिजात्येन, कुतस्तवेयं तरलहृदयतेति धिक्कृतेव धैर्येन, स्वच्छन्दचारिण्यप्रमाणीकृताहं त्वयेति निन्दितेव कुलस्थित्या, अतिगुर्वीं लज्जामुवाह ।

समचिन्तयच्चैवम् । अगणितसर्वशङ्कया तरलहृदयतां दर्शयन्त्याद्य मया किं कृतमिदं मोहान्धया हताशया । तथा हि । अदृष्टपूर्वोयमिति साहसिकया मया न शङ्कितम् । लघुहृदयां मां लोकः कलयिष्यतीति निर्ह्रीकया नाकलितम् । कास्य चित्तवृत्तिरिति मूढया न परीक्षितम् । दर्शनानुकूलाहमस्य नेति वा तरलया न कृतो विचारक्रमः । प्रत्याख्यानवैलक्ष्यान्न भीतम् । गुरुजनान्न त्रस्तम् । लोकापवादान्नोद्विग्नम् । तथा च । महाश्वेता दुःखितेति निर्दाक्षिण्यया नापेक्षितम् । आसन्नवर्तिसखीजनोप्युपलक्षयतीति मन्दया न लक्षितम् । पार्श्वस्थितः परिजनः पश्यतीति

निभृताभिः पूर्णाभिर्मर्यादावर्तीभिरिति यावत् । **कुतोपीति**—चन्द्रापीडदर्शनात्प्रभृति हृदयेनासन्निहिता आसीत् । अधुना कुतोपि कारणाच्चेतनामलभतेति भावः । भावान्तराणि व्यञ्जयन्नाह **तस्मिन्निति** । निगृहीता प्रतिषिद्धा । उपालब्धाधिक्षिप्ता । अव्युत्पन्नो यौवनसहभुवः शृङ्गाररसस्यानभिज्ञ इत्यर्थः । क गतो येन प्रौढेव मदनव्यथां व्यनक्षीति भावः । मुग्धाया विशिष्टनायिकाया भावो मुग्धता तया । स्वैरिणि स्वेनेरितुं शीलमस्यास्तत्सम्बुद्धिः स्वेच्छाचारिणि । आमन्त्रिता उपदिष्टा । क्रम आचारः । तर्जिता भर्त्सिता । अनुशासितानुशिक्षिता । आभिजात्येन कुलीनतया । तरलहृदयता चञ्चलचित्तता । कुलस्थित्या कुलमर्यादया । **अदृष्टेति** साहसिकया हृदयार्पणरूपं साहसं कुर्वत्या । लघुहृदयां चञ्चलचित्ताम् । निर्ह्रीकया निस्त्रपया । नाकलितं न विभावितम् । दर्शनानुकूला दर्शनयोग्या । प्रत्याख्यानात्तेन मत्प्रणयास्वीकाराद्यद्वैलक्ष्यं पर्याकुलीभावस्तस्मात् । नोद्विग्नमुद्वेगो न कृतः । निर्दाक्षिण्यया महाश्वेता दुःखितेति कृत्वा

१ अदूर. २ परिचयचतुराभिरुपास्यमानापि. ३ तरलता—स्य. ४ —सर्वशङ्काम्. ५ तरलतया.

नष्टचेतनया न दृष्टम् । स्थूलबुद्धयोपि तादृशीं विनयच्युतिं विभावयेयुः किमुतानुभूतमदनवृत्तान्ता महाश्वेता सकलकलाकुशलाः सख्यो वा राजकुलसंचारचतुरो वा नित्यमिङ्गितज्ञः परिजनः । ईदृशेष्वतिनिपुणतरदृष्टयोन्तःपुरदास्यः । सर्वथा हतास्मि मन्दपुण्या । मरणं मेद्य श्रेयो न लज्जाकरं जीवितम् । श्रुत्वैतं वृत्तान्तं किं वक्ष्यत्यम्बा तातो वा गन्धर्वलोको वा । किं करोमि । कोत्र प्रतीकारः केनोपायेन स्खलितमिदं प्रच्छादयामि । कस्य वा चापलमिदमेतेषां दुर्विनीतानामिन्द्रियाणां कथयामि । क्व वानेन दग्धहृदयेन गृहीता गच्छामि । तथा महाश्वेताव्यतिकरेण प्रतिज्ञा कृता । प्रियसखीनां पुरो मन्त्रितम् । तथा च केयूरकस्य हस्ते संदिष्टम् । न खलु जानामि मन्दभागिनी शठविधिना वोत्सन्नमन्मथेन वा पूर्वकृतापुण्यसंचयेन वा मृत्युहतकेन वान्येन वा केनाप्ययमानीतो मम विप्रलम्भकश्चन्द्रापीडः । कोपि वा न कदाचिद्दृष्टो नानुभूतो न च श्रुतो न चिन्तितो नोत्प्रेक्षितो मां विडम्बयितुमुपागतो यस्य दर्शनमात्रेणैव, संयम्य दत्तेवेन्द्रियैः, शरपञ्जरे निक्षिप्य समर्पितेव मन्मथेन, दासीकृत्योपनीतेवानुरागेण, गृहीतगुणपणेन विक्रीतेव हृदयेन, उपकरणीभूतास्मि । न मे कार्यं तेन चपलेनेति क्षणमिव संकल्पमकरोत् । कृतसंकल्पा च, अन्तर्गतेन मिथ्याविनीते यदि

---

गोपनीयस्यापि कामविकारस्य दर्शनान्निर्दाक्षिण्यम् । उपलक्षयति आलोकयते । दृष्टं विचारितम् । विभावयेयुः विचिन्त्य जानीयुः । इङ्गितमभिप्रायावेदकशरीरचेष्टा तज्ज्ञः । **निपुणेति**–आलोकनमात्रेणैव पराभिप्रायं विदन्तीत्यर्थः । कस्य कस्मै । इन्द्रियाणां चापलमविमृश्यकारिताम् इ० । दग्धहृदयेन हतचेतसा गृहीता वशं नीता । यद्वा दग्धं हृदयं येन तेन कामेन । महाश्वेताव्यतिकरेण महाश्वेतायाः सम्बन्धेन वृत्तान्तानुरोधेन वा । **न खल्विति**–शठो वञ्चको विधिर्दैवं तेन । उत्सन्नो हतो मन्मथस्तेन । मदनहतकेनेत्यर्थः । पक्षान्तरमुपन्यस्यति । **कोपीति**–विडम्बयितुं विप्रलब्धुं कदर्थयितुं वा । **यस्येति**–दर्शनमेव दर्शनमात्रं तेनैव यस्य उपकरणीभूतास्मि उपकरणताम् । सेवोपयोगिद्रव्यतामित्यर्थः । यातास्मि । तदेवोपपादयति–इन्द्रियैः संयम्य बद्ध्वा दत्तेव । गृहीता गुणा एव पणो मूल्यं येन । निर्वेदं वर्णयन्नाह । **न मे इति** । निर्वेदोपमर्दपूर्वकं स्थायिनं पोषयन्नाह **कृतेति**।न मे चन्द्रापीडेन कार्यमिति कृतसंकल्पा पुनरपि चन्द्रापीडाभिमुखहृदया बभूव । तत्र हेतुमाह **अन्तरिति**–मिथ्याविनीते अलीकविनयवति ।

---

१ दग्धहृदयेन पञ्चबाणेन न खलु जानामि गृहीता, दग्धहृदया पञ्चबाणेन गच्छामि. २ उपयस्तः ३ गृहीतमूल्येन, गुणगणेन. ४ अशरणीभूतास्मि ।

मया न कृत्यमेष गच्छामीति हृदयोत्कम्पचलितेन परिहसितेव चन्द्रापीडेन तत्परित्यागसंकल्पसमकालप्रस्थितेन कण्ठलग्नेन पृष्टेव जीवितेन, अविशेषज्ञे पुनरपि प्रक्षालितलोचनया दृश्यतामसौ जनः प्रत्याख्यानयोग्यो न वेति तत्कालागतेनाभिहितेव बाष्पेण, अपनयामि ते सहासुभिर्धैर्यावलेपमिति निर्भर्त्सितेव मनोभुवा, पुनरपि तथैव चन्द्रापीडाभिमुखहृदया बभूव । तदेवमस्तमितप्रतिसमाधानबलात्प्रेमावेशेनास्वतन्त्रीकृता परवशेवोत्थाय जालवातायनेन तमेव क्रीडापर्वतमवलोकयन्त्यातिष्ठत् तत्रस्था च सा तमानन्दजलव्यवधानोद्विग्नेव स्मृत्या ददर्श न चक्षुषा । अङ्गुलीगलितस्वेदपरामर्शभीतेव चिन्तया लिलेख न चित्रतूलिकया । रोमाञ्चतिरोधानशङ्कितेव हृदयेनालिलिङ्ग न वक्षसा । तत्संगमकालातिपातासहेव मनो गमाय नियुक्तवती न परिजनम् ।

चन्द्रापीडोपि प्रविश्य स्वेच्छं[2] कादम्बरीहृदयमिव द्वितीयं मणिगृहं

---

अन्तर्गतेन हृदयस्थेन । हृदयस्योत्कम्पो वेपथुस्तेन चलितेन प्रस्थितेन । परिहसितेव नर्मभाषणविषयीकृतेव । पृष्टेवामन्त्रितेव । अन्योपि प्रस्थानकाले कण्ठलग्नो भूत्वा गच्छामीति प्रश्नपूर्वकं व्रजति । पुनरपि तत्कालागतेन तत्समयाविर्भूतेन बाष्पेण अभिहितेव । इति योत्यमाह–अविशेषज्ञे सदसतामन्तरानभिज्ञे पुनरप्यसौ जनः प्रक्षालितलोचनया दृश्यतां येन प्रत्याख्यानस्य निराकरणस्य योग्यो न वेति ज्ञास्यसि । धैर्यावलेपम्–धैर्यलक्षणमुक्तम् । उत्कण्ठातिशयेन रतिभावं पुनः पोषयन्नाह । तदेवेति–ततत एवमुक्तप्रकारेणास्तमितं लोपं प्राप्तं यत्प्रतिसमाधानं न मया कुलकन्ययाऽपरिचितेन विप्रलम्भकेनानेन कार्यमित्यादिनिर्वेदलक्षणं तदेव बलं तस्माद्धेतोर्यत्प्रेम चन्द्रापीडविषयकः स्नेहः स्मृतिरूपस्तस्यावेशेनान्तः प्रवेशेन इ० । भावान्तराण्याविष्कुर्वन्नाह । तत्रेति । आनन्दजलस्य । प्रेमाश्रुकृतामित्यर्थः । यद्व्यवधानं प्रतिबन्धस्तस्मादुद्विग्ना निर्विण्णा । अत्रानन्दजलस्य व्यवधायकत्वेन चक्षुषा न तथा दर्शनमिति निर्वेदः । अङ्गुलीति–अङ्गुलीभ्यो गलितो यः स्वेदस्तस्य परामर्शः संपर्कस्तस्माद्भीतेव । अङ्गुलीस्वेदाम्भसा तूलिकालिखितापमार्जनं भयहेतुः । चिन्तया भावनया । तस्य चन्द्रापीडस्याकृतिमिति शेषः । लिलेख न चित्रतूलिकया लेख्यकूर्चिकया । 'तूलिका कथिता लेख्यकूर्चिका तूलशय्योः' । इति विश्वः । रोमाञ्चेति–वक्षसालिङ्गने रोमाञ्चेन व्यवधानं स्यादेवं सर्वथा नानन्तरितालिङ्गनमिति शङ्काहेतुः । तत्संगमेति–तस्य चन्द्रापीडस्य संगमे यः कालातिपातो विलम्बस्तस्यासहा तं सोढुमक्षमेव । गमाय तं प्रति गमनाय । परिजनगमने विलम्बः स्यान्मनसोतिरंहस्त्वात्स न स्यादितितयोजना । इत्थं नायिकाविषयकभावान्तराण्युक्त्वा नायकमाश्रित्य तान्याह । चन्द्रापीड

---

1 बला०, बलात्. 2 स्वच्छन्दम्.

शिलातलास्तीर्णायामुभयत उपर्युपरिनिवेशितबहूपधानाया कुथायां निपत्य केयूरकेणोत्सङ्गे गृहीतचरणयुगलस्ताभिर्यथादिष्टेषु भूमिभागेषूपविष्टाभिः कन्यकाभिः परिवृतो दोलायमानेन चेतसा चिन्तां विवेश । किं तावदस्या गन्धर्वराजदुहितुः कादम्बर्याः सहभुव एते विलासा एवंदृशाः सकललोकहृदयहारिणः, आहोस्विदनाराधितप्रसन्नेन भगवता मकरकेतुना मयि नियुक्ताः, येन मां सास्रेण सरागेणाकूणितत्रिभागेण हृदयान्तःपतत्स्मरशरकुसुमरजोरूषितेनेव चक्षुषा तिर्यग्विलोकयति । मद्विलोकिता च धवलेन स्मितालोकेन दुकूलेनेव लज्जयात्मानमावृणोति । मल्लज्जाविवर्तमानवदना च प्रतिबिम्बप्रवेशलोभेनेव कपोलदर्पणमर्पयति । मदवकाशदायिनो हृदयस्य प्रथमाविनयलेखामिव कररुहेण शयनाङ्के[1] लिखति । मत्ताम्बूलवीटिकोपनयनखेदविधुतेन रक्तोत्पल[2]भ्रमभ्रमद्भ्रमरवृन्देन करतलेन खिन्नं[3] मुखमिव गृहीततमालपल्लवेनेव वीजयति । पुनश्चाचिन्तयत् । प्रायेण मानुष्यकसुलभा लघुता मिथ्यासंकल्पसहस्रैरेवं[4] मां विप्रलभते । लुप्तविवेको यौवनमदो मदयति मदनो वा । यतस्तिमिरोपहतेव यूनां दृष्टिरल्पमपि कालुष्यं महत्पश्यति । स्नेहलवोऽपि वारिणेव यौवनमदेन दूरं विस्तीर्यते[5] । स्वयमुत्पादितानेकचिन्ता-

---

इति-उभयतः पार्श्वयोरुपर्युपरि निवेशितानि रचितानि बहून्युपधानान्युच्छीर्षकाणि यस्याम् । कुथायां वर्णकम्बले । 'कुथः स्त्रीपुंसयोर्वर्णकम्बले' इति मेदिनी । उत्सङ्गे अङ्के । दोलायमानेनानिश्चयाकुलेनेत्यर्थः । चिन्तां विवेश चिन्तनमग्नो बभूव । सहभुवः स्वाभाविकः । आहोस्विदित्यव्ययं वितर्के वर्तते । अनाराधितश्चासौ प्रसन्नश्च तेन । मयि नियुक्ता मामुद्दिश्य कारिताः । येन हेतुना । आकूणितः ईषत्संकुचितस्त्रिभागस्तृतीयभागो यस्य । ०-रूषितेन छुरितेनेव । विलोकयति-एतच्चिन्ताप्रत्यक्षीकृतामधिकृत्योक्तमन्यथा प्रासादान्तर्गतायास्तस्या दर्शनासंभवात् । एवमन्यानपि तद्व्यापारान्स्वानुकूल्येन विभावयन्नाह मदिति । मद्विलोकिता मया दृष्टा सती । कपोल एव दर्पणं तद् । अर्पयति मदभिमुखं धत्ते । नखविलेखनचेष्टामधिकृत्याह । म-वकाशेति-प्रथमा याऽविनयस्य लेखा तां संख्यागणनार्थं लिखति । ताम्बूलदानसमये करकमलविधूननमधिकृत्याह-रक्तोत्पलं कोकनदं तस्य भ्रमेण भ्रान्त्या भ्रमद्भ्रमरवृन्दं यस्मिन् । भ्रमराणां कृष्णवर्णत्वादाह गृहीतेति । लघुता अगाम्भीर्यम् । लुप्तो विवेको यस्मिन् । मदयति मत्तं करोति । तिमिरं नेत्ररोगविशेषः । कालुष्यम्-लक्षणया कामविकाराविला चित्तवृत्तिः । युवानो हि वनितानामल्पामपि चित्तविकृतिं बहुत्वेन मन्यन्त इत्यर्थः । पक्षे स्पष्टम् । स्नेहः प्रीतिस्तैलादिश्च । तरलता कामिता । 'तरलं चञ्चले षिड्गे' इति

---

१ उत्सङ्गेन. २ लोमभ्रान्तभ्रमर. ३ स्विन्नम्. ४ एवमायास्य माम्. ५ विस्तीर्यते.

शताकुला कविमतिरिव तरलता न किंचिन्नोत्प्रेक्षते। निपुणमन्मथगृहीता चित्रवर्तिकेव तरुणचित्तवृत्तिर्न किंचिन्नालिखति। संजातरूपाभिमाना कुलटेवात्मसंभावना न कचिन्नात्मानमर्पयति। स्वप्न इवाननुभूतमपि मनोरथो दर्शयति। इन्द्रजालपिच्छिकेवासंभाव्यमपि प्रत्याशा पुरः स्थापयति। भूयश्च चिन्तितवान्। किमनेन वृथैव मनसा खेदितेन। यदि सत्यमेवेयं धवलेक्षणा मय्येवंजातचित्तवृत्तिस्तदा न चिरात्स एवैनामप्रार्थितानुकूलो मन्मथः प्रकटीकरिष्यति। स एवास्य संशयस्य छेत्ता भविष्यति। इत्यवधार्योत्थायोपविश्य च ताभिः कन्यकाभिः सहाक्षैर्गेयैश्च विपञ्चीवाद्यैश्च पाणविकैश्च स्वरसंदेहविवादैश्च सुभाषितगोष्ठीभिश्चान्यैश्च तैस्तैरालापैः सुकुमारैः कलाविलासैः क्रीडन्नासांचक्रे। मुहूर्तं च स्थित्वा निर्गम्योपवनालोकनकुतूहलक्षिप्तचित्तः क्रीडापर्वतकशिखरमारुरोह।

कादम्बरी तु तं दृष्ट्वा चिरयतीति महाश्वेतायाः किल वर्त्मावलोकयितुं विमुच्य तं गवाक्षमनङ्गक्षिप्तचित्ता सौधस्योपरितनं तलं कैलासशिखरमिव गौर्यारुरोह। तत्र च विरलपरिजना सकलशशिमण्डलपाण्डुरेणातपत्रेण हेमदण्डेन निवार्यमाणातपा चतुर्भिर्बालव्यजनैश्च फेनशुचिभिरुद्धूयमानैरुपवीज्यमाना शिरसि कुसुमगन्धलुब्धेन भ्रमता भ्रमरकुलेन दिवापि नीलावगुण्ठनेनेव चन्द्रापीडाभिसरणवेशाभ्यासं कुर्वती मुहुश्चामरशिखां समासज्य मु-

विश्वमेदिन्यौ, षिङ्गः कामी। स्वयमात्मनोत्पादिता निर्मिताश्चिन्ता अभिलषितार्थानुकूलभावनास्तासां शतेनाकुला व्याकुला। न किंचिन्नोत्प्रेक्षतेऽपि तु सर्वमेवोत्प्रेक्षत इत्यर्थः। अत्रानुरूपं शाकुन्तलवाक्यम्–'एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते' इति। **निपुणेति**–निपुण आलेख्यकुशलः। शृङ्गारैकरसश्च। **आत्मसंभावनेति**–सर्वमात्मीयं मन्यत इत्यर्थः। प्रत्याशा दुराशा। धृतिमाह। **किमनेनेति**। एनां प्रकटीकरिष्यति तस्या भावं स्फुटीकरिष्यतीत्यर्थः। अक्षैः पाशैः गेयैर्गीतैः। विपञ्ची वीणा-वाद्यं येषां तैः। पणवो वाद्यविशेषः शिल्पं येषां ते पाणविकास्तैः। शिल्पम् इति ठक्। स्वरा निषाधादयस्तेषां संदेहाः कोमलमन्द्रतारादिविषयकसंशयास्तेषां विवादैः। सुभाषितानि सूक्तानि तेषां गोष्ठीभिः संलापैः। 'गोष्ठी सभासंलापयोः स्त्रियाम्' इति मेदिनी। **कादम्बरी**–कादम्बरी तु तं दृष्ट्वा अनङ्गक्षिप्तचित्ता सौधस्योपरितनं तलमारुरोह। तत्र व्याजमाह महाश्वेताया इति। किलेत्यलीके। फेनोऽब्धिकफस्तद्वच्छुचिभिः स्वच्छैः। **शिरसीति**–भ्रमरकुलस्य नीलत्वसाम्याद। नीलं कृष्णवर्णं यदवगुण्ठनं शिरोवेष्टनं तेने-

१ तातम्. २ अवलोकयितुमुद्यता.

हुश्छत्रदण्डमलम्ब्य मुहुस्तमालिकास्कन्धे करौ विन्यस्य मुहुर्मदलेखां सखीं परिष्वज्य मुहुः परिजनान्तरितसकलदेहा नेत्रत्रिभागेणावलोक्य मुहुरावलितांत्र वलीवलया परिवृत्य मुहुः प्रतीहारीवेत्रलताशिखरे कपोलं निधाय मुहुर्निश्चल-करविधृतामधरपल्लवे वीटिकां विनिवेश्य मुहुरुद्गीर्णोत्पलप्रहारपलायमानपरिजना-नुसरणदत्तकतिपयपदा विहस्य तं विलोकयन्ती तेन च विलोक्यमाना महान्तमपि कालमतिक्रान्तं नाज्ञासीत्। आरुह्य च प्रतीहार्या निवेदितमहाश्वेताप्रत्यागमना तस्मादवततार। स्नानादिषु मन्दादरापि महाश्वेतानुरोधेन दिवसव्यापारमकरोत्। चन्द्रापीडोऽपि तत्कालकार्यं प्रथमविसर्जितेनैव कादम्बरीपरिजनेन निर्वर्तितस्नान-विधिर्निरुपहतशिलार्चिताभिमतदैवतः क्रीडापर्वतक एव सर्वमाहारादिकमहः-कर्म चक्रे।

क्रमेण च कृताहारः क्रीडापर्वतकप्राग्भागभाजि मनोहारिणि हारीतहरिते हरिणीरोमन्थफेनसीकरासारे सीरायुधहलभयनिश्चलकालिन्दीजलत्विषि तरुणी-चरणालक्तकशोणशोचिषि कुसुमरजःसिकतिलतले लतामण्डपोपगूढे शिखण्डिता-ण्डवसंगीतगृहे मरकतशिलातले समुपविष्टो दृष्टवान्सहसैवातिबहलधाम्ना धवले-नालोकेन जलेनेव निर्वाप्यमाणं दिवसं, मृणालवलयेनेव पीयमानमातपं, क्षीरो-देनेव प्लाव्यमानां महीं चन्दनरसवर्षेणेव सिच्यमानान्दिगन्तान्सुधयेव विलिप्य-

वाभिसारिकावेशो तस्यावश्यकत्वात्। समासज्यालम्ब्य। परिजनेनान्तरितश्छन्नः सकलदेहो यस्याः। आवलितं परिवृत्तं त्रिवल्या वलयं यस्याः। उद्गीर्णेति–उद्गीर्णं क्षिप्तं यदुत्पलं तस्य प्रहारेण पलायमानो यः परिजनस्तस्यानुसारेण दत्तानि कतिपयपदानि यया। प्रथमविसर्जितेन प्रथमं प्रहितेन। निरुपेति–निरुपहता छिद्रादिभिरखण्डा या शिला तस्यामर्चितमभिमतदैवतं येन। क्रीडेति–क्रीडापर्वतस्य प्राग्भागं भजत इति तस्मिन्प्राग्भागभाजि पूर्वभागवर्तिनि। हरि-णीनां रोमन्थश्चर्वितस्य चर्वणं तस्य फेनस्य सीकराः कणास्तेषामासारो यस्मिन्। सीरायुधो बलभद्रस्तस्य हलायद्भयं तेन निश्चलस्य कालिन्दीजलस्येव त्विट् यस्य। तरुणीनां चरणोपयुक्ते-नालक्तकेन यावकेन शोणा रक्ता शोचिः कान्तिर्यस्य। कुसुमरजसा सिकतिलं तत्परागयुक्तम्। 'देशे लुबिलचौ च' इति लच्। तलं यस्य। •उपगूढे परिगते। एवंविधे मरकतशिलातले उपविष्टः सन् सहसैवातिबलं विपुलं धाम तेजो यस्य तादृशेन। निर्वाप्यमाणं वेल्लुप्यमानः।

१ उद्गी [ द्गू ]र्णकर्णोत्पल २ स्वसौधोपरितलमध्यवर्तिन्यपि चन्द्रापीडपार्श्ववर्तिनमिवात्मानं मन्य-माना इत्यधिकः कश्चित्पाठः. ३ निर्वर्तित ४ वनेन.

मानमम्बरतलम्। आसीच्चास्य मनसि। किमु खलु भगवानौषधिपतिरकाण्ड एव शीतांशुरुदितो भवेत्। उत यन्त्रविक्षेपविशीर्यमाणपाण्डुधारासहस्राणि धारागृहाणि मुक्तानि। आहोस्विदनिलविकीर्यमाणसीकरधवलितभुवनाम्बरसिन्धुर्धरातलमवतीर्णा।

कुतूहलाच्चालोकानुसारप्रहितचक्षुरद्राक्षीदनल्पकन्यकाकदम्बपरिवृतां ध्रियमाणधवलातपत्रामुद्धूयमानचामरद्वयां कादम्बरीप्रतीहार्या वामपाणिना वेत्रलतागर्भेणार्द्रवस्त्रशकलावच्छन्नमुखं चन्दनानुलेपनसनाथं नालिकेरसमुद्गकमुद्वहन्त्या दक्षिणकरेण दत्तहस्तावलम्बां केयूरकेण च निश्वासहार्ये निर्मोकशुचिनी धौते कल्पलतादुकूले दधता निवेद्यमानमार्गां मालतीकुसुमदामाधिष्ठितकरतलया च तमालिकयानुगम्यमानामागच्छन्तीं मदलेखां तस्याश्च समीपे तरलिकां तया च सितांशुकोपच्छदे पटलके गृहीतं धवलताकारणमिव क्षीरोदस्य, सहभुवमिव चन्द्रमसो मृणालदण्डमिव नारायणनाभिपुण्डरीकस्य मन्दरक्षोभविक्षिप्तमिवामृतफेनपिण्डनिकरं वासुकिनिर्मोकमिव मन्थनश्रमोज्झितं हासमिव श्रियः कुलगृहवियोगगलितं मन्दरमथनविखण्डिताशेषशशिकलाखण्डसंचयमिव संहृतं प्रतिमातारागणमिव जलनिधिजलादुद्धृतं दिग्गजकरसीकरासारमिव पुञ्जीभूतं नक्षत्रमालाभरणमिव मदनद्विपस्य शरन्मे-

---

दिवसमपश्यत्। अथ च मृणालवलयेन तदालोकेनेत्यर्थः। इव। पीयमानमाच्छाद्यमानमातपं सूर्यालोकमपश्यत्। अकाण्डेऽकाले। यन्त्रस्य विक्षेपेण विक्षिप्त्या विशीर्यमाणानि विशरारुतां प्राप्यमाणानि पाण्डुराणि धारासहस्राणि येषु। अम्बरसिन्धुराकाशगङ्गा। **कुतूहलेति**—आलोकानुसारेण प्रहितचक्षुरागच्छन्तीं मदलेखामथ च तस्याः समीपे तरलिकां तया च श्वेतांशुकमुपच्छद आच्छादनं यस्यैतादृशे पटलके पिटके गृहीतं हारं चाद्राक्षीदित्यन्वयः। अथ मदलेखां विशिनष्टि। **अनल्पेति**—कदम्बः समूहः। नालिकेरस्य समुद्गकं संपुटकम्। निश्वासहार्ये अतिलघू इत्यर्थः। निर्मोकः सर्पकञ्चुकस्तद्वत् शुचिनी निर्मले। कल्पलतानिर्मिते दुकूले। अथ हारं विशेषयन्नाह। **धवलतेति**—क्षीरोदस्य क्षीरसागरस्य! **कुलेति**—कुलगृहं पितृगृहं तस्य वियोगस्तेन गलितम्। पितुर्गृहाद्भर्तुर्गृहं गच्छन्त्या हि बन्धुवियोगजदुःखाद्धासो विनष्टो भवति। मन्दरमथनेन विखण्डिता विशीर्णा या अशेषाः शशिकलास्तासां खण्डसंचयं शकलसमूहम्। प्रतिमागता जलधिजले प्रतिबिम्बितास्तारा: प्रतिमातारास्तासां गणम्। नक्षत्रमाला हस्तिगण्डा-

---

१ केतकीगर्भपत्रपाण्डुरो भगवान्. २ पारदरसधारा. ३ कादम्बरीम्. ४ प्रतिमागततारा. ५ पुञ्जीकृतम्.

घशकलैरिव कल्पितं कादम्बरीरूपवशीकृतमुनिजनहृदयैरिव निर्मितं गुरुमिव सर्वरत्नानां यशोराशिमिवैकत्र घटितं सर्वसागराणां प्रतिपक्षमिव चन्द्रमसो जीवितमिव ज्योत्स्नायो[1] लक्ष्मीहृदयमिव नलिनीदलगलज्जलबिन्दुविलासतरल-मुत्कण्ठितमिव मृणालवलयधवलकरं शरच्छशिनमिव घनमुक्तांशुनिवहधवलितदिङ्मुखं मन्दाकिनीप्रवाहमिव सुरयुवतिकुचपरिमलवाहिनं प्रभावर्षिणम-तितारं हारम्। दृष्ट्वा चायमस्य चन्द्रापीडश्चन्द्रातपद्युतिमुषो[2] धवलिम्नः कारण-मिति मनसा निश्चित्य दूरादेव प्रत्युत्थानादिना समुचितेनोपचारक्रमेण मदलेखामापतन्तीं[3] प्रतिजग्राह। सा तु तस्मिन्नेव मरकतग्रावणि मुहूर्तमुप-विश्य स्वयमुत्थाय तेन चन्दनाङ्गरागेणानुलिप्य ते च द्वे दुकूले परिधाप्य-तैश्च मालतीकुसुमदामभिराराचितशेखरं कृत्वा तं हारमादाय चन्द्रापीडमु-वाच। कुमार तवेयपहस्तिताहंकारकान्ता[4] पेशलता प्रीतिपरवशं जनं कमिव न कारयति। प्रश्रय एव ते ददात्यकाशमेवंविधानाम्। अनया चाकृत्या कस्यासि न जीवितस्वामी। अनेन चाकारणाविष्कृतवात्सल्येन चरितेन कस्य न बन्धुत्वमध्यारोपयासि। एषा च ते प्रकृतिमधुरा व्यवहृतिः कस्य न वयस्यतामुत्पादयति। कं वा न समाश्वासयन्त्यमी[5] स्वभावसुकुमा-रवृत्तयो भवद्गुणाः। त्वन्मूर्तिरेवात्रोपालम्भमर्हति[6] या प्रथमदर्शन एव विश्र-म्भमुपजनयति। इतरथा हि त्वद्विधे सकलभुवनप्रथितमहिम्नि प्रयुज्य-

---

मरणविशेषः। कल्पितं घटितम्। मुनिजनहृदयानां निर्मलत्वादाह **कादम्बरीति**। **नलिनीति**-०जलबिन्दुविलास इव तरलो मध्यगो मणिर्यस्य। 'तरलो हारमध्यगः' इत्यमरः। पक्षे जलबिन्दुवच्चलम्। **मृणालेति**-मृणालवलयवद्धवलाः कराः किरणा यस्य मृणालवलयैश्च धवलौ करौ हस्तौ यस्य। **घनेति**-घना निबिडा मुक्तानां मौक्तिकाना-मंशव किरणाः घनैर्मेघैर्मुक्तोंशुनिवहः किरणसमूहो यस्य। शरदि घनात्ययात्। तेषां निवहेनेत्या०। परिमलो दृढसंयोगः। अनुलेपनगन्धश्च। अतितारमतिशुद्धम्। 'तारो मुक्तादिशुद्धौ स्यात्' इति विश्वः। **दृष्ट्वेति**-अयं हारश्चन्द्रातपद्युतिमुषश्चन्द्रका-न्तिसदृशस्य इ०। उपचारक्रमेणाचारपरिपाट्या। **अपेति**-अपहस्तितो दूरीकृतो-हंकारो ययात एव कान्ता पेशलता चारुता। 'चारौ दक्षे च पेशलः' इत्यमरः। प्रश्रयो विनयः। एवंविधानां प्रीतिपरवशानां जनानामित्यर्थः। वात्सल्यं स्नेहः। व्यवहृतिर्व्यापारः। उपालम्भं दोषम्। विश्रम्भं विश्वासम्। इतरथा विश्रम्भाभावे। सकलभुवने प्रथितो विख्यातो महिमा यस्य। **अनुचितेति**-तव महिम्नोऽसदृशमुपचा-रादि प्रयुञ्जानानां न कोप्यपराधोऽस्माकं विश्रम्भजनका तवाकृतिरेवात्रापराध्यतीति

---

१ ज्योत्स्निकायाः. २ ०मुखः. ३ आयान्तीम्. ४ अपहसित्. ५ समावासयन्ति. ६ उपलम्भ.

मान्नं सर्वमेवानुचितमिवाभाति । तथा हि । संभाषणमप्यधःकरणमिवापतति । आदरोपि प्रभुताभिमानमिवानुमापयति । स्तुतिरप्यात्मोत्सेकमिव सूचयति । उपचारोपि चपलतामिव प्रकाशयति । प्रीतिरप्यनात्मज्ञतामिव ज्ञापयति । विज्ञापनापि प्रागल्भ्यमिव ज्ञायते[1] । सेवापि चापलमिव दृश्यते । दानमपि परिभव इव भवति । अपि च स्वयंगृहीतहृदयाय किं दीयते । जीवितेश्वराय किं प्रतिपाद्यते । प्रथमकृतागमनमहोपकारस्य का ते प्रत्युपक्रिया । दर्शनदत्तजीवितफलस्य सफलमागमनं केन ते क्रियते । प्रणयितां चानेन व्यपदेशेन दर्शयति कादम्बरी न विभवम् । अप्रतिपाद्या हि परस्वता सज्जनविभवानाम् । आस्तां तावद्विभवः । भवादृशस्य दास्यमप्यङ्गीकुर्वाणा नाकार्यकारिणीति नियुज्यते[2] । दत्त्वा आत्मानमपि वञ्चिता न भवति । जीवितमप्यर्पयित्वा न पश्चात्तप्यते । प्रणयिजनप्रत्याख्यानपराङ्मुखी च दाक्षिण्यपरवती[3] महत्ता सताम् । न च तादृशी भवति याचमानानां यादृशी ददतां लज्जा । यत्तु सत्यममुना व्यतिकरेण कृतापराधमिव त्वय्या-

---

भावः अनुचितत्वमेव दर्शयति । **तथाहीति** । अधःकरणं लघूकरणम् । त्रिभुवनख्यातमहिमभिर्भवादृशैः सहास्माकमालापोप्यवमाननैवेति भावः । अनुचितत्वादादरदर्शनमपि प्रभुताभिमानमिवास्माकमनुमापयति । एवमग्रेपि स्वयमूह्यम् । उत्सेकं गर्वमौद्धत्यमिति यावत् । उपचारोभ्युत्थानादिः । चपलता चापलमविमृश्यकरणरूपम् । अनात्मज्ञतां स्वयोग्यतानभिज्ञताम् । परिभव ऐश्वर्यावमानना । युक्त्यन्तरमाह **अपि चेति** । **जीवितेति**–प्रतिपाद्यवस्तूनां जीविताविधित्वान्न किमप्यन्यत्प्रतिपाद्यं विद्यते इति भावः । प्रथमेत्यनेन निरपेक्षत्वं ध्वनितम् । **दर्शनेति**–सर्वापेक्षयोत्कृष्टं यज्जीवितफलं तत्त्वयैव दत्तम् । अतोधिकगुणं त्वत्सदृशमस्माकं किमपि नास्ति येन त्वदागमनस्य साफल्यं विधास्याम इति भावः । अनेन व्यपदेशेन हारार्पणमिषेण । प्रणयितां स्नेहवत्ताम् । **अप्रतीति**–'हि' निश्चये । सज्जनविभवानां परस्वता परायत्तताऽप्रतिपाद्या प्रतिपादनवर्जिता । स्वतःसिद्धत्वात् । परोपकारफला हि सज्जनविभवाः परेषामेवेति भावः । नियुज्यते व्यपदिश्यते । प्रणयिजनस्य प्रत्याख्यानं निराकृतिस्तस्य पराङ्मुखी विमुखी सदैव प्रणयिजनाभीष्टदानशीलेत्यर्थः । यतो दाक्षिण्यपरवती । महत्ता गौरवमैश्वर्यं वा । **न चेति**–महात्मानो हि इच्छानुरूपं याचकमनोरथान्पूरयन्तोपि नास्माभिः पर्याप्तं दीयते इति मन्वाना लज्जन्त एवेति भावः । उक्तमेव प्रस्तुते योजयति । **यत्त्विति**–अनेन व्यतिकरेण त्वदागमनानुरूपदानाभावरूपेण । मूकः शेषः

---

१ जायते. २ गृह्यते. ३ परवशा.

स्थानमवगच्छति कादम्बरी । तदयममृतमथनसमुद्भूतानां सर्वरत्नानामेकः शेष इति शेषनामा हारोऽमुनैव हेतुना बहुमतो भगवताऽम्भसां पत्या गृहमुपगताय प्रचेतसे दत्तः पाशभृतापि गन्धर्वराजाय गन्धर्वराजेनापि कादम्बर्यै तयापि त्वद्वपुरस्यानुरूपमाभरणस्येति विभावयन्त्या नभस्थलमेवोचितं सुधासूतेर्धाम न धरेत्यवधार्यानुप्रेषितः । यद्यपि निजगुणगणाभरणभूषिताङ्गयष्टयो भवादृशाः क्लेशहेतुमितरजनबहुमतमाभरणभारमङ्गेषु नारोपयन्ति तथापि कादम्बरीप्रीतिरत्र कारणम् । किं न कृतमुरसि शिलाशकलं कौस्तुभाभिधानं लक्ष्म्याः सहजमिति बहुमानमाविष्कुर्वता भगवता शार्ङ्गपाणिना । न च नारायणोऽत्र भवन्तमतिरिच्यते । नापि कौस्तुभमणिरणुनापि गुणलवेन शेषमतिशेते । न चापि कादम्बरीमाकारानुकृतिकलयाप्यल्पीयस्या लक्ष्मीरनुगन्तुमलम् । अतोऽर्हतीयमिमं बहुमानं त्वत्तः । न चाभूमिरेषा प्रीतिप्रसरस्य । नियतं च भवता भग्नप्रणया महाश्वेतामुपालम्भसहस्रैः खेदयित्वा स्वात्मानमुत्स्रक्ष्यति । अत एव महाश्वेता तरलिकामपीमं हारमादाय त्वत्सकाशं प्रेषितवती । तयापि कुमारस्य संदिष्टमेव । न खलु महाभागेन मनसापि कार्यः कादम्बर्याः प्रथमप्रणयप्रसरभङ्गः । इत्युक्त्वा ताराचक्रमिव चामीकराचलस्य तटे तं तस्य वक्षःस्थले बबन्ध ।

चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत् । मदलेखे किमुच्यते निपुणासि । जानासि ग्राहयितुम् । उत्तरावकाशमपहरन्त्या कृतं वचसि कौशलम् । अयि मुग्धे के वयमात्मनः । के वा वयं ग्रहणस्याग्रहणस्य वा । गता खल्वियमस्तं कथा । सौजन्यशालिनीभिर्भवतीभिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु वा व्यापारेषु विनियुज्यताम् । अतिदक्षिणायाः खलु देव्याः का-

---

एक एव अवशिष्ट इत्यर्थः । अमुनैव हेतुना एकत्वेनेत्यर्थः । प्रचेतसे वरुणाय । पाशभृता वरुणेन । विभावयन्त्या चिन्तयन्त्या । सुधासूतेश्चन्द्रस्य । इतरजन० प्राकृतजन० । कादम्बरीप्रीतिः कादम्बरीप्रियकरणम् १ अत्र हारधारणे । कौस्तुभं कुं भुवं स्तुभ्नाति व्याप्नोतीति कुस्तुभोऽब्धिस्तत्रभवः तम् । कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः । तस्मिन्हरिः स्पृहां चक्रे वक्षोलंकरणे मणौ ॥ इति भा० अ० स्क० । अतिरिच्यते अतिशयितो भवति । शेषं तदाख्यहारम् । आकारेति—आकारः सौन्दर्यं तस्यानुकृतिरनुकरणं तस्य कलयांशेन । सर्वथा न लक्ष्म्याः परिहीयत इत्यर्थः । बहुमानं हारधारणरूपम् । अभूमिरपात्रम् । प्रीतिप्रसरस्य स्नेहवितरणस्य । खेदयित्वायासयित्वा । चामीकराचलस्य सुवर्णगिरेः मेरोः । ग्राहयितुं स्वीकारयितुम् । उत्तरावकाशं [illegible] दूरीकुर्वन्त्या । उपकरणीकृतः सेवासाधनतां नीतः ।

---

१ लब्धनामा. २ सुधासूती धाम्न: ( भाग. ) ३ शार्ङ्गिणा. ४ लग्न.

दम्बर्या निर्दाक्षिण्यो गुणा न कंचिन्न दासीकुर्वन्ति । इत्युक्त्वा च कादम्बरीसंबद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयांबभूव मदलेखाम् । अनतिदूरं गतायां च तस्यां क्रीडापर्वतकगतमुदयगिरिगतमिव चन्द्रमसं चन्दनदुकूलहारधवलं चन्द्रापीडं दृष्ट्वोत्सारितवेत्रच्छत्रचामरचिह्ना निषिद्धाशेषपरिजनानुगमना तमालिकाद्वितीया चित्ररथसुता पुनरपि तदेव सौधशिखरमारुरोह । तत्रस्था च पुनस्तथैव विविधविलासतरङ्गितैर्विकारिभिर्विलोकितैर्जहारास्य मनः । तथा हि । मुहुर्नितम्बबिम्बन्यस्तवामहस्तपल्लवा प्रावृतांशुकानुसारप्रसारितदक्षिणकरा निश्चलतारका लिखितेव मुहुर्जृम्भिकारम्भदत्तोत्तानकरतलतया तद्गोत्रस्खलनभियों निरुद्धवदनेव, मुहुरंशुकपल्लवताडितनिश्वासामोदलुब्धमधुकरमुखरतया प्रस्तुताह्वानेव, मुहुरनिलगलितांशुकसंभ्रमद्विगुणीकृतभुजयुगलप्रावृतपयोधरतया दत्तालिङ्गनसंज्ञेव, मुहुः केशपाशाकृष्टकुसुमपूरिताञ्जलिसमाघ्राणलीलया कृतनमस्कारेव, मुहुरुभयतर्जनीभ्रमितमुक्ताप्रालम्बतया निवेदितहृदयोत्कलिकोद्गमेव, मुहुरुपहारकुसुमस्खल-

---

अत्यन्तदक्षिणाया अत्युदारायाः । निर्दाक्षिण्या निरनुरोधाः । दासीकरणत्वान्निर्दाक्षिण्यम् । यद्वा निर्गतं दाक्षिण्यं दक्षिणता येभ्यस्ते सर्वत्र संचारिणो वशीकरणशीला इत्यर्थः । **चन्दनेति**–चन्दनेन दुकूलाभ्यां हारेण च धवलम् । पक्षे चन्दनादिवद्धवलम् । उत्सारितानि दूरीकृतानि वेत्रच्छत्रचामराणि चिह्नानि यया । निषिद्धमशेषपरिजनस्यानुगमनं यथा । **विविधेति**–विविधा ये विलासा भ्रूसमुद्भवास्तैस्तरङ्गितैश्चञ्चलैः । विकर्तुं शीलमेषामिति विकारीण्युद्दीपकानि विलोकितानि तैः । प्रावृतेति–प्रावृतं परिहितं यदंशुकं तदनुसारेण प्रसारितो दक्षिणकरो यया । **मुहुरिति**–जृम्भिकारम्भे जृम्भणप्रारम्भे दत्तं व्यात्तमुखोपरिस्थापितं यदुत्तानं करतलं तस्य भावस्तत्ता तया । तस्य चन्द्रापीडस्य गोत्रं नामग्रहणं तत्र स्खलनं तस्माद्भीस्तया । कदाचिद्गोत्रस्खलनं स्यादिति भिया पिहितवदनेवेत्यर्थः । **अंशुकेति**–अंशुकपल्लवेन वस्त्राञ्चलेन ताडिता निश्वासामोदलुब्धा ये भ्रमरास्तैर्मुखरा तस्य भावस्तत्ता तया । **अनिलेति**–अनिलेन गलितं यदंशुकं तेन यः संभ्रमो व्यग्रता तेन द्विगुणीकृतं यद्भुजयुगलं तेन प्रावृते छन्ने पयोधरे यया तस्या भावस्तत्ता तया । दत्तालिङ्गनस्य संज्ञा संकेतो यया । **केशेति**–केशपाशः केशकलापस्तस्मादाकृष्टैः कुसुमैः पूरितो योऽञ्जलिस्तस्य समाघ्राणलीलया गन्धग्रहणविलासेन । **उभयेति**–मुक्ताप्रालम्बो मौक्तिकलम्बमानहारः । 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इत्यमरः । उत्कलिकोत्कण्ठा । 'यथा हारो मया भ्राम्यते तथोत्कलिकया मच्चित्तमिति भावः' इ. भानु० । उपहारार्थं उपचारार्थं कुसुमान्युपहारकुसुमानि ।

---

१ निर्दाक्षिण्यमपि. २ ०चिरम्. ३ उदयगतम् ४ तरङ्गिभिः ५ अंसप्रावृत. ६ ०भयनिरुद्ध०. ७ द्विगुणितभुजलतावृत.

नविधुतकरतलतया कथितकुसुमायुधशरप्रहारवेदनेव, मुहुर्गलितरसनानिगड-नियमितचरणतया संयम्यार्पितेव मन्मथेन, मुहुश्चलितोरुविधृतशिथिलदुकूला क्षितितलदोलायमानांशुकैकदेशाच्छादितकुचा, चकितपरिवर्तनत्रुट्यत्त्रिवली-लता, अंसस्रस्तचिकुरकलापसंकलनाकुलकरै[3]कमला, कटाक्षक्षेपधवलीकृतक-र्णोत्पलं विलक्षस्मितसुधाधूलिधूसरितकपोलं साचीकृत्य वदनमनेकरसभाङ्गि-भङ्गुरं विलोकयन्ती तावदवतस्थे यावदुपसंहृतालोको लोहितो दिवसो बभूव।

अथ हृदयस्थितकमलिनीरागेणेव रज्यमाने राजीवजीवितेश्वरे सकललो-कचक्रवा[6]लचक्रवर्तिनि भगवति पूष्णि, क्रमेण च दिनपरिलम्बनरोषरक्ताभिः कामिनीदृष्टिभिरिव संक्रमितशोणिम्नि व्योम्नि, संहृतशोचिषि जाते जरठहा-रीतहरितवाजिनि, रविविरहमीलितसरोजसंहतिषु हरितायमानेषु कमलवनेषु, श्वेतायमानेषु कुमुदखण्डेषु, लोहितायमानेषु दिङ्मुखेषु, नीलायमाने शर्वरीमुखे, शनैःशनैश्च पुनर्दिनश्रीसमागमाशाभिरिवानुरागिणीभिः सहैव दीधितिभिरद-

---

**गलितेति**—गलिता या रसना मेखला सैव निगडोऽन्दुकस्तेन नियमितौ चरणौ यस्यास्तस्या भावस्तत्ता तया। **चलितेति**—चलिताभ्यां कम्पिताभ्यामूरुभ्यां विधृतं शिथिलं दुकूलं यया। क्षितितले दोलायमानं यदंशुकं तस्यैकदेशेन आच्छादितौ कुचौ यया। त्रुट्यद्विनश्यत्। परिवर्तनकृतत्वाग्वितत्या त्रिवलीनाशः। अंसस्रस्तो यो चिकुरकलापः कुन्तलकलापस्तस्य संकलने व्यवस्थापने आकुलं व्यग्रं करकमलं यस्याः। एतादृशी वदनं साचीकृत्य वक्रीकृत्यानेके ये रसास्तेषां भङ्ग्या रचनाविशेषेण भङ्गुरं वक्रं यथा तथा विलोकयन्ती। वदन पिशेषयति। **कटाक्षेति**—कटाक्षक्षेपेण तत्कान्त्येत्यर्थः। विलक्षं लज्जायुक्तं यस्मितं तदेव सुधा तस्येत्या०। **अथेति**—अथ कादम्बरी सौधशिखराच्चन्द्रापीडश्च क्रीडापर्वतकनितम्बाद-वततार। कदेत्याह हृदयेत्यादिना। भगवति पूष्णि सूर्ये रज्यमाने रक्ततां प्राप्यमाणे सति। **दिनेति**—दिनस्य परिणामस्तेन कोपः नायककृतदोषस्मरणस्योद्दीपकत्वात्तस्य। दत्तसंकेतस्य नायकस्यानागमनकृतो वा। यद्वा दिनं यावद्यत्परिलम्बनं स्वपतिकृत आगमनविलम्बस्तेन कोपः। तेन रक्ताभिः। संक्रामितः शोणिमा रक्तिमा यस्मिन्। संहृतानि शोचींषि किरणा येन तस्मिन्। 'रोचिः शोचिरुभे क्लीबे' इत्यमरः। जरठो यो हारीतः पक्षि-विशेषस्तद्वद्धरिता वाजिनो यस्य तस्मिन्। प्रथमं केवलं रक्तीभावोऽधुना किरण-संहार इत्यपुनरुक्तिः। रविविरहेण मीलिता संकुचिता सरोजसंहतिः पङ्कजसमुदायो येषाम्। श्वेतायमानेषु तेषां प्रफुल्लत्वात्। शर्वरी रात्रिः। दिनश्रीस्तासां सखी तस्याः

---

१ पतित. २ समस्त. ३ तला. ४ विलक्ष्य चास्मित० विलक्ष्यमाण०,–स्मितधूलिधूसर०, ०धूसरितैककपोला. ५ भ्रूभङ्गि. ६ सकलचक्रवाकचक्रवाल-चित्त–हृदयचक्र-वर्तिनि. ७ ऊष्णदीधितौ ८ कमलवनेषु निजसुहृदमृतमूर्तिसमालोकनाशङ्कया हर्षप्रकर्षसंदर्शितस्मितेष्विवोन्मुखेषु धवलायमानेषु कुमुदखण्डेषु. ९ तत्कालनिनर्तिषोपात्तभुजसहस्रविस्तारितशर्वपुरस्कृतगजचर्मणेव नीलायमाने.

र्शनतामुपगते भगवति गभस्तिमालिनि, तत्कालविजृम्भितेन कादम्बरीहृदय-रागरससागरेणेवापूरिते संध्यारागेण जीवलोके, कुसुमायुधानलदह्यमानचक्र-वाकहृदयसहस्रधूम इव जनितमानिनीनयनवारिणि विस्तीर्यमाणे तरुणतमाल-त्विषि तिमिरे, दिक्करिकराकीर्णसीकरासार इव श्वेतायमानतारागणे गगने, जातायां चादर्शनक्षमायां वेलायां सौधशिखरादवततार कादम्बरी, क्रीडाप-र्वतकनितम्बाच्च चन्द्रापीडः । ततोचिरादिव गृहीतपादः प्रसाद्यमान इव कु-मुदिनीभिः कलुषमुखीः कुपिता इव प्रसादयन्नाशाः प्रबोधाशङ्कयेव परिहर-न्सुप्ताः कमलिनीर्लाञ्छनच्छलेन निशामिव हृदयेन समुद्वहन्रोहिणीचरणताड-नलग्नमलक्तकरसमिवोदयरागं दधानस्तिमिरनीलाम्बरां दिवमभिसारिकामिवो-पसर्पन्नतिवल्लभतया विकरन्निव सौभाग्यमुदगाद्भगवानीक्षणोत्सवः सुधासूतिः । उच्छ्रिते च कुसुमायुधाधिराज्यैकातपत्रे कुमुदिनीवधूवरे विभावरीविलास-दन्तपत्रे श्वेतभानौ, धवलितदिशि, दन्तादिवोत्कीर्णे भुवने चन्द्रापीडश्चन्द्रात-पनिरन्तरतयैव कुमुदमय्या इव गृहकुमुदिन्याः कल्लोलधौतसुधाधवलसोपाने तनुतरङ्गतालवृन्तवातवाहिनि सुप्तहंसमिथुने विरहवाचालचक्रवाकयुगले तीरे

६० । अनुरागः स्नेहो रक्तिमा च । गभस्तीनां माला विद्यतेऽस्य गभस्तिमाली सूर्यः । विजृम्भितेनोद्वेलेन । **कुसुमेति**—कुसुमायुध एवानलस्तेन परस्परविरहात् दह्यमानानि यानि चक्रवाकाश्च चक्रवाक्यश्च चक्रवाकास्तेषां हृदयसहस्राणि तेषां धूम इव । जनितं मानिनीनां नयनेषु बारि येन । अद्यापि प्रियो नागत इति दुःखितानामश्रुपातः । अत एव धूमसाम्यम् । **तत इति**—गृहीतपादः पादश्चरणः किरणश्च । कलुषाण्यन्धका-रव्याप्तानि विकृतानि च मुखानि यासाम् । आशा दिशः । प्रबोधाशङ्कया तासां प्रबोधो माभूदिति परिहरंस्त्यजन् । सुप्ताः कमलिनीरर्थात्सूर्यविकासिनीः । **रोहिणीति**—रोहिण्या रतिकलहकुपितया यच्चरणेन ताडनमित्या० । तिमिरेण नीलमम्बरं नभो यत्र । पक्षे तिमिरवन्नीलमम्बरं वस्त्रं यस्याः । अभिसारिका हि नीलावगुण्ठना भवति । **कुसुमेति**—कुसुमायुधस्य मकरकेतोर्यदाधिराज्यं साम्राज्यं तस्यैकमद्वितीयमातपत्रं तस्मिन् । कुमुदिन्य एव वध्वस्तासां वरे प्रिये । विभावर्या विलासार्थे दन्तपत्रमाभरणविशेषस्तस्मिन्निव स्थिते । धवलिता दिशो येन । तादृशे श्वेतभानौ चन्द्रे । अत एव दन्तेभ्यो हस्तिदन्तेभ्य इवोत्कीर्णे टङ्कघटिते भुवने जाते सति । चन्द्रापीडः चन्द्रातपो निरन्तरो यस्यां तस्या भावस्तत्ता तया चन्द्रातपेन सर्वतोभिव्याप्ततया

१ दह्यमानहृदय. २ नयनासारवारिणि. ३ नीलाम्बरधराम्. ४ उदिते. ५ इङ्गितदन्ताद्.

कुमुददलावलीभिः पर्यन्तलिखितपत्रलतादन्तुरमवदातसिन्दुवारदामोपहारं हरिचन्दनरसैः प्रक्षालितं कादम्बरीपरिजनोपदिष्टं मुक्ताशिलापट्टं चन्द्रशीतलमधिशिश्ये। तत्रस्थस्य चास्यागत्याकथयत्केयूरको देवी कादम्बरी देवं द्रष्टुमागतेति।

अथ चन्द्रापीडः ससंभ्रममुत्थायागच्छन्तीमल्पसखीजनपरिवृतामपनीताशेषराजचिह्नामितरामिवैकावलीमात्राभरणामच्छाच्छेन चन्दनरसेन धवलीकृततनुलतामेककर्णावसक्तदन्तपत्रामिन्दुकलाकलिकाकोमलं कर्णपूरीकृतं कुमुददलं दधानां ज्योत्स्नाशुचिनी कल्पद्रुमदुकूले बिभ्रतीं तत्कालरमणीयेन वेषेण साक्षादिव चन्द्रोदयदेवतां मदलेखया दत्तहस्तावलम्बां कादम्बरीमपश्यत्। आगत्य च प्रीतिपेशलतां दर्शयन्ती प्राकृतेव परिजनोचिते भूतले समुपाविशत्। चन्द्रापीडोपि कुमाराध्यास्यतां शिलातलमेवेत्यसकृदनुबध्यमानोपि मदलेखया भूमिमेवाभजत। सर्वासु चासीनासु मुहूर्तमिव स्थित्वा वक्तुमुपचक्रमे चन्द्रापीडः। देवि दृष्टिपातमात्रप्रीते दासजने संभाषणादिकस्यापि प्रसादस्य नास्त्यवकाशः। किमुतैतावतोनुग्रहस्य। न खलु चिन्तयन्नपि निपुणं तमात्मनो गुणलवमवलोकयामि यस्यायमनुरूपोनुग्रहातिरेकः। अतिसरलता तवेयमपगताभिमानमधुरा च सुजनता यदभिनवसेवकजनेप्येवमनुरुध्यते। प्रायेण मामुपचारहार्यमदक्षिणं देवी मन्यते। धन्यः खलु परिजनस्ते यस्योपरि नियन्त्रणा स्यात्। आज्ञासंविभाग-

---

विरलकुमुदवत्या अपि कुमुदनिचिताया इव गृहकुमुदिन्यास्तीरे मुक्ताशिलापट्टं स्फटिकशिलाफलकमधिशिश्ये। कीदृशे तीरे। कल्लोलैस्तरङ्गैर्धौतं सुधया धवलं सोपानम्। सुधावद्धवलं वा स्फाटिकम् यस्मिन्। तनुतरङ्गा एव तालवृन्तानि तेषां वातं वहतीत्येवंशीले। कीदृशं शिलापट्टम्। कुमुदानां कैरवाणां दलानां पत्राणामावलीभिः पर्यन्तेषु चतुर्षु लिखिता रचिता याः पत्रलताः पत्ररचनास्ताभिर्दन्तुरम्। अवदातानां धवलानां सिन्दुवाराणां निर्गुण्डीपुष्पाणां दामानि स्रजस्तेषामुपहारो यस्मिन्। **अथेति**–इतरां प्राकृतामिव। यद्वा पूर्वदृष्टया भिन्नस्वरूपामिव। इन्दुकला चन्द्रकला सैव कलिका तद्वत्कोमलं रुचिरम्। प्रीतिपेशलतां स्नेहस्य चारुताम्। अनुबध्यमानेपि मुहुर्मुहुः कथ्यमानेपि। **देवीति**–दृष्टिपातेनैव कृतार्थे जने संभाषणाद्यनुग्रहस्य प्रवेश एव नास्ति। एतावतोनुग्रहस्य किमुत सर्वथा प्रवेशो नास्तीति किमु वक्तव्यमित्यर्थः। अतोऽस्थान एवायं देव्या अनुग्रहप्रसर इति भावः। **नेति**–निपुणमपि चिन्तयन्। अनुग्रहस्यातिरेकः प्रकर्षः। अनुरुध्यते आदरो दर्श्येत इत्यर्थः। **प्रायेणेति**–उपचारेण बाह्यसेवया हार्यं

---

१ ०धवलतनु. २ प्राकृते. ३ आसीनासु तासु.

करणोचिते भृत्यजने क इवादरः। परोपकारोपकरणं शरीरं तृणलवलघु च जीवितमपत्रपे त्वप्रतिपत्तिभिरुपायनीकर्तुमागतायास्ते[2]। वयमेते शरीरमिदमेतज्जीवितमेतानीन्द्रियाणि। एतेषामन्यतरदारोपय परिग्रहेण गरीयस्त्वामिति। अथैवंवादिनोस्य वचनमाक्षिप्य मदलेखा सस्मितमवादीत्। कुमार भवत्वातियन्त्रणया। खिद्यते खलु सखी कादम्बरी। किमर्थं चैवमुच्यते। सर्वमिदमन्तरेणापि वचनमनया परिगृहीतं किं पुनरमुनोपचारफल्गुना वचसा संदेहदोलामारोप्यत इति। स्थित्वा च कंचित्कालं कृतप्रस्तावा कथं राजा तारापीडः कथं देवी विलासवती कथमार्यः शुकनासः कीदृशी चोज्जयिनी कियत्यध्वनि सा च कीदृग्भारतं वर्षं रमणीयो वा मर्त्यलोक इत्यशेषं पप्रच्छ। एवंविधाभिश्च कथाभिः सुचिरं स्थित्वोत्थाय कादम्बरी केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य परिजनं च शयनसौधशिखरमारुरोह। तत्र च सितदुकूलवितानतलास्तीर्णे शयनीयमलंचकार। चन्द्रापीडोपि तस्मिन्नेव शिलातले निरभिमानतामभिरूपतामतिगम्भीरतां च कादम्बर्या निष्कारणवत्सलतां च महाश्वेतायाः सुजनतां च मदलेखाया महानुभावतां च परिजनस्यातिसमृद्धिं च गन्धर्वराजलोकस्य रम्यतां च किंपुरुषदेशस्य मनसा भावयन्केयूरकेण संवाह्यमानचरणः क्षणादिव क्षणदां क्षपितवान्।

अथ क्रमेण कादम्बरीदर्शनप्रजागरखिन्नः स्वप्तुमिव तालतमालतालीक-

---

वशीकर्तुं योग्यमत एवादक्षिणमनुदारम्। अगुणज्ञमिति यावत्। खलु निश्चयेन। अन्यथा नेयमत्यादरं दर्शयेदिति भावः। नियन्त्रणा निग्रहः। आज्ञायाः संविभागः सम्यग्विभज्य दानं तस्य करण उचितो योग्यस्तस्मिन्। **परेति**-परस्य य उपकारस्तस्योपकरणं साधनं शरीरम्। अत एव नैतस्मिन्साकल्येन मम स्वाम्यम्। जीवितं ददामि चेत्तदपि तृणवल्लघु। अत एवैवमागतायास्त एतत्, त्वप्रतिपत्तिभिस्त्वदनुग्रहस्य पत्यनुग्रह इत्युपायनीकर्तुमपत्रपे। भवतु आस्तामतिनियन्त्रणयातिनिर्बन्धेन। यतः खिद्यते इ०। अथवा अतियन्त्रणया खिद्यते इति योज्यम्। अन्तरेणापि वचनं कथनं विनापि। उपचारेण फल्गुना निःसारेण निरर्थकेनेति यावत्। संदेहदोलामारोप्यते संशयाकुला क्रियते। उपचारवचसा संशयसंभवः। **सितेति**-सितदुकूलस्य धवलपट्टवस्त्रस्य वितानमुल्लोचस्तस्य तले आस्तीर्णम्। संवाह्यमानौ लाल्यमानौ चरणौ यस्य। क्षणदां क्षणमुत्सवं शांतिं वा ददातीति क्षणदा रात्रिस्ताम्। **अथेति**-कादम्बर्या प्रतिनिवर्तमानाया दर्शने तदर्थं प्रजागरस्तेन खिन्नः श्रान्त इव। तालाश्च तमालाश्च ताल्यश्च कदल्यश्च तासां

---

१ अपि त्रपे तव प्रतिपत्ता [illegible], अत्र वे त्वत्प्रतिपत्तिभिरुपायनीकर्तुमागतायास्ते. २ एवमागतायाः.

दलीकन्दलिनीं प्रविरलकल्लोलानिलशीतलां वेलावनराजिमवततार तारापतिः। अभ्यर्णविरहविधुरस्य च कामिनीजनस्य निश्वसितैरिवोष्णैर्म्लानिमनीयत चन्द्रिका। चन्द्रापीडविलोकनारूढमदनेव कुमुददलोदरनीतनिशा पङ्कजेषु निपपात लक्ष्मीः। क्षणदापगमे च स्मृत्वा कामिनीकर्णोत्पलप्रहाराणामुत्कण्ठितेष्विव क्षामतां व्रजत्सु पाण्डुतनुषु वासगृहप्रदीपेषु, अनवरतशरक्षेपखिन्नानङ्गनिश्वासविभ्रमेषु वहत्सु लताकुसुमपरिमलेषु प्रभातमातरिश्वसु, मन्दरगिरिलतागृहगमनानि च भियेव भजन्तीष्वरुणोदयोपप्लविनीषु तारकासु, क्रमेण च समुद्गते चक्रवाकहृदयनिवासलग्नानुरागमिवालोहितं मण्डलमुद्वहति सवितरि, शिलातलादुत्थाय चन्द्रापीडः प्रक्षालितमुखकमलः कृतसंध्यानमस्कृतिर्गृहीतताम्बूलः केयूरक विलोकय देवी कादम्बरी प्रबुद्धा न वा क्व वा तिष्ठतीत्यवोचत्। गतप्रतिनिवृत्तेन च तेन देव मन्दरप्रासादस्याधस्तादङ्गनसौधवेदिकायां महाश्वेतया सहावतिष्ठत इत्यावेदिते गन्धर्वराजतनयामालोकयितुमाजगाम। ददर्श च धवलभस्मललाटिकाभिरक्षमालिकापरिवर्तनप्रचलकरतलाभिः पाशुपतव्रतधारिणीभिर्धातुरागारुणाम्बराभिश्च परिव्राजिकाभिः परि-

---

कन्दलानि प्ररोहाः सन्त्यस्याम्। अभ्यर्ण आसन्नः। रजन्यपगमे भविष्यमाण इत्यर्थः। यो विरहस्तेन विधुरस्य विषण्णस्य। ०विलोकनेनारूढो मदनो यस्याम्। कुमुददलोदरेषु तेषां विकसितत्वान्नीता निशा यया। तादृशी लक्ष्मीरधुना पङ्कजेषु प्रभाते उन्निद्रेषु निपपात। आसन्ने प्रभाते कुमुदानि मन्दतां पङ्कजानि च विकस्वरतामीयुरित्यर्थः। **कामिनीति**—रात्रौ सुरतकेलिषु ये कामिनीनां कर्णोत्पलप्रहारास्तेषां स्मृत्वा तदर्थं पुनः सञ्जातोत्कण्ठैरिव। अनवरतं यः शरक्षेपस्तेन खिन्नस्यानङ्गस्य निश्वासस्तस्येव विभ्रमो विलासो येषाम्। प्रभातमातरिश्वसु प्रत्यूषवातेषु। 'मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनिति वा' इति निरुक्तम्। **मन्दरेति**—मन्दरस्य मेरोः पूर्वेण स्थितत्वात् मेरुमभिपरिवर्तमानानां तारकाणां तल्लतागृहप्रवेशोक्तिः। तदुक्तं विष्णुपुराणे—मेरोश्चतुर्दिशं—तत्र नवसाहस्रविस्तृतम्। इलावृतं महाभाग चत्वारश्चात्र पर्वताः। विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः॥ इति। अरुणोदयेनोपप्लवो विपद्विद्यते यासाम्। तदुदये तासां तेजोविनाशात् अत एव भिया इ०। क्रमेणानया परिपाट्या। सूर्योदये वियुक्तानां चक्रवाकानां पुनर्घटनादाह चक्रेति। अङ्गनेऽजिरे यत्सौधं तस्य वेदिकायाम्। **ददर्शेति**—ततो महाश्वेतां कादम्बरीं च ददर्श। महाश्वेतां वर्णयन्नाह-साक्षान्मन्त्रदेवताभिरिव परिव्राजिकाभिस्तापसीभिश्चोपास्यमानाम्। तां विशिनष्टि धवलेत्यादिना। पाशुपतं व्रतं नियमविशेषस्तद्धारिणीभिः। धातुरागेण गैरिकेणारुणानि रक्तान्यम्बराणि यासाम्। **परिणतेति**-

---

१ अविरल. २ स्मृतकामिनीकर्णोत्पलेषु. ३ भ्रमत्सु. ४ तरुलता. ५ भस्मकृत. ६ चारिणीभिः.

ण्ततालफलवल्कलोहितवस्त्राभिश्च रक्तपटव्रतवाहिनीभिः सितवसननिबिडनिबद्धस्तनपरिकराभिश्च श्वेतपटव्यञ्जनाभिर्जटाजिनमौञ्जीवल्कलाषाढधारिणीभिर्वर्णिचिह्नाभिस्तापसीभिः साक्षादिव मन्त्रदेवताभिः पठन्तीभिर्भगवतस्त्र्यम्बकस्याम्बिकायाः कार्तिकेयस्य विष्टरश्रवसो जिनस्यार्यविलोकितेश्वरस्यार्हतो विरिञ्चस्य पुण्याः स्तुतीरुपास्यमानाम्, अन्तःपुराभ्यर्हिताश्च सादरं नमस्कारैराभाषणैरभ्युत्थानैरासन्नवेत्रासनदानैश्च दर्शनागतगन्धर्वराजबान्धववृद्धाः संमानयन्तीं महाश्वेतां पृष्ठतश्च समुपविष्टेन किंनरमिथुनेन मधुकरमधुराभ्यां वंशाभ्यां दत्ते ताने कलगिरा गायन्त्या नारददुहित्रा पठ्यमाने च सर्वमङ्गलमहीयसि महाभारते दत्तावधानां पुरोधृते मणिदर्पणे ताम्बूलरागबद्धकृष्णिकान्धकारिताभ्यन्तरं दशनज्योत्स्नासिक्तमुन्मृष्टमधूच्छिष्टपट्टपाटलमधरं विलोकयन्तीं शैवलतृष्णया कर्णपूरशिरीषप्रेषितोत्तानविलोचनेन बद्धमण्डलं भ्रमता भवनकलहंसेन प्रभातशशिनेव क्रियमाणगमनप्रणामप्रदक्षिणां कादम्बरीं समुपसृत्य कृतनमस्कारस्तस्यामेव

---

परिणतं परिपक्वं यत्तालफलं तस्य वल्कलं त्वक् तद्वल्लोहितानि रक्तानि वस्त्राणि यासाम् । रक्तपटो भिक्षुविशेषस्तस्य व्रतं तद्वाहिनीभिः । सितवसनेन निबिडं दृढं निबद्धः स्तनपरिकरः स्तनाभोगो याभिः । धवलः पटो व्यञ्जनं लक्ष्म यासाम् । वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी । 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः । तस्य चिह्नं यासां ताभिः । जिनः प्रसिद्धः । आर्यविलोकितेश्वरस्य बौद्धस्य । अर्हतस्तीर्थकरस्य । विरिञ्चस्य ब्रह्मणः । पुनः कीदृशीम् । अन्तःपुरेऽभ्यर्हिताः पूज्या मान्या इत्यर्थः । या दर्शनार्थमागता गन्धर्वराजबान्धववृद्धास्ताः संमानयन्तीम् । अथ कादम्बरीं विशेषयति पृष्ठत इति । ताने–"तानो नाम स्वरान्तरप्रवर्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः"। 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः । "गाता यं यं स्वरं गायेत्तं तं वंशेन तानयेत्' इति भरतः ।" इति कुमारसंभवटीकायां मल्लिनाथः । कलगिरा मधुरवाण्या । नारददुहित्रा 'मद्राभिधानया' इ० भानु० । सर्वमङ्गलैः समग्रश्रेयोभिर्महीयसि गरीयसि । ताम्बूलरागेण बद्धा या कृष्णिका श्यामता तयान्धकारितमभ्यन्तरं यस्य । उन्मृष्टेति–उन्मृष्टमपमृष्टं मधूच्छिष्टं सिक्थकं यस्मात्तादृशो यः पट्टस्तद्वत्पाटलं श्वेतरक्तम् । अधरं मणिदर्पणे विलोकयन्तीम् । पुनः कीदृशीम् । शैवलः शेवालं तस्य तृष्णया शिरीषे तद्भ्रमात् । कर्णपूरीकृते शिरीषे प्रेषिते उत्ताने ऊर्ध्वमुखे लोचने येन । भवनकलहंसेन बद्धं मण्डलं यस्मिन्कर्मणि तद्यथा तथा भ्रमता प्रभातशशिनेव क्रियमाणा

---

१ भगवतः शौद्धोदनेः. २ विष्णस्य. ३ अर्हतो वैश्वदेवस्य मार्तण्डस्य. ४ मधुराभ्याम्. ५ उत्सृष्ट. ६ पाण्डुरस.

सुधावेदिकाया विन्यस्तमासनं भेजे । स्थित्वा च कंचित्कालं महाश्वेताया वदनं विलोक्य स्फुरितकपोलोदरं मन्दस्मितमकरोत् । असौ तु तावतैव विदिताभिप्राया कादम्बरीमब्रवीत् । सखि भवत्या गुणैश्चन्द्रापीडश्चन्द्रकान्त इव चन्द्रमयूखैरार्द्रीकृतो न शक्नोति वक्तुम् । जिगमिषति खलु कुमारः । पृष्ठतो दुःखमविदितवृत्तान्तं राजचक्रमास्ते । अपि च युवयोर्दूरस्थितयोरपि स्थितेयमिदानीं कमलिनीकमलबान्धवयोरिव कुमुदिनीकुमुदनाथयोरिव प्रीतिराप्रलयात् । अतोऽभ्यनुजानातु भवतीति ।

अथ कादम्बरी, सखि स्वाधीनोयं सपरिजनो जनः कुमारस्य स्व इवान्तरात्मा क इवात्रानुरोध इत्यभिधाय गन्धर्वकुमारानाहूय प्रापयत कुमारं स्वां भूमिमित्यादिदेश । चन्द्रापीडोप्युत्थाय प्रणम्य प्रथमं महाश्वेतां ततः कादम्बरीं तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणो देवि किं ब्रवीमि बहुभाषिणो न श्रद्दधाति लोकः स्मर्तव्योस्मि परिजनकथास्वित्यभिधाय कन्यकान्तःपुरान्निर्जगाम । कादम्बरीवर्जमशेषकन्यकाजनो गुणगौरवाकृष्टः परवश इव तं व्रजन्तमा बहिस्तोरणादनुवव्राज । निवृत्ते च कन्यकाजने केयूरकेणोपनीतं वाजिनमारुह्य गन्धर्वकुमारकैस्तैरनुगम्यमानो हेमकूटात्प्रवृत्तो गन्तुम् । गच्छतश्चास्य चित्ररथतनया न केवलमन्तर्बहिरपि सैव सर्वाशानिबन्धनमासीत् । तथा हि । तन्मयेन मानसेनासह्यविरहदुःखानुशयलग्नामिव पृष्ठतः कृतमार्गगमनविरोधामिव पुरस्तात्, वियोगाकुलहृदयोत्कलिकावेशोत्क्षिप्तामिव नभसि, सम्यगालोकयितुं वदनं विरहातुरमानसामिवावस्थिता-

---

गमने गमनकाले प्रणामप्रदक्षिणा यस्याः । तादृशीम् । **पृष्ठत इति**–राज्ञां समूहश्चन्द्रापीडसहयायी । दुःखमास्ते दुःखाकुलस्तिष्ठति । अतो जिगमिषा । कमलिनीति-पद्मिनीसूर्ययोः । कुमुदिनीति कैरविणीचन्द्रयोः । **अथेति**–अनुरोध उपरोधभावः बहुभाषिणो वाचालस्य वाचालान् वा । आबहिस्तोरणाद्बहिर्द्वारं यावदित्यर्थः । **सर्वाशेति**–सर्वा आशा अभिलाषास्तासां निबन्धनमालम्बनम् । यद्वा बध्नात्यन्यत्र गमनं निरुद्धय स्वैकायत्तं करोतीति निबन्धनम् । सर्वास्वाशासु दिक्षु च निबन्धनम् । एतदेव विशदीकरोति तथाहीति । तद्गतेन मानसेन तद्गतमनस्कतयेत्यर्थः । असह्यं यद्विरहदुःखं तस्माद्योनुशयः सन्तापः तस्यानुशयोनुबन्धो वा । ' भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ' इति विश्वः । तस्माल्लग्नाम् । वियोगाकुलं यद्धृदयं तस्मिन्नुत्कलिकावेश उत्क-

---

१ वेदिकायाम्. २ सखि महाश्वेते. ३ वर्जः. ४ उत्कलिकावेशोत्क्षिप्ताम्, आवेशाक्षिप्ताम्.

मुरःस्थले, तामेव ददर्श । क्रमेण च प्राप्य महाश्वेताश्रममच्छोदसरस्तीरे संनिविष्टमिन्द्रायुधखुरपुटानुसारेणैवागतमात्मस्कन्धावारमपश्यत् । निवर्तिताशेषगन्धर्वकुमारश्च सानन्देन सकुतूहलेन सविस्मयेन च स्कन्धावारवर्तिना जनेन प्रणम्यमानः स्वभवनं विवेश । संमानिताशेषराजलोकश्च वैशम्पायनेन पत्रलेखया च सहैवं महाश्वेतैवं कादम्बर्येवं मदलेखैवं तमालिकैवं केयूरक इत्यनयैव कथया प्रायो दिवसमनैषीत् । कादम्बरीरूपदर्शनविद्विष्टेव[3] नास्य पुरेव प्रीतिमकरोद्राजलक्ष्मीः । तामेव च धवलेक्षणामाबद्धरणरणकेन चेतसा चिन्तयतो जाग्रत एव सा जगाम रात्रिः । अपरेद्युश्च समुत्थिते भगवति रवावास्थानमण्डपगतस्तद्गतेनैव मनसा सहसैव प्रतीहारेण सह प्रविशन्तं केयूरकं ददर्श । दूरादेव च क्षितितलस्पर्शिना मौलिना कृतपादपतनमेह्येही- त्युक्त्वा प्रथममपाङ्गविसर्पिणा चक्षुषा ततो हृदयेन ततो रोमोद्गमेन पश्चाद्भुजाभ्यां प्रधावितः प्रथितं तमालिलिङ्ग गाढम् । उपावेशयच्चैनमात्मनः समीप एव । पप्रच्छ च स्मितसुधाधवलीकृताक्षरं क्षरत्प्रीतिद्रवमयमिव वचनमादृतः । केयूरक कथय कुशलिनी देवी ससखीजना सपरिजना कादम्बरी भगवती महाश्वेता चेति । असौ तु तेन राजसूनोः प्रीतिप्रकर्षजन्मना स्मितेनैव स्नपित इवानुलिप्त इव सद्य एवापगताध्वखेदः प्रणम्यादृततरमवोचत् । अद्य कुशलिनी यामेवं देवः पृच्छति । इत्यभिधायापनीयार्द्रवस्त्रैकर्पटावगुण्ठितं बिससूत्रसंयतमुखमार्द्रचन्दनपङ्कन्यस्तबालमृणालवलयमुद्रं नलि-

ष्ठानुप्रवेशस्तेनोत्क्षिप्ताम् । स्कन्धावारं सैन्यम् । **कादम्बरीति**—कादम्बर्या दर्शनं तेन विद्विष्टेव विद्वेषं गतेव । विद्विष्टमस्या अस्तीति विद्विष्टा । 'अकारो मत्वर्थीयः' इति भाष्यकारः सपत्नीरूपदर्शनेन द्वेषो हि स्त्रीणां स्वभावः । आबद्धो रणरणक उत्कण्ठा येन । यद्वा रणरणकः कामः । 'मारो रणरणः कामो विषयः' इत्युत्पलिनी । **अपरेद्युश्चेति**—तद्गतेनैव मनसास्थानमण्डपगत इत्य० । कृतपादपतनं कृतनमस्कारमित्यर्थः । प्रथितं भूमौ प्रसृतं यद्वा प्रथितं स्फुटं यथा स्यात्तथेति क्रियाविशेषणम् । **स्मितेति**—स्मितमेव सुधा तया धवलीकृतान्यक्षराणि यस्मिन्कर्मणि तद्यथा तथा । क्षरन्यः प्रीतिद्रवः स्नेहरसस्तन्मयं तन्निर्मितमिव । आदृतः सादरः सन् । प्रीतिप्रकर्षः स्नेहातिशयः । **अद्येति**—आर्द्रो यो वस्त्रखण्डस्तेनावगुण्ठितं वेष्टितम् । चन्दनपङ्के न्यस्तं बालमृणालवलयमेव मुद्रा चिह्नं यस्मिन् । एवंविधं नलिनीपत्रपुटं कमलिनीदलनिर्मितं

१ तामेव मृगलोचनाम्. २ संभावितप्रत्यक्षीकृत०. ३ विद्विष्टयेव. ४ अस्य. ५ प्रसृतं, निभृतम्. ६ वस्त्रेति, कर्पटेति च नास्ति पुस्तकान्तरेषु.

नीपत्रपुटमदर्शयत् । उद्धाट्य च तत्र कादम्बरीप्रहितान्यभिज्ञानान्यदर्शयत् । तद्यथा मरकतहरिन्ति व्यपनीतत्वञ्चि चारुमञ्जरीभाञ्जि क्षीरीणि पूगीफलानि शुककामिनीकपोलपाण्डूनि ताम्बूलीदलानि हरचन्द्रखण्डस्थूलशकलं च कर्पूरमतिबहलमृगमदामोदमनोहरं च मलयजविलेपनम् । अब्रवीच्च । चूडामणिचुम्बिना कोमलाङ्गुलिविवरविनिर्गतलोहितांशुजालेनाञ्जलिना देवमर्चयति देवी कादम्बरी, महाश्वेता च सकण्ठग्रहेण कुशलवचसा, पर्यस्तशिखण्डमाणिक्यज्योत्स्नास्नापितललाटेन च नमस्कारेण मदलेखा, क्षितितलघटितसीमन्तमकरिकाकोटिकोणेन सकलकन्यालोकश्च सचरणरजःस्पर्शेन च पादप्रणामेन तमालिका । संदिष्टं च तव महाश्वेतया । धन्या खलु ते येषां न गतोसि चक्षुषोर्विषयम्[1] । तथा नाम समक्षं भवतस्ते तुहिनशीतलाश्चन्द्रमया इव गुणा विरहे विवस्वन्मया इव संवृत्ताः । स्पृहयन्ति खलु जनाः कथमपि दैवोपपादितायामृतोत्पत्तिवासरायेवातीतदिवसाय । त्वया वियुक्तं विनिवृत्तमहोत्सवालसमिव[2] वर्तते गन्धर्वराजनगरम् । जानासि च मां कृतसकलपरित्यागाम् । तथाप्यकारणपक्षपातिनं भवन्तं द्रष्टुमिच्छत्यनिच्छन्त्या अपि मे बलादिव हृदयम् । अपि च बलवदस्वस्थशरीरा कादम्बरी । स्मरति च स्मेराननं स्मरकल्पं त्वाम् । अतः पुनरागमनगौरवेणार्हसीमां

---

समुद्रकमदर्शयत् । अभिज्ञानानि प्रीतिदर्शकचिह्नानि । अभिज्ञायतेऽनेनेत्यभिज्ञानम् तान्येव दर्शयति तद्यथेति । व्यपनीता त्वक् वृन्तभागो येषां तानि । अन्यथा व्याख्याने मरकतसादृश्याभावः । क्षीरीणि, क्षीरयुक्तानि । हरसम्बन्धी यश्चन्द्रखण्डस्तद्वत्स्थूलं शकलं यस्य । अतिबहलो यो मृगमदामोदः कस्तुरिकापरिमलस्तेन मनोहरम् । सकण्ठग्रहेणालिङ्गनपूर्वकम् । देवमर्चयतीति सर्वत्र सम्बध्यते । पर्यस्ता या शिखण्डे यन्माणिक्यं तस्य ज्योत्स्ना दीप्तिस्तया स्नपितं ललाटं यस्मिन् । क्षितितले घटितो लग्नः सीमन्तः केशवर्त्म तत्र या मकरिकाभरणविशेषस्तस्याः कोटेरग्रभागस्य कोणोश्रियेस्मिन् । पादप्रणामेन सकलकन्यकालोकस्तमालिका च । तुहिनवत्तुषारवच्छीतलाः सुखकराः । विवस्वन्मयाः सूर्यनिर्मिताः संतापदा इत्यर्थः । **स्पृहयन्तीति**-दैवेन भाग्येनोपपादिताय । अतीतो गतो यो दिवसः । यस्मिन्दिवसे तव समागमोऽभूत् स दिवस इत्यर्थः । तस्मै । स्पृहयन्ति साभिलाषं तं पुनर्वाञ्छन्ति । अमृतोत्पत्तिवासरायेव । ' यद्दिनेऽमृतं समुत्पन्नं समुद्राद्बहिर्निर्गतं तस्मिन्दिने त्रिभुवने आनन्दः समभूत् । अतोऽमृतोत्पत्तिवासरोपमानम् ' इति भानु० । विनिवृत्तो यो महोत्सवस्तदागमनस्तस्मिन्स्तेनालसमालस्ययुक्तम् । ईषन्यूनः स्मरः स्मरकल्पस्तम् । आगमनेन यद्गौरवं गुरुतापादनं तेन

---

१ अविषयम् ( भानु० ). २ महोत्सवानन्दम.

गुणवदभिमानिनीं कर्तुम् । उदारजनादरो हि बहुमानमारोपयति । अवश्यं सोढव्या चेमयस्मद्विधजनपरिचयकदर्थना कुमारेण । भवत्सुजनतैव जनयत्यनुचितं संदेशप्रागल्भ्यम् । एष देवस्य शयनीये विस्मृतः शेषो हारः प्रहितः । इत्युत्तरीयपटान्तसंयतं सूक्ष्मसूत्रविवरनिःसृतैरंशुसंतानैः संसूच्यमानं विमुच्य चामरग्राहिण्याः करे समर्पितवान् ।

अथ चन्द्रापीडो महाश्वेताचरणाराधनतपःफलमिदं यदेवं परिजनेष्यनुस्मरणादिकं प्रसादभारमतिमहान्तमारोपयति देवी कादम्बरीत्युक्त्वा तत्सर्वं शिरसि कृत्वा स्वयमेव जग्राह । तेन च कादम्बर्याः कपोलल्लावण्येनेव गलितेन स्मितालोकेनेव रसतामुपनीतेन हृदयेनेव द्रुतेन गुणगणेनेव निस्यन्दितेन स्पर्शवता ह्लादिना सुरभिणा च विलेपनेन विलिप्य तमेव कण्ठे हारमकरोत् । आगृहीतताम्बूलश्च मुहूर्तादिवोत्थाय वामबाहुना स्कन्धदेशे समवलम्ब्य केयूरकमूर्ध्वस्थित एव कृतयथाक्रियमाणसंमानमुदितं प्रधानराजलोकं विसृज्य शनैः शनैर्गन्धमादनं करिणं द्रष्टुमयासीत् । तत्र च स्थित्वा क्षणमिव तस्मै स्वयमेव निजनखांशुजालजटिलं समृणालमिव शष्पकवलमवकीर्य वल्लभतुरङ्गमन्दुराभिमुखः प्रतस्थे । गच्छंश्चोभयतः किंचित्किंचिदिव तिर्यग्वलितवदनः परिजनं विलोकयांबभूव । अथ चित्तज्ञैः प्रतीहारैः प्रतिषिद्धानुगमने निखिले समुत्सारिते परिजने केयूरकद्वितीय एव मन्दुरां प्रविवेश । उत्सारणभयसंभ्रान्तलोचनेषु प्रणम्यापसृतेषु मन्दुरापालेष्विन्द्रायुधस्य पृष्ठावगुण्ठनपटं किंचिदेकपार्श्वगलितं समीकुर्वन्नुत्सारयंश्च कूणितनेत्रत्रिभागस्य दृष्टिनिरोधिनीं कुङ्कुमकपिलां केसरसटां खुरधारिणीविन्यस्तचरणो लीलामन्दं

---

गुणवत्यभिमानो विद्यतेऽस्यास्तादृशीम् । परेषामार्तिहरो गुणवानयं कुमार इत्यभिमानं वहेदित्यर्थः । यद्वा गुणवन्तमात्मानं मन्यते इति तथोक्ताम् । त्वं पुनरागमनेन तां संमानयासि चेदियमप्यात्मनि कोपि गुणविशेषो विद्यते इति स्वविषयकमभिमानं वहेदित्यर्थः उदारजने उदारजनकृतो वा आदरः । अस्मद्विधजनस्य यः परिचयस्तेन कदर्थना पीडनम् । अनुचितमस्मद्विधेष्वयोग्यम् । सूक्ष्माणि यानि सूत्रविवराणि तेभ्यो निःसृतैः । स्पर्शवता सुखस्पर्शेन ह्लादिनानन्दकारिणा । **आगृहीतेति**-कृतो यथाक्रियमाणः पूर्वपरम्परानुरोधेन विधीययानो यः संमानस्तेन मुदितम् । गन्धमादनं नाम हस्तिनम् । **तत्रेति**-वल्लभा ये तुरंगास्तेषां मन्दुरा वाजिशाला तस्या अभिमुखः । चित्तज्ञैरभिप्रायविद्भिः । उत्सारणं दूरीकरणं तस्माद्यद्भयं तेन सम्भ्रान्ते आकुले लोचने येषाम् । केसराणां ग्रीवास्थकेशानां

---

१ अवलोकनेन. २ निस्यन्दितेन. ३ खुरधारणी,-धोरणी.

मन्दुराद्गतद्भरः सकुतूहलमुवाच । केयूरक कथय मन्निर्गमादारभ्य को वा वृत्तान्तो गन्धर्वराजकुले केन वा व्यापारेण वासरमतिनीतवती गन्धर्वराजपुत्री किं वाकरोन्महाश्वेता किमभाषत वा मदलेखा के वाभवन्नालापाः परिजनस्य भवतो वा को व्यापार आसीत् । आसीद्वा काचिदस्मदाश्रयिणी कथा । केयूरकस्तु सर्वमाचचक्षे । देव श्रूयताम् । निर्गते त्वयि हृदयसहस्रप्रयाणपटहकलकलमिव नपुरचक्रक्वणितेन कन्यकान्तःपुरे कुर्वति देवी कादम्बरी सपरिजना सौधशिखरमारुह्य तुरगधूलिरेखाधूसरं देवस्यैव गमनमार्गमालोकितवती । तिरोहितदर्शने च देवे मदलेखांसन्निक्षिप्तमुखी प्रीत्या तं दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः सितातपत्रापदेशेन शशिनेवेर्ष्यया निवार्यमाणरविकरस्पर्शा सुचिरं तत्रैव स्थितवती । तस्माच्च कथमपि सखेदमवतीर्य क्षणमिवास्थानमण्डपे स्थित्वोत्थाय स्खलनभियेव निवेद्यमानोपहारकुसुमा शब्दायमानैर्मधुकरैः, जलधाराधवलनखमयूखोन्मुखानामनुगलं गलद्भिर्वलयैः कण्ठबन्धानिवोपपादयन्ती केकारवोद्विग्ना भवनशिखण्डिनां, पदे पदे च कुसुमधवलान्करेण गृहलतापल्लवान्मनसा च देवस्य गुणगणानवलम्बमाना तमेव क्रीडापर्वतकमागतवती यत्र स्थितवान्देवः । तमुपेत्य च देवेनात्र मरकतशिलामकरिकाप्रणालप्रस्रवणसिच्यमानहरितलतामण्डपे शीकरिणि शिलातले स्थितम्, अत्र गन्धोदकपरिमललीनालिजालजटिलशिलाप्रदेशे स्नातम्, अत्र कुसुमधूलिसिकतातिले गिरिनदिकातटे भगवानर्चितः शूलपाणिः, अत्र ह्रेपितशशधररोचिषि स्फाटिकशिलातले

सटा समूहस्ताम् । खुरधारिण्यां खुरबन्धनस्थाने विन्यस्तौ चरणौ येन । हृदयसहस्राणां प्रयाणं त्वया सह गमनं तत्र यः पटहकलकलस्तमिव कुर्वति सति । सितातपत्रापदेशेन धवलच्छत्रमिषेण । ईर्ष्यया दिवाकरस्पर्धया । **तस्मादिति**–शब्दायमानैर्मधुकरैस्तस्याः स्खलनं स्यादित निवेद्यमानानि निर्दिश्यमानान्युपहारकुसुमानि यस्यास्तादृशी । जलधारावद्धवलानां नखमयूखानामुन्मुखानां तदवलोकनार्थमुन्नमितमुखानां भवनशिखण्डिनामनुगलं गले । विभक्त्यर्थेऽव्ययीभावः । गलद्भिर्वलयैः तेषां शब्दनिवारणार्थं कण्ठबन्धानुपपादयन्ती विदधतीव । यतः केकारवादुद्विग्ना । कुसुमैः धवलान् । कुसुमवद्धवलान्गुणगणांश्च । **मरकतेति**–मरकतशिलाया यो मकरिकाप्रणालो मकरिकाकारः प्रणालो जलप्रवाहमार्गस्तस्य प्रस्रवणेन । सिच्यमाने हरितलतामण्डपे । शीकरिण्यम्बुकणवति । ह्रेपित्ता ह्रियं प्रापिता । जिहतेर्ण्यन्तात्कर्मणि क्तः । अर्तिह्री–' इत्यादिना पुगागमः । शशधरस्य चन्द्रस्य रोचिः कान्तिर्येन तस्मिन् । पुनरुक्त

१ अवसरम्. २ नवक्वणितेन. ३ सिच्यमानलता. ४ सिकताकवर्पितागिरि. ५ काननतटे.

भुक्तम्, अत्र संक्रान्तचन्दनरसलाञ्छने मुक्ताशैलशिलापट्टे सुप्तम्, इति परिजनेन पुनरुक्तं निवेद्यमानानि देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसम्। दिवसावसाने च कथमपि महाश्वेताप्रयत्नादनभिमतमपि तस्मिन्नेव स्फटिकमणिवेश्मन्याहारमकरोत्। अस्तमुपगते च भगवति रवावुदिते चन्द्रमसि तत्रैव कंचित्कालं स्थित्वा चन्द्रकान्तमयीव चन्द्रोदये प्रत्यार्द्रीकृततनुश्चन्द्रबिम्बप्रवेशभयेनेव करौ कपोलयोः कृत्वा किमपि चिन्तयन्ती मुकुलितेक्षणा क्षणमात्रं स्थित्वोत्थाय मिमलनखनिपतितशशिप्रतिमाभरगुरूणीव कृच्छ्रादुत्क्षिपन्ती लीलामन्थरगमनपटूनि पदानि शय्यागृहमगात्। शयननिक्षिप्तगात्रयष्टिश्च ततः प्रभृति प्रबलया शिरोवेदनया विचेष्टमाना दारुणेन च दाहरूपिणा ज्वरेणाभिभूयमाना केनाप्याधिना[2] मङ्गलप्रदीपैः कुमुदाकरैश्चक्रवाकैश्च सार्धमनिमीलितलोचना दुःखदुःखेन क्षणदामनैषीत्। उषसि च मामाहूय देवस्य वार्ताव्यतिकरोपलम्भाय सोपालम्भमादिष्टवती।

चन्द्रापीडस्तदाकर्ण्य जिगमिषुरश्वोऽश्व इति वदन्[3] भवनान्निर्ययौ। आरोपितपर्याणं च त्वरिततुरगपरिचारकोपनीतमिन्द्रायुधमारुह्य पश्चादारोप्य पत्रलेखां स्कन्धावारे स्थापयित्वा वैशम्पायनमशेषं परिजनं निवर्त्य चान्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ। आसाद्य च कादम्बरीभवनद्वारमवततार। अवतीर्य च द्वारपालार्पिततुरङ्गः कादम्बरीप्रथमदर्शनकुतूहलिन्या च पत्रलेखयानुगम्यमानः प्रविश्य क्व देवी कादम्बरी तिष्ठ-

पुनः पुनरुक्त्वा। **अस्तमिति**—प्रत्यार्द्रीकृततनुः-अत्र स्वेदानुभावोक्त्या चित्तपर्याकुलतोक्ता। विमलेषु नखेषु पतिता याः शशिप्रतिमास्तासां भरेण गुरूणि जडानि। लीलया विलासेन यन्मन्थरगमनं तत्र पटूनि दक्षाणि। **शयनेति**—विचेष्टमाना व्यथामभवन्ती। आधिना आधिर्मानसी व्यथा तेन। केनाप्यकथनीयेन हेतुना। **मङ्गलेति**—अत्र दीपानां कुमुदानां च रात्रावुन्मीलनाच्चक्रवाकयोश्च वियोगवशादनिमीलितलोचनत्वम्। वार्ताव्यतिकरो वृत्तान्तप्रकारस्तस्योपलम्भाय प्राप्तये। सोपालम्भमुपालम्भेन सहितं यथा तथा। उपालम्भो हि द्विविधः। गुणाविष्करणपूर्वको निन्दापूर्वकश्च। अत्र पूर्वः। मम हितनिरतस्य तव किं नामोचितमेतदित्यादि भणित्वेत्यर्थः। **चन्द्रापीड इति**—जिगमिषुः कादम्बरीभवनमिति शेषः। आरोपितं पृष्ठोपरि दापितं पर्याणं पल्ययनं यस्य। स्कन्धावारे सेनानिवेशे। तदवेक्षार्थे इत्यर्थः। आरूढेन केयूरकेणैवानुगम्यमानः।

१ शिलापट्टशयनीये. २ व्याधिना. ३ पूर्ववृत्तचमत्कृतचेताः.

तीति संमुखागतमन्यतमं वर्षधरमप्राक्षीत् । कृतप्रणामेन च तेन देव मत्त-मयूरस्य क्रीडापर्वतकस्याधस्तात्कमलवनदीर्घिकातीरे विरचितं हिमगृहम-ध्यास्त इत्यावेदिते केयूरकेणोपदिश्यमानवर्त्मा प्रमदवनमध्येन गत्वा किंचि-दध्वानं मरकतहरितानां कदलीदलानां प्रभया शष्पीकृतरविकिरणं हरि-तायमानं दिवसं ददर्श । तेषां च मध्ये निरन्तरनलिनीदलच्छन्नं हिमगृहम-पश्यत् । तस्माच्च निष्पतन्तमार्द्रांशुकच्छलेनाच्छोदजलेनेव संवीतं, बाहु-लताविधृतैर्मृणालवलयैराभरणैरिव धवलितावयवम्, आपाण्डुभिश्चैकश्रव-णाश्रयैस्ताडङ्कीकृतैः केतकीगर्भदलैरुपहसितदन्तपत्रम्, आलिखितचन्दन-ललाटिकानि मुखारविन्दानि बद्धसौभाग्यपट्टानीव दधानं, कृतचन्दनबिन्दु-विशेषकांश्च दिवापि स्पर्शलोभस्थितेन्दुप्रतिबिम्बानिव कपोलानुद्वहन्तम्, अपहृताशेषशिरीषसौभाग्याभिः शैवलमञ्जरीभिः कृतकर्णपूरं, कर्पूरधूलिधूसरेषु मलयजरसलवलुलितेषु बकुलावलीवलयेषु स्तनेषु न्यस्तनलिनीपत्रप्रावरणम्, अनवरतचन्दनचर्चाप्रणयनपाण्डुरैः संतापरोषमृदितचन्द्रकैरिव करैः कल्पि-तमृणालदण्डानि बिसतन्तुमयानि चामराणि बिभ्राणम्, उन्नालैश्च कमलैः कुमुदैः कुवलयैः कदलीदलैः कमलिनीपलाशैः कुसुमस्तबकैश्चातपत्रीकृ-तैर्निवारितातपं जलदेवतानामिव समूहं वरुणश्रियामिव समागमं शरदामिव समाजं सरसीनामिव गोष्ठीबन्धं शिशिरोपचारनिपुणं कादम्बर्याः शरीरपरि-चारकं शरीरप्रायं परिजनमद्राक्षीत् ।

---

**कृतप्रणामेति**–मत्तमयूरस्य तदाख्यस्य । शष्पीकृता बालतृणवदाचरिता रविकि-रणा यस्मिन् । निरन्तराणि निबिडानि यानि नलिनीदलानि तैश्छन्नमाच्छादितम् । **तस्माच्चेति**–तस्माच्च हिमगृहान्निष्पतन्तं कादम्बर्याः शरीरपरिचारकं शरीरसेवानि-युक्तं परिजनमद्राक्षीत् । परिजनं विशेषयति । **आर्द्रेति**–संवीतमावृतम् । ' संवीतं रुद्धमावृतम् ' इत्यमरः । अत्र शीताह्लादकत्वमुभयोः साम्यम् । ताडङ्कीकृतैस्ताडङ्क-कर्णाभरणविशेषस्तद्वदाचरितैः । कृता विहिताश्चन्दनबिन्दुभिर्विशेषकाः स्थासका येषु । अपहृतमशेषं शिरीषमञ्जरीणां सौभाग्यं शोभातिशयो याभिः । मलयजं चन्दनं तस्य रसलवैर्लुलितेषु विच्छुरितेषु । अनवरतं यश्चन्दनचर्चायाश्चार्चिक्यस्य प्रणयनं प्रापणं तेन पाण्डुरैः । अत एव प्रियविरहेण यः संतापस्तज्जनितो रोषश्च ताभ्यां मृदितैश्चन्द्रकरैरिव । कल्पिता मृणालानां दण्डा येषाम् । वरुणश्रियाम्–वरुणस्याब्देवता-त्वात्तच्छ्रियामतिशीतलत्वसंभवः । गोष्ठीबन्धमेकत्रनिवासम् । शरीरप्रायं केवलैः

---

१ नृत्य०. २ घनानाम्. ३ तालङ्कीकृते. ४ पदानि. ५ कपोलफलकाम्. ६ ललितेषु, ललितकुवलयावलीवलयेषु. ७ बकुलावलीदामयेषु. ८ मृदितारक्तचन्द्र०, प्रकटितचन्द्र० ९ परिचारिकाप्रायम्.

तेन च प्रणम्यमानः पादनखपतनभयादिव त्वरितापसृतेन दीयमानमार्गश्चन्दनपङ्ककृतवेदिकानां पुण्डरीककलिकाघटितघण्टिकानां विकसितसिन्दुवारकुसुममञ्जरीचामराणां लम्बितस्थूलमल्लिकामुकुलहाराणामाबद्धलवङ्गपल्लवचन्दनमालिकानां दोलायमानकुमुददामध्वजानां मृणालवेत्रहस्ताभिर्गृहीतरुचिरकुसुमाभरणाभिर्मधुलक्ष्मीप्रतिकृतिभिरिव द्वारपालिकाभिरधिष्ठितानां कदलीतोरणानां तलेन प्रविश्य सर्वतो निसृष्टदृष्टिर्दृष्टवान्क्वचिदुभयतटनिखाततमालपल्लवकृतवनलेखाः कुमुदधूलिवालुका पुलिनमालिनीश्चन्दनरसेन प्रवर्त्यमाना गृहनदिकाः, क्वचिन्निचुलमञ्जरीरचितरक्तचामराणां जलार्द्रवितानकानां तलेषु ससिन्दूरकुट्टिमेष्वास्तीर्यमाणानि रक्तपङ्कजशयनानि क्वचिदेलारसेन सिच्यमानानि स्पर्शानुमेयरम्यभित्तीनि स्फटिकभवनानि क्वचिच्छिरीषपक्ष्मकृतशाद्वलानां मृणालधारागृहाणां शिखरमारोप्यमाणानां धाराकदम्बधूलिधूसराणां यन्त्रमयूरकाणां कदम्बकानि क्वचित्सहकाररसासिक्तैर्जम्बूपल्लवैराच्छाद्यमानाभ्यन्तराः

---

शरीरैस्तिष्ठन्तम्। भूषणादीनां तापदत्वादकृतभूषणादिकमित्यर्थः। यद्वा तस्याः, शरीरकल्पम्। **तेनेति**–तेन परिजनेन प्रणम्यमानश्च कदलीतोरणानां तलेन प्रविश्य सर्वतो निसृष्टदृष्टिर्वेक्ष्यमाणं सर्वं दृष्टवान्, अन्यांश्चैवंप्रकारान्...वीक्षमाणो हिमगृहस्य मध्यभागमाससादेत्यन्वयः। **पादेति**–पादनखेषु तेषां स्वच्छत्वाद्यत्पतनमर्थाच्चन्द्रापीडप्रतिबिम्बस्य तस्माद्भयं तस्मादिव। यद्वा चन्द्रापीडनखेषु तासां प्रतिबिम्बपतनं तस्माद्भयात्। अत्रातिमार्दवत्वाद्भारासहत्वं भयहेतुः। कदलीतोरणानि विशेषयन्नाह–**चन्दनेति**–पुण्डरीकाणि सिताम्भोजानि तेषां कलिकाभिः कोरकैर्घटिता घण्टिका येषाम्। ०मञ्जरीणां चामराणि येषाम्। मल्लिका भूपदी। आबद्धा लवङ्गपल्लवानां वन्दनमाला येषु। भानुचन्द्रस्तु चन्दनमालिकानामिति पठित्वा आबद्धा लवङ्गपल्लवा यासु तादृश्यश्चन्दनमालिका येषाम्। तोरणार्धे तु मङ्गल्यं दाम चन्दनमालिका इति कोशः। इति व्याख्याति। मधुलक्ष्म्या वसन्तश्रियः प्रतिकृतिभिः प्रतिमाभिः। यद्यद्दृष्टवांस्तदाह–**क्वचिदिति**। उभयतटयोर्निखाता ये तमालपल्लवास्तैः कृता वनलेखा काननराजिर्येषाम्। यद्वा वनं जलं तस्य लेखा जलप्रवाहसीमेति यावत्। येषाम्। कुमुदानां धूलिः पराग एव वालुका तस्याः पुलिनमाला विद्यते यासां तादृशीः। **क्वचिदिति**–'निचुलो हिज्जलोम्बुजः' इत्यमरः। तस्य मञ्जरीभी रचितानि रक्तचामराणि येषाम्। निचुलस्य जलप्रायदेशत्वेन शीतलत्वात्तापापनोदनार्थं चामरकल्पनम्। जलेनार्द्राणि वितानकानि चन्द्रोदयास्तेषाम्। एला चन्द्रबाला तस्या रसेन। **शिरीषेति**–'शिरीषस्तु कपीतनः' इत्यमरः। तस्य पक्ष्मभिः किञ्जल्कैः कृतानि शाद्वलानि येषु। 'पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि।' इति विश्वः। 'शाद्वलः शादहरिते' इत्यमरः। मृणालप्रचुराणि धारागृहाणि जलयन्त्रसद्मानि तेषाम्। धाराकदम्बस्य जलधारासमूहस्य धूलिभिस्तुषारैः धूसराणाम्।

---

१ तल. २ जलार्द्रीकृत. ३ ०रम्यस्थितिप्रदेशानि. ४ अभ्र, अभ्रक. ५ ० तरुसक्तैः.

पर्णशालाः क्वचित्क्रीडितकृत्रिमकरिकलभयूथकाकुलीक्रियमाणाः काञ्चनकमलिनिकाः क्वचिद्गन्धोदककूपेषु बद्धकाञ्चनसुधापङ्ककामपीठेषु स्थूलबिसलतादण्डघटितारकाणि कृतककेतकदलजलद्रोणिकानि कुवलयावलीरज्जुभिर्ग्रथ्यमानानि पैत्रपुटघटीयन्त्रकाणि क्वचित्स्फटिकबलाकावलीवान्तवारिधारा लिखितेन्द्रायुधाः संचार्यमाणा मायामेघमालाः क्वचिदुपान्तरूढपाण्डुयवाङ्कुरासु तैरत्तरुणमालतीकुड्मलदन्तुरिततरङ्गासु हरिचन्दनद्रववापिकासु शिशिरीक्रियमाणा हारयष्टीः क्वचिन्मुक्ताफलक्षोदरचितालवालकाननवरतस्थूलजलबिन्दुदुर्दिनमुत्सृजतः यन्त्रवृक्षकान्क्वचिद्विधुतपक्षनिक्षिप्तसीकरानीतनीहारा भ्रमन्तीर्यन्त्रमयीः पत्रशकुनिश्रेणीः क्वचिन्मधुकरकिङ्किणीपङ्क्तिपटुतैरबाध्यमानाः कुसुमदामदोलाः क्वचिदुदरारूढनिर्गतोन्नालनलिनीच्छदच्छादितमुखान्प्रवेश्य-

---

काञ्चनकमलिनिकाः सुवर्णनलिनिकाः । **गन्धेति**–बद्धानि काञ्चनं सुवर्णमेवसुधापङ्कस्तस्य कामानि काम्यानि रम्याणीत्यर्थः । स्मरस्य पीठानि येषु । 'कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येपि स्यान्नपुंसकम्' इति मेदिनी । यद्वा काममत्यर्थं । पीठानि येषु स्थूला ये बिसलतादण्डास्तैरतैर्घटिता अरकाः सक्थीनि येषाम् । कृतकानि कृत्रिमाणि केतकीदलानि तेषां जलद्रोणिकाः पात्रविशेषा यत्र ग्रथ्यमानानि एकत्र बध्यमानानि । पत्रपुटलक्षणघटीयुक्तानि यन्त्राणि घटीयन्त्राण्यरघट्टकान् । **क्वचिदिति**–स्फटिकस्य बलाका बिसकण्ठिकास्तासामावलीभिर्वान्ता उद्गीर्णा वारिधारा येषु । तासामावलीषु वान्ता मुक्ता वारिधारा यैरिति वा । मेघालोके हि बलाका वियति विरचितपंक्तयो भवन्ति । वृष्टे च मेघे तासां गर्भसंभवो जायते इति कविवर्णनादत्रापि कृत्रिमकादम्बिन्या अधस्तात्कृत्रिमबलाकावल्या न्यासः । तदुक्तं मेघदूते–गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः' ॥ इति । मायया कल्पनया निर्मिताः कृत्रिमा इत्यर्थः मेघमालाः । तरन्ति तरुणानि नवीनानि मालतीकुड्मलानि तैर्दन्तुरिता विषमोन्नतास्तरङ्गा यासाम् । **मुक्तेति**–मुक्ताफलानां क्षोदेन चूर्णेन रचितान्यालवालकान्यवापस्थानानि येषां तान् । अनवरतं स्थूलबिन्दूनां दुर्दिनं लक्षणया वर्षम् । **विधुतेति**–विधुताः कम्पिता ये पक्षास्तैर्निक्षिप्ताः प्रेरिताः सीकरास्तैरानीतो नीहारो हिमं याभिः । **मधुकरेति**–मधुकरा एवाव्यक्तध्वनिसाम्यात्किङ्किण्यस्तासां पंक्तिः श्रेणिस्तया पटुतरं यथा तथा बाध्यमाना व्याप्यमनाः । **उदरेति**–उदरे आरूढा प्ररूढा निर्गता बहिर्निःसृता या उन्नाला नलिनी तस्याश्छदैः पत्रैश्छादितानि मुखानि येषाम् । शातकुम्भं सुवर्णम् । घटिताः कदलीगर्भस्तम्भा एव दण्डा येषाम् । चार्व्यो वंशो-

---

१ कनक. २ कमलपत्र. ३ सितरक्त. ४ अनवरतचन्दनरसस्थूल. ५ तराबध्यमानाः, पटुरबाध्यमानाः. ६ उत्ताल.

मानाञ्छातकुम्भकुम्भान्क्वचिद्धटितकदलीगर्भस्तम्भदण्डानि बध्यमानानि चारु-वंशाकृतीनि कुसुमस्तबकातपत्राणि क्वचित्करमृदितकर्पूरपल्लवरसेनाधिवास्यमानानि बिसतन्तुमयान्यंशुकानि क्वचिल्लवलीफलद्रवेणार्द्रीक्रियमाणांस्तृणशून्यमञ्जरीकर्णपूरान्क्वचिदम्भोजिनीदलव्यजनैर्वीज्यमानानुपलभाजनभाजाञ्छीतौषधिरसानन्यांश्चैवंप्रकाराञ्छिशिरोपचारोपकरणकल्पनाव्यापारान्परिजनेन कृतान्क्रियमाणांश्च वीक्षमाणो हिमगृहकस्य मध्यभागं हृदयमिव हिमवतः, जलक्रीडागृहमिव प्रचेतसः, जन्मभूमिमिव सर्वचन्दनवनदेवतानां, प्रभवमिव सर्वचन्द्रमणीनां, निवासमिव सर्वमाघमासयामिनीनां, संकेतसदनमिव सर्वप्रावृषां, ग्रीष्मोष्मापनोदोद्देशमिव सर्वनिम्नगानां, वडवानलसंतापापनोदननिवासमिव सर्वसागराणां, वैद्युतदहनदाहप्रतीकारस्थानमिव सर्वजलधाराणाम्, इन्दुविरहदुःसहदिवसातिवाहनस्थानमिव कुमुदिनीनां हरहुताशननिर्वापणक्षेत्रमिव मकरध्वजस्य[1], दिनकरकरैरपि सर्वतो जलयन्त्रधारासहस्रसमुत्सारितैरतिशीतस्पर्शभयनिवृत्तैरिव परिहृतम्, अनिलैरपि कदम्बकेसरोत्करवाहिभिः कण्टकितैरिवानुगतं, कदलीवनैरिव पवनचलितदलैर्जाड्यजनितवेपथुभिरिव परिवारितम्, अलिभिरपि कुसुमामोदमदमुखरैराबद्धदन्तवीणैरिव वाचालितं, लताभिरपि निरन्तरमधुकरपटलजटिलाभिर्गृहीतनीलप्रावरणाभिरिव विराजितम्, आससाद। क्रमेण च तत्रान्तर्बहिश्चातिबहलेन पिण्डहार्येणेवोपलि-

---

वेणुस्तद्वदाकृतिर्येषाम्। तृणशून्यं मल्लिका। 'तृणशून्यं मल्लिकायाम्' इति विश्वः। तृणशूकेति पाठे शूकं किंशारुः। तस्य मञ्जर्य एव कर्णपूराः कर्णाभरणभेदास्तान्। उपलभाजनभाजानश्मपात्रस्थितान्। शिशिराः शीतला उपचारा उपायास्तेषामुपकरणं योजना तस्याः कल्पनारूपव्यापारान्। हिमवतो हिमाचलस्य। प्रचेतसो वरुणस्य। संकेतसदनं संकेतपूर्वनिवासस्थानम् ग्रीष्मस्य ग्रीष्मर्तुसम्बन्धी य उष्मा तस्यापनोदस्य दूरीकरणस्योद्देशं प्रदेशम्। वडवानलो वाडवाग्निः। वैद्युतो विद्युत्सम्बन्धी दहनोऽग्निः। हरहुताशनस्तृतीयनेत्राग्निस्तस्य निर्वापणं निर्वाणं। तस्य क्षेत्रं स्थानम्। कदम्बस्य नीपस्य यः केसरोत्करः किञ्जल्कसमूहस्तद्वाहिभिः। कुसुमानामामोदः परिमलस्तस्माद्यो मदस्तेन मुखरैर्वाचालैः। आरब्धा दन्तवीणा। अतिशीतस्पर्शवशाद्दन्तानां परस्परघर्षणजन्यशब्द इत्यर्थः। यैस्तादृशैरिव। जटिलाभिश्छन्नाभिरित्यर्थः। **क्रमेणेति**—न हि मूर्तव्यतिरेकेणोपलेपनक्रिया संभवतीत्याह। **पिण्डेति**—पिण्डहार्येण पिण्डेन मूर्तेन हार्यो हर्तुं योग्यस्तेनेव। हस्तग्राह्येणेवेत्यर्थः।

---

[1] अतःपरं 'सद्मनमिव वनदेवतानाम्' इत्यधिकं क्वचित्.

प्यमानोतिशीतलेन स्पर्शेनामन्यतात्मनो मनश्चन्द्रमयं कुमुदमयानीन्द्रियाणि ज्योत्स्नामयान्यङ्गानि मृणालिकामयीं धियम् । अगणयच्च हारमयानर्ककिरणांश्चन्दनमयमातपं कर्पूरमयं पवनमुदकमयं कालं तुषारमयं त्रिभुवनम् ।

एवंविधस्य च तस्यैकदेशे सखीकदम्बकपरिवृतामशेषसरित्परिवारामिव भगवतीं गङ्गां हिमवतो गुहातलगतां, कुल्याभ्रमिभ्रमितेन कर्पूररसस्रोतसा कृतपरिवेशाया मृणालदण्डमण्डपिकायास्तले कुसुमशयनमधिशयानां, हाराङ्गदवलयरसनानूपुरैर्मृणालमयैर्निगडैरिव संयतामीर्ष्यया मन्मथेन, चन्दनधवले स्पृष्टामिव ललाटे शशलाञ्छनेन, बाष्पवारिवाहिनि चुम्बितामिव चक्षुषि वरुणेन, वर्धितनिश्वासमरुति दृष्टामिव मुखे मातरिश्वना, संतापप्रतप्तेष्वध्यासितामिवाङ्गेषु पतङ्गेन, कन्दर्पदाहदीपिते गृहीतामिव हृदये हुतभुजा, स्वेदिनि परिष्वक्तामिव वपुषि जलेन, दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः हृदयेन सह प्रियतमसमीपमिवोपगतैरङ्गैरुपजनितदौर्बल्याम्, आश्यानचन्दनपाण्डुरं च रोमाञ्चमनवरतहारस्पर्शलग्नं मुक्ताफलकिरणपुञ्जमिवोद्वहन्तीं, स्वेदसीकरिणीं च कपोलपालीं पक्षपवनेन वीजयद्भिरनुकम्प्यमानामिवावतंसमधुकरैः, अवतंसमधुकररवदहनदग्धामिव श्रोत्रमपाङ्गनिर्गतेनाश्रुस्रोतसा सिञ्चन्तीम्, अतिप्रवृत्तस्य चाश्रुणो निर्वाहप्रणालिकामिव कर्पूरकेतकीकलिकां कर्णे कलयन्तीम्, आयतश्वासविधुतितरलितेन च संतापभयपलायमानेन देहप्रभावितानेनेवांशुकेन विमुच्यमानकुचकलशाम्, आपतत्प्रचलचामरप्रति-

---

**हारेति**-हारमयान् श्वेतत्वविततत्वसाम्यान्मुक्ताप्रलम्बमयानिव । **एवंविधस्येति**-एवंविधस्य तस्य हिमगृहस्यैकदेशे कादम्बरीमपश्यदिति दूरेणान्वयः । अथ कादम्बरीं विशिनष्टि । कुल्या अल्पा कृत्रिमा सरित्तस्या भ्रमिः स्वतो भ्रमणं तद्वद्भ्रमितेन । कृतः परिवेशः परिक्षेपो यस्याः । **हारेति**-मृणालमयैर्बिसनिर्मितैर्हारादिभिर्निगडैरन्दुकैरिव मदनेन संयताम् । चन्दनेन धवले । जलक्षरणसाम्यादाह–चुम्बितामिति । पतङ्गेन सूर्येण । स्वेदिनि स्वेदवति वपुषि । एवं तत्तद्देहभागनिष्ठैर्दैवतैरापि विलुप्यमानं सौभाग्यं यस्याः । उपजनितं दौर्बल्यं दुर्बलता यस्याः । उपगमनश्रमखेदाद्दुर्बलता । आश्यानमीषच्छुष्कं यच्चन्दनं तेन पाण्डुरम् । अवतंस उत्तंसस्तस्य । तदाकृष्टा इत्यर्थः मधुकरास्तैः । अपाङ्गो नयनप्रान्तः । निर्वाहो निर्गमस्तदर्थं प्रणालिका जलमार्गस्ताम् । कर्पूरकेतकी धवलकेतकी तस्याः कलिकाम् । कर्पूरेषूत्पन्ना या केतकी तस्याः कलिकामिति भानु० । कलयन्तीं धारयन्तीम् । आयतो दीर्घो यः श्वासस्तेन या विधुतिः कम्पस्तस्या तरलितेन

---

१ नीहार. २ गृहाचलगताम्, महीतले पतिताम्. ३ भाङ्कि, ४ दृष्टाम्. ५ जलेदेन. ६ अवतंसकुसुम.

बिम्बं च कुचकलशयुगलं प्रियान्तिकगमनौत्सुक्यकृतपक्षामिव करतलेन निरुन्धन्तीं, मुहुर्मुहुर्भुजलतया तुषारशिलाशालभञ्जिकामालिङ्गन्तीं, मुहुः कपोलफलकेन कर्पूरपुत्रिकामाश्लिष्यन्तीं, मुहुश्चरणारविन्देन चन्दनपङ्कप्रतियातनामामृशन्तीं[1], स्तनसंक्रान्तेनात्ममुखेनापि कुतूहलिनेव परिवृत्य विलोक्यमानां, कर्णपूरपल्लवेनापि स्वप्रतिबिम्बपल्लवशायिना सोत्कण्ठेनेव चुम्ब्यमानकपोलफलकां, हारैरपि मुक्तात्मभिर्मदनपरवशैरिव प्रसारितकरैरालिङ्ग्यमानां, मणिदर्पणमुरसि निहितं नोदितव्यमद्येति[2] जीवितस्पर्शमयं[3] शपथं शशिनमिव कारयन्तीं, करिणीमिव संमुखागतप्रमदवनगन्धवारणप्रसारितकरां, प्रस्थितामिवानभीष्टदक्षिणवातमृगागमनां, मदनाभिषेकवेदिकामिव कमलावृतचन्दनधवलपयोधरकलशावष्टब्धपार्श्वाम्, आकाशकमलिनीमिव स्वच्छा-

चञ्चलेन । **प्रियेति**—प्रियस्यान्तिके गमनं तत्र यदौत्सुक्यं तेन शीघ्रगमनार्थं कृतौ पक्षौ येन तत् । चामरप्रतिबिम्बमत्र पक्षस्थानीयम् । तुषारशिला हिमशिला तस्याः शालभञ्जिकां पञ्चालिकाम् । कर्पूरपुत्रिका घनसारनिर्मिता पुत्रिका पुत्तलिका । चन्दनपङ्कस्य प्रतियातनां प्रतिमाम् । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया' इत्यमरः । आमृशन्तीं परामर्शं कुर्वतीम् । **कर्णेति**—स्वप्रतिबिम्बमेव पल्लवस्तत्र शायिना । मुक्ता आत्मा येषां तैर्मुक्तात्मभिः मुक्तास्वरूपैः पक्षे मुक्त आत्मा यैः मदनवशत्वात् । यद्वा मुक्त आत्मा येषां तैर्जीवन्मुक्तैरपि । अनेन तस्याः सौन्दर्यातिशयः सूचितः । प्रसारितकरैः विततपाणिभिः । पक्षे कराः किरणाः । **मणीति**—मणिदर्पण उरसि निहितः स एव वर्तुलत्वतादृशद्युतिमत्वादिसाम्याच्छशी तमिवाद्य त्वया नोदितव्यमुदयवता न भाव्यमिति जीवितस्य यः स्पर्शो दानं स्पर्शनं वा तन्मयं शपथं कारयन्तीम् । 'स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि ।' इति हैमः । उरोनिहितदर्पणमिषेण 'अद्य त्वया नोदयभाजा भाव्यम्' इति कृतप्रार्थनं शशिनं नाहमुदेष्यामीत्यात्महृदयस्पर्शपूर्वकं शपथं कारयन्तीमित्यर्थः । **संमुखेति**—संमुखमागतो यः प्रमदवनस्यान्तःपुरिकोचितोद्यानस्य गन्धस्तद्वारणे निवारणे प्रसारितौ करौ यया । विरहविधुरायास्तस्या दुःखदायित्वात्प्रमदवनगन्धनिवारणं योग्यमेव । पक्षे संमुखागतः प्रकृष्टो मदो यस्य स प्रमदो मदोत्कटो वनगन्धवारणो वनोत्पन्नो गन्धगजस्तं प्रति प्रीत्या प्रसारितः करः शुण्डा यया । अनभीष्टमनभीप्सितं दक्षिणगतो मलयवायुः स एव शीघ्रगामित्वान्मृगस्तस्य, दक्षिणवातो मृगो मृगमदगन्धश्च तयोर्वा, आगमनं यस्याः । विरहिण्या मलयवातादयोऽतिसंतापदा भवन्तीति प्रसिद्धम् । पक्षे अनभी...भसूचकत्वादनभिप्रेतं दक्षिणोपसव्यगामी वातमृगो वातप्रमीनामा मृगविशेषस्तदागमनं यस्याः । 'स्त्रीणां प्रयाणे दक्षिणो मृगोऽपशकुनमिति वसन्तराजादौ प्रसिद्धम्' इति भानु० । **मदनेति**—मदनस्याभिषेकस्तदर्थं वेदिका तामिव । उभयोः साम्यमाह—कमलया लक्ष्म्या शोभयेत्यर्थः वृतौ शोभावन्तौ चन्दनेन

१ आमृशन्तीम्. २ बिनोदितव्यमेतादिति. ३ जीवनस्य समयं, जीवनस्पर्शसमयं, शशिनम्

म्बरतलदृश्यमानमृणालकोमलोरुमूलां, कुसुमचापलेखामिव मदनारोपितगुण-कोटिकान्ततरां, मधुमासदेवतामिव शिशिरहारिणीं, मधुकरीमिव कुसुममार्गणाकुलां, चन्दनविलेपनामङ्गरागिणीं च, बालां मन्मथजननीं च, मृणालिनी-मप्यभ्यर्थिततुषारस्पर्शां च कादम्बरीं व्यलोकयत्।

अथ सा यथादर्शनमागत्यागत्य चन्द्रापीडागमनमावेदयन्तं परिजनमुत्त-रलतारकेण चक्षुषा कथय किं सत्यमागतो दृष्टस्त्वया कियत्यध्वनि क्वासा-विति प्रतिमुखं निशिप्तेनानक्षरं पप्रच्छ। प्रवर्धमानधवलिम्ना चक्षुषा दृष्ट्वा च संमुखमापतन्तं तं दूरादेव वरारोहा नवग्रहा करिणीवोरुस्तम्भविधृता विचेष्टमानाङ्गी, कुसुमशयनपरिमलोपगतैः परवशा मुखरैर्मधुकरकुलैरिवोत्थाप्यमाना, संभ्रमच्युतोत्तरीयका हारकिरणानुरासि कर्तुमिच्छन्ती, मणिकुट्टिमनिहितेन वामकरतलेन हस्तावलम्बनं निजप्रतिमामिव याचमाना, स्रस्त-

---

धवलौ पयोधरौ स्तनौ कलशाविव ताभ्यामवष्टब्धौ पार्श्वौ यस्याः। पक्षे कमलैरावृतौ पिहितौ चन्दनेन धवलं यत्पयो जलं तस्य धरौ पयोधरावेव कलशौ ताभ्यामवष्टब्धौ पार्श्वौ यस्याः। **आकाशेति**–व्याख्यातपूर्वमेतत्। अम्बरं वस्त्रमाकाशश्च। ऊरुमूलं सक्थिमूलं, उरुमूलं बृहन्मूलं, डलयोरलयोश्चाभेदादुडुमूलं वा। **मदनेति**–मदनेन शृङ्गारभावेन आरोपिता या सौन्दर्यादिगुणानां कोटिः प्रकर्षस्तया कान्ततरामतिमनोहराम्। पक्षे मदनेन स्मरेणारोपितो गुणो ज्या ययोस्तादृश्यौ कोटी अटनी ताभ्यां कान्ततराम्। **शिशिरेति**–शिशिरो शीतलो हारोऽस्या विद्यते इति ताम्। यद्वा शिशिरेण शीतोपचारेण हारिणीं रुचिराम्। पक्षे शिशिरर्तोर्हारिणीं निवारकामतिशिशिरं वसन्तावतारात्। कुसुममार्गणेन कामेनाकुलां संतप्ताम्। कुसुमान्येव मार्गणा इति वा तैराकुलाम्। शरीरस्योपरि धारितानां तेषां संतापदत्वात्। पक्षे कुसुमानां मार्गणमन्वेषणं तेनाकुलां तस्मिन्व्यग्राम्। **चन्दनेति**–चन्दनस्य विलेपनमङ्गरागोऽस्या एवंविधामप्यविद्यमानोऽङ्गरागो विलेपनामस्या इति तथोक्ता तामिति विरोधः। परिहारस्त्वनङ्गेन कंदर्पेण कृतरागामित्यर्थात्। बालामज्ञातमदनवृतान्तामपि मन्मथस्य जननीमाविष्कृतमदनामिति विरोधः। परिहारस्तु बालामनूढां कामविकारजनयित्रीं चेत्यर्थात्। **मृणालिनीमिति**–मृणालिन्याः कमलिन्या हि हिमस्पर्शाद्विपत्तिरुपजायते इति तदभ्यर्थनं विरुद्धम्। परिहारपक्षे तापनिवृत्यर्थं मृणालानि विद्यन्ते यस्या इत्यर्थात्। **अथेति**–प्रतिमुखं निक्षिप्तेनोत्तरलतारकेण चक्षुषाऽनक्षरं पप्रच्छ। वर आरोहो नितम्बोऽस्या वरारोहात्यन्तोत्कृष्टा। पक्षे वर आरोह आरोहणमस्याः ऊर्वोस्तम्भः सात्विकभावभेदस्तेन विधृता। पक्षे उरुः पृथुर्यः स्तम्भ आलानस्तम्भस्तत्र विधृता। विचेष्टमानानि तास्ताश्चेष्टाः कुर्वाणान्यङ्गानि यस्याः। परवशास्वतन्त्रा सती। संभ्रमाद्यप्रतया च्युतमुत्तरीयकं प्रावरणं यस्याः। अत एव हारेति

---

१ कुसुमचापले २ ० कान्त. ३ निक्षिप्तनामनाक्षरम. ४ इवाच्छाद्यमाना. ५ उत्तरीयांशुका.

…शाकल्पसंयमनश्रमितेन गलत्स्वेदसलिलेन दक्षिणकरेण समभ्युक्ष्येवात्मानमर्पयन्ती, वलितत्रिकताम्यत्त्रिवलीतरंगितरोमराजितया निष्पीड्यमानेव सर्वरसाननङ्गेन, अन्तःप्रविष्टललाटिकाचन्दनरसैमिश्रमिव चक्षुषा क्षरन्ती शिशिरमानन्दजलम्, आनन्दवारिबिन्दुवेणिकया चलितावतंसधूलिधूसरं प्रियप्रतिमाप्रवेशलोभेनेव कपोलफलकं प्रक्षालयन्ती, ललाटिकाचन्दनभरेणेव किंचिदधोमुखी तत्क्षणमपाङ्गभागपुञ्जिततारकया तन्मुखलग्नयेव दीर्घया दृष्ट्याकृष्यमाणा कुसुमशयनादुत्तस्थौ । चन्द्रापीडस्तु समुपसृत्य पूर्ववदेव तां महाश्वेताप्रणामपुरःसरं दर्शितविनयः प्रणनाम । कृतप्रतिप्रणामायां च तस्यां पुनस्तस्मिन्नेव कुसुमशयने समुपविष्टायां प्रतीहार्या समुपनीतां जाम्बूनदमयीमासन्दिकां रोचिष्णुरत्नप्रत्युप्तपादां पादेनैवोत्सार्य क्षितावेवोपाविशत् । अथ केयूरको देवि देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनीत्यभिधाय पत्रलेखामदर्शयत् । अथ कादम्बरी दृष्ट्वा तामहो मानुषीषु पक्षपातः प्रजापतेरिति चिन्तयांबभूव । कृतप्रणामां च तां सादरमेह्येहीत्यभिधायात्मनः समीपे सकुतूहलं परिजनेन दृश्यमानां पृष्ठतः समुपावेशयत् । दर्शनादेवोपारूढप्रीत्यतिशया च मुहुर्मुहुरेनां सोपग्रहं करकिसलयेन पस्पर्श ।

चन्द्रापीडस्तु सपदि कृतसकलागमनोचितोपचारस्तदवस्थां चित्ररथतनयामालोक्याचिन्तयत् । अतिदुर्विदग्धं हि मे हृदयमद्यापि न श्रद्दधाति । भवतु पृच्छामि तावदेनां निपुणालापेनेति । प्रकाशमब्रवीत् । देवि ! जानामि

---

यद्यत्किंचिद्दीयते तत्तत्करेण प्रोक्षितमेव दीयत इत्याह । **समभ्युक्ष्येति**—वलितं यत्त्रिकं पृष्ठवंशाधरास्थि । त्रयाणां संघस्त्रिकम् । 'संख्यायाः संज्ञासंघ–' इति कन् । तेन ताम्यन्ती या त्रिवली तया तरङ्गिता कम्पिता या रोमराजिस्तस्या भावस्तत्ता तया । अन्तःप्रविष्टो यो ललाटिकाचन्दनरसो ललाटचर्चाचन्दनद्रवस्तेन मिश्रमिव । ० बिन्दुवेणिका बिन्दुप्रवाहः । 'वेणी सेतुप्रवाहयोः' इति हैमः । अवतंसधूलिरवतंसकुसुमपरागः । महाश्वेतायै प्रणामः पुरःसरः यस्मिन्कर्मणि तद्यथा तथा । जाम्बूनदमयीं सुवर्णमयीम् । जम्बूरसस्य नद्यां भवं जाम्बूनदं । तत्र भवः इत्यण् । आसन्दिकामासनविशेषः । रोचिष्णूनि रोचन्ते तच्छीलानि विभ्राजमानानि । 'अलंकृञ्–' इतीष्णुच् । रत्नानि तैः प्रत्युप्ताः खचिताः पादा यस्यास्ताम् । सोपग्रहं सानुग्रहं सस्नेहं वा । अतिदुर्विदग्धमतिमन्दम् । निपुणो विदग्धः । श्लेषादियुक्त इत्यर्थः । आलापस्तेन निपुणालापेन भङ्गिभाषितेन । **देवीति**—कां किंस्वरूपामरतिमनुरञ्जकपदार्थाभावं निमित्तीकृत्याविचलसंतापतन्त्रः स्थिरसंतापनिबन्धनोयं व्याधिरिति । गूढार्थस्तु कामरतिं कंदर्पजनितां रतिमनुरागं

---

१ चरितत्रिकताम्र. २. रसम्. ३ पुञ्जित. ४ सकुतूहलपरिजनदृश्य०. ५ एनाम् इति निपुणालापेनातिप्रकाशम्.

कामरतिं निमित्तीकृत्य प्रवृत्तोयमविरलसंतापतन्त्रो व्याधिः । सुतनु सत्यं न तथा त्वामेष व्यथयति यथास्मान् । इच्छामि देहदानेनापि स्वस्थामत्रभवतीं कर्तुम् । उत्कम्पिनीमनुकम्पमानस्य कुसुमेषुपीडया पतितामवेक्षमाणस्य पततीव मे हृदयम् । अनङ्गदे तनूभूते ते भुजलते । गाढसंतापतया च दृष्ट्या वहसि स्थलकमलिनीव रक्ततामरसाम् । दुःखितायां च त्वयि परिजनेपि चानवरतकृताश्रुबिन्दुपातेन वर्तते मुक्ताभरणता । गृहाण स्वयं वरार्हाणि मङ्गलप्रसाधनानि । सकुसुमशिलीमुखा हि शोभते नवा लतेति । अथ कादम्बरी बालतया स्वभावमुग्धापि कन्दर्पेणोपदिष्टयेव प्रज्ञया तमशेषमस्याव्यक्तव्याहारसूचितमर्थं मनसा जग्राह । मनोरथानां तु तावतीं भूमिमसंभावयन्ती शालीनतां चावलम्बमाना तूष्णीमेवासीत् । केवलमुत्पादितान्यव्यप-

---

व्याधिरि० । गूढार्थस्तु कामरतिं कंदर्पजनितां रतिमनुरागं निमित्तीकृत्येत्या० । सत्यम्–सत्यमेतन्नोपचारिकं वच इत्यर्थः । एष व्याधिः । पक्षे व्याधिर्वा कामो वा । उत्कम्पिनीमनुकम्पमानस्य दया कुर्वतः कुसुमेषु पुष्पेषु पीडया पतितामित्या० । गूढार्थपक्षे उत्कम्पिनीं त्वामनुलक्ष्यीकृत्य कम्पमानस्य यतः कुसुमेषुः कामस्तस्य पीडया पतितामि० । अनङ्गदे बाहुभूषणरहिते ते तव भुजलते इ० । पक्षे हे अनङ्गः कामस्तं ददातीति तस्याः सम्बुद्धिः । ते भुजलते तनूभूते कार्श्यं गते । अतो झटिति मनोगतं प्रकटय्य मम मनोरथं पूरय येन त्वमपि सुस्था भविष्यसीति गूढाभिसन्धिः । यद्वा अनङ्गं कामपीडां दाति खण्डयतीत्यनङ्गदा कामार्तिहारिणी तस्याः सम्बोधनम् । यद्वा अनङ्गदे कामोत्पादके भुजलते इति योज्यम् । कमलिनीवारसां कठोरां रक्ततामरुणतां वहसि । पक्षे अविद्यमानो रसो यस्यास्तादृशीं रक्ततामनुरक्तताम् । दुःखितायामिति–त्वयि दुःखितायां तव परिजनेपि मुक्तानामाभरणानि तेषां भावस्तत्ता अनवरताश्रुबिन्दुपातेन वर्तते । सोप्यनवरतरोदनात् मौक्तिकाभरणस्थाने मुक्तासदृशाश्रुबिन्दूनेव धारयतीत्यर्थः । यद्वा दुःखितायां त्वयि मुक्तान्याभरणानि यया तस्या भावस्तत्ता वर्तते । तव परिजन इत्यादि पूर्ववत् । अतः गृहाणेति–स्वयं वराणि श्रेष्ठान्यर्हाणि योग्यानि च यद्वा वरा श्रेष्ठा स्त्री तदर्हाणि मङ्गलप्रसाधनानि शुभभूषणानि गृहाण परिधेहि । पक्षे स्वयंवरार्हाणि स्वयंवरयोग्यानि मङ्गलानि मङ्गलकराणि प्रसाधनानि । कुसुमेति–कुसुमानि पुष्पाणि शिलीमुखा भ्रमरास्तैः सहिता नवा लता शोभते हि । पक्षे बवयोरभेदात् । नवाबालेत्येक पदम् । नास्ति बालता यस्याः सा युवतिरित्यर्थः । न बालता यौवनमिति वा । कुसुमानि शिलीमुखा बाणा यस्य स कामस्तेन सहिता शोभते । स्वभावमुग्धा स्वाभावेन मुग्धा श्लिष्टार्थग्रहणाक्षमा । अव्यक्तः श्लिष्टत्वादस्फुटार्थो यो व्याहार आलपितं तेन सूचितम् । तावतीं संगमलक्षणाम् शालीनतां सलज्जताम् ।

---

१ अविरलसंतापतीव्रः. २ अनङ्ग–देव–तनुभूते. ३ परिजनोपि. ४ कुसुमशिलीमुखान्तर्हिता शोभते यथा लता.

देशा तत्क्षणं तमाननामोदमधुकरपटलान्धकारितं द्रष्टुमिव स्मितालोकमकरोत् । ततो मदलेखा प्रत्यवादीत् । कुमार किं कथयामि । दारुणोयमकथनीयः खलु संतापः । अपि च कुमारभावोपेतायाः किमिवास्या यन्न संतापाय । तथा हि । मृणालिन्याः शिशिरकिसलयमपि हुताशनायते । ज्योत्स्नाप्यातपायते । ननु किसलयतालवृन्तवातैर्मनसि जायमानं किं न पश्यसि खेदम् । धीरत्वमेव प्राणसंधारणहेतुरस्या इति । कादम्बरी तु हृदयेन तमेव मदलेखालापमस्य प्रत्युत्तरीचकार । चन्द्रापीडोप्युभयथाघटमानार्थतया संदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिर्महान्तं कालं स्थित्वा तथैव महता यत्नेन मोचयित्वात्मानं स्कन्धावारगमनाय कादम्बरीभवनान्निर्ययौ ।

निर्गतं च तुरङ्गममारुरुक्षन्तं पश्चादागत्य केयूरकोभिहितवान् । देव मदलेखा विज्ञापयति । देवी कादम्बरी प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्यमानामिच्छति पश्चाद्यास्यतीति श्रुत्वा देवः प्रमाणमिति । आकर्ण्य चन्द्रापीडः केयूरक धन्या स्पृहणीया च पत्रलेखा यामेवमनुबध्नाति दुर्लभो देवीप्रसादः प्रवेश्यतामित्यभिधाय पुनः स्कन्धावारमेवाजगाम । प्रविशन्नेव पितुः समीपादागतमभिज्ञाततरमालेखहारकमद्राक्षीत् । धृततुरङ्गमश्च प्रीतिविस्फारितेन चक्षुषा दूरादेवापृच्छत् । अङ्ग कच्चित्कुशली तातः सह सर्वेण

**दारुणोति**—अकथनीयः कथनानर्हः कामजनितत्वात्कथयितुमशक्यश्च । **अपि चेति**—कुमारभावो बाल्यता तस्य भावो लक्षणया सौकुमार्यं तेनोपेतायाः सुकुमाराया इत्यर्थः । पक्षे संतापदत्वात्कुत्सितो यो मारो मदनस्तस्य भावो रत्याख्यस्तेनोपेतायाः । यद्वा कुत्सितो मारो यस्मात्तादृशे त्वयि भावो रतिविशेषस्तेनोपेतायाः । कुमार भावोपेताया इति वा पदच्छेदः । 'सुकुमारभावोपेतायाः' इति च पाठः । सुकुमारभावो सौकुमार्यं तेनोपेतायाः । पक्षे 'सु' इति पदस्य चुत्या पूर्वोक्त एवार्थः । अक्षरच्युतकोदाहरणम् । शिशिरं च तत्किसलयं च । प्रीत्युपचयः स्नेहवृद्धिस्तेन चतुराभिर्विदग्धाभिः प्रीत्युपचयाद्वाग्वैदग्ध्यस्यावकाशः । यद्वा 'प्रीत्युपचयो रसपुष्टिस्तत्र चतुराभिः' इति भानु० । **देवीति**—देवी कादम्बरी इच्छति—पत्रलेखा निवृत्ता भूत्वा कंचित्कालं मया सह तिष्ठतु । पश्चादुज्जयिनीं यास्यति—इत्येतत् श्रुत्वा देवः प्रमाणं कर्तव्याकर्तव्यनिश्चयो देवाधीन इत्यर्थः । प्रवेश्यतां कादम्बरीभवनं पत्रलेखेति शेषः । अभिज्ञाततरं सुपरिचितम् । 'अङ्ग' इति सम्बोधनार्थमव्ययम् । 'अथ सम्बोधनार्थकाः । स्युः पाट् प्याडङ्ग हे है भोः' इत्यमरः । कच्चित् प्रश्ने । राजान्तःपुरैः सखामरन्तःपुररक्षायः

१ तनुकिसलय. २ मधुरालापगर्भाभिः कथाभिः ३ अभिजाततरम्.

परिजनेनाम्बा च सर्वान्तःपुरैरिति । अथासावुपसृत्य प्रणामानन्तरं देव यथाज्ञापयसीत्यभिधाय लेखद्वितयमर्पयांबभूव । युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ ।

स्वस्त्युज्जयिनीतः सकलराजन्यशिखण्डशेखरीकृतचरणारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वसंपदामायतनं चन्द्रापीडमुदञ्चच्चारुचूडामणिमरीचिचक्रचुम्बिन्युत्तमाङ्गे चुम्बन्नन्दयति । कुशलिन्यः प्रजाः । किंतु कियानपि कालो भवतोऽदृष्टस्य[1] गतः । बलवदुत्कण्ठितं नो हृदयम्[2] । देवी च सहान्तःपुरैर्म्लानिमुपनीता । अतो लेखवाचनविरतिरेव प्रयाणकालतां[3] नेतव्येति[4] । शुकनासप्रेषिते द्वितीयेप्यमुमेवार्थं लिखितमवाचयत् । अस्मिन्नेवावसरे समुपसृत्य वैशम्पायनोपि लेखद्वितयमपरमात्मीयमस्मादभिन्नार्थमेवादर्शयत् । अथ यथाज्ञापयति तात इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहमवादयत्[5] । समीपे स्थितं च महताश्वीयेन[6] परिवृतं महाबलाधिकृतं बलाहकपुत्रं मेघनादनामानमादिदेश । भवता पत्रलेखया सहागन्तव्यम् । नियतं च केयूरकस्तामादायैतावतीं भूमिमागमिष्यतीति तन्मुखेन विज्ञाप्या प्रणम्य देवी कादम्बरी । नन्वियं सा त्रिभुवननिन्दनीया निरनुरोधा निष्परिचया दुर्ग्रहा प्रकृतिर्मर्त्यानां येषामकाण्डविसंवादिन्यः प्रीतयो न गणयन्ति निष्कारणवत्सलताम् । एवं गच्छता मयात्मनो नीतः स्नेहः कपटकूटजालिकतां, प्रापिता भक्तिरलीककाकुकरणकुशलतां पातितमुपचा-

---

सेह यथा आज्ञापयसि पृच्छसि तत्सर्वं तथा । सर्वत्र कुशलं वर्तते इत्यर्थः । **स्वस्तीति**—सकलराजन्यानां सकलनृपाणां शिखण्डैर्मौलिभिः शेखरीकृतं चरणारविन्दं यस्य । परममाहेश्वरो महाशैवः । आयतनं स्थानम् । उदञ्चदुसलच्चारु चूडामणेर्मरीचिचक्रं किरणचक्रवालं तच्चुम्बिन्युत्तमाङ्गे शिरसि । नन्दयत्यभिनन्द्य लिखतीत्यर्थः । लेखवाचनविरतिर्वाचनावसानकाल इत्यर्थः । प्रयाणपटहं प्रयाणशंसिनं पटहम् । आश्वीयेनाश्वसैन्येन । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः । महद्यद्बलं तत्राधिकृतं नियुक्तम् । तन्मुखेन केयूरकमुखेन । ननु ध्रुवम् । निरनुरोधा निर्गतोनुरोधो यस्याः । निरादरेत्यर्थः । निष्परिचया परिचयमनपेक्षमाणा । दुःखेन ग्रहीतुं ज्ञातुं शक्या । दुष्टो ग्रह आग्रहो हठ इति यावद्यस्या इति वा । अकाण्डेऽकाल एव विसंवादिन्यो व्यभिचारिण्यः । न गणयन्ति नापेक्षन्ते । **एवमिति**—स्नेहः प्रीतिः कपटमेवकूटजालिका तस्या भावस्तत्तां नीतः । स्नेहं दर्शयता मया केवलं । मिथ्याप्रपञ्चं वाग्जा-

---

१ भवतो दृष्टस्य, भवतो गतस्य. २ देवीसमेत नः ३ कारणताम्. ४ कल्याणिना नेतव्या. ५ अवादयत्. ५ महता श्वेताश्वीयेन.

रमात्रमधुरं धूर्ततायामात्मार्पणं, प्रकटितं वाङ्मनसयोभिन्नार्थत्वम् । आस्तां तावदात्मा । अस्थानाहितप्रसादा दिव्ययोग्या देव्यपि वक्तव्यतां नीता । जनयन्ति हि पश्चाद्वैलक्ष्यमभूमिपातिता व्यर्थाः प्रसादामृतवृष्टयो महताम् । न खलु तथा देवीं प्रति प्रबललज्जातिभारमन्थरं मे हृदयं यथा महाश्वेतां प्रति । नियतमेनामलीकाध्यारोपणवर्णितास्मद्गुणसंभारामस्थानपक्षपातिनीमसकृदुपालप्स्यते देवी । तत्किं करोमि । गरीयसी गुरोराज्ञा प्रभवति देहमात्रकस्य । हृदयेन हेमकूटनिवासव्यसनिना लिखितं जन्मान्तरसहस्रस्य दास्यपत्रं देव्याः[1] । न दत्तमस्याटविकस्य गौल्मिकेनेव देवीप्रसादेन गन्तुम्[2] । सर्वथा गतोऽस्मि पितुरादेशादुज्जयिनीम् । प्रसंगतो[3] जनकथाकीर्तनेषु स्मर्तव्यः खलु चन्द्रापीडचण्डालः । मा चैवं मंस्था यथा जीवन्पुनर्देवीचरणारविन्दवन्दनानन्दमननुभूय स्थास्यति चन्द्रापीड इति । महाश्वेतायाश्च सप्रदक्षिणं शिरसा पादौ वन्दनीयौ । मदलेखायाश्च कथनीयः प्रणामपूर्वमाशिथिलः कण्ठग्रहः ।

---

लमेव विस्तीर्णं न तु परमार्थतः स्नेह आविष्कृत इत्यर्थः । भक्तिरासक्तिः । अलीका मिथ्या या काकुर्वक्रोक्तिस्तस्याः करणे कुशलतां चतुरताम् । उपचारश्चाटूक्तिस्तेनैव मधुरं न तु स्वतः । धूर्ततायां प्रतारणाकुशलतायाम् । वाक् च मनश्च वाङ्मनसे तयोः । 'अचतुर-' इत्यच्प्रत्ययान्तो निपातः । आत्मा मत्सम्बन्धिनी कथेत्यर्थः । अस्थानेऽपात्रे मयीत्यर्थ आहितः कृतः प्रसादो यया । तादृशी दिव्यजनानां योग्या देवी वक्तव्यतां निन्दनीयतां नीता । दूरदेशादागतेनाचिरपरिचितेन चन्द्रापीडेन कथमकस्मात्सख्यं गतवतीति लोकानां वाच्यतां नीतेत्यर्थः । हि ध्रुवमभूमिपातिता अस्थान आहिता अत एव व्यर्थाः । प्रसाद एवामृतं तत्पूर्णाः । सुस्निग्धा इत्यर्थः । महतां माहात्म्यवतां दृष्टयः पश्चाद्वैलक्ष्यं व्रीडां जनयन्ति । प्रबला गुर्वी या लज्जा तस्या अति भारेण मन्थरं जडम् । अलीकाध्यारोपणं मिथ्यारोपस्तेन वर्णितोऽस्मद्गुणसंभारो यया ताम् । देह एव देहमात्रं तस्य । कुत्सितार्थे कन् । हेमकूटे यो निवासस्तत्र व्यसनिनाग्रहवता । जन्मान्तरसहस्रं यावद्देव्या दासत्वमङ्गीकृतमिति लेखः कृत इव । अस्य हृदयस्य । अटव्यां भव आटविकस्तस्य वनेचरस्य गौल्मिकेन गुल्मो घट्टभेदस्तद्रक्षकेणेव । मम हृदयं देवीप्रसादेनात्र बलाद्ध्रियते । कीलितमिव तिष्ठतीत्यर्थः । यद्वा गौल्मिको गुल्मावृतप्रदेशस्तेनाटविकस्यारण्यसंचारिण इव । स यथा गुल्मावृतत्वात्पदमपि चलितुं न समर्थस्तथा मम हृदयं त्वयि बद्धपदत्वान्न गन्तुं शक्नोतीत्यर्थः । देवीति-जीवति चेत्सर्वथा देवीचरणवन्दनजमानन्दमनुभविष्यत्येवेत्यर्थः । अशिथिलो दृढः ।

---

१ हृदयः. २ देव्या न दत्तमस्या. । दैविकगौल्मिकेनेव देवीप्रसादेन गन्तुमि० [ भानु० ] ३ असंगतजन, असज्जन.

गाढमालिङ्गनीया च तमालिका। अस्मद्वचनादशेषः प्रष्टव्यः कुशलं कादम्बरीपरिजनः। रचिताञ्जलिना च भगवानामन्त्रणीयो हेमकूट इति।

एवमादिश्य तं सुहृदादिसाधनमक्लेशयता शनैः शनैर्गन्तव्यमित्युक्त्वा वैशम्पायनं स्कन्धावारभरे न्ययुङ्क्त। स्वयमपि च तथारूढ एव गमनहेलाहर्षहेषारवकम्पितकैलासेन खुरताण्डवखण्डितभुवा कान्तकुन्तलतावनवाहिना तरुणतुरगप्रायेणाश्वसैन्येनानुगम्यमानस्तमेव लेखहारकं पर्याणलग्नमभिनवकादम्बरीवियोगशून्येनापि हृदयेनोज्जायिनीमार्गं पृच्छन्प्रतस्थे। क्रमेण चातिप्रवृद्धप्रकाण्डपादपप्रायया मालिनीलतामण्डपैर्मण्डलिततरुखण्डया गजपतिपातितपादपरिहारवक्रीकृतमार्गया जनजनिततृणपर्णकाष्ठकोटिकूटप्रकटितवीरपुरुषघातस्थानया महापादपमूलोत्कीर्णकान्तारदुर्गया तृषितपथिकखण्डिततदलोज्झितामलकीफलनिकरया विकसितकरञ्जमञ्जरीरजोविच्छुरिततटैस्तट-

एवमिति—सुहृदादीनामस्मत्पक्षीयनृपादीनां साधनं सेनाम्। सुहृदादयो यस्मिंस्तादृशं साधनमिति वा। अक्लेशयता जवेन गमनादिनाऽपीडयता भवतेति शेषः। स्कन्धावारभरे सैन्याधिकारे। गमनेति—गमनरूपा हेला विलासस्तया यो हर्षस्तेन कृतो यो हेषारवस्तेन कम्पितः कैलासो येन। खुरताण्डवेन खुराणामुद्धतनृत्येन। तदाघातैरिति यावत्। खण्डिता क्षता भूर्येन। कान्ता मनोरमा ये कुन्ता भल्लास्त एव दीर्घत्वसाम्याल्लतास्तासां वनं तद्वाहिना। पर्याणलग्नं पल्ययने लग्नं वाहनान्तरेणातिसंनिकृष्टम्। क्रमेणेति—स चन्द्रापीडः क्रमेण शून्यया निर्मानुषयाटव्या दिवसं गत्वा परिणतेऽस्ताभिमुखे रविबिम्बे बिम्बस्य सन्ध्यारुणस्य योऽरुणातपो रक्तालोकस्तस्य विसरो यस्मिंस्तादृशे वासरे सति चिरप्ररूढस्य रक्तचन्दनतरोरुपरि महान्तं रक्तध्वजं दूरत एव ददर्शेत्यन्वयः। अथाटव्या विशेषणानि—अतिप्रवृद्धाः प्रकाण्डाः स्कन्धा येषां तादृशाः पादपाः प्रायो बाहुल्येन यस्यां तया। ॰मण्डलितानि परिगतानि। जनेति—वन्यपश्वादिकृतवीरपुरुषवधस्थाने पान्थानां तत्सूचनार्थं पाषाणादिभिः क्रियमाणः स्तूपाकारो राशिः कूट इत्युच्यते। जनैर्जनितास्तृणपर्णकाष्ठानां कोट्या संख्याविशेषेण काष्ठाग्रैर्वा येकूटास्तैः प्रकटितानि वीरपुरुषाणां घातस्थानानि यस्याम्। महापादपमूलेषूत्कीर्णा लिखिता कान्तारदुर्गा तन्मूर्तिरिति यावत्। यस्यां तया। तृषितैः पथिकैः पान्थैः खण्डितानि दलानि त्वक्शकलानि येषां तानि पश्चादुज्झितान्यामलकीफलानि तेषां निकरो यस्याम्। पुनश्च जरन्तो जीर्णा ये कान्तारकूपास्तैः कृत्वाऽसुलभं सलिलं यस्यां तस्या भावस्तत्ता तया। अनभिलषित उद्देशः प्रदेशो यस्यास्तया। अतः कान्तारकूपान्विशेषयन्नाह—विकसिता ये करञ्जा नक्तमालास्तेषां मञ्जरीणां रजसा विच्छुरितानि व्या-

१ खुरवा खुरवारि. २ भूमण्डलेन. ३ पथया. ४ कपिकच्छुरितमञ्जरी.

तरुबद्धैः पटच्चरकर्पटध्वजाचिह्नैः इष्टकास्थितशुष्कपल्लवविष्टरानुमितपथिकविश्रामैर्वि-श्रान्तकार्पटिकप्रस्फोटितचरणधूलिधूसरकिसलयलाञ्छितोपकण्ठैः पत्रसंकरासुरभी-कृताशिशिरपङ्किलविवर्णास्वादुजलैर्व्रततिग्रन्थिग्रथितपर्णपुटतृणपूलीचिह्नानुमेयैर्जर-त्कान्तारकूपैरसुलभसलिलतयानभिलषितोद्देशाया मधुबिन्दुस्यन्दिसिन्दुवारवनराजिर-जोधूसरिततीराभिश्च कुञ्जकलताजालकैर्जटिलीकृतसैकताभिरध्वगोत्खातवालुकाकूपु-कोपलभ्यमानकलुषस्वल्पसलिलाभिः शुष्कगिरिनदिकाभिर्विषमीकृतान्तरालया कुक्-कुटकुलकौलेयकरटितानुमीयमानगुल्मगहनग्रामटिकया शून्यया दिवसमटव्या गत्वा परिणते रविबिम्बे बिम्बारुणातपविसरे वासरे निःशाखीकृतकदम्बशाल्मलीपलाश-बहुलैः शिखरशेषैकपल्लवविडम्बितातपत्रैः पादपैरूर्ध्वस्थितप्ररोहस्थूलस्थाणुमूलग्र-न्थिजटिलैश्च हरितालकपिलपक्ववेणुविटपिपटलरचितवृतिभिर्मृगभयकृततृणपुरुषकै-

मानि धूसरितानि वा तटानि येषां तैः। तटतरुषु बद्धाः पटच्चराणि जीर्णवस्त्राणि कर्प-टाश्चेलखण्डाश्च त एव ध्वजास्ते चिह्नं लिङ्गं येषां तैः। पटच्चरैश्चैरैरिति भानु०। तथा सति पटच्चरबद्ध इति स्यात्। इष्टकासु स्थिता ये शुष्कपल्लवानां विष्टराः संस्तरास्तैर-नुमिता विभाविताः पथिकजनानां विश्रामा येषु। विश्रान्ता ये कार्पटिका रक्ताम्बरा यात्रिका वा तैः प्रस्फोटिता विधूता या चरणधूलिस्तया धूसराणि मलिनानि किसल-यानि तैर्लाञ्छित उपकण्ठस्तीरप्रान्तभागो येषां तैः। पत्राणां संकरेण मिश्रणेनासुरभी-कृतानि कषायितान्यत एवाशिशिराणि कोष्णानि पङ्किलानि कलुषाणि विवर्णान्यसुवर्णा-न्यस्वादूनि कटूनि च जलानि येषां तैः। व्रततिग्रन्थिभिः। चतुर्षु प्रान्तेषु ग्रन्थीन्दत्वेत्यर्थः। ग्रथिता या पर्णपुटयुक्तास्तृणपूल्यस्ता एव चिह्नानि तैरनुमातुं योग्यैः। पथिका हि रज्जु-पात्राद्यभावे तृणनिर्मितविस्तृतपुलीनामुपरि पर्णपुटानि निधाय लता रज्जूकृत्य तत्साहाय्येन जलमुद्धरन्तीति प्रसिद्धम्। पुनश्च शुष्कगिरिनदिकाभिर्विषमीकृतमुन्नतानतीकृतमन्तरालं म-ध्यदेशो यस्यास्तया। नदिका विशेषयति। **मधुवति**-कुञ्जका निकुञ्जस्तेषां लताजालै-कैर्जटिलीकृतानि व्याप्तानि सैकतानि पुलिनानि यासां ताभिः। अध्वगाः पान्थास्तैरुत्खाता वालुकासु कूपका इ०। कुक्कुटकुलानि कृकवाकुसमूहाः कौलेयकाः कुक्कुरास्तेषां रटितेना-रावेणानुमीयमाना संभाव्यमानाः गुल्मगहने लतावृक्षपिहितस्थाने ग्रामटिकाः क्षुद्रग्रामाः। स्वल्पार्थे टी ततः स्वार्थे कः यस्याम्। बिम्बस्यारुणातपस्य विसरो यस्मिन्। कीदृशे प्रदेश इत्याह। **निःशाखीति**-निःशाखीकृताः। अरण्यावासिभिरिति शेषः। कदम्बादयो बहुला येषु। एवंविधैः पादपैः। ऊर्ध्वस्थिताः प्ररोहा नवाङ्कुरा येषां तादृशा ये स्थूलाः स्थाणवः स्तम्बास्तेषां मूलग्रन्थिभिः शिफाभिर्जटिलानि व्याप्तानि तैः। हरितालं धातुभेदस्त-

१ जरत्कर्पट. स्फोटित. २ इष्टकाचित. ३ प्रस्फुटित स्फोटित. ४ तृणोलुपपुलाक. ५ कुब्जक, ६ ग्रामयाऽसन्ध्या. ८ ऊर्ध्वीकृतप्ररोहस्थूलस्थितस्थाणु ०धूलि अर्धोतदधूमप्ररोहन्मूलस्थूलस्थाणुग्रन्थि० ९ विटप नपि-दल, विटपरचित.

र्विपाकपाण्डुभिः फलिनैः प्रियङ्गुप्रायैरटवीक्षेत्रैर्विरलीकृतवनप्रदेशे चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धं सरसपिशितपिण्डनिभैरलक्तकैरभिनवशोणितारुणेन रक्तचन्दनरसेन चार्द्रै जिह्वालतालोहिनीभी रक्तपताकाभिः केशकलापकान्तिना च कृष्णचामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावयवैरुपरचितदण्डमण्डनं परिणतवराटकघटितबुद्बुदार्धचन्द्रखण्डखचितं सुतमहिषरक्षणावतीर्णदिनकरावतारितशशिनेव विराजितशिखरं, दोलायितशृङ्गसङ्गिलोहशृङ्खलावलम्बमानघर्घररवघोरघण्टया च घटितकेसरिसटारुचिरचामरया काञ्चनत्रिशूलिकयालिखितनभःस्थलमितस्ततः पथिकपुरुषोपहारमार्गमिवालोकयन्तं महान्तं रक्तध्वजं दूरत एव ददर्श।

तदभिमुखश्च किंचिदध्वानं गत्वा केतकीसूचिखण्डपाण्डुरेण वनद्विरदद-न्तकपाटेन परिवृतां, लोहतोरणेन च रक्तचामरावलिपरिकरां कालायसदर्प-

पक्ववेणुविटपिनो वंशवृक्षास्तेषां पटलैः समूहैर्विरचिता वृत्तिरावरणं येषां तैः। मृगभयात्कृतास्तृणपुरुषास्तृणनिर्मितपुरुषाकृतयो येषु। विपाकेन परिणामेन पाण्डुभिः पिशङ्गैः। एवं किरातेऽपि वर्णनम्–'अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः' इत्या०। फलिनैः फलवद्भिः। 'फलबर्हाभ्यामिनच्' इति मतुवर्थे इनच्प्रत्ययः। प्रियङ्गुलताः प्रायो बाहुल्येन येषु तैः। अटवीक्षेत्रैर्वनकेदारैश्च। विरलीकृतः संकोचं प्रापितो यो वनप्रदेशस्तस्मिन्। अथ रक्तध्वजविशेषणानि। **सरसेति**–सरसं यत्पिशितं मांसं तस्य पिण्डसदृशैः। अलक्तकैर्यावकपङ्कैः। जिह्वा एव लता तद्वल्लोहिनीभी रक्ताभिः। कृष्णचामरमेवावचूलमधोलम्बिकलापं यस्य तेन। 'अस्योच्चूडावचूडाख्यावूर्ध्वाधोमुखचूडकौ' इति ध्वजाङ्गेषु हलायुधः। प्रत्यग्रविशसितानामभिनवहतानाम्। **परिणतेति**–परिणताः परिपक्वा वराटकाः पद्मबीजानि तैः तैर्घटितो बुद्बुदो बुद्बुदाकारपुञ्जार्धचन्द्रखण्डश्च ताभ्यां खचितं व्याप्तम्। परिणद्धेति पाठे परिणद्धाः परितो बद्धा ये वराटकाः कपर्दकास्तैः इत्यादि। शिखरस्थकृष्णरक्तश्वेतादिखण्डयोगादुत्प्रेक्षते। **सुतेति**–सुतस्य निजपुत्रस्य यमस्य महिषरक्षणार्थमवतीर्णेनाधः स्वयमागतेन दिनकरेणावतारितो यः शशी तेनेव। दोलायितेतस्ततश्चलनां प्राप्ता या शृङ्गसङ्गिन्यग्रासक्ता लोहशृङ्खला तत्रावलम्बमाना घर्घररवा घण्टा यस्यां सा तया। घटितं लिखितमत्युच्चतया स्पृष्टं गगनं येन तम्। पथिकपुरुषाणामध्वनीनजनानामुपहारमार्गं बलिपन्थानामिव। **तदभिमुखश्चेति**–तदभिमुखश्च किंचिदध्वानं गत्वा चण्डिकामपश्यदिति विदूरस्थेन सन्दर्भः। अथ चण्डिकां विशेषयन्नाह। **केतकीति**–केतक्याः सूचीनां शिखानां खण्डः समूहस्तद्वत्पाण्डुरेण। वनद्विरददन्तनिर्मितकपाटेनावरेण परिवृताम्। लोहनिर्मितेन तोरणेन सनाथीकृतद्वारदेशाम्। कथंभूतेन। रक्तचामरा-

१ फलितैः. २ आर्द्रजिह्वाः ३ हाटकघटितबुद्बुदपुटार्धचन्द्र.

णमण्डलमालां शबरमुखमालामिव कपिलकेशभीषणां बिभ्राणेन सनाथीकृतद्वारदेशाम् । अभिमुखप्रतिष्ठितेन च विनिहितैरक्तचन्दनहस्तकतया रुधिरारुणयमकरतलास्फालितेनेव शोणितलवलोभलोलशिवालिह्यमानलोहितलोचनेन लोहमहिषेणाध्यासिताञ्जनशिलावेदिकां, क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः क्वचिदगस्तिकुड्मलैः केसरिणामिव करजैः क्वचित्किंशुककुसुमकुड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकराम्, अन्यत्राङ्कुरितामिव कुटिलहरिणविषाणकोटिकूटैः पल्लवितामिव सरसजिह्वाच्छेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्डमण्डलैरुपहारहिंसां दर्शयन्तीं, शाखान्तरालनिरन्तरनिलीनरक्तकुक्कुटकुलैश्च भयादकालदर्शितकुसुमस्तबकैरिव रक्ताशोकविटपैर्विभूषिताङ्गणां, बलिरुधिरपानतृष्णया समागतैश्च वेतालैरिव तालैर्दीयमानफलमुण्डोपहारां, शङ्काज्वरकम्पितैरिव कदलिकावनैर्भयोत्कण्टकितैरिव श्रीफलतरुखण्डैस्त्रासोर्ध्वकेशैरिव खर्जूरवनैः समन्ताद्गहनीकृतां, विदलितवनकरिकुम्भविगलितरक्तमुक्ताफलानि नवरुधिरारुणबलिसिक्थलुब्धमुग्धकृकवाकुग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केसरिकिशोरकैरशून्योद्देशां, प्रभूतरुधिरदर्शनोद्भूतमू-

णामावलिः पंक्तिः सैव परिकरो यस्या एवंविधाम् । कालं च तदयश्च कालायसं लोहम् । अनोश्मायः सरसां जातिसंज्ञयोः इति टच् । तस्य दर्पणमण्डलमालां बिभ्राणेन । अयोदर्पणस्य श्यामत्वाच्चामराणां च रक्तत्वादुत्प्रेक्षते शबरेति । शबराणां मुखानि श्यामानि केशाश्च पिङ्गा अत उपमानोपमेयसाम्यम् । अथ च लोहमयेन महिषेण अध्यासिता कृष्णवर्णशिलावेदिका यस्याः । महिषं वर्णयति–चण्डिकाया अभिमुखं प्रतिष्ठितेन स्थापितेन । हस्तका हस्तचिह्नानि । हस्त इव प्रतिकृतिः हस्तकः । इवे प्रतिकृतौ इतिकन् । रुधिरेणारुणं यद्यमस्य करतलं तेनास्फालितेन परामृष्टेनेव । अगस्तिर्वृक्षविशेषः करजैर्नखरैः । कृतः पुण्यः पुष्पाणां प्रकार उपहारो यस्याः । पुनश्चोपहारार्थं या हिंसा, बलिविशसनं तां दर्शयन्तीम् । हिंसाचिह्नान्याह–अङ्कुरितामित्यादिना । ०कोटयोग्राणि तेषां कूटानि राशयः । **बलीति**– कृष्णत्वसाम्यद् बलेरुपहारस्य रुधिरपानलोभेन समागतैर्वेतालैर्भूतविशेषैरिव तालैर्दीयमानः फलान्येव मुण्डानि तेषामुपहारो यस्यै । **विदलितेति**–विदलिता विदारिता ये वनकरिकुम्भा इ० । नवरुधिरेणारुणा ये बलिसिक्था भक्तकणास्तत्र लुब्धा ये मुग्धा विवेकाक्षमाः कृतवाकवश्चरणायुधास्तैरादौ ग्रस्तानि पश्चान्मुक्तानि । अम्बिकया भैरव्या यः परिग्रहस्तेन दुर्ललितैरप्रतिहतसंचारैरित्यर्थः । क्षतजं

१ रक्तचन्दननिहित. २ नव. ३ लोहित. ४ अगस्त्यतरु, अगस्तिकुसुम. ५ प्रकरोपहाराम्.
६ तृष्णासमागतैः. ७ वमकरि—कुल—कुम्भविदलितमुक्ताफलानि रुधिरारुणानि बलि०

च्छापतितेनेव प्रतिबिम्बितेनास्तताम्रेण सवित्रा ताम्रतरीकृतैः[1] क्षतजजल-प्रवाहैः पिच्छिलीकृताजिराम्, अवलम्बमानदीपधूमैर्[2]रक्तांशुकेन ग्रथिताशि-खिगलवलयावलिना[3] पिष्टपिण्डपाण्डुरितघण्टामालभारिणा[4] त्रापुषसिंहमु-खमध्यस्थितस्थूललोहकण्टकं[5] दत्तदन्तदण्डार्गलं लसत्[6]पीतनीललोहितदर्पण[7]-स्फुरितबुद्बुदमालं कपाटपट्टद्वयं दधानेन गर्भगृहद्वारदेशेन दीप्यमानाम्, अन्तःपिण्डिकापीठपातिभिश्च[8] सर्वपशुजीवितैरिव शरणमुपागतैरलक्तकर्पटैर[9]-विरहितचरणमूलां, पतितकृष्णचामरप्रतिबिम्बानां च शिरश्छेदलग्नकेशजा-लिकानामिव परशु[10]पट्टिशप्रभृतीनां जीवविशसनशस्त्राणां प्रभाभिर्बद्धबहला-न्धकारतया पाताल[11]गृहवासिनीमिवोपलक्ष्यमाणां, रक्तचन्दनखचितस्फुर-त्फलपल्लवकलितैश्च बिल्वपत्रदामभिर्बालकमुण्डप्रालम्बैरिव कृतमण्डनां[12], शोणितताम्रकदम्बस्तबककृतार्चनैश्च पशूप[13]हारपटहपटुरटितरसोल्लसितरोमा-

---

रक्तं तदेव जलं तस्य प्रवाहैः पिच्छिलीकृतं चिक्कणीकृतमजिरं प्राङ्गणं यस्याः । गर्भगृहं मध्या-वासस्तस्य यो द्वारदेशस्तेन दीप्यमानां शोभमानाम् । अथ द्वारदेशं विशिनष्टि—अवलम्बमाना दीपा धूमा अगुरुचन्दनाद्युत्था रक्तांशुकानिच यस्मिन् । अवलम्बमानानि दीपानां धूमै रक्तानि रञ्जितान्यंशुकानि यस्मिन्निति वा । पिष्टपिण्डेन पाण्डुरिता या घना दृढाः । 'घनः सान्द्रे दृढे दार्ढ्ये' इति हैमः । घण्टास्तासां मालां बिभर्तीत्येवंशीलेन । मालास्य विद्यते तेनेति वा । इष्ट-केषीकामालानां चिततूलभारिषु । इति पूर्वपदह्रस्वः त्रापुषस्त्रपु वङ्गं सीसकं वा तन्निर्मितः । अणि षुगागमः । यः सिंहस्तस्य मुखमध्यस्थिता लोहकण्टका यस्मिन् । दत्ता हस्तिनो दन्त-दण्ड एवार्गला यस्मिन् । **लसदिति**—लसन्ती पीतनीललोहितानां दर्पणेभ्यः स्फुरितानां लोहिता दर्पणेभ्यः स्फुरिता इति० वा । बुद्बुदानां बुद्बुदाकारपुञ्जानां कपाटप्रान्ते शोभार्थं स्थितानां माला यस्मिन् । **अन्तरिति**—अलक्तकपटैर्यावकरसरक्तपटैरविरहितचरणमूलाम् । तत्र हतपश्वादीनां रुधिरसम्बन्धवशादुत्प्रेक्षते—अन्तःपिण्डिकापीठे पतन्तीत्येवंशीलैः शरणमुपा-गतैः सर्वपशूनां जीवितैरिवेति । पुनश्च **पातालेति** । केन हेतुनेत्याह—पतितेति—पतितानि कृष्णानां चामराणां प्रतिबिम्बानि येषु । अत एव शिर इति । पट्टिशः—'पट्टिशो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपमः' । इति वैजयन्ती । जीवानां विशसनं मारणं तस्य शस्त्राणां प्रभा-भिर्बद्धेत्या० । **रक्तेति**—रक्तचन्दनेन खचितानि लिप्तानि स्फुरन्ति फलानि पल्लवाश्च तैः कलितैः । रक्तचन्दनाक्तफलबालकमुण्डसाम्यादाह बालकेति । प्रालम्बं कण्ठादृजुलम्बिनी माला । **शोणितेति**—शोणितलोहितनीपगुच्छानां रोमोद्गमसादृश्यादाह—पशूनामुपहारे बलिदाने पटहानां यत्पटु रटितं तस्य यो रस आस्वादनं श्रवणमित्यर्थस्तेनोल्लसिता रोमाञ्चा येषाम् । पुनश्च कीदृशीं—महाकालस्य रुद्रस्याभिसारिका तस्या वेष-

---

१ अन्तरीकृतैः. २ धूप. ३ वलयावलम्बिना. ४ मालाधारिणा. ५ लोहककण्टकदत्त-गल गल-त्पीत०. ६ गलत्. ७ नर्पण. ८ ०पुटैः ०रक्तक. ९ कलापानाम्. १० असिपरशु. ११ पाताल-गुहा. १२ मण्डलाम्. १३ अविरतपशूपहारपटहपटुरचितरसोत्तम्भितरोमाञ्चैः.

चैरिवाङ्गैः क्रूरतामुद्वहन्तीं, चारुचामीकरपट्टप्रावृतेन च ललाटेन शबरसुन्दरीरचितसिन्दूरतिलकबिन्दुना दाडिमकुसुमकर्णपूरप्रभासेकलोहितायमानकपोलभित्तिना रुधिरताम्बूलारुणिताधरपुटेन भृकुटिकुटिलभ्रुणा रक्तनयनेन मुखेन कुसुम्भपाटलितदुकूलकलितया च देहलतया महाकालाभिसारिकावेषविभ्रमं बिभ्रतीं, संपिण्डितनीलगुग्गुलुधूपधूमारुणीकृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिरङ्गुलीभिरिव महिषासुरशोणितलवालोहिनीभिः स्कन्धपीठकण्डूयनचलितात्रिशूलदण्डकृतापराधं वनमाहिषमिव तर्जयन्तीं, प्रलम्बकूर्चधरैश्छागैरपि धृतव्रतैरिव स्फुरदधरपुटैराखुभिरपि, जपपरैरिव, कृष्णाजिनप्रावृताङ्गैः कुरङ्गैरपि, प्रतिशयितैरिव ज्वलितलोहितमूर्धरत्नरश्मिभिः कृष्णसर्पैरपि शिरोधृतमणिदीपकैरिवाराध्यमानां, सर्वतः कठोरवायसगणेन च रटतौ स्तुतिपरेणेव स्तूयमानां, स्थूलस्थूलैः शिराजालकैर्गोधागोलिकाकृकलासकुलैरिव दग्धस्थाण्वाशङ्कया समारूढैर्गवाक्षितेनालक्ष्मीस-

विभ्रमं नेपथ्यविलासं बिभ्रतीं दधानाम्। एतदेवोपपादयन्नाह। **चार्विति**–चारुर्यश्चामीकरस्य सुवर्णस्य पट्टस्तेन प्रावृतेनाच्छादितेन। शबरसुन्दरीभिर्भिल्लस्त्रीभी रचितः सिन्दूरं नागजं तस्य बिन्दुर्यस्मिंस्तेन ललाटेन। अथ च मुखेन। कीदृशेन। **दाडिमेति**–दाडिमकुसुममेव कर्णपूरस्तस्य प्रभायाः सेकेन लोहितायमाना कपोलभित्तिर्यस्य तेन। भृकुटिर्ललाटसंकोचस्तेन कुटिले भ्रुवौ यस्मिन्। कलितया व्याप्तया। **संपिण्डितेति**–संपिण्डितः पुञ्जीकृतो यो नीलगुग्गुलुधूपश्च तयोर्धूमस्तेनारुणीकृताभिः वायुवशात्प्रचलन्तीभिः गर्भगृहे या दीपिकास्ता एव पृथुत्वविततत्वसाम्याल्लतास्ताभिः। स्कन्धपीठस्य कण्डूयनेन चलितो यस्त्रिशूलदण्डस्तेन कृतापराधं वनमहिषमिव तर्जयन्तीम्। दीपिकानां रक्तत्वचञ्चलत्वसाम्यादुत्प्रेक्षते अङ्गुलीभिरिति। भयोत्पादनार्थं च महिषेति। आयतनस्यारण्यान्तर्गतत्वाद्वनमहिषप्रवेशसम्भवः। **प्रलम्बेति**–प्रलम्बानि कूर्चाणि श्मश्रूणि येषां तैश्छागैरजैः। **स्फुरदिति**–अयं मूषकाणां स्वभावः। आखुभिर्मूषिकैः। कृष्णाजिनं कृष्णवर्णं चर्म। पक्षे कृष्णसागरमृगचर्म। नैसर्गिकं व्रतप्राप्तं च तेन प्रावृताङ्गैः। प्रतिशयितैः कृतप्रतिशयनैरिव। अभीष्टसिद्ध्यर्थमनिष्टप्रत्यादेशाय वा स्नानपानभोजनादिवर्जनपूर्वकः देवतानां पुरतः स्वापः प्रतिशयनम्। कठोरः कर्कशस्वरो वायसगणस्तेन। जरन्वृद्धो यो द्रविडधार्मिकस्तेनाधिष्ठितां च। **स्थूलेति**–इतो द्रविडधार्मिकविशेषणानि। स्थूलस्थूलैरन्योन्यापेक्षयाधिकाधिकस्थूलैः शिराजालकैर्गवाक्षितेन जालमयीभूतेन। तत्तत्स्थानभिन्नभिन्नस्थौल्यसाम्याद्द्रविडधार्मिकदेहस्य कार्श्यादाह दग्धेति–गोधा निहाका गोलिका पल्ली कृकलासः सरटः। एतेषां कुलैः समूहैरिव। अलक्ष्म्या समुत्खातानि मूलत उच्छिन्नानि लक्षणानि शुभचिह्नानि

१ बभ्रुणा, बभ्रुनयनेन. २ मुखदुकूल. ३ प्रबल. ४ रुवता. ५ गृहगोधिका, गोधारगोधिका. ६ लक्ष्मी.

मुत्खातलक्षणस्थानैरिव विस्फोटव्रणबिन्दुभिः कल्माषितसकलशरीरेण कर्णावतंस-
संस्थापितया च[1] चूडया रुद्राक्षमालिकामिव दधानेन, अम्बिकापादपतनश्याम-
ललाटवर्धमानार्बुदेन कुवादिदत्तसिद्धाञ्जनस्फुटितैकलोचनतया त्रिकालमितरलो-
चनाञ्जनदानादरश्लक्ष्णीकृतदारुशलाकेन प्रत्यहं कटुकालाबुस्वेदप्रारब्धदन्तुर-
ताप्रतीकारेण कथंचिदस्थानदत्तेष्टकाप्रहारतया शु[2]ष्कैकभुजोपशान्तमर्द-
नव्यसनेन, उपर्युपर्यविश्रान्तकटुकवर्तिप्रयोगवर्धिततिमिरेणाश्मभेदसंगृहीतवराहदं-
ष्ट्रेण, इङ्गुदीकोशकृतौषधाञ्जनसंग्रहेण सूचीस्यूताशिरासंकोचितवामकराङ्गुलिना
कौशेयककोषावरणक्षतिव्रणितचरणाङ्गुष्ठकेनासम्यक्कृतरसायनानीताकालज्वरेण ज-
रांगतेनापि दक्षिणापथाधिराज्यवरप्रार्थनाकदर्थितदुर्गेण दुःशिक्षितश्र[3]मणादिष्ट-
तिलकाबद्धविभवप्रत्याशेन हरिततपत्ररसाङ्गारमषीमलिनशम्बूकवाहिना पट्टि-
कालिखितदुर्गास्तोत्रेण धूमरक्तालक्तकाक्षरतालपत्रकुहककर्तं[4]न्त्रमन्त्रपुस्तिका-

---

सामुद्रकोक्तानि तेषां स्थानैरिव विस्फोटाः पिटकास्तेषां व्रणचिह्नैः । कल्माषितं चित्रितम् । **अम्बिकेति**-अम्बिटकापादपतनेन श्यामले ललाटे वर्धमानोर्बुदो मांसकीलो यस्य । कुत्सितो वादी कुवादी तेन दत्तं सिद्धाञ्जनमद्भुतगुणावहं नेत्रौषधं तेन स्फुटितमेकं लोचनं यस्य तस्य भावस्तत्ता तया । त्रिकालमितरलोचनेऽञ्जनस्य न तु सिद्धाञ्जनस्य दाने प्रक्षेपे य आदरस्तेन श्लक्ष्णीकृता तनुतां नीता दारुशलाका येन । कटुकं यदलाबु तुम्बीफलं तस्य स्वेदेन निर्यासेन प्रारब्धो दन्तुरताया उन्नतदन्ततायाः प्रतीकारो येन । कथंचिदिति-'आमवातजडीकृतदेहस्य तैलमर्दनानन्तरं कारञ्जाम्रितमेष्टिकानां प्रहारः क्रियते । तमधिकृत्याह-**अस्थानेति**-यत्राभिमतेष्टिकाप्रहार उक्तो नास्ति तस्मिन्नङ्गे अत एवास्थाने दत्तो य इष्टिकाप्रहारस्तस्य भावस्तत्ता तया । **शुष्केति**-अचिकित्सित एकस्मिन्भुजे उपशान्तं निष्ठाप्राप्तं मर्दनव्यसनं यस्य स तेन' इ. भानु० । उपर्युपर्यधिकाधिकं यः कटुकवर्तिप्रयोगः कटुद्रव्यघटितवर्तिकासेवनं तेन वर्धितं तिमिरं दृष्टिविघाती कष्टसाध्यो नेत्ररोगभेदो येन । तदुक्तं योगरत्नाकरे-तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः । रुणद्धि सर्वतो दृष्टिं लिंगनाश इति क्वचित् ॥ तिमिरं नेत्ररोगेषु कष्टं तद्यत्नतो हरेत् । इति । अश्मभेदार्थं संगृहीता वराहदंष्ट्रा येन । इङ्गुदीकोषेषु इङ्गुदीफलगर्भेषु कृत औषधानामञ्जनस्य च संग्रहो येन । कौशेयकस्य कृमिकोशोत्थस्य कोषः पेशी तया यदावरणं तेन या क्षतिः संघृष्टिस्तया व्रणितश्चरणाङ्गुष्ठो यस्य । असम्यगयथाविधिकृतेन रसायनेन पारदप्रयोगेणानीतोऽकालज्वरो येन । जरामृत्युराहित्यार्थं पारदग्रहणम् । तस्य लोभातिशयं प्रदर्शयन्नाह जरामिति । दक्षिणापथो दक्षिणदेशस्तस्याधिराज्यस्य वरप्रार्थनया कदर्थिताऽसदुपासनेन पीडिता दुर्गा येन । दुष्टं शिक्षितं यस्य तेन श्रमणेन भिक्षुनादिष्टो यस्तिलकः सिद्धिदस्तत्राबद्धा विभवस्यैश्वर्यस्य प्रत्याशा येन । हरितपत्ररसेन कृता याङ्गारस्य मषी तया मलिनं कृष्णं शम्बूकं जलशुक्तिकां वहतीति तेन । **धूमेति**-धूमेन रक्तान्यलक्तकस्याक्षराणि येष्वेवंविधानि तालपत्राणि तेषां कुहकमिन्द्रजालं तन्त्रं विद्याभेदो मन्त्रा देवादीनां

---

१ चूडकेन. २ कथंचिच्छुष्क: ३ श्रवण. ४ तन्त्रयन्त्रमन्त्र.

संग्राहिणा जीर्णमहापाशुपतोपदेशलिखितमहाकालमतेनाविर्भूतनिधिवादव्याधिनासंजातधातुवादवायुना लग्नासुरविवरप्रवेशपिशाचेन प्रवृत्तयक्षकन्यकाकामित्वमनोरथव्यामोहेन वर्धितान्तर्धानमन्त्रसाधनसंग्रहेण श्रीपर्वताश्चर्यवार्तासहस्राभिज्ञेनासकृदभिमन्त्रितसिद्धार्थकप्रहतिप्रधावितैः पिशाचगृहीतकैः करतलताडनाचिपिटीकृतश्रवणपुटनैर्विमुक्तशैवाभिमानेन दुर्गृहीतालाबुवीणावादनोद्वेजितपथिकपरिहृतेन दिवसमेव मशकक्वणितानुकारि किमपि कम्पिनोत्तमाङ्गं गायता स्वदेशभाषानिबद्धभागीरथीभक्तिस्तोत्रनर्तकेन गृहीततुरगब्रह्मचर्यतयान्यदेशागतोषितासु जरत्प्रव्रजितासु बहुकृत्वः संप्रयुक्तस्त्रीवशीकरणचूर्णेनातिरोषणतया कदाचिद्दुर्न्यस्ताष्टपुष्पिकापातात्पादितक्रोधेन चण्डिकामपि मुखभङ्गिविकारैर्भृशमुपहसता कदाचिन्निवार्यमाणावासरुषिताध्वगारब्धबहुबाहुयुद्धपातभग्नपृष्ठकेन कदाचित्कृतापराधबालकपलायनामर्षपश्चात्प्रधावित-

---

साधनक्षमाः शाबरमन्त्रास्तेषां पुस्तिकास्तासां संग्राहिणा । जीर्णो यः पाशुपतः शैवस्तस्योपदेशेन लिखितं महाकालमतं शिवमतं येन । जीर्णश्चिरकालिनो यः पाशुपतोपदेशो मनुष्यरुधिरेण होमप्रतिपादकशिक्षा तेन' इत्यादि । एतेन केवलं वाममार्गोपदेष्टृत्वं सूचितम्' इ. भानु० । आविर्भूतः 'अनेन साधनेन निधिलाभो भवेत्' इति वाद एव व्याधिर्यस्य तेन । संजातः 'अनेन प्रयोगेण ताम्रमपि सुवर्णं भवेत्' इति वाद एव वायुर्वातुलता यस्य स तेन । लग्नोऽसुरविवरं पातालं तत्र प्रवेशलक्षणः पिशाचो यस्य । **प्रवृत्तेति**–प्रवृत्तो यो यक्षकन्यासु कामित्वमनोरथो भोगाभिलाषविशेषस्तेन व्यामोहो मतिभ्रमो यस्य । **असकृदिति**–वारंवारमभिमन्त्रिता मन्त्रैः संस्कृता ये सिद्धार्थकाः सर्षपास्तेषां प्रहत्य प्रक्षेपेण प्रधावितैः पिशाचगृहीतकैर्भूताविष्टैः करतलताडनेन चिपिटीकृतमवताटीकृतं श्रवणपुटं यस्य । **दुरिति**–दुर्गृहीताऽयथावद्गृहीता यालाबुवीणा इ० । **स्वदेश इति**०–भक्तिस्तोत्रं तेन । तद्गायनपूर्वकमित्यर्थः । नर्तकेन नृत्यं कुर्वता । **गृहीतेति**–गृहीतं तुरगस्येव । प्रतिबन्धाभावात्तु वैराग्यादित्यर्थः । वैराग्यं येन तद्भावस्तत्ता तया धृतकपाटब्रह्मचर्यतया । अन्यदेशादागताश्च ता उषिताः कृतवासाश्च तासु । **अतीति**–अष्टानां कुमुदादीनां समाहारोऽष्टपुष्पी । अनिर्णीतसंज्ञकत्वाद्द्विगुः । अज्ञातार्थे कन् । दुर्न्यस्ताया यथास्थानेऽस्थापिताया अष्टपुष्पिकायाः पातेनान्यजनकृतेनोत्पादितः क्रोधो यस्य । 'अष्टपुष्पी सोलिका' इति भानु० । कदाचिन्निवार्यमाणो य आवासो वसतिस्थानं तेन रुषिता येऽध्वगास्तैरित्या० । **कृतेति**–पलायनेनामर्षः क्रोधः । निपातेनोपले स्फुटितं यच्छिरः कपालं तेन भुग्ना वक्रा ग्रीवा यस्य ।

---

१ मन्त्रसंग्रहेण. २ निबिडीकृत. ३ श्रवणनासापुटेनाप्ययुक्त. ४ आखुपुष्पिका. ५ आवासिन. ६ कदाचिदनवरतभुजाशिखरलोहिना शिरःकम्पनवाकितग्रीवेण.

स्खलिताधोमुखनिपातोपलस्फुटितशिरःकपालभुग्नग्रीवेण कदाचिज्जनपदकृतनवागतापरधार्मिकादरमत्सरोद्बद्धात्मना निःसंस्कारतया यत्किंचनकारिणा खञ्जतया मन्दं मन्दं संचारिणा बधिरतया संज्ञाव्यवहारिणा रात्र्यन्धतया दिवाविहारिणा लम्बोदरतया प्रभूताहारिणानकेशः फलपातनकुपितवानरनखोल्लेखच्छिद्रितनासापुटेन बहुशः कुसुमावचयचलितभ्रमरसहस्रदंशशीर्णीकृतशरीरेण सहस्रशः शयनीकृतासंस्कृतशून्यदेवकुलकालसर्पदष्टेन शतशः श्रीफलतरुशिखरच्युतिचूर्णितोत्तमाङ्गेनासकृदुत्सन्नदेवमातृगृहवास्यृक्षनखजर्जरितकपोलेन सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्तखण्डखट्वारोपितवृद्धदासीविवाहप्राप्तविडम्बनेनानेकायतनप्रतिशायितानिष्फलोत्थानेन दौःस्थित्यमपि विविधव्याधिपरिवृत्तं स्वकुटुम्बमिवोद्वहता मूर्खतामपि बहुव्यसनानुगतां प्रसूतानेकापत्यामिव दर्शयता क्रोधमप्यनेकदण्डाघातनिर्मितबहुगात्रगण्डकं फलितमिव प्रकाशयता क्लेशमपि सर्वावयवज्वलितदीपिकादाहव्रणविभावितं बहुमुखमिव प्रकटयता परिभवमपि निष्कारणाक्रुष्टजनपददत्तपदाकृष्टिशतं सप्रवाहमिव दधानेन शुष्कवनलतानिर्मितबृहत्कुसुमकरण्डकेन वेणुलतारचितपुष्पपातनाङ्कुशिकेन क्षणमप्यमुक्तकालकम्बलखण्डखोलेन[४] जरद्द्रविडधार्मिकेणाधिष्ठितां, चण्डिकामपश्यत् । तस्यामेव च वासमरचयत् ।

णोद्बद्धः स्वव्यापादनार्थमित्यर्थः । आत्मा येन । निःसंस्कारतया शास्त्रस्यापरिशीलनात् । यत्किंचनकारिणा अविहितकारिणा । खञ्जतया खोडतया । संज्ञाभिर्हस्तचालनादिक्रियाभिर्व्यवहारिणा व्यवहरणशीलेन । दिवा दिवसे विहारिणा चेष्टमानेन । नखोल्लेखेन नखक्षत्या इ० । कुसुमावचये चलितं यद्भ्रमरसहस्रं तस्य दंशैः शीर्णीकृतं शरीरं यस्य । शयनीकृतानि शयनस्थानीकृतान्यसंस्कृतानि मार्जनादिक्रिययाऽशोधितानि शून्यानि देवकुलानि देवतायतनानि तेषु ये कालसर्पास्तैर्दष्टेन । श्रीफलस्य तरुशिखराच्च्युतिः इ० । **असकृदिति**—उत्सन्नमुद्वसं यद्देवमातृगृहं तत्र वसन्तीति वासिन ऋक्षा भल्लूकास्तैर्जर्जरितो बहुशः क्षतः कपोलो यस्य । खण्डा भग्ना खट्वा । **अनेकेति**—अनेकेष्वायतनेषु देवतागृहेषु यानि प्रतिशायितान्यभीष्टसिद्ध्यशुभज्ञानार्थं स्वप्नोपलम्भायेतरव्यापारवर्जं देवतापुरतः स्वापास्तेभ्यो निष्फलमुत्थानं यस्य । दुःस्थितेर्भावो दौःस्थित्यम् । मूर्खताया व्यसनजनकत्वादाह । **प्रसूतेति**—अनेके ये दण्डाघातास्तैर्निर्मिता बहुषु गात्रेषु गण्डका पिटका यस्य । सर्वेष्ववयवेषु ज्वलितो दीपिकानामिव दाहो येषां तादृशव्रणैर्विभावितम् । परिभवं तिरस्कारम् । निष्कारणमाक्रुष्टा अधिक्षिप्ता ये जनपदास्तैर्दत्तं पदाकृष्टिशतं पदप्रहारशतम् । ०पुष्पपातनार्थमङ्कुशिका येन । अमुक्ता कालकम्बलस्य

१ असारीकृत. २ गण्डकम् ३ शतसंप्रवाहम्. ४ लोलेन.

अथावतीर्य तुरगात्प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम । कृतप्रदक्षिणश्च पुनः प्रणम्य प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चैरारटन्तमाक्रोशन्तं च कुपितं द्रविडधार्मिकमेकदेशे ददर्श । दृष्ट्वा च कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोपि सुचिरं जहास । न्यवारयच्च तेन सार्धं संरब्धकलहानुपहसतः स्वसैनिकान् । उपसान्त्वनैश्च कथमपि प्रियालापशतानुनयैः प्रशममुपनीय क्रमेण जन्मभूमिं जातिं विद्यां च कलत्रमपत्यानि विभवं वयःप्रमाणं प्रव्रज्यायाश्च कारणं स्वयमेव पप्रच्छ । पृष्टश्चासाववर्णयदात्मानम् । अतीतस्वशौर्यरूपविभववर्णनवाचालेन तेन सुतरामरज्यत राजपुत्रः । विरहातुरहृदयस्य विनोदनतामिवागात् । उपजातपरिचयश्चास्मै ताम्बूलमदापयत् । अस्तमुपगते च भगवति सप्तसप्तावावासितेषु यथासंपन्नपादपतलेषु राजसूनुषु शाखावसक्ततपनीयपर्याणेषु क्षितितलुठनपांशुलसटावधूननानुमितोत्साहेषु गृहीतकतिपयशष्पकवलेषु पीतोदकेषु स्नानार्द्रपृष्ठतया विगतश्रमेषु पुरोनिखातकुन्तयष्टिषु संयतेषु वाजिषु वाजिसमीपविरचितपर्णप्रस्तरे च दिवसगमनखिन्नपरिकल्पितयामिके सुषुप्सति सैनिकजने कृतबहुपावकप्रभापीततमसि दिवस इव विराजमाने सेनानिवेशे चन्द्रापीडः परिजनेनैकदेशे संयतस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहारनिवेदितं शयनीयमगात् । निषण्णस्य चास्य तत्क्षणमेव पस्पर्श दुःखासिका हृदयम् । अरतिगृहीतश्च विसर्जयांबभूव राजलोकम् । अतिवल्लभानपि नाललाप पार्श्वस्थान् । निमी-

---

यत्खण्डं तस्य खोला शीर्षकं येन । खोलकः पाकवल्मीकपूगकोशशिरस्त्रके । इति विश्वः । **अथेति**—भक्त्या प्रवणेन प्रह्वेण । कादम्बरीविरहेण योत्कण्ठा पर्याकुलत्वं तया य उद्वेगोऽस्वास्थ्यं तेन दूयमानोपि । प्रव्रज्या दीक्षाग्रहणं तस्याः । **विरहेति**—विनोदनतामिवागात्स इति शेषः । सप्त सप्तयः अश्वा यस्य तस्मिन् सूर्ये । यथासंपन्ना यथाप्राप्ताः । आवासितेषु गृहीतवसतिषु शाखावसक्तानि तपनीयस्य सुवर्णस्य पर्याणानि येषाम् । क्षितितले लुठनेन पांशुला सटा तस्या अवधूननं तेन, लुठनं चावधूननं च ताभ्यामिति वा अनुमित उत्साहो येषां तेषु । पुरोनिखाता याः कुन्तयष्टयः स्तम्भीभूतास्तत्र संयतेषु । दिवसगमनेन खिन्नश्च परिकल्पिताः प्रहरादिक्रमेण यामिका येन स च तस्मिन् । कृतो दीपितो यो बहुपावकस्तस्य प्रभया पीतं विनाशितं तमो येन तस्मिन् । दुःखमासते अस्यामिति दुःखासिका मनःसंतापकारिणी पर्याकुलता । दुःखरूपा असिका खड्गधेनुका इति वा । अरतिगृहीतः क्वापि विनोदनमलभमानः । जीवितस्य फलं फलभूतम् । अप-

---

१ प्रशस्तदेशदर्शन. २ प्रारब्ध. ३ तच्चरितमित्यधिकम्. ४ अपनीत. ५ प्रभाप्रणाशिततमसि दिवसायमाने.

लितलोचनो मुहुर्मुहुर्मनसा जगाम किंपुरुषविषयम् । अनन्यचेताः सस्मार हेमकूटस्य[1] । निष्कारणबान्धवतामचिन्तयन्महाश्वेताप्रसादानाम्[2] । जीवितैफ-लमभिललाष पुनः पुनः कादम्बरीदर्शनम्[3] । अपगताभिमानपेशलाय नितरा-मस्पृहयन्मदलेखापरिचयाय । तमालिकां द्रष्टुमाचकाङ्क्ष । केयूरकागमनमुत्प्रे-क्षत । हिमगृहकमपश्यत् । उष्णमायतं पुनरुक्तं निशश्वास । बबन्ध चाधिकां प्रीतिं शेषहारे । पश्चात्स्थितां पुण्यभागिनीममन्यत पत्रलेखाम् । एवं चानुपजातनिद्र एव तामनयन्निशाम्[4] । उषसि चोत्थाय तस्य जरद्द्रविडधा-र्मिकस्येच्छया[5] निसृष्टैर्धनविसरैः पूरयित्वा मनोरथमभिमतमभिरमणीयेषु[6] प्रदेशेषु निवसन्नल्पैरेवाहोभिरुज्जयिनीमाजगाम ।

आकस्मिकागमप्रहृष्टसंभ्रान्तानां पौराणामर्घकमलानीव नमस्काराञ्जलि-सहस्राणि प्रतीच्छन्नतर्कित एवाविवेश नगरीम् । अहमहमिकया च प्रधा-वितादतिरभसहर्षरसविह्वलात्परिजनाद् द्वारि देव चन्द्रापीडो वर्तत इत्युपल-भ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकमम-लमागलितमाकर्षन्प्रहर्षनेत्रजलबिन्दुवर्षी मुक्तमुक्ताफलासार इव कल्पपादपः प्रत्यासन्नवर्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारिभिः[7] केयूरि-भिरुष्णीषिभिः किरीटिभिः शेखरिभिर्बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासिवेत्रच्छत्रकेतुचामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्या-मेव प्रत्युज्जगाम । दृष्ट्वा[8] च पितरं दूरादेवावतीर्य वाजिनश्चूडामणिमरीचिमा-लिना मौलिना महीमगच्छत् । अथ प्रसारितभुजेनैह्येहीत्याहूय[9] पित्रा सुचिरं

गतो योभिमानस्तेन पेशलाय रम्याय । उत्प्रेक्षत उदपश्यत् । हिमगृहकमर्थात्स्मृत्या सन्निधापितम् । पुनरुक्तं वारंवारम् । **उषसीति** । ०इच्छयापेक्षानुरोधेन । यावदिच्छमि-त्यर्थः । निसृष्टैर्दत्तैर्धनविसरैर्द्रव्यराशिभिः । **आकस्मिकेति**—प्रहृष्टाश्च ते संभ्रान्ता जात-संरम्भाश्च । प्रतीच्छन् गृह्णन् । अहमहमिकया परस्परस्येर्ष्यया । अतिरभसेनातिसंर-म्भेण यो हर्षरसस्तेन विह्वलादाकुलात् । उपलभ्य ज्ञात्वा । आगलितं स्वस्थानादीषद्भ्र-ष्टम् । स्वच्छनेत्रजलबिन्दुसाम्यादाह । **मुक्तेति**—कल्प इच्छा तत्फलकः पादपः । कल्प-पादपः । शाकपार्थिवादिः । यद्वा कल्पः संकल्पितोर्थस्तस्य पादपः । जन्यजनकभाव-सम्बन्धे षष्ठी । अनुपहतमखण्डं क्षौमं दुकूलं तद्धारिभिः । केयूरमङ्गदं विद्यते येषां तैः । क्षौमादीनां धवलत्वादाह **बहुति** । चूडामणेर्मरीचीनां मालास्यास्तीति तेन ।

१ हेमकूटम्. ०कूटस्य रम्यताम्. २ पावनानाम्. ३ जीवितामिव. ४ च मुहुः. ५ स्वेच्छाविसृष्टैः अभिमतेष्वपि. ७ ० धारिभिर्हारिभिः. ८ चन्द्रापीडोपि. ९ आदरादाहूय.

गाढमुपगूढः तत्कालसंनिहितानां च माननीयानां[1] कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा । तयापि तथैव सर्वान्तःपुरपरिवारया प्रत्युद्गम्याभिनन्दितागमनः[2] कृतागमनमङ्गलाचारो दिग्विजयसंबद्धाभिरेव कथाभिः कंचित्कालं स्थित्वा शुकनासं द्रष्टुमाययौ । तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्तिनं कुशलिनमालोक्य च मनोरमामागत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्तयत् । अपराह्णे निजमेव भवनमयासीत् । तत्र च रणरणकखिद्यमानमानसः कादम्बर्या विना न केवलमात्मानं स्वभवनमवन्तीनगरं वा सकलमेव महीमण्डलं शून्यममन्यत । ततो गन्धर्वराजपुत्रीवार्ताश्रवणोत्सुकश्च महोत्सवमिवेप्सितवरप्राप्तिकालमिवामृतोत्पत्तिसमयमिव पत्रलेखागमनं प्रत्यपालयत् ।

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत् । उपानयच्चैनाम् । कृतनमस्कारां च दूरादेव स्मितेन प्रकाशितप्रीतिश्चन्द्रापीडः प्रकृतिवल्लभामपि कादम्बरीसकाशात्प्रसादलब्धापरसौभाग्यामिव वल्लभतरतामुपागतामुत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम् । मेघनादं च प्रणतं पृष्ठे करकिसलयेन पस्पर्श । समुपविष्टश्चाब्रवीत्[3] । पत्रलेखे कथय तत्रभवत्या महाश्वेतायाः समदलेखाया देव्याः कादम्बर्याश्च कुशलम् । कुशली वा सकलस्तमालिकाकेयूरकादिः परिजन इति । साब्रवीत् । देव यथाज्ञापयसि भद्रम् । त्वामर्चयति[4] शेखरीकृताञ्जलिना ससखीजना सपरिजना देवी कादम्बरी । इत्येवमुक्तवतीं पत्रलेखामादाय मन्दिराभ्यन्तरं विसर्जितराजलोको विवेश । तत्र चोत्ताम्यता मनसा धारयितुमपारयन्कुतूहलमतिप्रीत्या दूरमुत्सारितपरिजनः प्रविश्यागारमचिरप्ररूढायाः[5] स्थलकमलिन्याः पृथुभिर्नालैः पलाशैरुपरचितातपत्रकृत्यायाम्[6][7] अभ्यास्य मध्यभागमन्यतरस्य मरकतपताकायमानस्य पत्रमण्ड-[8]

---

रणरणकेनोत्कण्ठया खिद्यमानं पीड्यमानं मानसं यस्य । **तत इति** । प्रसादेन लब्धमपरं सौभाग्यं सौभाग्यातिशय इत्यर्थः यया ताम् । शेखरीकृतः शिरसि निहित इत्यर्थः । योऽञ्जलिस्तेन । **तत्र चेति**—उत्ताम्यता विरहातुरेण । अतिप्रीत्या कुतूहलं धारयितुमपारयन्निति योजना । उपरचितं विहितमातपत्रस्य छत्रस्य कृत्यं यया तस्याः । अन्यतरस्य पूर्वोक्ताभिन्नस्य । मरकतस्याश्मगर्भस्य पताका वैजयन्ती तद्वदा-

---

१ माननीयानाममात्यानां महीपतीनां च क्रमेण. २ प्रत्युद्गमा. ३ समुपविष्टां च ताम्. ४ त्वामेव. ५ अगारप्ररूढायाः. ६ विरचित. ७ कृत्यस्य. ८ शयनमण्डपस्य तालस्य तले.

पस्य तले चरणारविन्देन समुत्सार्य सुखप्रसुप्तं हंसमिथुनमुपविश्याप्राक्षीत् । पत्रलेखे कथय कथमसि स्थिता । कियन्ति वा दिनानि । कीदृशो वा देवीप्रसादः । का गोष्ठ्यः समभवन् । कीदृश्यो वा कथाः समजायन्त । कोवातिशयेनास्मान्स्मरति । कस्य वा गरीयसी प्रीतिः । इत्येवं पृष्टा च व्यजिज्ञपत् । देव दत्तावधानेन श्रूयतां यथा स्थितास्मि यावन्ति वा दिनानि यादृशो वा देवीप्रसादो यथा वा गोष्ठ्यः समभवन्यादृश्यश्च कथाः समजायन्त ।

ततः खल्वागते देवे केयूरकेण सह प्रतिनिवृत्याहं तथैव कुसुमशयनीयसमीपे समुपाविशम् । अतिष्ठं च सुखं नवनवाननुभवन्ती देवीप्रसादान् । किं बहुना । प्रायेण मम चक्षुषि चक्षुर्वपुषि वपुः करे करपल्लवो नामाक्षरेषु वाणी प्रीतौ हृदयं देव्याः सकलमेव तं दिवसमभवत् । अपराह्णे च मामेवावलम्ब्य निष्क्रम्य हिमगृहकात्संचरन्ती यदृच्छया निषिद्धपरिजना वल्लभबालोद्यानं जगाम । तत्र सुधाधवलां कालिन्दीजलतरङ्गमय्येव मरकतसोपानमालया प्रमदवनवेदिकामध्यारोहत् । तस्यां च मणिस्थूणावष्टम्भा स्थिता । स्थित्वा मुहूर्तमिव हृदयेन सह दीर्घकालमवधार्य किमपि व्याहर्तुमिच्छन्ती निश्चलधृततारकेण निष्पन्दपक्ष्मणा चक्षुषा मुखं मे सुचिरं व्यलोकयत् । विलोकयन्त्येव च कृतसंकल्पा मदनाग्निं प्रवेष्टुमिच्छन्ती सस्नाविव स्वेदाम्भःस्रोतांसि । स्वेदाम्भःस्रोतसेव तरलीकृता समकम्पत । कम्पिताङ्गी च पतनभियेवागृह्यत विषादेन ।

अथ मया विदिताभिप्रायया तन्मुखविनिवेशितनिष्कम्पनयनदत्तावधानयाज्ञापयेति विज्ञापिते निजावयवैरपि वेपथुमद्भिर्निवार्यमाणेव रहस्यश्रवणलज्जयात्मप्रतिमामपि लिखितमणिकुट्टिमेन चरणाङ्गुष्ठेनापक्रमायेवामृशन्ती भवनकलहंसान्कु-

चरतः । प्रायेणेति–' चक्षुरित्यनेन संमुखमद्विषयकप्रेक्षणातिशयः । वपुषि वपुरित्यवियोगातिशयः । करे करपल्लवमिति मद्विषयकः कश्चिच्चमत्कारातिशयः । नामाक्षरेषु वाणीत्यनेन प्रश्नातिशयः । प्रीतौ हृदयमिति रहस्यप्रीत्यतिशयश्च व्यज्यते । इति भानु० । कालिन्दी यमुना । मणिस्थूणा मणिस्तम्भः । सैवावष्टम्भोवलम्बो यस्याः । निश्चलं धृता तारका यस्मिन् । कृतसंकल्पा कृतनिश्चया । अथेति–तन्मुखे विनिवेशिते निष्कम्पे नयने ताभ्यां दत्तमवधानं यया । एवंविधया मयाज्ञापयेति विज्ञापितेपि लज्जाकलितगद्गदा लज्जया सन्नकण्ठी सा वक्तुकामापि किंचिदपि गदितुं न शक्नोति स्म । अथ कादम्बरीं विशिनष्टि निजेति–वेपथुमद्भिः सकम्पैः । अन्योपि हस्तकम्पनादिना निवारणसंज्ञां ददाति । ' विरहवशात्सचिन्तायाः स्त्रिया अङ्गुष्ठेन भूमिकर्षणं स्त्रीजातिस्वभावः ' इति भानु० । लिखितं कर्षितं मणिकुट्टिमं येन । अपक्रमाय

१ आगते मयि क०. २ निवृत्ता. ३ आरुरोह. ४ मणिष्टम्भावष्टम्भस्थिता. ५, स्रोतसा. ६ मत्प्रतिमाम्.

ट्टिमोल्लेखमुखरितनूपुरेण चरणारविन्देन विसर्जयन्ती कर्णोत्पलमधुकरानपि स्विद्यद्वदनव्य[1]जनीकृतेनांशुकपल्लवेनोत्सारयन्ती ताम्बूलवीटिकाशकलमुत्कोचमिव दन्तखण्डितं शिखण्डिने ददती वनदेवताश्रवणशङ्कितेव मुहुर्मुहुरितस्ततो विलोकयन्ती वक्तुकामापि न शक्नोति स्म किंचिदपि लज्जाकलितगद्गदा गदितुम् । प्रयत्नतोपि चास्या निःशेषं ज्वलता मदनानलेनेव दग्धाजस्रं प्रवहता नयनोदकेनेवोढा प्रविशद्भिर्दुःखैरिवाक्रान्ता पतद्भिः कुसुमचापशरैरिव शकलीकृता निष्पतद्भिर्निश्वसितैरिव निर्वासिता हृदयवर्तिभिश्चिन्ताशतैरिव विधृता निश्वासपायिभिर्मधुकरकुलैरिव निपीता न प्रावर्तत वाणी । केवलं दुःखसहस्रगणनाय मुक्ताक्षमालिकामिव कल्पयन्ती गलद्भिरस्पृष्टकपोलस्थलैः शुचिभिरधोमुखी नयनजलबिन्दुभिर्दुर्दिनमदर्शयत् । तदा च तस्याः सकाशादशिक्षतेव लज्जापि लज्जालीलां विनयोपि विनयातिशयं मुग्धतापि मुग्धतां वैदग्ध्यमपि वैदग्ध्यं भयमपि भीरुतां विभ्रमोपि विभ्रमितां विषादोपि विषादितां विलासोपि विलासम् । तथाभूता च देवी किमिदमिति विज्ञापिता मया प्रमृज्य लोहितायमानोदरे लोचने दुःप्रकर्षेणात्मनः समुद्बन्ध-

---

तदपगमाय । कुट्टिमे य उल्लेखो घर्षणम् । स्विद्यत्स्वेदस्राविं यद्वदनं तत्र व्यजनीकृतेन उत्कोचं लञ्चाम् । अन्यमात्मवशीकर्तुं यत्किंचिद् द्रव्यं दीयते तदुत्कोच इति संज्ञायते । **प्रयत्नतोपीति**–अस्या वाणी न प्रावर्तत । तत्रोत्प्रेक्षते ज्वलतेति । अजस्रमविरतं प्रवहतोढाऽपवाहिता । निर्वासिता निष्कासिता । निश्वासं पिबन्तीत्येवंशीला निश्वासपायिनस्तैः । अनेन मुखसौगन्ध्यं सूचितम् । दुर्दिनमदर्शयन्नयनजलबिन्दुवर्षमकरोत् । तस्या लज्जादीनामतिशयं वर्णयन्नाह । **तदेति** लज्जालीलां तत्कार्याणीत्यर्थः । अद्य यावल्लज्जा स्वस्वरूपं यथावदजानत्येवासीत् । अधुना कादम्बरीसकाशात्तयात्मनः स्वरूपं यथार्थतया ज्ञातमिति भावः । अनेनानन्यस्त्रीसाधारणः कोपि लज्जातिशयः सूचितः । एवमन्यत्रापि योज्यम् । अत्र भानुचन्द्रव्याख्या यथा ‘ तथा मुग्धतापि विशेषावगत्यभावरूपापि मुग्धतामभावरूपाम् । एवं सति मुग्धताया अभाव एव प्रौढत्वं सिद्धम् । अभावाभावे भावरूपा विशेषावगतिः प्रौढता । वैदग्ध्यमपि भावाभिव्यञ्जकक्रियावृद्धिरूपमपि वैदग्ध्यमेव वर्तेत इति सूचितम् । तथा भयमपि क्रियाभिनिवेशनिवृत्तरूपमपि भीरुताम् । एतेन भयमपि निवृत्तं सोत्साहं च मनो जातमिति सूचितम् । तथा विभ्रमोपि चित्तपरिवृत्तिलक्षणोपि विभ्रमिताम् । एतेनात्यन्तचिन्तास्थैर्यं सूचितम् । तथा विषाद इष्टविषयेषु प्रातिकूल्यविषयोपि विषादिताम् । एतेनेष्टेष्वनुकूलतालक्षणोत्साह एव प्रसिद्ध इति ध्वनितम् । विलासोपि परव्यामोहनानुकूलव्यापाररूपोपि विलासम् । एतेन विचित्रैव चेष्टा स्वीकृतेति व्यज्यते ’ । इति । अत्र भानुचन्द्रकल्पिता आशयाश्चिन्त्याः । लोहितायमानं रक्ततां गच्छदुदरं मध्यभागो ययोस्ते । वेदिका

---

१ स्विद्यद्वदन. २ उपवन. ३ लज्जाकुलितगद्गदतया. ४ कीलिता. ५ आवृता. ६ निश्वासपायिभिः. ७ लज्जां लीलापि लीलाम्. ८ विनयोपदेशम्.

नायेव मृणालकोमलया बाहुलतया वेदिकाकुसुमपालिकाग्रथितकुसुममालामवलम्ब्य- समुन्नतैकभ्रूलता मृत्युमार्गमिवालोकयन्ती दीर्घमुष्णं च निश्वसितवती । तद्दुः- खकारणमुत्प्रेक्षमाणया च कथनाय पुनः पुनरनुबध्यमाना मया व्रीडया नख- मुखलिखितकेतकीदला लिखित्वेव वक्तव्यमर्पयन्ती विवक्षास्फुरिताधरा निःश्वा- समधुकरानिवोपांशु संदिशन्ती क्षितितलनिहितनिश्चलनयना सुचिरमतिष्ठत् ।

क्रमेण च भूयो मन्मुखे निधाय दृष्टिं पुनःपुनरप्यापूर्यमाणलोचनच्युतै- र्मदनानलधूमधूसरां वाचमिव क्षालयन्ती बाष्पजलबिन्दुभिः, बाष्पजलबिन्दु- व्याजेन च विलक्षस्मितस्फुरितैर्दशनांशुभिः साध्वसविस्मृतानपूर्वानभिधेयव- र्णानिव ग्रथ्नती कथमपि व्याहाराभिमुखमात्मानमकरोत् । अब्रवीच्च माम् । पत्रलेखे वल्लभतया तस्मिन्स्थाने न तातो नाम्बा न महाश्वेता न मदलेखा न जीवितं यत्र मे भवती । दर्शनात्प्रभृति प्रियासि । न जाने केनापि कारणेनापहस्तितसकलसखीजनं त्वयि विश्वसिति मे हृदयम् । कमपरमुपालभे । कस्य वान्यस्य कथयामि परिभवम् । केन वान्येन सह साधारणीकरोमि दुःखम् । दुःखभारमिममसह्यं निवेद्य भवत्यास्त्यक्ष्यामि जीवितम् । जीवितेनैव शपामि ते । स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि किमुतापरहृदयेन । कथ- मिव मादृशी रजनिकरकिरणावदातं कौलीनेन कुलं कलङ्कयिष्यति कुलक्रमागतां च लज्जां परित्यक्ष्यत्यकन्यकोचिते वा चापले चेतः प्रवर्तयिष्यति । साहं न संकल्पिता पित्रा न दत्ता मात्रा नानुमोदिता गुरुभिर्न किंचित्संदिशामि न किंचित्प्रेषयामि नाकारं दर्शयामि । कातरेवानाथेव बलादवलिप्तेन गुरुर्गहणीयतां नीता कुमारेण चन्द्रापीडेन । कथय महतां किमयमाचारः किं परिचयस्येदं फलम् । यदेवमभिनवबिसकिसलयतन्तुसुकुमारं मे मनः परिभूयते । अपरिभवनीयो

लतागृहं तस्याः कुसुमपालिका तया ग्रथितां कुसुममालाम् । उत्प्रेक्षमाणयोहमानया । मया पुनः पुनरनुबध्यमाना साग्रहं पृच्छयमाना । विवक्षया वक्तुमिच्छया स्फुरितः कम्पितोधरो यस्याः सा । निश्वासाकृष्टा मधुकरा निश्वासमधुकराः । **क्रमेणेति**—साध्वसाद्भयाद्विस्मृतान् । अभिधेयव- र्णान्वाच्यार्थाक्षराणि । व्याहारो भाषणम् । अपहस्तितो दूरीकृतः सकलः सखीजनो येन तत् । यस्मिन्कर्मणि तद्यथा तथेति वा । उपालभे दूषयामि । परिभवं मदनकृतमिति शेषः । विदितो वृत्तान्तो मदनव्यतिकरो येन । अपरस्य हृदयेन । कौलीनेनापवादेन । चापले स्वयंपाणिग्राहरूपे । संकल्पिता विवाहार्थं न कस्यचित्संकल्पविषयीकृता । आकारं देहविक्रियाम् । गुरूणां मान्यानां गर्हणीयताम् । अपारभवनीयः पराभवितुं न योग्यः । यूनां युवभिः । मर्मभेदे ध्रुवं मृत्युरित्याह ।

१ पाशामिव २ ततो दुःख ३ पूर्वान् . ४ [illegible] . ५ अन्यकन्यकोचिते. ६ सा चाहमसंक- ल्पिता मात्रा पित्रा न दत्ता. ७ इतरेव ८ नीचेव इत्यादि० ९ अनभिभ० ।

हि कुमारिकाजनो यूनाम् । प्रायेण प्रथमं मदनानलो लज्जा दहति ततो हृदयम् । आदौ विनयादिकं कुसुमेषुशराः खण्डयन्ति पश्चान्मर्माणि । तदामन्त्रये भवतीं पुनर्जन्मान्तरसमागमाय । न हि मे त्वत्तोऽन्या प्रियतरा । प्राणपरित्यागप्रायश्चित्ताचरणेन प्रक्षालयाम्यात्मनः कलङ्कम् । इत्यभिधाय तूष्णीमभूत् ।

अहं तु यत्सत्यमविदितवृत्तान्ततया ह्रीतेव भीतेव विलक्षेव विसंज्ञेव सविषादं विज्ञापितवती । देवि श्रोतुमिच्छाम्याज्ञापय । किं कृतं देवेन चन्द्रापीडेन को वापराधः समजनि केन वा खल्वविनयेन खेदितमखेदनीयं देव्या कुमुदकोमलं मनः । श्रुत्वा प्रथममुत्सृष्टजीवितायां मयि पश्चात्समुत्स्रक्ष्यसि जीवितम् । इत्येवमभिहिता च पुनरवदत् । आवेदयामि ते । अवहिता शृणु । स्वप्नेषु प्रतिदिवसमागत्यागत्य मे रहस्यसंदेशेषु निपुणधूर्तः[1] पञ्जरशुकसारिका[2] दूतीः करोति । सुप्तायाः श्रवणदन्तपत्रोदरेषु व्यर्थमनोरथमोहितमानसः संकेतस्थानानि लिखति । स्वेदप्रक्षालिताक्षरानपि निपतितसाञ्जनाश्रुबिन्दुपङ्क्तिकथितात्मावस्थानान्मनोहरान्संमोहाशानुवर्तिनो मदनलेखान्[6] प्रेषयति । निजानुरागेण बलाद्रञ्जयत्यलक्तकरसेनेव[3] चरणौ । अविनयनिश्चेतनो नखप्रतिबिम्बितमात्मानं[4] बहु मन्यते । उपवनेष्वेकाकिन्या ग्रहणभयपलायमानायाः पल्लवलग्नांशुकदशाप्रतिहतगमनाया गृहीत्वेव लतासखीभिरर्पिताया[5] मिथ्याप्रगल्भः पराङ्मुखायाः परिष्वङ्गमाचरति । स्तनस्थले मे लिखन्पत्रलतं कुटिलता मिवानृजुप्रकृतिः प्रकृतिमुग्धंमनः शिक्षयति । हृदयोत्कलिकातरंगवातैरिव शीतलैर्मुखमरुद्भिः श्रम-

तदेति–आमन्त्रये आपृच्छामि । अहं त्विति–विलक्षेवाकुलेवानिद्राच्छेदाद्यवस्थावर्णयन्नाह । स्वप्नेष्विति–निपुणश्चासौ धूर्तश्च धूर्तकर्मणि परं प्रवीण इत्यर्थः । श्रवणदन्तपत्राणि कर्णाभरणविशेषास्तेषामुदरेषु । व्यर्थोऽसम्पद्यमानो यो मनोरथस्तेन मोहितमानसः । स्वेदेति–निपतिता ये साञ्जना नेत्रस्थाञ्जनसहिता अश्रुबिन्दवस्तेषां पङ्क्त्या कथितमात्मावस्थानं यैः । संमोहात्काममोहितत्वाद्या संगमाशा तामनुवर्तन्त इत्येवंशीलास्तान् । आशानुरोधाल्लिखितानित्यर्थः । स्वाभाविकं चरणयोरारुण्यमधिकृत्याह । निजेति । अविनयान्निर्गता चेतना स्वस्वरूपज्ञानरूपा यस्य । पल्लवेषु लताकिसलयेषु लग्नाभिरंशुकदशाभिर्वस्त्रान्तेन प्रतिहतं विघ्नितं गमनं यस्याः । अर्पितायास्तस्मै इति शेषः । अतएव मिथ्याप्रगल्भः । पराङ्मुखाया लज्जया विवृत्तवदनायाः अनृजुप्रकृतिः कुटिलस्वभावः प्रकृत्या निसर्गतो मुग्धं परिच्छेदाक्षमं मे मनः कुटिलतां शिक्षयति । हृदयेति–हृदयस्य या उत्कलिका उक्तलक्षणास्ता एव तरङ्गास्तेषां वातैरिव । श्रमजनिता

१ निपुणो. २ पञ्जरशुकं सारिकां च. ३ अरञ्जयत. ४ नखेषु. ५ लतेति नास्ति क्वचित्. ६ लेखाम्.

जलसीकरतारकितावलीकचाटुकारः कपोलौ वीजयति । स्वेदसलिलशिथिलित ग्रहणगलितोत्पलशून्येनापि करेण यवाङ्कुरानिव[1] नखकिरणाञ्छुद्धान्दुर्विदग्धः कर्णपूरीकरोति । वल्लभतरबालबकुलसेककालकवलीकृतान्सुरागण्डूषानसकृच्चग्रहै-[3] मसकृद्धृष्टो मां पाययति । भवनाशोकताडनोद्यतान्पादप्रहारान्दुर्बुद्धिविडम्बितः शिरसा प्रतीच्छति । मन्मथमूढमानसश्च कथय हे पत्रलेखे[2] केन प्रकारेण निश्चेतनो निषिध्यते । प्रत्याख्यानमपीर्ष्यां संभावयति । आक्रोशमपि परिहासमाकलयति । असंभाषणमपि मानं मन्यते । दोषसंकीर्तनमपि स्मरणोपायमवगच्छति । अवज्ञानमप्यनियन्त्रणं प्रणयमुत्प्रेक्षते । लोकापवादमपि यशो गणयतीति ।

तामेवंवादिनीमाकर्ण्य प्रहर्षरसनिर्भरा मनस्यकरवम् । अहो चन्द्रापीडमुद्दिश्य सुदूरमाकृष्टा खल्वियं मकरकेतुना । यदि च सत्यमेव कादम्बरीव्याजेन साक्षान्मनोभवचित्तवृत्तिः प्रसन्ना देवस्य ततः सहजैः सादरं संवर्धितैः प्रत्युपकृतमस्य गुणैः, यशसा धवलिताः ककुभः, यौवनेन रतिरससागरतरङ्गैः पातिता रत्नवृष्टिः, यौवनविलासैर्लिखितं नाम शशिनि, सौभाग्येन प्रकाशिता निजश्रीः, लावण्यैरैन्दवीभिरिव वृष्टममृतं कलाभिः । तथा च चिराल्लब्धः कालो मलयानिलेन समासादितोवसरश्चन्द्रोदयेन प्राप्तमनुरूपं फलं मधुमासकुसुमसमृद्ध्या गतो मदिरारसदोषो[4] गुणतां, दर्शितं मुखं मन्मथयुगावतारेणेति । अथाहं प्रकाशं विहस्याब्रवम् । देवि यद्येवमुत्सृज कोपं प्रसीद । नार्हसि कामापराधैर्देवं[5] दूषयितुम् । एतानि खलु[6]

---

जलसीकरास्तैस्तारकितौ चित्रितौ । अलीकचाटुकारो मिथ्या निष्टवाची । **स्वेदेति**–स्वेदसलिलेन शिथिलितं श्लथीकृतं यद् ग्रहणं तेन गलितं यदुत्पलं तेन शून्येनापि । शुद्धान्धवलान् । दुर्विदग्धो मिथ्यावैदग्ध्यगर्वितः । वल्लभतरा ये बालबकुलास्तेषां विकासार्थं यः सेकस्तस्य काले कवलीकृतान्गृहीतान् । धृष्टस्त्यक्तत्रपत्वाद्धृष्टत्वम् । शिरसा प्रतीच्छति आत्मशिरसि वाञ्छति । निश्चेतनो गतसंवेदनः । ईर्ष्यामसूयाम् । आक्रोशं निन्दाम् । अवज्ञानं तिरस्कृतिम् । अनियन्त्रणमनर्गलम् । अन्यथावज्ञानं स्यात् । **तामिति**–सुदूरमाकृष्टा दूरगतमन्मथेत्यर्थः । **यदीति**–सादरं यत्नतः । प्रत्युपकृतं प्रत्युपकारः कृतः । रतिरसः शृङ्गार एव सागरस्तस्य तरङ्गैः तस्य सागरत्वेन कल्पनाद्रत्नोत्पादकता । **यौवनेति**–यौवनविलासैः शशिन्ययं शशलाञ्छन इति चन्द्रापीडस्य नाम लिखितं ततोप्याह्लादकरत्वातिशयात् । ऐन्दवीभिरिन्दुसम्बन्धिनीभिः कलाभिः । अत्र सर्वत्राद्भुतकार्यकरणं द्योत्यम् । अधुना कामसचिवानां सर्वेषामप्युत्कर्षं द्योतयन्नाह । **तथेति**–कालः प्रस्तावः ।

---

१ यवाङ्कुरविकारान्. २ स्व. ३ मगणितचेष्टः पातुं प्रार्थयते. ४ मदिरामद. ५ कामापराधे खलु. ६ खलस्य.

कुसुमचापस्य चापलानि शठस्य न देवस्य। इत्येवमुक्तवतीं मां पुनः सकुतूहला सा प्रत्यभाषत। योयं कामः कोपि वा कथय कानि कान्यस्य रूपाणीति। तामहं व्यजिज्ञपम्। देवि कुतोस्य रूपम्। अतनुरेष हुताशनः। तथा हि। अप्रकाशयञ्ज्वालावलीः संतापं जनयति। अप्रकटयन्धूमपटलमश्रु पातयति। अदर्शयन्भस्मरजोनिकरं पाण्डुतामाविर्भावयति। न च तद्भूतमेतावति त्रिभुवनेस्य [1]शरशरव्यतां यन्न यातं याति यास्यति वा। को [2]वास्मान्न त्रस्यति। गृहीतकुसुमकार्मुको बाणैर्बलवन्तमपि विध्यति। अपि चानेनाधिष्ठितानां कामिनीनां पश्यन्तीनां चि[3]न्ताप्रियमुखचन्द्र[4]सहस्राणि संकटमम्बरतलं लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलं गणयन्तीनां वल्लभगुणानल्पीयसी संख्या शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान्कालो हृदयस्यापततीति।

एतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत्। पत्रलेखे यथा कथयसि तथा जनोयं कारितः कु[5]मारे पक्षपातं पञ्चेषुणा। यान्यस्यैतानि रूपाणि ऽभ्यधिकानि वा तानि मयि वर्तन्ते। हृदयादव्यतिरिक्तासीदानीं भवतीमेव पृच्छामि। उपदिश त्वं यदत्र म सांप्रतम्। एवंविधानां वृत्तान्तानामन-

---

अद्य सफलो वातीत्यर्थः। एवमन्यत्र। **योयमिति**–कामो वा कोप्यन्यो विक्रियाकारीत्यर्थः। कामस्याद्भुतचरित्रं वर्णयन्नाह। **तथा हीति**। **अपि चेति**–अनेनाधिष्ठितानां कामिनीनां चिन्ताप्रियः संकल्पमयः प्रियस्तस्य मुखसहस्राणि। चिन्तनानेकत्वाद्बहुवचनम्। पश्यन्तीनामम्बरतलं संकटं संकुचितावकाशमापतति। सर्वत्राकाशे चिन्तास्थितप्रियमुखचन्द्रानेव पश्यन्तीति भावः। दयिताकारान्प्रियप्रतिकृतीर्लिखन्तीनामविस्तीर्णे महीमण्डलमापतति भवति। एवमन्यत्र। अबहुभाषिणी तद्गुणान्साकल्येन वक्तुमक्षमा। ध्यानेन प्रियसमागमसुखान्यनुभवन्तीनां कालः क्षणमिव यातीति भावः। अनेन पर्युत्सुकतातिशयो व्यञ्जितः। **एतदिति–पञ्चेषुणा**-कामेन अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥ अव्यतिरिक्ता-

---

१ शरव्यताम्. २ कोवास्य भ्रश्यति. ३ चिन्तया. ४ ०मुखसहस्रसंकटम्. ५ कुमारपक्षपातिनी.

भिन्नास्मि । अपि च मे गुरुजनवक्तव्यतां नीताया नितरां लज्जिताया जीवितान्मरणमेव श्रेयः पश्यति हृदयम् । इत्येवंवादिनीं भूयस्तामहमेवमवोचम् । अलमलमिदानीं देवि किमनेनाकारणमरणानुबन्धेन । अनाराधितप्रसन्नेन कुसुमशरेण भगवता ते वरो दत्तः । का चात्र गुरुजनवक्तव्यता यदा खलु कन्यकां गुरुरिव पञ्चशरः संकल्पयति मातेवानुमोदते पितेव ददाति सखीवोत्कण्ठां जनयति धात्रीव तरुणतायां रत्युपचारं शिक्षयति । कति च कथयामि ते याः स्वयं वृतवत्यः पतीन् । यदि च नैवमनर्थक एव तर्हि धर्मशास्त्रोपदिष्टः स्वयंवरविधिः । तत्प्रसीद देवि । अलममुना मरणानुबन्धेन शपे ते पादपङ्कजस्पर्शेन । संदिश प्रेषय माम् । याम्यानयामि देवि ते हृदयदयितम् । इत्येवमुक्ते मया प्रीतिद्रवार्द्रया दृष्ट्या पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशरजर्जरितां भित्त्वेव लज्जां लब्धान्तरैर्निपतद्भिरनुरागविभ्रमैराकुलीक्रियमाणा प्रियवचनश्रवणप्रीत्या च स्वेदाश्लिष्टमुत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकं प्रेङ्खत्कुण्डलमाणिक्यपत्रमकरकोटिलग्नं च शशिकिरणमयं मरणपाशमिव मकरकेतुना निहितं कण्ठे हारमुन्मोचयन्ती प्रहर्षविह्वलान्तःकरणापि कन्यकाजनसहजां लज्जामिवावलम्ब्य शनैरवदत् ।

---

भिन्ना । सांप्रतं कर्तव्यत्वेन युक्तम् । **अपि चेति**–मरणमेव श्रेय इति हृदयं पश्यति । अकारणं कारणं विना मरणानुबन्धो मरणाभिनिवेशस्तेन । गुरुरिव गुरुजन इव । संकल्पयत्यनुरूपं वरं योजयति । रत्युपचारं शृङ्गारविषयकविभ्रमादि । कति च कन्यकास्तासां नामानीत्यर्थः । कथयामि या इ० । नैवं कन्यकानामेतत्कर्तुं नोचितम् । अनर्थकः प्रयोजनहीनः । गान्धर्वः समयान्मिथः इति याज्ञवल्क्यः । इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ॥ गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः ॥ इति मनुश्च । उक्तं च महाभारते-शिष्टानां क्षत्रियाणां च धर्म एषः सनातनः । आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः । अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर । अनु. प० ४४. **इत्येवमुक्त इति**–मयेत्येवमुक्ते सा कादम्बरी शनैरवदत् । अथ कादम्बरीं विशिनष्टि प्रीत्यादिना । लब्धान्तरैर्मनस्याविर्भूतैः । अन्तः निरुध्यमानैरपि नियम्यमानैरपि कंदर्पबाणजर्जरीकृतां लज्जां भित्त्वेव बहिर्निपतद्भिर्निष्क्रामद्भिरनुरागविभ्रमै रतिविलासैराकुलीक्रियमाणा । प्रियवचनश्रवणप्रीत्या च यः स्वेदस्तेनार्द्रम् । अपि च प्रेङ्खन्माणिक्यपत्रं कर्णाभरणविशेषस्तस्य वा मकरकोटयस्तत्र लग्नं हारमुन्मोचयन्त्युद्धरन्ती ।

---

१ भ्रातेव. २ तरुणतारत्युपचारम्. ३ किमिव. ४ मरणाय पाशम्.

जानामि ते गरीयसीं प्रीतिम् । केवलमकठोरशिरीषपुष्पमृदुप्रकृतः कुतः प्रागल्भ्यमेतावन्नारीजनस्य विशेषतो बालभावभाजः कुमारीलोकस्य साहसकारिण्यस्ता याः स्वयं संदिशन्ति समुपसर्पन्ति वा । स्वयं साहसं संदिशन्ती बाला जिह्रेमि । किं वा संदिशामि । अतिप्रियोसीति पौनरुक्त्यं तवाहं प्रियात्मेति जडप्रश्नस्त्वयि गरीयाननुराग इति वेश्यालापस्त्वया विना न जीवामीत्यनुभवविरोधः परिभवति मामनङ्ग इत्यात्मदोषोपालम्भो मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायो बलाद्धृतोसि मयेति बन्धकीधाष्टर्यमवश्यमागन्तव्यमिति सौभाग्यगर्वः स्वयमागच्छामीति

जानामीति—प्रागल्भ्यं धाष्टर्यम् । एतावत् स्वयंवरणरूपम् । साहसकारिण्यो धृष्टाः । 'साहसं तु बले दुष्करकर्मणि । अविमृश्यकृतौ धाष्टर्ये' इति हैमः । अतीति—अतिप्रियत्वं ह्यनुभवसिद्धम् । तत्र वचनप्रयोगे ज्ञातार्थज्ञापनात्पौनरुक्त्यम् । 'परेङ्गितज्ञानफला हि बुद्धयः' 'उदीरितोर्थः पशुनापि गृह्यते' इति न्यायं मनसि कृत्वाह तवेति—'तव किमहं प्रिय आत्मा यस्येति प्रियात्मा' इति तु जडजनस्याविदितपराभिप्रायत्वेन मूढमतेः प्रश्नः । परेङ्गितमन्तरेणापि प्रश्नेन विज्ञेन ज्ञातुं शक्यते जडबुद्धिना तु प्रश्नेन । अतोयमपि पक्षोऽसमञ्जस एवेति भावः । त्वयीति—वेश्यालापो गणिकोचितं भाषणं न तु कुलवत्याः । वेश्या हि वाक्येनैवासन्तमप्यनुरागं दर्शयति कुलजा तु व्यङ्ग्यवृत्त्यैव सन्तं तं प्रकाशयतीति भावः । त्वयेति—'न जीवसि चेत्कथं न मृता कथं च संदिशसीति जीवनकार्यस्य वचनादिप्रयोगस्य दर्शनात्स्फुट एव वाच्येन विरोधः । इत्यनुपपन्नोयमपि पक्षः । परीति—कुलकुमारीभिः स्वचित्तविकारो नियम्य एव । आत्मनः कामुकत्वप्रकटनं तासामनुचितम् । इति तत्करणे आत्मनो दोषस्य चित्तानिग्रहरूपस्योपालम्भो धिक्कारकरणम् । मनोभवेनेति—मनोभवेन दत्तेत्युपसर्पणस्याभिसरणस्योपायो न तु संदेष्टव्योर्थः । अत एवास्यासामञ्जस्यम् । बलादिति—त्वं मया बलाद्धृतोसीति बन्धकी कुलटा तस्या धाष्टर्यं धृष्टता । न सर्वथा विनयशालिन्याः कुलकन्यकाया उचितमिति भावः । अवश्यमिति—त्वयावश्यमागन्तव्यमिति संदेशस्य 'न तव तथा सौभाग्यं यथा ममातस्त्वामागमनाय नियोजयामि' इत्यर्थे पर्यवसानात्स्वाहङ्काराविष्करणमात्रं नान्यत्किंचित् । स्वयमिति—स्त्रीचापलं कामिनीजनसहजाविमृश्यकारिता । अतस्तथा संदिष्टे आत्मनश्चापलं व्यक्तीकृतं स्यात् । अनन्येति—स्वस्य भक्तेः स्वेनैव निवेदनं तस्य लाघवं तज्जन्या लघुता । 'इन्द्रोपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः' इति न्यायात्स्वभक्तिनिवेदन-

१ वा स्वयम् । साहसं सन्दिशन्ति । बाला. २ प्रिया नेति.

स्त्रीचापलमनन्यैरक्तोयं परिजन इति स्वभक्तिनिवेदनलाघवं प्रत्याख्यानशङ्कया न संदिशामीत्यप्रबुद्धबोधनमनपेक्षितानुजीवितदुःखदारुणा स्यामित्यतिप्रणयिता ज्ञास्यासि मरणेन प्रीतिमित्यसंभाव्यमेव* ।

---

मपि लघुताकरमित्युपेक्षणीयमेतत् । **प्रत्याख्यानेति**-प्रत्याख्यानं प्रणयनिराकरणं तस्य शङ्कया । अप्रबुद्धस्य निश्चयेनाज्ञातार्थस्य निराकरणरूपस्य बोधनं ज्ञापनम् । यद्वा प्रसुप्तसर्पबन्नाय-केनाप्रबुद्धस्याचिन्ताविषयीकृतस्य प्रबोधनम् । **अनपेक्षितमनीहितं** त्वद्वियोगानन्तरं यदनुजीवितं तेन दुःखं तेन दारुणा । इत्यतिप्रणयिताऽवास्तवप्रणयदर्शनम् । **ज्ञास्यसीति**-मरणं सुलभं स्याच्चेत्तस्मिन्वृत्ते प्रीतिज्ञापनं भवेत् । तत्त्वसुलभमतः प्रीतिज्ञापनमप्यसंभाव्यमेव ।

---

१ अनुरक्तः. २ स्वयं. ३ नालापला०. ४ उद्धतप्रतिबोधनम्. बन्धम्.

* एतावन्तं ग्रन्थं विरचय्य पुरन्दरपुरातिथिभूते बाणे तत्पुत्रेण भूषणबाणेन कथाशेषो व्यरचि । तत्कृतान्युपोद्धातपद्यानि यथा—

# NOTES.

'कादम्बरी'—कादम्बरीमधिकृत्य कृता कथा। 'अधिकृत्य कृते ग्रन्थे' इत्यर्थे वृद्धाच्छः; लुबाख्यायिकाभ्यो बहुलम्' इति लुप्। As *Kâdambarî* belongs to the same class of prose compositions as 'Akhyâyikâ.' Pán. IV. 3 87. and the Vârtika on it given above, apply and we have the form कादम्बरी signifying the Kathá which has Kádambarî for its heroine. *Cf.* 'The Paradise Lost' 'Henry VIII' &c. The name may also be explained thus: कादम्बरीमधिकृत्य कृता कथा उपचारात् कादम्बरी. Kâdambarî is the name of the heroine. By उपचार (rhetorical transference of name) the word means the composition which has Kádambarî for its heroine. The Vârt. लुबाख्यायिकाभ्यो बहुलम् has a limited application and consequently a difficulty arises in explaining such titles of works as शारीरकं भाष्यम्, रत्नावली &c. To obviate the difficulty grammarians say that words like शारीरकम् &c. signify titles of works by उपचार or transference of an epithet. शारीरकं भाष्यमिति त्वभेदोपचारात्। Bhattoji Dîkshit on Pân. IV. 3. 87. This way of explaining such cases, seems to have found much favour with grammarians like Bhattoji Dîkshit, Jnánendrabhikshu, Nágesha-bhatta and others; and rather than add the termination and then drop it, they ignore the Sûtra and the Vârt. altogether; while one Bhairawáchârya attacks the Bháshya directly thus: वासवदत्तामधिकृत्य कृता याख्यायिका सोपचाराद्वासवदत्तेत्युच्यते न तु प्रत्ययः क्रियते।

In obedience to the almost unfailing practice of Sanskṛta writers Báṇabhatta praises the Supreme Deity in the triple form of Brahmâ, Vishṇu and Shiva.

*N. B.* These three forms are the manifestations of the same *Saguna Brahma* (Supreme Ens) as it identifies itself with the *Rajas*, the *Satva* and the *Tamas* quality. Hence any one of these may be praised as the Supreme Being. *Cf.* the praise of Brahma and Vishnu in Kum. II. and Ragh. X. respectively.

Śl. 1. रजोजुषे इ०—See note on त्रिगुणात्मने below अजाय—the word अज may also imply the absence of स्थिति 'preservation' and भङ्ग 'destruction' and thus indicate the eternal Brahman.

त्रिगुणात्मने—The three qualities are (1) रजस् or the quality of restlessness (activity); (2) सत्त्व or the quality of peacefulness; and (3) तमस् or the quality of grossness. (Vide the San. Kâ. quoted in the com.) These three qualities constitute *Mâyâ.* The Supreme Being is निर्गुण (without form &c.), and therefore not comprehensible by the senses; but when combined with Mâyâ it becomes capable of action and fit to be perceived by the human senses. The three forms

of the Deity perform the distinct functions of creation, preservation and destruction, corresponding to the three qualities. But Brahma, the father of all, combines in itself all these attributes and is therefore addressed as त्रिगुणात्मन्. *Cf.* ब्रह्मत्वे स प्रजाः सृष्ट्वा ततः सत्त्वातिरेकवान् । विष्णुत्वमेत्यधर्मेण कुरुते परिपालनम् ॥ ततस्तमोगुणोद्रिक्तो रुद्रत्वे चाखिलं जगत् । उपसंहृत्य वै शेते त्रैलोक्यं त्रिगुणोऽगुणः ॥ Mark. P. 46–14, 15.

त्रयीमयाय—The word त्रयी is generally used to express collectively the three Vedas,–Ṛg, Yajus and Sâman. Here it may also mean the three deities of whom Brahman is the combined manifestation; the first sense however is preferable as avoiding repetetion.

TRANS:—Bow to the Unborn Being ( the Supreme Spirit ) that is the cause of the creation, the preservation, and the destruction of the universe, whose manifestations are the three Vedas (or the trinity—Brahmâ, Visbṇu and Śiva, ) and that becomes one with the three qualities ( constituting Mâyâ ) with the Rajas when sending forth, the Satva when protecting, and the Tamas when retracting, the creation ( *i. e.* which becomes Brahmâ when &c., Vishṇu, when &c, and so on ).

Śl. 2. This is in praise of god Siva, the deity of destruction. He is generally known as being noble-minded and simple to a degree, treating with equal favour his friends as will as foes. It was owing to this that many cunning demons like Râvaṇa, Bâṇa, &c. took advantage of his undiscriminating disposition and obtained from him boons which made them all-powerful in the world.

जयन्ति—The word जयन्ति which lit. means 'conquer, are successful' conveys by implication the meaning of a salutation, which is generally accompanied by good wishes for the success of the person bowed to.

बाणासुर—The word बाणासुर, though apparently the name of a demon, suggests another meaning by शब्दश्लेष or similarity of sound. It may be explained as बाणाय असून् रान्ति ( ददति ) इति बाणासुराः those who gave life to Bâṇa, *i. e.* his forefathers ( see com. ). That Bâṇa was a worshipper of Śiva is clear from the opening stanza of the Har. Cha. and his salutation here to that deity before Vishnu.

भवच्छिदः—This word also implies the meaning of "removal of the difficulties in the way of the author." This may be regarded as an instance of the author's firm belief in the efficacy of a prayer which for the moment raises us above the common level of worldly life and gives us strength to persevere and succeed at length even in difficult undertakings.

त्र्यम्बक—The word त्र्यम्बक is usually explained as त्रीणि अम्बकानि यस्य सः the three-eyed god, Siva. But in Vedic times, it appears, the term was

used to represent the Supreme Deity or the originator of the three forms Brâhmâ, Vishṇu and Siva. Sâyaṇa in his commentary on the Ṛgveda explains the term as त्रयाणां ( ब्रह्मविष्णुरुद्राणां ) अम्बक: ( पिता ) the father of the three deities. Vide Sáy. on Ṛg. VII. 59. 12. Here evidently the word is used in its Pauranic conception.

TRANS :—Triumphant are the particles of dust sticking to the feet of Tryambaka, the cutters of the bonds of wordly existence, which were joyfully borne on his head (or crown) by the demon Báṇa, which kissed ( fell on ) the circle of the crest jewels of Râvaṇa, and which lie on the points of the crests of the lords of the gods and the demons.

Śl. 3. उपेन्द्र :—Vishṇu. In his dwarf incarnation Vishṇu became the son of Káshyapa and Aditi, and so was the younger brother of Indra. See Bhág. P. X. Pur. 3. 42.

TRANS :—All supreme is that Upendra ( Nṛsimha ) who, with a mere glance from a distance, red with anger, and fixed but for a moment on its victim, with the desire of cleaving the chest (bosom) of the enemy, made it red as gore, as if it was shattered of itself with terror.

The substance of the verse is that उपेन्द्र wishing to tear asunder the chest of his enemy, directed an angry look towards it for a moment. His eyes being red with anger, they made the heart also appear red like blood. Hence the poet figuratively speaks of the heart as being broken of itself through fear; for he thinks that bloodlike appearance cannot be otherwise accounted for. The figure here is उत्प्रेक्षा in which the poet keeps out of view the natural cause of a thing, and ascribes the result to an imaginary one. Here the real cause of the redness of the heart is, in a poet's way, the red lustre of the angry look fallen upon it; while the poet thinks, that it was torn of iiself through fear and hence its redness.

Śl. 4. In this śl. the poet pays his homage to his Guru named भर्चु. Another reading is भत्सु or भर्त्सु. मौखरिभि :—Not much is known about the Maukharis. They seem to have ruled in Magadha along with the later Guptas with whom they had often to wage war, and had names ending in Varman. Harsha was connected with the family of the Maukharees. His sister Râjyas'rî was married to Grahavarman, son of Avantivârman The Maukharis were great devotees of Siva and were highly honoured For more particulars about the Maukharis see Dr. fleet's Gupta.

inscriptions, pp. 219-230. In the second case this may mean 'learned Bráhmanas' ( मुखरस्य वाग्मिनो भावो मौखर्यं तद्वेषां विद्यते).

समस्त &c.—When hundreds of crowned princes bowed to his preceptor भर्वु, their crowns formed together a raised platform which served him as a footstool. While the Guru's feet were rolling on this platform, the lustre of the gems was reflected on them and thus they appeard red.

This is an instance of what is called अतिशयोक्ति or exaggerated description. A Sanskrt Kàvya is either स्वभावोक्ति ( natural description ) or अतिशयोक्ति. The first kind of Kávya is very rare; for it requries a lofty imagination as well as a careful and keen observation to make a natural description sublime and pleasing. Men of very rare genius alone possess the discriminating faculties for poetically describing natural object or scenery.

वेदिका—usually means the raised space round an altar.

TRANS :—I salute the lotus-like feet of ( the venerable ) Bharvu ( my preceptor ) to which worship was offered ( homage was paid ) by the Maukharis with crowns on their heads, and the toes of which were reddened as they rolled on the lofty foot-stool formed by the rows of the diadems of all subordinate princes.

Sl. 5. In this s'loka evil-minded persons are compared to dreadful and poisonons snakes. Possibly this is an allusion to wicked critics who might have attacked Bána's previous work as a novel production of a Kávya in prose. No doubt Dandin, who probably preceded him had discarded the view that versification was of the essence of a Kávya and stated that it may be written in prose as well as in verse. Still there can be no doubt that a prose Kávya was rather unusual in Sanskrt literature in those days and the pleasant form of verse was generally adopted on account of its external beauty. It is, therefore, probable that Bána's Harshach. might have been strongly attacked on account of its novelty and unusualness, if not for its extremely long and difficult compounds.

सुदुःसहम्—unbearable–is to be construed with दुर्वचः as well as विषम्. Here असज्जन is compared to महाहि the attributes 'unbearable' and 'the state of being stored in the mouth' being the common qualities on which the simile is based. *Cf.* विषधरतोप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः। यदयं नकुलद्वेषी सकुलद्वेषी पुनः पिशुनः॥ Vásavadattá.

TRANS :—Who has not to dread a wicked person, fierce with the hatred he manifests without any cause, in whose mouth there is always present abusive language which is very hard to bear, like virulent poison in that of a huge serpent.

Sl. 6. The attributes कटु क्वणन्तः and मलदायकाः are common to the two words खलाः and बन्धनशृङ्खलाः. कटु क्वणन्त :–(a) sounding harshly; (b) talking bitterly. मलदायकाः–(a) causing stain (b) casting censure. The attributes पदे पदे and साधु ध्वनिभिः हरन्ति are similarly common to सन्तः and मणिनूपुराः. Jewelled anklets please by their sweet sound at every step and good men attract the mind by their sound advice at every time. These two उपमाs are instances of what is known as शब्दालंकारs or figures of speech based upon similarity of sound. These are properly ranked as inferior to अर्थालङ्कारs wherein the beauty consists in the sense conveyed by the author, the words playing only a subordinate part.

TRANS:—Uttering harsh words and casting stains the wicked trouble enough like iron fetters ( that produce harsh sounds and impart blackness to the feet ); while the good, like jewel-anklets, charm the mind at every step with their pleasing sounds.

Sl. 7. This is a still stronger attack upon wicked critics who are compared to the demon Ráhu, who eclipses the sun.

The allusion here is to the story of the churning of the milky ocean. It is said that once upon a time the gods and demons wanted to obtain the precious jewels at the bottom of the ocean. They, therefore, together churned the ocean using mountain Mandâra as the handle and the snake Vâsuki as the rope. After they had extracted several precious jewels in this way, they also obtained nectar out of it. This was to be distributed among them equally; Vishnu assuming the form of a beautiful damsel came there and was selected for the purpose He took care to see that the demons did not partake of it as it would make them immortal and then his brothers, the gods, would be unable to vanquish them. Somehow or other the demon Râhu managed to sit with the gods and so he was also served with nectar. This was observed by the sun and the moon who secretly informed Vishnu of the mistake Vishṇu was extremely wroth and with his Sudarshana separated the demon's head from the body. But as he had tasted a little quantity of nectar, the head became immortal, and is supposed to wreak its vengeance on the informers by harassing them at the time of conjunction and opposition. See Bhâg. Pu. VIII. 9. 21-26.

महारत्नम्—The celebrated jewel called Kaustubha obtained at the churning of the ocean and worn by Vishṇu on his breast. In the latter portion of the verse सज्जन is compared tc Hari and a Kâvya to the pure jewel about his neck.

TRANS:—Charming composition never enters into the throat of ( is never appreciated by ) a bad man, as the nectar ( did not ) into that of the sun'a foe; but the good, on the other hand,

hold the same to their bosom as Vishṇu does the perfectly spotless precious gem ( Kaust bha ).

Sl. 8. The poet here descr bes the beauty of a new kâvya which is said to be as delight- iving as a newly married wife.

स्फुरदिति—The compound adjective is applicable to कथा as well as to वधू. In the former case the pleasing sound and sportiveness are those of the characters in the story, and in the latter case of the young wife. शय्या—A charming composition ( शब्दगुम्फः ) such that no word can be substituted for another in it without destroying the charm. The Sar. Kan. mentions शय्या among शब्दालंकारs. स्वयम्—Of her own accord, i. e. without force or constraint ( and threfore more pleasing ).

कथा is a kind of prose composition with a highly pleasing plot. It should open with verses containing salutations to deities, a description of the actions of wicked men, &c. ( See com., introduction to the first śloka and the couplets कथायां &c. quoted there from the Sâh. Dar. ) *Cf.* the Sl. वर्द्धयन्ती *&c.* quoted in the com.

Trans:—Like a spouse newly married, captivating with her sweet dalliance and pleasing accents, come to ( her husband's ) bed of her own accord being impelled by love, a novel story assuming of itself the form of composition by ( virtue of ) its Rasa ( sentiment ), and charming with conversations and love sports appearing in it, produces in the mind delight heightened by curiosity. Râga may also mean passion, love sentiment—stirs love sentiment.

Sl. 9. Here by means of श्लेषालंकार a novel is compared to a large garland of flowers. The attributes are made common to them both by similarity of sound; and hence there is an उपमा or simile based on श्लेष. Ślesha is of two kinds—शब्दश्लेष and अर्थश्लेष. In the former a particular word gives rise to two different senses but is such that if its synonym be substited for it, the double meaning disappears; *e. g.* in the instance of समानोपमा given by Dandin ( K. Dar. II. 29 )—बालेवोद्यानमालेयं सालकाननशोभिनी सालकानन as applying to बाला means सालकं चूर्णकुन्तलैः ( curly hair ) सहितमाननं; while as applying to उद्यानमाला it means सालानां सालवृक्षाणां काननं; here it will not do to substitute the word सकुन्तल for सालक. In the latter there is शब्दपरिवृत्तिसहत्व, *i. e.* even if a synonym be substituted for a word, there are two meanings, as in उदयमयते दिङ्मालिन्यं निराकुरुतेतरां............बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ See Kav. Pra. X. 10.

The figure दीपक is so called because like a lamp it throws light on many things, though itself remaining in one place. The K. P. defines it as:—सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ That is दीपक in which two or more objects, some relevant and some irrelevant, are associated together; or in which several attributes, relevant as well as irrelevant, are predicated of the same object. It is of two kinds; मालादीपक and कारकदीपक; for other particulars see K. P.

नवे:—(a) original; (b) fresh. पदार्थैः—themes, ideas to be expressed. उपपादिता: made up, composed.

श्लेष—(a) The figure of that name; (b) arrangement.

जाति—(a) The अलंकार of that name, otherwise called स्वभावोक्ति or description according to nature; (b) particular flowers. *Cf.* Har. Ch. Intro. Sl. 8. नवोर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः । विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥ where the poet describes the requisites of a really excellent poem rarely to be found together in one and the same place. This description of a Katha is in consonance with the ide of some of the writers on rhetorics that the style in such a composition ought to be highly ornamental, abounding in puns or plays upon words, highflown conceits, &c: See K. Dar. II. 8. quoted in the com.

TRANS:—Like big garlands made of Champaka buds resembling flashing lights, strung closely together and intermixed with jasmine flowers, whom will not the Kathās attract, made up as they are of novel topics ( or unusual felicitous expressions, or words and meanings ) in which sparkle Dîpakas and similes, which are thick-set with plays upon words at every step, and which belong to the best kind of composition ( or, which contain beautiful figures of speech called ‘ Jàti’; or according to Bhânu. verses in the beautiful Jâti metre ).

Sl. 10. Now the poet describes his own descent from a pure and respectable family. वात्स्यायनवंश &c.—for a full account of Bâṇa's family, See Intro. अनेकगुप्त &c.—It is not clear what Bâṇa means by गुप्त. The reference may be to the kings of the Gupta line who ruled over almost the whole of Northern India in the 4th and 5th centuries of the Christian era. गुप्त is also a distinctive title of a Vaishya, as शर्मन् is of a Brâhmaṇa, वर्मन् of a Kshatriya, and दास of a Śûdra. अंश इव—कुबेर is considered to be a portion of Brahmâ on account of being conversant with the four Vedas which formed the four mouths of the god.

**TRANS.—There lived a Brâhmana, Kubera by name, sprung from the race of Vâtsyâyana, the leader of the good and of merits of world-wide repute, whose lotus-like feet were worshipped by many Guptas, and who was, as it were, a portion (partial incarnation) of the Self-born.**

Sl. 11. **The learned कुबेर is here described as having सरस्वती, the goddess of learning, constantly dwelling in his mouth.**

**श्रुतिभि**—The Vedas are called S'ruti because they were revealed to (*lit.* heard by) the great sages by God himself. They are supposed to have never been the work of any human being. They were given out by the Supreme Being and heard by initiated Ṛshis. The Smṛtis are supposed to be a supplementary portion of the Vedas, but now lost to us in the original. Certain parts of these as "rememebered" by the great sages were afterwards written for the use of the uninitiated. They include the later laws and rules like those laid down by Manu and others See note on Rag. II. 2. The Śâstras are six in number, being also called the six Dars'anas or schools of philosophy. These are the two Mîmâmsâs (the Púrva and the Uttara ) assigned to Jaimini and Vyâsa respectively, the Sânkhya of Kapila, and the Yoga of Patanjalî, and the two systems of Nyâya, expounded by Gautama and Kaṇâda. The term, Śâstra, however, has a wider denotation and applies to grammar, astronomy, &c.

**पुरोडाश:**—A sacrificial offering made of baked ground rice. Also the remains of sacrificial offerings, which is the sense here. This shows that he was a habitual Agnihotrī and always offered oblations to the sacred fire. **सोम** &c:—This indicates that he was often engaged in the performance of Soma sacrifices. **समस्त** &c —His mouth ( *i. e.* his speech ) was attractive as well as instructive on account of his study of all the Śâstras and Smṛtis.

TRANS—In whose mouth there always resided Saraswatī (the Muse of learning)–the mouth, from which sin was kept off by the study of the Vedas, of which the lips were sanctified by *purodâsha* and the interior parts made astringent by (the potions of ) Soma, and which was charming on account of its (possession of ) the knowledge of all the Śâstras and Smṛtis.

Sl. 12. **Kubera taught numbers of pupils in his house to such a large extent that even the parrots became accustomed to the sound and would repeat the text word by word.**

**अभ्यस्तसमस्तवाङ्मयै:**—अभ्यस्तं ( studied ) समस्तं वाङ्मयं ( the Vedas in sound, not in sense ) यै: ते शुका: । वाच: विकार: वाङ्मयं literature ; मय is added in the sense of विकार 'a modification of ;' it includes the vedas

and the other law. The parrots of course by their very nature could only catch the sounds without comprehending the meaning.

The pupils, as they repeated the Vedas, heard the parrots also repeating them and often hesitated through fear lest they had mispronounced a word. Hence they are spoken of as शंकित suspicious or hesitating. *Cf.* शुकसारिकारब्धाध्ययनदीयमानोपाध्याय विश्रान्तिसुखानि ( भवनानि ) H. Ch. II.

**Trans:**—At whose house the young pupils chanted the Yajus and the Sáman verses, afraid of the parrots by whom they were hindered [*lit.* caught] at every word and which, living in cages with the starlings, had mastered all the lores.

Śl. 13. Arthapati is here said to be the son of Kubera, which seems to go against the H. Char., according to which Arthapati was the grandson of Kubera, being the son of Páshupata, his fourth son. See Introd. It is difficult to know why Pâśupata is omitted here; probably the Śl. referring to him is lost.

**भुवनाण्डकात्**—The Supreme Being स्वयंभू wishing to create the universe first created water and into it cast the seed. It assumed the form of a golden egg, out of which Hiraṇyagarbha (the Creator) was born. *Cf.* Manu. I. 8. 9. This god is also praised in the Ṛg. Veda as the Supreme Being. *Cf.* Ṛg. X. 121. 1--10. **क्षीरमहार्णवः**—क्षीराब्धिः. When this ocean was churned by the gods and the demons, it gave out fourteen jewels of which the moon was one. विनता was the wife of कश्यप. सुपर्ण the Eagle, her son, is the favourite vehicle of the god Vishṇu. The epithet द्विजन्मनां पतिः may also be applied to सुपर्ण who is the lord of birds. Birds are called twice-born, for they have a double existence-first in the egg and afterwards as flying birds. The comparison of अर्थपति with हिरण्यगर्भ has reference to his knowledge of the Vedas, that with क्षपाकर denotes that particular trait of character by which he pleased all men, and that with सुपर्ण shows his devotion to Vishṇu.

**Trans:**—From him sprang Arthapati, the chief of the Bráhmaṇas, as Hiraṇyagarbha was born from the mundane egg, or the moon from the vast milky ocean, or the great Eagle from the womb of Vinatá.

Sl. 14. **विसारि** extensive. **श्रवण**-(a) listening to or repeating. (b) ears. **उषस्**—The dawn or morning. This time is generally regarded as the best suited for study. *cf.* दक्षस्मृति प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । प्रहरद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥ as quoted by Mr. Kâṇe.

Trans:—Fresh crowds of disciples, engaged, every day in the morning, in listening to him as he expounded the vast lores, added to his fame (as a teacher), just as the fresh leaves of the sandle-wood tree enhance the beauty, when in the morning they are used to adorn the ear.

Śl. 15. विधान-(a) Sacred rules or precepts; (b) A kind of food given to elephants which makes them shed ichor. *Cf.* Sis. quoted in the com., and Agnipurâna. "मदक्षीणस्य नागस्य पयःपानं प्रशस्यते । दीपनीयैस्तथा द्रव्यैः शृतो मांसरसः शुभः ॥" 26. Kaṇe. दान-(a) gifts; (b) rut or temporal juice. महावीर—(a) the consecrated fires; (b) mighty warriors. यूपकरैः—(a) having hands in the shape of the sacrificial posts; (b) having trunks as big as sacrificial posts.

Here the simile between मख and गज in based upon epithets conveying a different meaning in each case. Even these introductory verses are an indication of the sort of style to be expected in the work, with its lengthy compounds, abundant epithets and double meaning words (having at times even farfetched meanings ).

Trans:—Who got an easy access to (*lit.* who easily conquered) the abode of the gods by his innumerable sacrifices, adorned with the charitable gifts given in accordance with sacred precepts (or performed in accordance with scriptural rules and adorned with Dakshiṇâ ), in which there were present (kindled) the blazing sacrificial fires and which had the Yûpas for their hands, as if with countless elephants, with trunks big as sacrificial posts, decked with the rut produced by feeding them on Vidhána and having mighty warriors sitting on them.

Śl. 16. अर्थपति had a son by name चित्रभानु. क्षमाभृताम्—(1) as an adjective qualifying सुत्तोत्तमानाम्—*forgiving*; calm. (2) as a noun—क्षमां (पृथ्वीं) बिभ्रति इति क्षमाभृतः तेषाम्—mountains, which support the earth.

स्फटिकोपलोपमम्—The plain meaning in this case is "like स्फटिक stones." As such it can only be applicable to तनय. But Bhánu. also applies it to कैलास explaining it as स्फटिकोपलमयम् because, he says कैलास is made up of स्फाटिक stones. The reading in the text is preferable as both the meanings are obvious in that case.

Trans:—Among his many eminent and magnanimous sons, distinguished (illustrious) by their knowledge of the Vedas and the Śâstras, the repositories of patience, he got in course of time a son, Chitrabhânu by name, pure as a crystal, like Kailâsa among mountains, white like a crystal, ( or, with crystals, being made up of crystal rocks ).

Sl. 17. The high merits of Chitrabhânu caused as much pain to the mind of his enemies as the sharp nails of नृसिंह did to the hearts of हिरण्यकशिपु. नृसिंह—man-lion; Vishṇu in his fourth incarnation. कृतान्तराः—penetrating. नखांकुराः—points of the nails.

TRANS:—The virtues of whom, a high-souled person, spreading far, and pure like the spotless crescent of the moon free from stain, made their way in, and reached the hearts even of his enemies, like the pointed claws of the man-lion.

Śl. 18. The fame of Chitrabhânu was spread far and wide on account of his constant performance of sacrifices. This fact is described in this verse by means of a *fig.* of speech called विषम, for which see Káv. Pra. X. 40, 41. It is said that the clouds of smoke from the sacrifices, though black in themselves, rendered his fame more and more white. Fame is conventionally described by Sans. poets as white.

दिशाम् The four quarters are compared to ladies on whose foreheads the black smoke formed, as it were a curl of hair. अलीकालकभंगतां—अलीके (on the forehead, usually अलिक) ये अलकाः तेषां भंगः (a curl of hair चूर्णकुन्तलसदृशः) तस्य भावः (condition) तत्ताम्। The त्रयी is regarded by metaphor as a young woman and the smoke as a तमाल leaf on her ear. This leaf is black in colour and is worn on the ear as an ornament by young women. The meaning is that these performances were a sort of ornament to the three Vedas which were constantly repeated therein.

TRANS:—Serving as a curl of hair on the foreheads of the quarter-ladies and as an ornamental *tamâla* leaf on the ear of the woman in the shape of the Triad (the three Vedas), the dark column of smoke issuing from whose sacrifices made his fame even brighter than before.

Sl. 19. Chitrabhánu had a son by name Báṇa, the author of the present work. होम—सीकराम्भः the drops of perspiration. यशोंशु—for fame being described as white, see above, śl 18 and *cf.* Ragh. II. 69, IV. 19.

TRANS:—From him, whose drops of perspiration caused by his exertions at the sacrifices were wiped off by Sarasvatî herself with her hands resembling lotus-buds and who had whitened the seven worlds with the lustre of his fame, was born a son known as Báṇa.

Śl. 20. Herein the author, with becoming modesty, describes his work as being but poorly executed owing to his want of skill.

अक्षतकण्ठ—&c.—अक्षतं कण्ठस्य कौण्ठ्यं ( मान्द्यं dulness ) यस्याः तया the dulness of whose intellect (lit. throat) is not yet dispelled.

